V. I. Series—21

# ṚGVEDA

*with*

**The Padapāṭha and the available portions of the Bhāṣya-s by Skandasvāmin and Udgītha, the Vyākhyā by Veṅkaṭamādhava and Mudgala's Vṛtti based on Sāyaṇa-bhāṣya**

*Edited,*

**Critically, and annotated with text-comparative data from original manuscripts and other available materials**

*By*

**VISHVA BANDHU**

*In collaboration with*

BHĪM DEV, AMAR NĀTH, K. S. RĀMASWĀMI SĀSTRĪ AND PĪTĀMBAR DATTA

## PART III

**(Maṇḍala-s II, III and IV)**

**HOSHIARPUR**

**Vishveshvaranand Vedic Research Institute**

**1963**

वि. भाभा. ग्रन्थमाला—२१

# ऋग्वेदः

स च

पदपाठेन च यथोपलम्भं स्कन्दस्वाम्युद्गीथीये भाष्ये, वेङ्कटमाधवीया
व्याख्या, सायणभाष्यानुसारिणी मुद्गलीया वृत्तिर् इत्येतैश्च
पाठविमर्शौपयिकैः पाठभेदादिटिप्पणैश्च संयोज्य

भीमदेवः, अमरनाथः, के. एस्. रामस्वामिशास्त्री, पीताम्बरदत्त
इत्येषां सायुज्यभाजा

विश्वबन्धुना

संपादितः



तत्र चाऽयं

द्वितीय-तृतीय-चतुर्थ-मण्डलात्मकः

३यो भागः



होशिआरपुरम्
विश्वेश्वरानन्द-वैदिकशोध-संस्थानम्
२०२० वि.

अथ

# ऋग्वेदे सभाष्ये

द्वितीय-तृतीय-चतुर्थ—मण्डलात्मकः

## तृतीयो भागः

अथ

# ऋग्वेदे सभाष्ये

## द्वितीयं मण्डलम्

### [ १ ]

[1]गृत्समदो ( पूर्वम् आङ्गिरसः शौनहोत्रः ) भार्गवः शौनकः ऋषिः । अग्निर्देवता । जगती छन्दः[1] ।

त्वमग्ने द्युभिस्त्वमाशुशुक्षणिस्त्वमद्भ्यस्त्वमश्मनस्परि ।
त्वं वनेभ्यस्त्वमोषधीभ्यस्त्वं नृणां नृपते जायसे शुचिः ॥ १ ॥

त्वम् । अग्ने । द्युऽभिः । त्वम् । आशुशुक्षणिः । त्वम् । अत्ऽभ्यः । त्वम् । अश्मनः । परि ।
त्वम् । वनेभ्यः । त्वम् । ओषधीभ्यः । त्वम् । नृणाम् । नृऽपते । जायसे । शुचिः ॥ १ ॥

**वेङ्कट०** 'य[2] आङ्गिरसः[3] शौनहोत्रो[4] [5]भूत्वा भार्गवः शौनकोऽभवत्, स गृत्समदो द्वितीयं मण्डलमपश्यत्' ( ऋअ २,२,१ ) । त्वम् अग्ने ! द्युभ्यः जायसे । 'दिवस्परि प्रथमं जज्ञे' ( ऋ १०,४५,१ ) इत्युक्तम्† । त्वम् आशु शुचा शत्रून् हंसि । त्वम् अन्तरिक्षस्थाभ्यः अद्भ्यः वैद्युतः, त्वम् अश्मनः च आहन्यमानात्, त्वम् ओषधिवनस्पतिभ्यश्च जायसे नृपते ! दीप्तः[5] ॥ १ ॥

तवाग्ने होत्रं तव पोत्रमृत्वियं तव नेष्ट्रं त्वमग्निदृतायतः ।
तव प्रशास्त्रं त्वमध्वरीयसि ब्रह्मा चासि गृहपतिश्च नो दमे ॥ २ ॥

तव । अग्ने । होत्रम् । तव । पोत्रम् । ऋत्वियम् । तव । नेष्ट्रम् । त्वम् । अग्नित् । ऋतऽयतः ।
तव । प्रऽशास्त्रम् । त्वम् । अध्वरिऽयसि । ब्रह्मा । च । असि । गृहऽपतिः । च । नः । दमे ॥ २ ॥

**वेङ्कट०** तव अग्ने ! होतृकर्म पोतृकर्म[6] च काले भवति ऋत्वियम् आर्त्विज्यम् । त्वम् आग्नीध्रश्च यज्ञमिच्छतः । त्वम् एव अध्वरं चेच्छसि, यथाऽध्वर्युरध्वरं कामयते । गृहपतिः यजमानः च भवसि अस्मदायतने । शिष्टं स्पष्टम् ॥ २ ॥

त्वमग्न इन्द्रो वृषभः सतामसि त्वं विष्णुरुरुगायो नमस्यः ।
त्वं ब्रह्मा रयिविद् ब्रह्मणस्पते त्वं विधर्तः सचसे पुरन्ध्या ॥ ३ ॥

---

१-१. नास्ति मूको. २. नास्ति वि लपं. ३. अङ्गिरसः वि[1,2] अ[1] लपं. ४. शोन° वि[1] लएं; श्येन° वि[2] अ[1]. ५-५. नास्ति वि[1] लपं. † °त्युक्तः वि[2] अ[1]. ६. नास्ति वि[2] अ[1].

त्वम् । अग्ने । इन्द्रः । वृषभः । सताम् । असि । त्वम् । विष्णुः । उरुऽगायः । नमस्यः ।
त्वम् । ब्रह्मा । रयिऽवित् । ब्रह्मणः । पते । त्वम् । विधर्तः । रयिम् । विऽधर्तः । सचसे । पुरम्ऽध्या ॥ ३ ॥

वेङ्कट० त्वम् अग्ने! इन्द्रः वृषभः च देवः भवसि [1]सताम्। त्वम्[1] विष्णुः च उरुगमनः नमस्कार्यः । त्वम्[2] बृहस्पतिश्च भवसि धनस्य लम्भयिता मन्त्रपते! । त्वम् विधातः! सङ्गच्छसे प्रज्ञया ॥ ३ ॥

त्वमग्ने राजा वरुणो धृतव्रतस्त्वं मित्रो भवसि दस्म ईड्यः ।
त्वमर्यमा सत्पतिर्यस्य संभुजं त्वमंशो विदथे देव भाजयुः ॥ ४ ॥

त्वम् । अग्ने । राजा । वरुणः । धृतऽव्रतः । त्वम् । मित्रः । भवसि । दस्मः । ईड्यः ।
त्वम् । अर्यमा । सत्ऽपतिः । यस्य । सम्ऽभुजम् । त्वम् । अंशः । विदथे । देव । भाजयुः ॥४॥

वेङ्कट० त्वम् अग्ने! राजा वरुणः[3] धृतकर्मा[4] च भवसि । त्वम्[5] मित्रः च भवसि[6] दर्शनीयः स्तोतव्यः । त्वम् अर्यमा सतां पतिः, यस्य सम्भोजनं भवति । 'यः खलु वै ददाति[7] सोऽर्यमा' (तै २,३,४,१) इति ब्राह्मणम् । त्वम् एव अंशः देव! [8]यज्ञे अंशभाजो[8] देवान् [9]स्वानंशान् भाजयन्[9] ॥ ४ ॥

त्वमग्ने त्वष्टा विधते सुवीर्यं तव ग्नावो मित्रमहः सजात्यम् ।
त्वमाशुहेमा ररिषे स्वश्व्यं त्वं नरां शर्धो असि पुरूवसुः ॥ ५ ॥

त्वम् । अग्ने । त्वष्टा । विधते । सुऽवीर्यम् । तव । ग्नावः । मित्रऽमहः । सऽजात्यम् ।
त्वम् । आशुऽहेमा । ररिषे । सुऽअश्व्यम् । त्वम् । नराम् । शर्धः । असि । पुरुऽवसुः ॥ ५ ॥

वेङ्कट० त्वम् अग्ने! त्वष्टा च भवसि परिचरते पुत्रं प्रयच्छन् । तव देवपत्न्यः मित्राणां पूजयितः! बन्धुता[10] । त्वम् आशुगन्ता ददासि शोभनाश्वसमूहम् । त्वम् नृणां बलम् असि बहुधनः ॥ ५ ॥

[11]इति द्वितीयाष्टके पञ्चमाध्याये सप्तदशो वर्गः[11] ॥

त्वमग्ने रुद्रो असुरो महो दिवस्त्वं शर्धो मारुतं पृक्ष ईशिषे ।
त्वं वातैररुणैर्यासि शंगयस्त्वं पूषा विधतः पासि नु त्मना ॥ ६ ॥

त्वम् । अग्ने । रुद्रः । असुरः । महः । दिवः । त्वम् । शर्धः । मारुतम् । पृक्षः । ईशिषे ।
त्वम् । वातैः । अरुणैः । यासि । शम्ऽगयः । त्वम् । पूषा । विधतः । पासि । नु । त्मना ॥६॥

---

१. सदा त्वम् वि[१] अ[१]; सदा त्वं सदा वि[१] लपं. २. तु वि[१] लपं. ३. नास्ति वि[२] अ[१].
४. व्रतकर्मा वि[२] अ[१]; सुतवृतकर्मा वि[१] लपं. ५. नास्ति मूको. ६. नास्ति वि[१] लपं. ७. नास्ति लपं.
८-८. यज्ञांशभा° वि[१]; °ज्ञांशभा° वि[२] अ[१]. ९-९. स्वान्… भाज° वि[२]; स्वा…नभाजयन्निति अ[१].
१०. °न्धतां लपं. ११-११. नास्ति मूको.

**वेङ्कट०** त्वम् अग्ने[1] ! रुद्रः च भवसि बलवान् महान्[2] दीप्तः । त्वम् मरुतो वेगः अन्नस्य [3]च ईशिषे[3] । त्वम् वातैः अरुणैः यासि सुखावासः । त्वम् पोषकः[4] परिचरतः स्वयम् एव पासि[5] ॥ ६ ॥

त्वम॑ग्ने द्रवि॒णोदा अ॑रं॒कृते॒ त्वं दे॒वः स॑वि॒ता र॑त्न॒धा अ॑सि ।
त्वं भगो॑ नृपते॒ वस्व॑ ईशिषे॒ त्वं पा॒युर्दमे॒ यस्तेऽवि॑धत् ॥ ७ ॥

त्वम् । अ॒ग्ने॒ । द्र॒वि॒णः॒ऽदाः । अ॒र॒म्ऽकृते॑ । त्वम् । दे॒वः । स॒वि॒ता । र॒त्न॒ऽधाः । अ॒सि॒ ।
त्वम् । भगः॑ । नृ॒ऽप॒ते॒ । वस्वः॑ । ई॒शि॒षे॒ । त्वम् । पा॒युः । दमे॑ । यः । ते॒ । अवि॑धत् ॥ ७ ॥

**वेङ्कट०** त्वम् अग्ने! धनस्य दाता भवसि अलङ्कुर्वते । त्वम् देवः सविता रत्नानां धाता[6] च भवसि । त्वम् एव भगः नृपते! धनस्य ईशिषे । त्वम् रक्षकः गृहे यः तव परिचरति ॥ ७ ॥

त्वाम॑ग्ने॒ दम॒ आ वि॒श्पतिं॑ वि॒शस्त्वां राजा॑नं सुवि॒दत्र॑मृञ्जते ।
त्वं विश्वा॑नि स्वनीक पत्यसे॒ त्वं स॒हस्रा॑णि श॒ता द॒श प्रति॑ ॥ ८ ॥

त्वाम् । अ॒ग्ने॒ । दमे॑ । आ । वि॒श्पति॑म् । विशः॑ । त्वाम् । राजा॑नम् । सु॒ऽवि॒दत्र॑म् । ऋ॒ञ्ज॒ते॒ ।
त्वम् । विश्वा॑नि । सु॒ऽअ॒नी॒क॒ । प॒त्य॒से॒ । त्वम् । स॒हस्रा॑णि । श॒ता । दश॑ । प्रति॑ ॥ ८ ॥

**वेङ्कट०** त्वाम् अग्ने! गृहे आह्वयन्ति विशां पतिम् [7]मनुष्याः । त्वाम् ईश्वरम् शोभनधनम् प्रसाधयन्ति । त्वम् विश्वानि† धनानि प्रति ईश्वरो भवसि हे शोभनज्वलदनीक! । त्वम् सहस्राणि ‡प्रति भवसि‡ शतानि दश च वीराणाम्[7] ॥ ८ ॥

त्वाम॑ग्ने पि॒तर॑मि॒ष्टिभि॒र्नर॒स्त्वां भ्रा॒त्राय॒ शम्या॑ तनू॒रुच॑म् ।
त्वं पु॒त्रो भ॑वसि॒ यस्तेऽवि॑ध॒त् त्वं सखा॑ सु॒शेवः॑ पास्या॒धृषः॑ ॥ ९ ॥

त्वाम् । अ॒ग्ने॒ । पि॒तर॑म् । इ॒ष्टिऽभिः॑ । नरः॑ । त्वाम् । भ्रा॒त्राय॑ । शम्या॑ । त॒नू॒ऽरुच॑म् ।
त्वम् । पु॒त्रः । भ॒व॒सि॒ । यः । ते॒ । अवि॑धत् । त्वम् । सखा॑ । सु॒ऽशेवः॑ । पा॒सि॒ । आ॒ऽधृषः॑ ॥ ९ ॥

**वेङ्कट०** त्वाम् अग्ने! पातारम्[8] इष्टिभिः कुर्वन्ति ऋत्विजः । त्वाम् एव च भ्रातृत्वाय च कर्मणा अङ्गानां रोचयितारम्[9] । त्वम् पुत्रः च भवसि, यः ते परिचरति । त्वम्[10] सखा च सुसुखः रक्षसि आधर्षणात् ॥ ९ ॥

त्वम॑ग्न ऋ॒भुरा॒के न॑म॒स्य१॒स्त्वं वाज॑स्य क्षु॒मतो॑ रा॒य ई॑शिषे ।
त्वं वि भा॒स्यनु॑ दक्षि दा॒वने॒ त्वं वि॒शिक्षु॑रसि य॒ज्ञमा॒तनिः॑ ॥ १० ॥

---

१. नास्ति वि[1] लपं. २. महा° वि[1,2] अ[1] लपं. ३-३. चेष्टिष्टे वि[2] अ[1]; चेषि लपं. ४. प्रोष° लपं. ५. आपासि वि[2] अ[1]. ६. °ता त्वं वि[1] लपं. ७-७. नास्ति वि[2] अ[1]. † वशानि लपं. ‡-‡ प्रभवसि ल. ८. पातर° वि[2] अ[1] लपं. ९. रोचयित्रं च वि[2]. १०. नास्ति मूको.

त्वम् । अग्ने । ऋभुः । आके । नमस्यः । त्वम् । वाजस्य । क्षुऽमतः । रायः । ईशिषे ।
त्वम् । वि । भासि । अनु । धक्षि । दावने । त्वम् । विऽशिक्षुः । असि । यज्ञम् । आऽतनिः ॥

वेङ्कट० त्वम् अग्ने! दीप्तः अन्तिके नमस्यः च नः । त्वम् अन्नस्य धनस्य च शब्दवतः प्रसिद्धस्य ईशिषे । त्वम् दीप्यसे अनु दहसि च शत्रून् । प्रयच्छते त्वम् विविभस्य दाता असि यज्ञस्य विस्तारयिता । ॥ १० ॥

[1]इति द्वितीयाष्टके पञ्चमाध्याये अष्टादशो वर्गः[1] ॥

त्वमग्ने अदितिर्देव दाशुषे त्वं होत्रा भारती वर्धसे गिरा ।
त्वमिळा शतहिमासि दक्षसे त्वं वृत्रहा वसुपते सरस्वती ॥ ११ ॥

त्वम् । अग्ने । अदितिः । देव । दाशुषे । त्वम् । होत्रा । भारती । वर्धसे । गिरा ।
त्वम् । इळा । शतऽहिमा । असि । दक्षसे । त्वम् । वृत्रऽहा । वसुऽपते । सरस्वती ॥ ११ ॥

वेङ्कट० त्वम् अग्ने! अदितिः देव! भवसि यजमानाय[2] । त्वम् एव होत्रा भारती च देवपत्न्यौ संवर्धसे स्तुत्या । त्वम् एव इळा देवी शतसंवत्सरा भवसि दक्षसे प्रजापतये । त्वम् वृत्रहा वसूनां पते! सरस्वती च ॥ ११ ॥

त्वमग्ने सुभृत उत्तमं वयस्तव स्पार्हे वर्ण आ संदृशि श्रियः ।
त्वं वाजः प्रतरणो बृहन्नसि त्वं रयिर्बहुलो विश्वतस्पृथुः ॥ १२ ॥

त्वम् । अग्ने । सुऽभृतः । उत्ऽतमम् । वयः । तव । स्पार्हे । वर्णे । आ । सम्ऽदृशि । श्रियः ।
त्वम् । वाजः । प्रऽतरणः । बृहन् । असि । त्वम् । रयिः । बहुलः । विश्वतः । पृथुः ॥ १२ ॥

वेङ्कट० त्वम् अग्ने! सुष्ठु सम्भृतः[3] सन् उत्तमम् अन्नं भव । तव[4] स्पृहणीये वर्णे सन्दर्शने च यजमानानाम् श्रियः आ गच्छन्ति । त्वम् बलवान् प्रकर्षेण तारयिता महान् असि । त्वम् एव धनमसि बहु सर्वतश्च पृथुः[5] ॥ १२ ॥

त्वामग्न आदित्यास आस्यं१ त्वां जिह्वां शुचयश्चक्रिरे कवे ।
त्वां रातिषाचो अध्वरेषु सश्चिरे त्वे देवा हविरदन्त्याहुतम् ॥ १३ ॥

त्वाम् । अग्ने । आदित्यासः । आस्यम् । त्वाम् । जिह्वाम् । शुचयः । चक्रिरे । कवे ।
त्वाम् । रातिऽसाचः । अध्वरेषु । सश्चिरे । त्वे इति । देवाः । हविः । अदन्ति । आऽहुतम् ॥ १३ ॥

---

१-१. नास्ति मूको. २. यजमानस्य वि[1,2] ल लपं. ३ सम्भवः वि[2] अ[1]. ४. भवत वि[1] लपं.
५. पृथु वि[1] लपं.

**वेङ्कट०** अग्ने! त्वाम् आदित्याः आस्यम् चक्रिरे, त्वाम् एव जिह्वाम् च कवे! दीप्ताः[१]। त्वाम्[२] धनस्य सम्भक्तारः यज्ञेषु सेवन्ते। त्वयि देवाः आहुतम् हविः भक्षयन्ति ॥ १३ ॥

त्वे अ॑ग्ने॒ विश्वे॑ अ॒मृता॑सो अ॒द्रुह॑ आ॒सा दे॒वा ह॒विर॑द॒न्त्याहु॑तम्।
त्वया॑ मर्ता॑सः स्वदन्त आसु॒तिं त्वं गर्भो॑ वी॒रुधा॑ं जज्ञिषे॒ शुचि॑ः ॥ १४ ॥

त्वे इति॑। अ॒ग्ने॒। विश्वे॑। अ॒मृता॑सः। अ॒द्रुह॑ः। आ॒सा। दे॒वाः। ह॒विः। अ॒द॒न्ति॒। आऽहु॑तम्।
त्वया॑। मर्ता॑सः। स्व॒द॒न्ते॒। आ॒ऽसु॒तिम्। त्वम्। गर्भ॑ः। वी॒रुधा॑म्। ज॒ज्ञि॒षे॒। शुचि॑ः ॥ १४ ॥

**वेङ्कट०** त्वयि अग्ने! सर्वे देवाः न द्रुह्यन्ति, आस्येन च देवाः हविः भक्षयन्ति आहुतम्। त्वया एव मर्ताः च अन्नम् स्वदन्ते। त्वम् गर्भः वीरुधाम् जायसे दीप्तः[३] ॥ १४ ॥

त्वं तान्त्सं च॒ प्रति॑ चासि म॒ज्मनाऽग्ने॑ सुजात॒ प्र च॑ देव रिच्यसे।
पृ॒क्षो यद॒त्र॑ महि॒ना वि ते॒ भुव॒दनु॒ द्यावा॑पृथि॒वी रोद॑सी उ॒भे ॥ १५ ॥

त्वम्। तान्। सम्। च॒। प्रति॑। च॒। अ॒सि॒। म॒ज्मना॑। अग्ने॑। सु॒ऽजा॒त॒। प्र। च॒। दे॒व॒। रि॒च्य॒से॒।
पृ॒क्षः। यत्। अत्र॑। म॒हि॒ना। वि। ते॒। भुव॑त्। अनु॑। द्यावा॑पृथि॒वी इति॑। रोद॑सी इति॑। उ॒भे इति॑ ॥ १५ ॥

**वेङ्कट०** त्वम् सूक्तेऽनुक्रान्तान् देवान् बलेन सम् च भवसि प्रति च, यत् सर्वे देवाः सह कुर्वन्ति, यत् च प्रत्येकम्, तदुभयं कर्तुं शक्नोषि। अग्ने! शोभनजनन![४] देवान् प्र रिच्यसे च। यस्मात् तव महत्त्वेन द्व्यवदानमात्रमपि हुतम् अन्नम् वि भवति, सर्वस्य रोधयित्र्यौ द्यावापृथिवी उभे अपि अनु भवति। 'यावदेका[५] देवता कामयते यावदेका तावदाहुतिः प्रथते' (तैब्रा ३,२,६,४) इति ब्राह्मणम्। '[६]अथो गिरिमात्रं[६] वर्धते अथोऽपरम्' (तु. माश १,९,१,१०) इति च ॥ १५ ॥

ये स्तो॒तृभ्यो॒ गोअ॑ग्रा॒मश्व॑पेशस॒मग्ने॑ रा॒तिमु॑पसृ॒जन्ति॑ सू॒रय॑ः।
अ॒स्माञ्च॒ तांश्च॒ प्र हि नेषि॒ वस्य॒ आ बृ॒हद्व॑देम वि॒दथे॑ सु॒वीरा॑ः ॥ १६ ॥

ये। स्तो॒तृऽभ्य॑ः। गोऽअ॑ग्राम्। अश्व॑ऽपेशसम्। अग्ने॑। रा॒तिम्। उ॒प॒ऽसृ॒जन्ति॑। सू॒रय॑ः।
अ॒स्मान्। च॒। तान्। च॒। प्र। हि। नेषि॑। वस्य॑ः। आ। बृ॒हत्। व॒दे॒म॒। वि॒दथे॑। सु॒ऽवीरा॑ः ॥

**वेङ्कट०** ये स्तोतृभ्यः गोमुखाम् अश्वरूपाम् अग्ने! रातिम् दानम् उदाराः प्रयच्छन्ति तान्, अस्मान् च त्वमभ्युदयं प्रति प्रणयसि। यज्ञे दीयतां भुज्यतामिति बृहत् वचनम् वदेम सुपुत्राः ॥ १६ ॥

[७]इति द्वितीयाष्टके पञ्चमाध्याये एकोनविंशो वर्गः[७] ॥

---

१. दीप्ताम् वि[१] अ[१]. २. नास्ति वि[१] अ[१]. ३. नास्ति अ[१]. ४. °जनने वि[१] ल लपं. ५. °वदेता मूको. ६-६. °थोग्निमात्रं वि[१] लपं. ७-७. नास्ति मूको.

[ २ ]

[1]गृत्समदो ( पूर्वम् आङ्गिरसः शौनहोत्रः ) भार्गवः शौनकः ऋषिः । अग्निर्देवता । जगती छन्दः[1] ॥

यज्ञेन॑ वर्धत जा॒तवे॑दसम॒ग्निं य॑जध्वं ह॒विषा॒ तना॑ गि॒रा ।
स॒मि॒धा॒नं सु॑प्र॒यसं॒ स्व॑र्णरं द्यु॒क्षं होता॑रं वृ॒जने॑षु धू॒र्षद॑म् ॥ १ ॥

य॒ज्ञेन॑ । व॒र्धत॒ । जा॒तऽवे॑दसम् । अ॒ग्निम् । य॒जध्व॒म् । ह॒विषा॑ । तना॑ । गि॒रा ।
स॒म्ऽइ॒धा॒नम् । सु॒ऽप्र॒यस॑म् । स्वः॑ऽनरम् । द्यु॒क्षम् । होता॑रम् । वृ॒जने॑षु । धूः॒ऽसद॑म् ॥ १ ॥

वेङ्कट० यज्ञेन वर्धयत जातवेदसम्। अग्निम् यजध्वम् हविषाम् धनेन स्तुत्या च दीप्यमानं स्वन्नं सर्वमनुष्यम् दीप्तम् होतारम् यज्ञेषु धुरि सीदन्तम् ॥ १ ॥

अ॒भि त्वा॒ नक्ती॑रु॒षसो॑ ववाशि॒रेऽग्ने॑ व॒त्सं न स्वस॑रेषु धे॒नवः॑ ।
दि॒व इ॒वेद॑र॒तिर्मानु॑षा यु॒गा क्षपो॑ भासि पुरुवार सं॒यतः॑ ॥ २ ॥

अ॒भि । त्वा॒ । नक्तीः॑ । उ॒षसः॑ । व॒वा॒शि॒रे॒ । अग्ने॑ । व॒त्सम् । न । स्वस॑रेषु । धे॒नवः॑ ।
दि॒वःऽइ॑व । इत् । अ॒र॒तिः । मानु॑षा । यु॒गा । आ । क्षपः॑ । भा॒सि॒ । पु॒रु॒ऽवा॒र॒ । स॒म्ऽयतः॑ ॥ २ ॥

वेङ्कट० शब्दं कुर्वन्ति त्वा रात्रयः उषसः च अग्ने! वत्सम् इव गोष्ठेषु धेनवः । दिवः[2] गन्ताऽऽदित्यः इव[3] मानुषाणि युगानि अहानि, त्वं रात्रीः भासयसि त्वया सङ्गच्छमानाः[4] बहुभिः स्पृहणीय! ॥ २ ॥

तं दे॒वा बु॒ध्ने रज॑सः सु॒दंस॑सं दि॒वस्पृ॑थि॒व्योर॑र॒तिं न्ये॑रिरे ।
रथ॑मिव॒ वेद्यं॑ शु॒क्रशो॑चिषम॒ग्निं मि॒त्रं न क्षि॒तिषु॑ प्र॒शंस्य॑म् ॥ ३ ॥

तम् । दे॒वाः । बु॒ध्ने । रज॑सः । सु॒ऽदंस॑सम् । दि॒वः । पृ॒थि॒व्योः । अ॒र॒तिम् । नि । ए॒रि॒रे॒ ।
रथ॑म्ऽइव । वेद्य॑म् । शु॒क्रऽशो॑चिषम् । अ॒ग्निम् । मि॒त्रम् । न । क्षि॒तिषु॑ । प्र॒ऽशंस्य॑म् ॥ ३ ॥

वेङ्कट० द्यावापृथिव्योरुभयोः सञ्चरन्तम् अग्निम् देवाः लोकस्य मूले पृथिव्यां निहितवन्तः, सुकर्माणम् रथम् इव धनप्राप्तिहेतुं शुक्रं दीप्तम् अग्निम् मित्रम् इव मनुष्यैः शंसनीयं वेदिषु ॥ ३ ॥

तमु॒क्षमा॑णं॒ रज॑सि॒ स्व आ दमे॑ च॒न्द्रमि॑व सु॒रुचं॑ ह्वा॒र आ द॑धुः ।
पृश्न्याः॑ पत॒रं चि॒तय॑न्तम॒क्षभिः॑ पा॒थो न पा॒युं जन॑सी उ॒भे अनु॑ ॥ ४ ॥

तम् । उ॒क्षमा॑णम् । रज॑सि । स्वे । आ । दमे॑ । च॒न्द्रम्ऽइ॑व । सु॒ऽरुच॑म् । ह्वा॒रे । आ । द॒धुः॒ ।
पृश्न्याः॑ । प॒त॒रम् । चि॒तय॑न्तम् । अ॒क्षऽभिः॑ । पा॒थः॑ । न । पा॒युम् । जन॑सी॒ इति॑ । उ॒भे इति॑ । अनु॑ ॥

---

१-१ नास्ति मूको. २. नास्ति वि[1] ल लपं. ३. नास्ति मूको. ४. °मानः ल.

**वेङ्कट०** तम् सिञ्चन्तम् अस्यां भूमौ स्वे गृहे वरुणम् इव सुरुचम् बाधायां सञ्जातायाम् आ दधुः दिवः गन्तारं प्रज्ञापयन्तं तेजोभिः अन्नम् इव रक्षकम् उभयोः द्यावापृथिव्योः ॥ ४ ॥

स होता विश्वं परि भूत्वध्वरं तमु हव्यैर्मनुष ऋञ्जते गिरा ।
हिरिशिप्रो वृधसानासु जर्भुरद् द्यौर्न स्तृभिश्चितयद् रोदसी अनु ॥ ५ ॥

सः । होता । विश्वम् । परि । भूतु । अध्वरम् । तम् । ऊँ इति । हव्यैः । मनुषः । ऋञ्जते । गिरा ।
हिरिऽशिप्रः । वृधसानासु । जर्भुरत् । द्यौः । न । स्तृऽभिः । चितयत् । रोदसी इति । अनु ॥५॥

**वेङ्कट०** सः ह्वाता सर्वं यज्ञं परितः[1] भवतु । तम् एव हव्यैः स्तुत्या च मनुष्याः प्रसन्नं[2] कुर्वन्ति । हरितवर्णशिप्रः वर्धमानासु प्रजासु भरणं कुर्वन् तेजोभिः चेतयति द्यावापृथिव्योरर्थान् आदित्य इव ॥ ५ ॥

[3]इति द्वितीयाष्टके पञ्चमाध्याये विंशो वर्गः[3] ॥

स नो रेवत् समिधानः स्वस्तये संददस्वान् रयिमस्मासु दीदिहि ।
आ नः कृणुष्व सुविताय रोदसी अग्ने हव्या मनुषो देव वीतये ॥ ६ ॥

सः । नः । रेवत् । सम्ऽइधानः । स्वस्तये । सम्ऽददस्वान् । रयिम् । अस्मासु । दीदिहि ।
आ । नः । कृणुष्व । सुवितार्य । रोदसी इति । अग्ने । हव्या । मनुषः । देव । वीतये ॥ ६ ॥

**वेङ्कट०** [4]सः अस्माकं धनयुक्तं[4] दीप्यमानः अविनाशाय सम्यग् ददत्[5] धनम् अस्मासु दीप्यस्व । द्यावापृथिवी च अस्माकम् आ कृणुष्व अभ्युदयाय । अग्ने! देव![6] हवींषि मनुष्यस्य देवानां खादनाय[7] कृणु । ॥ ६ ॥

दा नो अग्ने बृहतो दाः सहस्रिणो दुरो न वाजं श्रुत्या अपा वृधि ।
प्राची द्यावापृथिवी ब्रह्मणा कृधि स्वर्ण शुक्रमुषसो वि दिद्युतः ॥ ७ ॥

दाः । नः । अग्ने । बृहतः । दाः । सहस्रिणः । दुरः । न । वाजम् । श्रुत्यै । अप । वृधि ।
प्राची इति । द्यावापृथिवी इति । ब्रह्मणा । कृधि । स्वः । न । शुक्रम् । उषसः । वि । दिद्युतुः ॥

**वेङ्कट०** अग्ने! महद् धनम् अस्मभ्यं देहि शतसहस्रसङ्ख्यायुक्तम्[8] । द्वाराणि इव[9] अन्नम् अस्माकं श्रवणाय जनेऽपावृतं[10] कुरु । प्राङ्मुखे च द्यावापृथिव्यौ अन्नेन कुरु । आदित्यम् इव अग्निम् उषसः वि द्योतयन्ति ॥ ७ ॥

---

१. नास्ति वि[1] अ[3]. २. अन्नं मूको. ३-३. नास्ति मूको. ४-४. ... न° वि[1]; स धन° अ[1].
५ नास्ति वि[1] लपं. ६. नास्ति मूको. ७. स्वादनाय वि[1] अ[1,2] ल लपं. ८. ... सहस्र° अ[1].
९. च वि[1] लपं. १०. जनेप्रा° मूको.

स इ॒धान उ॒षसो॒ राम्या॒ अनु॒ स्व१॒र्ण दी॑देदरु॒षेण॑ भा॒नुना॑ ।
होत्रा॑भिर॒ग्निर्मनु॑षः स्वध्व॒रो राजा॑ वि॒शामति॑थि॒श्चारु॑राय॒वे ॥ ८ ॥

सः । इ॒धानः॑ । उ॒षसः॑ । राम्याः॑ । अनु॑ । स्वः॑ । न । दी॒दे॒त् । अ॒रु॒षेण॑ । भा॒नुना॑ ।
होत्रा॑भिः । अ॒ग्निः । मनु॑षः । सु॒ऽअ॒ध्व॒रः । राजा॑ । वि॒शाम् । अति॑थिः । चारुः॑ । आ॒यवे॑ ॥८॥

**वेङ्कट०** रमणीयासु उषःसु दीप्यमानः अग्निः आदित्यः इव दीप्यते आरोचमानेन तेजसा । होत्राभिः सप्तभिः अग्निः मनुषः सुयज्ञो भवति[1], राजा मनुष्याणाम्, उर्वशीपुत्राय च शोभनः अतिथिः[2] ॥ ८ ॥

ए॒वा नो॑ अग्ने अ॒मृते॑षु पूर्व्य॒ धीष्पी॑पाय बृ॒हद्दि॑वेषु॒ मानु॑षा ।
दुहा॑ना धे॒नुर्वृ॒जने॑षु का॒रवे॒ त्मना॑ श॒तिनं॑ पुरु॒रूप॑मि॒षणि॑ ॥ ९ ॥

ए॒व । नः॒ । अ॒ग्ने॒ । अ॒मृते॑षु । पू॒र्व्य॒ । धीः । पी॒पा॒य॒ । बृ॒हत्ऽदि॑वेषु । मानु॑षा ।
दुहा॑ना । धे॒नुः । वृ॒जने॑षु । का॒रवे॑ । त्मना॑ । श॒तिन॑म् । पु॒रु॒ऽरूप॑म् । इ॒षणि॑ ॥ ९ ॥

**वेङ्कट०** एवम् अस्माकम् अग्ने! देवेषु प्रत्न! स्तोत्रभवा बुद्धिः ववृधे महादीप्तिषु मनुष्याणाम् । दुहाना स्तुतिः उपद्रवेषु स्तोत्रे स्वयमेव शतसङ्ख्याकं बहुरूपम् एषणीयं धनं[3] भवति ॥ ९ ॥

व॒यम॑ग्ने॒ अर्व॑ता वा सु॒वीर्यं॒ ब्रह्म॑णा वा चितयेमा॒ जनाँ॒ अति॑ ।
अ॒स्माकं॑ द्यु॒म्नमधि॒ पञ्च॑ कृ॒ष्टिषू॒च्चा स्व१॒र्ण शु॑शुचीत दु॒ष्टर॑म् ॥ १० ॥

व॒यम् । अ॒ग्ने॒ । अर्व॑ता । वा॒ । सु॒ऽवीर्य॑म् । ब्रह्म॑णा । वा॒ । चि॒त॒ये॒म॒ । जना॑न् । अति॑ ।
अ॒स्माक॑म् । द्यु॒म्नम् । अधि॑ । पञ्च॑ । कृ॒ष्टिषु॑ । उ॒च्चा । स्वः॑ । न । शु॒शु॒ची॒त॒ । दु॒स्तर॑म् ॥१०॥

**वेङ्कट०** वयम् अग्ने! अश्वेन वा शोभनवीर्यं शत्रुं चितयेम[4] अन्नेन वा शत्रुजनान् । अस्माकम् अन्नं पञ्चसु जनेषु अधि[5] भवतु । उच्चैः आदित्य इव अत्यन्तं दीप्यतां शत्रुभिः दुस्तरम् ॥ १० ॥

स नो॑ बोधि सहस्य प्र॒शंस्यो॒ यस्मि॑न्त्सु॒जाता॑ इ॒षय॑न्त सू॒रयः॑ ।
यम॑ग्ने य॒ज्ञमु॑प॒यन्ति॑ वा॒जिनो॒ नित्ये॑ तो॒के दी॑दि॒वांसं॒ स्वे दमे॑ ॥ ११ ॥

सः । नः॒ । बोधि॑ । स॒ह॒स्य॒ । प्र॒ऽशंस्यः॑ । यस्मि॑न् । सु॒ऽजा॒ताः । इ॒षय॑न्त । सू॒रयः॑ ।
यम् । अ॒ग्ने॒ । य॒ज्ञम् । उ॒प॒ऽयन्ति॑ । वा॒जिनः॑ । नित्ये॑ । तो॒के । दी॒दि॒ऽवांस॑म् । स्वे । दमे॑ ॥११॥

१. नास्ति अ[1]. २. °थिः भवति अ[1]. ३. नास्ति मूको. ४. अतिबिभयेम वि[2] अ[1]. ५. अभि मूको.

**वेङ्कट०** सः अस्मान् बुध्यस्व सहसे हित! प्रकर्षेण शंसनीयः। यस्मिन् त्वयि शोभनजननाः स्तोतारः अन्नमैच्छन्। यम् अग्ने! यजनीयम् उपगच्छन्ति हविष्मन्तः [1]औरसस्य पुत्रस्य[1] रक्षणार्थम् आहवनीये दीप्यमानम् ॥ ११ ॥

उभयासो जातवेदः स्याम ते स्तोतारो अग्ने सूरयश्च शर्मणि ।
वस्वो रायः पुरुश्चन्द्रस्य भूयसः प्रजावतः स्वपत्यस्य शग्धि नः ॥ १२ ॥

उभयासः । जातऽवेदः । स्याम । ते । स्तोतारः । अग्ने । सूरयः । च । शर्मणि ।
वस्वः । रायः । पुरुऽचन्द्रस्य । भूयसः । प्रजाऽवतः । सुऽअपत्यस्य । शग्धि । नः ॥ १२ ॥

**वेङ्कट०** हे जातवेदः! तव[2] वयम् उभयासः स्याम स्तोतारः हविषां प्रेरयितारः च गृहे[3]। अग्ने! अस्मभ्यं वासयितृ[4] धनं देहि बहूनां ह्लादकं बहुप्रजावत् शोभनापत्ययुक्तम् ॥ १२ ॥

ये स्तोतृभ्यो गोअग्रामश्वपेशसमग्ने रातिमुपसृजन्ति सूरयः ।
अस्माञ्च ताँश्च प्र हि नेषि वस्य आ बृहद्वदेम विदथे सुवीराः ॥ १३ ॥

ये । स्तोतृऽभ्यः । गोऽअग्राम् । अश्वऽपेशसम् । अग्ने । रातिम् । उपऽसृजन्ति । सूरयः ।
अस्मान् । च । तान् । च । प्र । हि । नेषि । वस्यः । आ । बृहत् । वदेम । विदथे । सुऽवीराः ॥

**वेङ्कट०** ऋ २, १, १६ द्र. ॥ १३ ॥

[5]इति द्वितीयाष्टके पञ्चमाध्याये एकविंशो वर्गः[5] ॥

## [ ३ ]

[6]गृत्समदो भार्गवः शौनकः ( पूर्वम् आङ्गिरसः शौनहोत्रः ) ऋषिः। एकादशानामृचां क्रमेण १ इध्मः समिद्धो वाऽग्निः, २ नराशंसः, ३ इळः, ४ बर्हिः, ५ देवीर्द्वारः, ६ उषासानक्ता, ७ दैव्यौ होतारौ प्रचेतसौ, ८ तिस्रो देव्यः सरस्वतीळाभारत्यः, ९ त्वष्टा, १० वनस्पतिः, ११ स्वाहाकृतयो देवता। त्रिष्टुप् छन्दः, सप्तमी जगती[6]।

समिद्धो अग्निर्निहितः पृथिव्यां प्रत्यङ् विश्वानि भुवनान्यस्थात् ।
होता पावकः प्रदिवः सुमेधा देवो देवान् यजत्वग्निरर्हन् ॥ १ ॥

सम्ऽइद्धः । अग्निः । निऽहितः । पृथिव्याम् । प्रत्यङ् । विश्वानि । भुवनानि । अस्थात् ।
होता । पावकः । प्रऽदिवः । सुऽमेधाः । देवः । देवान् । यजतु । अग्निः । अर्हन् ॥ १ ॥

**वेङ्कट०** समिद्धः अग्निः देवैरस्याम् पृथिव्याम् निहितः। सोऽयं प्रज्वलितः सर्वाणि भूतानि प्रत्यङ् तिष्ठति। ह्वाता शोधकः पुराणः शोभनज्ञानः सोऽयम् देवः देवान् यजतु पूजाम् अर्हन्[6] ॥ १ ॥

---

१-१. औरस्यपुत्रस्य वि[2]; [°]रसपुत्रस्य अ[1]. २. त्वं लपं. ३. ग्रहे लपं. ४. [°]यितारन् मूको. ५-५. नास्ति मूको. ६. महन् वि[2] लपं.

नराशंसः प्रति धामान्यञ्जन् तिस्रो दिवः प्रति मह्ना स्वर्चिः ।
घृतप्रुषा मनसा हव्यमुन्दन् मूर्धन् यज्ञस्य समनक्तु देवान् ॥ २ ॥

नराशंसः । प्रति । धामानि । अञ्जन् । तिस्रः । दिवः । प्रति । मह्ना । सुऽअर्चिः ।
घृतऽप्रुषा । मनसा । हव्यम् । उन्दन् । मूर्धन् । यज्ञस्य । सम् । अनक्तु । देवान् ॥ २ ॥

**वेङ्कट०** नराशंसः[1] स्वरसेन देवशरीराणि प्रत्येकम् अञ्जन् त्रीन् लोकान् प्रति भवति महत्त्वेन[2] सुदीप्तिः । घृतबिन्दुना बुद्धिपूर्वम् हव्यम् क्लेदयन् आहवनीये देवान् आज्येन सम् अनक्तु ॥ २ ॥

ईळितो अग्ने मनसा नो अर्हन् देवान् यक्षि मानुषात् पूर्वो अद्य ।
स आ वह मरुतां शर्धो अच्युतमिन्द्रं नरो बर्हिषदं यजध्वम् ॥ ३ ॥

ईळितः । अग्ने । मनसा । नः । अर्हन् । देवान् । यक्षि । मानुषात् । पूर्वः । अद्य ।
सः । आ । वह । मरुताम् । शर्धः । अच्युतम् । इन्द्रम् । नरः । बर्हिऽसदम् । यजध्वम् ॥ ३ ॥

**वेङ्कट०** स्तुतः [3]अग्ने! त्वं[3] [4]मनसा अस्मान् पूजयन् देवान्† यज[4] मानुषात् होतुः अग्रे भवन् अद्य । सः त्वं मारुतं वेगम् अच्युतम् आ वह[5] । अस्मिन्नवसरे हे मनुष्याः! बर्हिषदम् इन्द्रम् यजध्वम् ॥ ३ ॥

देव बर्हिर्वर्धमानं सुवीरं स्तीर्णं राये सुभरं वेद्यस्याम् ।
घृतेनाक्तं वसवः सीदतेदं विश्वे देवा आदित्या यज्ञियासः ॥ ४ ॥

देव । बर्हिः । वर्धमानम् । सुऽवीरम् । स्तीर्णम् । राये । सुऽभरम् । वेदी इति । अस्याम् ।
घृतेन । अक्तम् । वसवः । सीदत । इदम् । विश्वे । देवाः । आदित्याः । यज्ञियासः ॥ ४ ॥

**वेङ्कट०** हे देव! बर्हिः! त्वं पुनःपुनः लवनेऽपि[6] वर्धमानम् शोभनदेववीरम् आसीः । सुष्ठु सम्भ्रियमाणम् अस्याम् वेद्याम् स्तीर्णम् राये घृतेन अक्तम् इदम् बर्हिः हे वसवः! आसीदत, विश्वे[7] देवाः! रुद्राः! यूयम् आदित्याः! च यज्ञार्हाः ॥ ४ ॥

वि श्रयन्तामुर्विया हूयमाना द्वारो देवीः सुप्रायणा नमोभिः
व्यचस्वतीर्वि प्रथन्तामजुर्या वर्णं पुनाना यशसं सुवीरम् ॥ ५ ॥

वि । श्रयन्ताम् । उर्विया । हूयमानाः । द्वारः । देवीः । सुप्रऽअयनाः । नमःऽभिः ।
व्यचस्वतीः । वि । प्रथन्ताम् । अजुर्याः । वर्णम् । पुनानाः । यशसम् । सुऽवीरम् ॥ ५ ॥

---

१. नराशंस वि[1,2] अ[1] लपं. २. महत्त्वे मूको. ३-३. लमग्ने अ[1]. ४-४. नास्ति वि[1] लपं. † नास्ति वि[1] अ[1]. ५. °ह वा वि[2] अ[1]. ६. प्लवनेऽपि वि[1,2] लपं; प्रवनेऽपि अ[1]; लपने ल. ७. विश्वेविश्वे वि[2] अ[1].

**वेङ्कट०** उरुत्वेन विस्तीर्णा भवन्तु हूयमानाः[1] द्वारः देव्यः सुप्रगमनाः हविर्भिः। अवकाशवत्यः वि प्रथन्ताम् अजराः रूपं प्रयच्छन्त्यः यशस्वत्[2] शोभनपुत्रम् ॥ ५ ॥

[3]इति द्वितीयाष्टके पञ्चमाध्याये द्वाविंशो वर्गः[3] ॥

साध्वपांसि सनता न उक्षिते उषासानक्ता वय्येव रण्विते ।
तन्तुं ततं संवयन्ती समीची यज्ञस्य पेशः सुदुघे पयस्वती ॥ ६ ॥

साधु । अपांसि । सनता । नः । उक्षिते इति । उषसानक्ता । वय्यांऽइव । रण्विते इति । तन्तुम् । ततम् । संवयन्ती इति सम्ऽवयन्ती । समीची इति सम्ऽईची । यज्ञस्य । पेशः । सुदुघे इति सुऽदुघे । पयस्वती इति ॥ ६ ॥

**वेङ्कट०** साधूनि सम्प्रति कर्माणि पुरातनानि आज्येन उक्षिते उषासानक्ते तन्तुवायौ इव प्राज्ञैः शब्दिते कालाख्यं[4] तन्तुम् ततम् संवयन्ती[5] सङ्गते यज्ञस्य रूपभूते शोभनदोहने सारयुक्ते। 'द्वे[6] स्वसारौ वयतः[7] तन्त्रमेतत्[8]। सनातनं विततं[9] षण्मयूखम्। अवान्यांस्तन्तून्[10] किरतो धत्तो अन्यान्। नावपृज्याते[11] न गमाते अन्तम्' ( तैब्रा २,५,५,३ ) इति मन्त्रः ॥ ६ ॥

दैव्या होतारा प्रथमा विदुष्टर ऋजु यक्षतः समृचा वपुष्टरा ।
देवान् यजन्तावृतुथा समञ्जतो नाभा पृथिव्या अधि सानुषु त्रिषु ॥ ७ ॥

दैव्या । होतारा । प्रथमा । विदुःऽतरा । ऋजु । यक्षतः । सम् । ऋचा । वपुःऽतरा । देवान् । यजन्तौ । ऋतुऽथा । सम् । अञ्जतः । नाभा । पृथिव्याः । अधि । सानुषु । त्रिषु ॥

**वेङ्कट०** दैव्यौ होतारौ प्रथमौ विद्वत्तरौ अञ्जसा यज्ञम् यक्षतः मन्त्रेण रूपवत्तरौ देवान् यजन्तौ स्वेस्वे काले आज्येन सम् अञ्जतः पृथिव्याः मध्ये त्रिषु धिष्ण्येषु गार्हपत्यादिषु इति ॥ ७ ॥

सरस्वती साधयन्ती धियं न इळा देवी भारती विश्वतूर्तिः ।
तिस्रो देवीः स्वधया बर्हिरेदमच्छिद्रं पान्तु शरणं निषद्य ॥ ८ ॥

सरस्वती । साधयन्ती । धियम् । नः । इळा । देवी । भारती । विश्वऽतूर्तिः । तिस्रः । देवीः । स्वधया । बर्हिः । आ । इदम् । अच्छिद्रम् । पान्तु । शरणम् । निऽसद्य ॥८॥

**वेङ्कट०** विश्वं यया[12] तूर्णम् आदित्यपत्न्या सा[13] सरस्वती च अस्माकं कर्म साधयन्ती भवति[14]। ता इमाः तिस्रः देव्यः स्वधया सह आगत्य इदम् अच्छिद्रम् बर्हिः आवासस्थानम् निषद्य अस्मान् रक्षन्तु इति ॥ ८ ॥

---

१. भूयमाना वि[1,2] ल लपं. २. °शस्तं लपं. ३-३. नास्ति मूको. ४. कल्याख्यं वि[2] अ[1]. ५. सयव° वि[2] अ[1]; सव° लपं. ६. स्वे लपं. ७. °यतु मूको. ८. °मेवैतत् लपं ९. नास्ति मूको. १०. °वान्यस्तनून् लपं. ११. नापप्रज्याते वि[1] लपं; नावप्र° वि[2] अ[1] ल. १२. यदा मूको. १३. सार्धम् ल शोधः. १४. भवन्ति वि[2] अ[1].

पिशङ्गरूपः सुभरो वयोधाः श्रुष्टी वीरो जायते देवकामः ।
प्रजां त्वष्टा वि ष्यतु नाभिमस्मे अथा देवानामप्येतु पाथः ॥ ९ ॥

पिशङ्गऽरूपः । सुऽभरः । वयःऽधाः । श्रुष्टी । वीरः । जायते । देवऽकामः ।
प्रऽजाम् । त्वष्टा । वि । स्यतु । नाभिम् । अस्मे इति । अथ । देवानाम् । अपि । एतु । पाथः ॥ ९ ॥

वेङ्कट० [1]अनेकरूपः शोभनपितृभरणः[1] अन्नस्य दाता क्षिप्रकारी पुत्रः त्वष्टुः प्रसादात् जायते देवान् कामयमानः । ताम् प्रजाम् त्वष्टा वि ष्यतु[2] विसृजतु[2] सन्नहनम् अस्माकम् । अथ तथा कृत्वा देवानाम् स्थानम् अपि एतु[3] ॥ ९ ॥

वनस्पतिरवसृजन्नुप स्थादग्निर्हविः सूदयाति प्र धीभिः ।
त्रिधा समक्तं नयतु प्रजानन् देवेभ्यो दैव्यः शमितोप हव्यम् ॥ १० ॥

वनस्पतिः । अवऽसृजन् । उप । स्थात् । अग्निः । हविः । सूदयाति । प्र । धीभिः ।
त्रिधा । सम्ऽअक्तम् । नयतु । प्रऽजानन् । देवेभ्यः । दैव्यः । शमिता । उप । हव्यम् ॥ १० ॥

वेङ्कट० वनस्पतिः देवेभ्यो हवींषि यथास्वम् अवसृजन् उपतिष्ठतु । अग्निः हविः प्रेरयति कर्मभिः । उपस्तरणाद् द्विरभिघारणाच्च त्रिधा[5] समक्तम् नयतु आत्मीयं हविः प्रकर्षेण जानन् । देवेभ्यः च दैव्यः शमिता स्वं स्वं हविः उप नयतु ॥ १० ॥

घृतं मिमिक्षे घृतमस्य योनिर्घृते श्रितो घृतम्वस्य धाम ।
अनुष्वधमा वह मादयस्व स्वाहाकृतं वृषभ वक्षि हव्यम् ॥ ११ ॥

घृतम् । मिमिक्षे । घृतम् । अस्य । योनिः । घृते । श्रितः । घृतम् । ऊँ इति । अस्य । धाम ।
अनुऽस्वधम् । आ । वह । मादयस्व । स्वाहाऽकृतम् । वृषभ । वक्षि । हव्यम् ॥ ११ ॥

वेङ्कट० घृतम् प्रति गच्छति । घृतम् अस्य योनिः । यस्माद् घृताद्धुतादुत्तिष्ठति तदर्थमसौ घृते श्रितः [6]घृतम् अस्य स्थानम्[6] स्वधांस्वधां प्रति देवान् आ वह हविः मादयस्व च । त्वयि स्वाहाकृतम्[7] कामानां वर्षितः! हव्यम् वह ११ ॥

[8]इति द्वितीयाष्टके पञ्चमाध्याये त्रयोविंशो वर्गः[8] ॥

---

१-१. °रूपशोभ° वि[1] अ[1]. २. ष्यति मूको. ३. °ष्यति वि[1] ल लपं. ४. °तु इति वि[1] अ[1]. ५. त्रिधात्रिधा वि[1] लपं. ६-६. घृ ··· स्था वि[1] अ[1]. ७. स्वाहाततं वि[1] अ[1]. ८-८. नास्ति मूको.

[ ४ ]

[1]सोमाहुतिर्भार्गव ऋषिः । अग्निर्देवता । त्रिष्टुप् छन्दः[1] ।

हुवे वः सुद्योत्मानं सुवृक्तिं विशामग्निमतिथिं सुप्रयसम् ।
मित्रइव यो दिधिषाय्यो भूद् देव आदेवे जने जातवेदाः ॥ १ ॥

हुवे । वः । सुऽद्योत्मानम् । सुऽवृक्तिम् । विशाम् । अग्निम् । अतिथिम् । सुऽप्रयसम् ।
मित्रःऽइव । यः । दिधिषाय्यः । भूत् । देवः । आऽदेवे । जने । जातऽवेदाः ॥ १ ॥

**वेङ्कट०** सोमाहुतिर्भार्गवः । ह्वयामि युष्माकं सुदीप्तिं सुस्तुतिम्[2] विशाम् अतिथिम्[3] अग्निम् स्वन्नम् । यः मित्रः इव भर्तव्यो भवति, सोऽयं दीप्यमान आनीतदेवजने[4] यजमाने जातवेदाः ॥ १ ॥

इमं विधन्तो अपां सधस्थे द्वितादधुर्भृगवो विक्ष्वायोः ।
एष विश्वान्यभ्यस्तु भूमा देवानामग्निररतिर्जीराश्वः ॥ २ ॥

इमम् । विधन्तः । अपाम् । सधऽस्थे । द्विता । अदधुः । भृगवः । विक्षु । आयोः ।
एषः । विश्वानि । अभि । अस्तु । भूम । देवानाम् । अग्निः । अरतिः । जीरऽअश्वः ॥ २ ॥

**वेङ्कट०** इमम् परिचरन्तः अन्तरिक्षे भृगवः [5]प्रथमं द्वैधं[5] निहितवन्तो गार्हपत्यमाहवनीयं च मनुष्येषु उर्वशीपुत्रस्य । सोऽयं विश्वानि [6]भूतानि अभि भवतु देवानाम् अग्निः[6] अभिगन्ता क्षिप्राश्वः ॥ २ ॥

अग्निं देवासो मानुषीषु विक्षु प्रियं धुः क्षेष्यन्तो न मित्रम् ।
स दीदयदुशतीरूर्म्या आ दक्षाय्यो यो दास्वते दम आ ॥ ३ ॥

अग्निम् । देवासः । मानुषीषु । विक्षु । प्रियम् । धुः । क्षेष्यन्तः । न । मित्रम् ।
सः । दीदयत् । उशतीः । ऊर्म्याः । आ । दक्षाय्यः । यः । दास्वते । दमे । आ ॥ ३ ॥

**वेङ्कट०** अग्निम् देवाः[7] मानुषीषु प्रजासु प्रियं निदधुः [8]यथा निवासमिच्छन्तो[8] दृढं मित्रम् सम्पादयन्ति । एवम् सः अग्निः आत्मानं कामयमाना रात्रीः आ द्योतयति वर्धनीयो यः यजमानाय गृहे ॥ ३ ॥

अस्य रण्वा स्वस्येव पुष्टिः संदृष्टिरस्य हियानस्य दक्षोः ।
वि यो भरिभ्रदोषधीषु जिह्वामत्यो न रथ्यो दोधवीति वारान् ॥ ४ ॥

---

१-१ नास्ति मूको. २. संस्तुतिम् वि[1]; सस्तुतिम् लपं. ३. नास्ति वि[2] अ[1]. ४. °देवयजने वि[1] लपं; °देवं जने अ[1]. ५. प्रथम द्वै° मूको; प्रथमं दैव्यं ल शोधः. ६-६. नास्ति वि[1] लपं. ७. देवसा वि[1] लपं. ८-८. यथा हि वास° वि लपं.

अस्य । रण्वा । स्वस्यऽइव । पुष्टिः । सम्ऽदृष्टिः । अस्य । हियानस्य । धक्षोः ।
वि । यः । भरिभ्रत् । ओषधीषु । जिह्वाम् । अत्यः । न । रथ्यः । दोधवीति । वारान् ॥ ४ ॥

**वेङ्कट०** अस्य रमणीया धनस्येव पुष्टिः । सा[1] सन्दृश्यमाना अस्य गच्छतः वनं दग्धुमिच्छतः । यः ओषधीषु ज्वालां भरति[2] सोऽयम् अश्वो रथे युक्तो यथा बालान् धुनोत्येवं[3] ज्वालाः प्रेरयति ॥ ४ ॥

आ यन्मे अभ्वं वनदः पनन्तोशिग्भ्यो नामिमीत वर्णम् ।
स चित्रेण चिकिते रंसु भासा जुजुर्वाँ यो मुहुरा युवा भूत् ॥ ५ ॥

आ । यत् । मे । अभ्वम् । वनदः । पनन्त । उशिक्ऽभ्यः । न । अमिमीत । वर्णम् ।
सः । चित्रेण । चिकिते । रम्ऽसु । भासा । जुजुर्वान् । यः । मुहुः । आ । युवा । भूत् ॥५॥

**वेङ्कट०** आ पनन्त अकथयन् मम अस्य वनादः अरण्यस्य भक्षयितुः महिमानम् । स सर्वं वनं दहन्नपि उशिग्भ्यः कामयमानेभ्यश्चातकेभ्यो[4] मन्दपालपुत्रेभ्यः स्ववर्णं[5] ज्वालालक्षणं न चकार । सः चित्रेण भासा प्रज्ञायते रमणीयेषु अरण्येषु, यः जीर्णो मुहुर्मुहुः युवा च भवति ॥ ५ ॥

[6]इति द्वितीयाष्टके पञ्चमाध्याये चतुर्विंशो वर्गः[6] ॥

आ यो वना तातृषाणो न भाति वार्ण पथा रथ्येव स्वानीत् ।
कृष्णाध्वा तपू रण्वश्चिकेत द्यौरिव स्मयमानो नभोभिः ॥ ६ ॥

आ । यः । वना । ततृषाणः । न । भाति । वाः । न । पथा । रथ्याऽइव । स्वानीत् ।
कृष्णऽअध्वा । तपुः । रण्वः । चिकेत । द्यौःऽइव । स्मयमानः । नभःऽभिः ॥ ६ ॥

**वेङ्कट०** यः काष्ठानि प्रति पिपासुरिव आ[1] भाति, सोऽयमुदकमिव पथा गच्छत् रथचक्रमिव च स्वनति । कृष्णवर्त्मा तापयिता रमणीयः प्रज्ञापयते द्यौः इव नक्षत्रैः तेजोभिः स्मयमानः ॥ ६ ॥

स यो व्यस्थादभि दक्षदुर्वी पशुर्नैति स्वयुरगोपाः ।
अग्निः शोचिष्माँ अतसान्युष्णन् कृष्णव्यथिरस्वदयन्न भूम ॥ ७ ॥

सः । यः । वि । अस्थात् । अभि । धक्षत् । उर्वीम् । पशुः । न । एति । स्वऽयुः । अगोपाः ।
अग्निः । शोचिष्मान् । अतसानि । उष्णन् । कृष्णऽव्यथिः । अस्वदयत् । न । भूम ॥ ७ ॥

---

१. नास्ति मूको. २. विभरति वि[2] अ[1]. ३. धुनात्येवं वि[2]. ४. °श्चाटकेभ्यो वि[2]; °श्चटकेभ्यो वि[1] लपं; °श्चभटकेभ्यो अ[1]; °श्च गतेभ्यो ल. ५. स्वं वर्ण वि[1] लपं; स्ववर्ण वि[2]. ६-६. नास्ति मूको.

वेङ्कट० [1]सः यः अग्निः[1] वि तिष्ठते अभि दहन् उर्वीम्, सः पशुः इव गच्छति स्वसञ्चरणस्थानमिच्छन् अरक्ष्यमाणः[2] स्वैरं गच्छन्। अग्निः दीप्तिमान् अतसवनानि[3] दहन् कृष्णवर्त्मा भूमिम् एव न स्वादयति, सर्वम् अन्यद् भक्षयति ॥ ७ ॥

नू ते पूर्वस्यावसो अधीतौ तृतीये विदथे मन्म शंसि ।
अस्मे अग्ने संयद्वीरं बृहन्तं क्षुमन्तं वाजं स्वपत्यं रयिं दाः ॥ ८ ॥

नु । ते । पूर्वस्य । अवसः । अधिऽइतौ । तृतीये । विदथे । मन्म । शंसि ॥ अस्मे इति । अग्ने । संयत्ऽवीरम् । बृहन्तम् । क्षुऽमन्तम् । वाजम् । सुऽअपत्यम् । रयिम् । दाः ॥ ८ ॥

वेङ्कट० सम्प्रति तव पुरातनस्य अन्नस्य स्मरणे तृतीये सवने शस्त्रम् अशंसि। अस्मभ्यम् अग्ने! संयन्ति यत्र वीराः तत् महत् शब्दवत् अन्नम् शोभनापत्यम् देहि, धनं च ॥ ८ ॥

त्वया यथा गृत्समदासो अग्ने गुहा वन्वन्त उपराँ अभि ष्युः ।
सुवीरासो अभिमातिषाहः स्मत् सूरिभ्यो गृणते तद् वयो धाः ॥ ९ ॥

त्वया । यथा । गृत्सऽमदासः । अग्ने । गुहा । वन्वन्तः । उपरान् । अभि । स्युरिति स्युः । सुऽवीरासः । अभिमातिऽसहः । स्मत् । सूरिऽभ्यः । गृणते । तत् । वयः । धाः ॥ ९ ॥

वेङ्कट० त्वया यथा एते गृत्समदकुलजाताः[4] अग्ने! गुहायां स्थितानपि प्रच्छन्नान्[5] शत्रून् भजनवन्तोऽभिभवेयुः[6] सुपुत्राः[7] शत्रून् सहमानाः। तथा शोभनं हविः प्रेरयद्भ्यः स्तुवते मह्यं च तादृशमन्नं धेहि ॥ ९ ॥

[8]इति द्वितीयाष्टके पञ्चमाध्याये पञ्चविंशो वर्गः[8] ॥

## [ ५ ]

[1]सोमाहुतिर्भार्गव ऋषिः। अग्निर्देवता। अनुष्टुप् छन्दः[1]।

होताजनिष्ट चेतनः पिता पितृभ्य ऊतये । प्रयक्षञ्जेन्यं वसु शकेम वाजिनो यमम् ॥ १ ॥

होता । अजनिष्ट । चेतनः । पिता । पितृऽभ्यः । ऊतये ।
प्रऽयक्षन् । जेन्यम् । वसु । शकेम । वाजिनः । यमम् ॥ १ ॥

वेङ्कट० होता जातः प्रज्ञापनः पालयिता पालयितृभ्यो रक्षणार्थं प्रददत् जयशीलं धनम्। अस्य वाजिनः यमनं शक्ता भवाम कर्तुम् ॥ १ ॥

---

१. सोऽयमग्निः वि[1] लपं. २. °माण वि[1] लपं; °माणं वि[1] अ[1]. ३. अतसधना° वि[1] ल लपं; अतः धना° वि[2]; अत धना° अ[1]. ४. गृत्स° अ[1]. ५. प्रच्छन्न वि[1] लपं. ६. भजन्नवन्तो° वि[1] अ[1]. ७. सुपुत्रान् अ[1]; सुपुत्रां वि[2]. ८-८. नास्ति मूको.

आ यस्मि॑न्त्स॒प्त र॒श्मय॑स्त॒ता य॒ज्ञस्य॑ ने॒तरि॑ ।
म॒नु॒ष्वद् दैव्य॑मष्ट॒मं पोता॒ विश्वं॒ तदि॑न्वति ॥ २ ॥

आ । यस्मि॑न् । स॒प्त । र॒श्मयः॑ । त॒ताः । य॒ज्ञस्य॑ । ने॒तरि॑ ।
म॒नु॒ष्वत् । दैव्य॑म् । अ॒ष्ट॒मम् । पोता॑ । विश्व॑म् । तत् । इ॒न्व॒ति ॥ २ ॥

**वेङ्कट०** यस्मिन् आदित्ये सप्त रश्मयः आ ततः यज्ञस्य नेतरि, मनुरिव तं दिवि भवं सप्तानां रश्मीनाम् अष्टमम् पोता अयमग्निः सर्वमेतत् प्रीणयति रश्मिजातमादित्यं च ॥ २ ॥

द॒ध॒न्वे वा॒ यदी॒मनु॒ वोच॒द् ब्रह्मा॑णि॒ वेरु॒ तत् ।
परि॒ विश्वा॑नि॒ काव्या॒ ने॒मिश्च॒क्रमि॑वाभवत् ॥ ३ ॥

द॒ध॒न्वे । वा॒ । यत् । ई॒म् । अनु॑ । वोच॑त् । ब्रह्मा॑णि । वेः । ऊँ इति॑ । तत् ।
परि॑ । विश्वा॑नि । काव्या॑ । ने॒मिः । च॒क्रम्ऽइ॑व । अ॒भ॒व॒त् ॥ ३ ॥

**वेङ्कट०** 'यदि एनं धिष्ण्ये अनु स्थापयति'[1], वदति वा स्तोत्राणि, वेत्ति तत् सर्वम् अग्निः, परि भवति च विश्वानि स्तोत्राणि नेमिः इव चक्रम् ॥ ३ ॥

सा॒कं हि शुचि॑ना॒ शुचिः॑ प्र॒शा॒स्ता क्रतु॒नाज॑नि ।
वि॒द्वाँ अ॑स्य व्र॒ता ध्रु॒वा व॒याइ॒वानु॑ रोहते ॥ ४ ॥

सा॒कम् । हि । शुचि॑ना । शुचिः॑ । प्र॒ऽशा॒स्ता । क्रतु॑ना । अज॑नि ।
वि॒द्वान् । अ॒स्य॒ । व्र॒ता । ध्रु॒वा । व॒याःऽइ॑व । अनु॑ । रो॒ह॒ते ॥ ४ ॥

**वेङ्कट०** शुचिना कर्मणा सहैव[2] दीप्तोऽग्निः प्रशास्ता[2] प्रादुर्भवति। विद्वान् अस्य कर्माणि ध्रुवाणि, शाखाः इव वृक्षस्य, तानि अनु रोहते ॥ ४ ॥

ता अ॑स्य॒ वर्ण॑मा॒युवो॒ नेष्टुः॑ सचन्त धे॒नवः॑ ।
कु॒वित् ति॒सृभ्य॒ आ वरं॒ स्वसा॑रो॒ या इ॒दं य॒युः ॥ ५ ॥

ताः । अ॒स्य॒ । वर्ण॑म् । आ॒युवः॑ । नेष्टुः॑ । स॒च॒न्त॒ । धे॒नवः॑ ।
कु॒वित् । ति॒सृऽभ्यः॑ । आ । वर॑म् । स्वसा॑रः । याः । इ॒दम् । य॒युः ॥ ५ ॥

**वेङ्कट०** ताः अस्य नेतुः धेनवः त्रयो लोकाः गमनशीलस्य वरणीयं हविः सेवन्ते । ताभ्यः तिसृभ्यः धेनुभ्यो बहु आगच्छति वरणीयम् । स्वसारः याः[3] भूम्यः उदकं प्राप्नुवन्ति । [4]'इदम्' (निघ १, १२) इत्युदकनाम[4] ॥ ५ ॥

अस्योत्तरा भूयसे निर्वचनाय—

---

१. यदेनमिधिष्ण्ये अनु स्थाप° वि[?] कर्प; °धिष्णिवेनुत्थाप° अ[?]. २. नास्ति मूको. ३. नास्ति वि[?] कर्प.
४-४. उदकनाम अ[?].

यदीं मातुरुप स्वसा घृतं भरन्त्यस्थित । तासामध्वर्युरागतौ यवो वृष्टीव मोदते ॥६॥

यदि । मातुः । उप । स्वसा । घृतम् । भरन्ती । अस्थित ।
तासाम् । अध्वर्युः । आऽगतौ । यवः । वृष्टीऽइव । मोदते ॥ ६ ॥

**वेङ्कट०** [1]यदि पृथिव्याः स्वसा द्यौः उदकम् भरन्ती[†] उप तिष्ठति। ततः तासाम् तिसृणाम् अन्तरिक्षसहितानाम् आगमने सङ्गमने अध्वरमिच्छन् अग्निः, यवः इव वृष्ट्या, मोदते[1] ॥ ६ ॥

स्वः स्वाय धायसे कृणुतामृत्विगृत्विजम् । स्तोमं यज्ञं चादरं वनेमा ररिमा वयम् ॥७॥

स्वः । स्वाय । धायसे । कृणुताम् । ऋत्विक् । ऋत्विजम् ।
स्तोमम् । यज्ञम् । च । आत् । अरम् । वनेम । ररिम । वयम् ॥ ७ ॥

**वेङ्कट०** [2]मदीयोऽयम् ऋत्विक् आत्मनो धारणार्थम् ऋत्विजम् मदीयम् कृणुताम्[2]। अथ अस्मै वयम्[3] स्तोमम् यज्ञम् च पर्याप्तं भजेम[4] दद्याम[5] च हविः ॥ ७ ॥

यथा विद्वाँ अरं करद् विश्वेभ्यो यजतेभ्यः । अयमग्ने त्वे अपि यं यज्ञं चकृमा वयम् ॥८॥

यथा । विद्वान् । अरम् । करत् । विश्वेभ्यः । यजतेभ्यः ।
अयम् । अग्ने । त्वे इति । अपि । यम् । यज्ञम् । चकृम । वयम् ॥ ८ ॥

**वेङ्कट०** यथा प्राज्ञः[6] अलङ्करोति विश्वेभ्यः देवेभ्यः, अयम् अपि त्वयि तथा अग्ने! भवति, यम् यज्ञम् कृतवन्तः वयम्[7] विद्वांसोऽपि ॥ ८ ॥

[8]इति द्वितीयाष्टके पञ्चमाध्याये षड्विंशो वर्गः[8] ॥

## [ ६ ]

[1]सोमाहुतिर्भार्गव ऋषिः । अग्निर्देवता । गायत्री छन्दः[1] ।

इमां मे अग्ने समिधमिमामुपसदं वनेः । इमा उ षु श्रुधी गिरः ॥ १ ॥

इमाम् । मे । अग्ने । सम्ऽइधम् । इमाम् । उपऽसदम् । वनेरिति वनेः ।
इमाः । ऊँ इति । सु । श्रुधि । गिरः ॥ १ ॥

**वेङ्कट०** इमाम् मे अग्ने! समिधम् भजेथाः, एवम् इमाम् उपसत्तिं च। स्तुतीश्च सुष्ठु शृणु इमाः ॥ १ ॥

---

१-१. नास्ति वि॰ लपं. † भरन्ति अ॰. २-२. नास्ति वि॰ लपं. ३. व्यं यं वि॰ अ॰. ४. भजाम वि॰. ५. दधाम अ॰. ६. ज्ञः वि॰ अ॰. ७. नास्ति मूको. ८-८. नास्ति मूको.

अया ते अग्ने विधेमोर्जो नपादश्वमिष्टे । एना सूक्तेन सुजात ॥ २ ॥

अया । ते । अग्ने । विधेम । ऊर्जः । नपात् । अश्वम्ऽइष्टे । एना । सुऽउक्तेन । सुऽजात ॥२॥

**वेङ्कट०** अनया समिधा [1]परिचरामः अग्ने! । अन्नस्य[1] पुत्र!, यस्त्वं गमनार्थम्[2] अश्वम् इच्छसि । शोभनजनन! अनेन सूक्तेन विधेम ॥ २ ॥

तं त्वा गीर्भिर्गिर्वणसं द्रविणस्युं द्रविणोदः । सपर्येम सपर्यवः ॥ ३ ॥

तम् । त्वा । गीःऽभिः । गिर्वणसम् । द्रविणस्युम् । द्रविणःऽदः । सपर्येम । सपर्यवः ॥ ३ ॥

**वेङ्कट०** तम् त्वा गीर्भिः[3] गीर्भिर्वननीयं धनेच्छुं धनस्य दातः! इतः परिचरेम परिचरणेच्छवः ॥ ३ ॥

स बोधि सूरिर्मघवा वसुपते वसुदावन् । युयोध्य१स्मद् द्वेषांसि ॥ ४ ॥

सः । बोधि । सूरिः । मघऽवा । वसुऽपते । वसुऽदावन् । युयोधि । अस्मत् । द्वेषांसि ॥ ४ ॥

**वेङ्कट०** सः[4] बुध्यस्व प्राज्ञो[5] धनवान्[6] धनपते! धनदातः!, पृथक् कुरु च अस्मत्तः शत्रून् ॥ ४ ॥

स नो वृष्टिं दिवस्परि स नो वाजमनर्वाणम् । स नः सहस्रिणीरिषः ॥ ५ ॥

सः । नः । वृष्टिम् । दिवः । परि । सः । नः । वाजम् । अनर्वाणम् । सः । नः । सहस्रिणीः । इषः ॥ ५ ॥

**वेङ्कट०** सः त्वम् अस्मभ्यम् दिवः वृष्टिम् देहि, सः नः बलम् अस्खलितम्, सः नः सहस्रसङ्ख्यानि अन्नानि ॥ ५ ॥

ईळानायावस्यवे यविष्ठ दूत नो गिरा । यजिष्ठ होतरा गहि ॥ ६ ॥

ईळानाय । अवस्यवे । यविष्ठ । दूत । नः । गिरा । यजिष्ठ । होतः । आ । गहि ॥ ६ ॥

**वेङ्कट०** स्तुवते हविरिच्छते युवतम! दूत! अस्माकं होत्रे स्तोत्रेण प्रीतस्त्वं यष्टृतम! होतः! आ गच्छ ॥ ६ ॥

अन्तर्ह्यग्न ईयसे विद्वान् जन्मोभया कवे । दूतो जन्येव मित्र्यः ॥ ७ ॥

---

१-१. °र ··· न्नस्य अ°; °र ··· ग्नेऽन्न° वि[2]. २. गमनसमानार्थम् वि[1] लपं. ३. नास्ति मूको. ४. नास्ति वि[2]. ५. प्रज्ञः वि[1] लपं. ६. नास्ति वि[1] लपं.

अन्तः । हि । अग्ने । ईयसे । विद्वान् । जन्म । उभया । कवे । दूतः । जन्याऽइव । मित्र्यः ॥ ७ ॥

**वेङ्कट०** द्यावापृथिव्योः अन्तः हि अग्ने! गच्छसि[1] विद्वान् जन्मानि उभयानि मानुषाणि दैव्यानि च कवे!, दूतः इव जनपदान् मित्रहितः ॥ ७ ॥

## स विद्वाँ आ च पिप्रयो यक्षि चिकित्व आनुषक् । आ चास्मिन्त्सत्सि बर्हिषि ॥८॥

सः । विद्वान् । आ । च । पिप्रयः । यक्षि । चिकित्वः । आनुषक् । आ । च । अस्मिन् । सत्सि । बर्हिषि ॥

**वेङ्कट०** सः विद्वान् अग्ने! देवान् आ च यज च प्रीणय, प्राज्ञ! अनुषक्तम् । आ सीद च अस्मिन् बर्हिषि ॥ ८ ॥

[2]इति द्वितीयाष्टके पञ्चमाध्याये सप्तविंशो वर्गः[2] ॥

## [ ७ ]

[2]सोमाहुतिर्भार्गव ऋषिः । अग्निर्देवता । गायत्री छन्दः[2] ॥

## श्रेष्ठं यविष्ठ भारताग्ने द्युमन्तमा भर । वसो पुरुस्पृहं रयिम् ॥ १ ॥

श्रेष्ठम् । यविष्ठ । भारत । अग्ने । द्युऽमन्तम् । आ । भर । वसो इति । पुरुऽस्पृहम् । रयिम् ॥ १ ॥

**वेङ्कट०** श्रेष्ठम् युवतम! भारत! इत्याह 'एष हि देवेभ्यो हव्यं भरति' ( माश १,४,२,२; ,५,१,८ ) इति ब्राह्मणम्, अग्ने! दीप्तिमन्तम् आ भर वासयितः! बहुभिः स्पृहणीयम् रयिम्। [2]वयमेव धनवन्तः स्याम[2] ॥ १ ॥

## मा नो अरातिरीशत देवस्य मर्त्यस्य च । पर्षि तस्या उत द्विषः ॥ २ ॥

मा । नः । अरातिः । ईशत । देवस्य । मर्त्यस्य । च । पर्षि । तस्याः । उत । द्विषः ॥ २ ॥

**वेङ्कट०** मा अस्माकम् ईशिष्ट अरातिः देवमनुष्ययोः । पारय अस्मान् तस्याः[3], शत्रोश्च पारय ॥ २ ॥

## विश्वा उत त्वया वयं धारा उदन्याइव । अति गाहेमहि द्विषः ॥ ३ ॥

विश्वाः । उत । त्वया । वयम् । धाराः । उदन्याःऽइव । अति । गाहेमहि । द्विषः ॥ ३ ॥

**वेङ्कट०** अपि चाग्ने! त्वया वयम् उदकभवाः धाराः इव शत्रून् अति गाहेमहि ॥ ३ ॥

## शुचिः पावक वन्द्योऽग्ने बृहद् वि रोचसे । त्वं घृतेभिराहुतः ॥ ४ ॥

शुचिः । पावक । वन्द्यः । अग्ने । बृहत् । वि । रोचसे । त्वम् । घृतेभिः । आऽहुतः ॥ ४ ॥

---

१. °सि पद्भ्याम् वि[2] अ[1]. २-२. नास्ति मूको. ( तु. टि. ३ ). ३. °स्याः, वयमेव धनवन्तः स्याम मूको. स्थानभ्रष्टः पाठः द्र. ।

वेङ्कट० निगदसिद्धा ॥ ४ ॥

त्वं नो॑ असि भार॒ताऽग्ने॑ व॒शाभि॑रु॒क्षभि॑ः । अ॒ष्टाप॑दीभि॒राहु॑तः ॥ ५ ॥

त्वम् । नः॒ । अ॒सि॒ । भा॒र॒त॒ । अग्ने॑ । व॒शाभि॑ः । उ॒क्षऽभि॑ः । अ॒ष्टाऽप॑दीभिः । आऽहु॑तः ॥ ५ ॥

वेङ्कट० त्वम् अस्माकम् भारत ! अग्ने ! वशाभिः उक्षभिः अष्टापदीभिः गर्भिणीभिश्च आहुतः भवसि[1] ॥५॥

द्र्व॑न्नः स॒र्पिरा॑सुतिः प्र॒त्नो होता॒ वरे॑ण्यः । सह॑सस्पु॒त्रो अद्भु॑तः ॥ ६ ॥

द्रुऽअ॑न्नः । स॒र्पिःऽआ॑सुतिः । प्र॒त्नः । होता॑ । वरे॑ण्यः । सह॑सः । पु॒त्रः । अद्भु॑तः ॥ ६ ॥

वेङ्कट० वृक्षान्नः घृताहुतिः पुराणः होता वरेण्यः सहसः सूनुः महान् ॥ ६ ॥

[2]इति द्वितीयाष्टके पञ्चमाध्याये अष्टाविंशो वर्गः[2] ॥

## [ ८ ]

[2]गृत्समदो भार्गवः शौनकः ( पूर्वम् आङ्गिरसः शौनहोत्रः ) ऋषिः ।
अग्निर्देवता । गायत्री छन्दः, षष्ठी अनुष्टुप्[2] ॥

वा॒ज॒यन्नि॑व॒ नू रथा॒न् योगाँ॑ अ॒ग्नेरुप॑ स्तुहि । य॒शस्त॑मस्य मी॒ळ्हुष॑ः ॥ १ ॥

वा॒ज॒यन्ऽइ॑व । नु । रथा॑न् । योगा॑न् । अ॒ग्नेः । उप॑ । स्तु॒हि॒ । य॒शःऽत॑मस्य । मी॒ळ्हुष॑ः ॥ १ ॥

वेङ्कट० गृत्समदः[3] । अन्नमिच्छन् इव रथान् क्षिप्रम् अग्नेः उपायान् उप स्तुहि यशस्वितमस्य सेक्तुः ॥१॥

यः सु॒नी॒थो द॑दा॒शुषे॑ऽजु॒र्यो ज॒रय॑न्न॒रिम् । चारु॑प्रतीक॒ आहु॑तः ॥ २ ॥

यः । सु॒ऽनी॒थः । द॒दा॒शुषे॑ । अ॒जु॒र्यः । ज॒रय॑न् । अ॒रिम् । चारु॑ऽप्रतीकः । आऽहु॑तः ॥ २ ॥

वेङ्कट० यः सुनयनो यजमानाय स्वयं जरयितुमशक्यः सर्वम् जरयन् च अरिम् चार्वङ्गः आहुतः ॥ २ ॥

य उ॑ श्रि॒या दमे॒ष्वा दो॒षोषसि॑ प्रश॒स्यते॑ । यस्य॑ व्र॒तं न मीय॑ते ॥ ३ ॥

यः । ऊँ इति॑ । श्रि॒या । दमे॑षु । आ । दो॒षा । उ॒षसि॑ । प्र॒ऽश॒स्यते॑ । यस्य॑ । व्र॒तम् । न । मीय॑ते ॥

वेङ्कट० यः[4] श्रिया सहितो[5] गृहेषु रात्रौ अहनि च स्तूयते । यस्य व्रतम् न क्वचिदपि हिंस्यते ॥ ३ ॥

आ यः स्व१॒र्ण भा॒नुना॑ चि॒त्रो वि॒भात्य॒र्चिषा॑ । अ॒ञ्जा॒नो अ॒जरै॑र॒भि ॥ ४ ॥

आ । यः । स्व१॑ः । न । भा॒नुना॑ । चि॒त्रः । वि॒ऽभाति॑ । अ॒र्चिषा॑ । अ॒ञ्जा॒नः । अ॒जरै॑ः । अ॒भि ॥

---

१. असि वि[2] अ[1]. २-२. नास्ति मूको. ३. गृथ्समदः अ[1]. ४. नास्ति वि[1] लपं. ५, सहा वि[1] लपं.

**वेङ्कट०** आ विभाति यः[1] **आदित्यः इव**[2] **तेजसा** चित्रः अर्चिषा। **सोऽयम्** अजरैः **आत्मतेजोभिः सर्वम्** अभि अज्ञानः **भवति** ॥ ४ ॥

**अत्रिमनु स्वराज्यमग्निमुक्थानि वावृधुः। विश्वा अधि श्रियो दधे ॥ ५ ॥**

अत्रिम्। अनु। स्वऽराज्यम्। अग्निम्। उक्थानि। ववृधुः। विश्वाः। अधि। श्रियः। दधे ॥ ५ ॥

**वेङ्कट०** अत्रिम् ऋषिम् अनु **स्थितानि** उक्थानि स्वराज्यम् अग्निम् **अवर्धयन्**। विश्वाः **च** श्रियः **अग्निः** अधि **धारयति** ॥ ५ ॥

**अग्नेरिन्द्रस्य सोमस्य देवानामूतिभिर्वयम्।**
**अरिष्यन्तः सचेमह्यभि ष्याम पृतन्यतः ॥ ६ ॥**

अग्नेः। इन्द्रस्य। सोमस्य। देवानाम्। ऊतिऽभिः। वयम्।
अरिष्यन्तः। सचेमहि। अभि। स्याम। पृतन्यतः ॥ ६ ॥

**वेङ्कट०** **अग्न्यादीनां रक्षणैः** वयम् **सङ्गच्छेमहि अहिंस्यमानाः। शत्रून् च** [3]अभि **भवेम**[3] ॥ ६ ॥

[4]इति द्वितीयाष्टके पञ्चमाध्याये एकोनत्रिंशो वर्गः[4] ॥

अष्टकस्य द्वितीयस्य माधवः सुन्दरीसुतः।
व्याख्यत् पञ्चममध्यायं तं[5] पश्यन्तु विचक्षणाः[6] ॥

इति वेङ्कटमाधवाचार्यविरचिते ऋक्संहिताव्याख्याने
द्वितीयाष्टके पञ्चमोऽध्यायः ॥

—*—

इति ऋग्वेदे सभाष्ये द्वितीयाष्टके पञ्चमोऽध्यायः ॥



---

१. यज्ञ वि[२] अ[१]. २. नास्ति वि[२] अ[१]. ३-३. अभिभवामः वि[१] ल लपं. ४-४. नास्ति मूको. ५. तत् ल. ६. च पण्डिताः ल.

## अथ द्वितीयाष्टके षष्ठोऽध्यायः

वेङ्कट०

'नि होता होतृषदने'[1] व्याचिख्यासति माधवः ।
लटः प्रदर्शयन् वृत्तिं लुटश्च तदनन्तरम् ॥ १ ॥

लट्[2] 'स्तविष्यामि त्वामहम्'[3], 'न जातो न जनिष्यते'[4] ।
'यन्मानुषान् यक्ष्यमाणान्'[5], 'अग्ने भद्रं करिष्यसि'[6] ॥ २ ॥

'यानि करिष्या कृणुहि'[7], 'प्र हिन्वानः'[8] 'अग्रेगो राजा'[9] ।
'वृत्रमिन्द्रो हनिष्यन्'[10], 'वक्ष्यन्तीवेदा गनीगन्ति'[11] ॥ ३ ॥

दृष्टो लटः प्रयोगोऽल्पो लुटस्त्वल्पतरस्ततः[12] ।
दृश्यन्ते ब्राह्मणे तस्य[13] 'कस्यं[14]वा श्वो[14] भवितेति'[15] ॥ ४ ॥

'श्वो युज्ञे प्रयोक्तासि'[16] 'श्वो विषुवान् भवितेति'[17] च ।
शाट्यायनकं 'तदेवाऽऽगत्य[18] श्वो वक्ताराविति'[19] ॥ ५ ॥

लटो लोटश्च विषये दृश्यन्ते च लिङादयः ।
'वयमद्येन्द्रस्य प्रेष्ठाः'[20], 'प्रातर्मक्षू धियावसुः'[21] ॥ ६ ॥

'हता इन्द्रेण पणयः शयध्वे'[22] लेड् भविष्यति ।
अपि वा लड् वर्तमानसामीप्येऽयं[23] भवेदिति[24] ॥ ७ ॥

हेतुहेतुमद्भावे च [25]प्रयुज्येते लृटौ[25] क्वचित् ।
'एकं चमसं चतुरः'[26] तत्र स्याल्लङ्निदर्शनम्[27] ॥ ८ ॥

स्मर्यते लिङ्निमित्ते लृङ् क्रिया यत्रातिपद्यते[28] ।
'यो वृत्राय सिनमत्र'[29] भूतमात्रे तु[30] दृश्यते ॥ ९ ॥

क्रियातिपत्तिर्बहुशो ब्राह्मणेषु प्रदृश्यते[31] ।
अध्यायादिष्विमे[32] सर्वे लकाराः सम्प्रदर्शिताः ॥ १० ॥ इति ॥

---

१. ऋ २, ९, १. २. नास्ति वेंऋअ. ३. ऋ १, ४४, ५. ४. ऋ १, ८१, ५. ५. ऋ १,११३,९. ६. ऋ १,१,६. ७. ऋ १,१६५,९. ८. ऋ ९,९०,१. ९. ऋ ९,८६,४५. १०. ऋ ४,१८,११. ११. ऋ ६, ७५, ३. १२. °रः स्मृतः वेंऋअ. १३. तच्च वि² वेंऋअ. १४-१४. चाश्वो वेंऋअ. १५. तैब्रा १,६,६,४. १६. तै २,६,२,३. १७. तांब्रा ४,४,७. १८. तद्देवा° वेंऋअ. १९ तु. जैमि ३,१२४ एतेदे° इति पाठे छन्दस्त आद्यक्षरलोपः? २०. ऋ १, १६७, १०. २१. ऋ १,५८,९. २२. ऋ १०, १०८,४. २३. तु. पा ३,३,१३१. २४. भविष्यति वि¹ लपं. २५-२५. °युज्यते° वि¹ लपं; °ज्यन्ते लृटः वेंऋअ. २६. ऋ १,१६१,२. २७. स्याल्लृङ्नि° वेंऋअ. २८. तु. पा ३,३, १३९. २९. ऋ २,३०,२. ३०. प्र° वि¹ लपं. ३१. प्रयुज्यते अ¹. ३२. इत्यध्याया° वि¹,² लपं वेंऋअ.

[९]

¹गृत्समदो (पूर्वम् आङ्गिरसः शौनहोत्रः) भार्गवः शौनकः ऋषिः । अग्निर्देवता । त्रिष्टुप् छन्दः¹ ।

नि होता॑ होतृ॒षद॑ने॒ विदा॑नस्त्वे॒षो दी॑दि॒वाँ अ॑सदत् सु॒दक्षः॑ ।
अद॑ब्धव्रतप्रमति॒र्वसि॑ष्ठः सहस्रंभ॒रः शुचि॑जिह्वो अ॒ग्निः ॥ १ ।

नि । होता॑ । हो॒तृ॒ऽसद॑ने । विदा॑नः । त्वे॒षः । दी॒दि॒ऽवान् । अ॒स॒द॒त् । सु॒ऽदक्षः॑ ।
अद॑ब्धव्रतऽप्रमतिः । वसि॑ष्ठः । स॒ह॒स्र॒म्ऽभ॒रः । शुचि॑ऽजिह्वः । अ॒ग्निः ॥ १ ॥

वेङ्कट० गृत्समदः । नि षीदतु अग्निः होतृषदने² विद्वान् प्रवृद्धः दीप्यमानः सुखबलः । स्तोतॄणां हिंसितानि व्रतानि³ कर्माणि प्रमतयश्च येन स दब्धव्रतप्रमतिः, अनेवंविधः । वासयितृतमः तेजसा । 'सर्वं वै सहस्रम्⁴ सर्वम्भरः शुचिजिह्वोऽग्निः⁴ इति' (माश ६, ४, २, ७) इति वाजसनेयकम्⁵ ॥ १ ॥

त्वं दू॒तस्त्वमु॑ नः पर॒स्पास्त्वं वस्य॒ आ वृ॑षभ प्रणे॒ता ।
अग्ने॑ तो॒कस्य॑ न॒स्तने॑ त॒नूना॒मप्र॑युच्छ॒न् दीद्य॑द् बोधि गो॒पाः ॥ २ ॥

त्वम् । दू॒तः । त्वम् । ऊँ इति॑ । न॒ः । प॒रः॒ऽपाः । त्वम् । वस्यः॑ । आ । वृ॒ष॒भ॒ । प्र॒ऽने॒ता ।
अग्ने॑ । तो॒कस्य॑ । न॒ः । तने॑ । त॒नूना॑म् । अप्र॑ऽयुच्छन् । दीद्य॑त् । बो॒धि॒ । गो॒पाः ॥ २ ॥

वेङ्कट० अग्ने! त्वम् दूतः, त्वम् एव अस्माकं परः⁶ पालयिता, त्वम् एव अस्माकम् श्रेष्ठम् प्रति प्रणेता वर्षितः! । अग्ने! अस्माकं पुत्रस्य अङ्गानाम् अप्रमाद्यन् दीप्यमानः अहम् गोप्ता इति बुध्यस्व, तथा तनये चेति ॥ २ ॥

वि॒धेम॑ ते पर॒मे जन्म॑न्नग्ने वि॒धेम॒ स्तोमै॒रव॑रे स॒धस्थे॑ ।
यस्मा॒द् योने॑रु॒दारि॑था॒ यजे॒ तं प्र त्वे ह॒वींषि॑ जुहु॒रे समि॑द्धे ॥ ३ ॥

वि॒धेम॑ । ते॒ । प॒र॒मे । जन्म॑न् । अ॒ग्ने॒ । वि॒धेम॑ । स्तोमैः॑ । अव॑रे । स॒ध॒ऽस्थे॑ ।
यस्मा॑त् । योनेः॑ । उ॒त्ऽआरि॑थ । यजे॑ । तम् । प्र । त्वे इति॑ । ह॒वींषि॑ । जु॒हु॒रे । सम्ऽइ॑द्धे ॥ ३ ॥

वेङ्कट० परिचरेम ते⁷ परमे जन्मनि स्थितस्येति । तत्र वाजसनेयकम्—'विधेम ते परमे जन्मन्नग्न इति द्यौर्वा अस्य परमं जन्म विधेम स्तोमैरवरे सधस्थ इत्यन्तरिक्षं वा अवरम् सधस्थम् ।

---

१-१. नास्ति मूको. २. होतृसदने ल. ३. नास्ति वि¹² अ¹. ४-४. °म्भरः ··· मूको.
५. °कम् । शुचिजिह्वः अग्निः मूको. ६. पालः मूको. ७. नास्ति मूको.

यस्माद्योनेरुदारिथा यजे तम् इत्येष वा अस्य स्वो योनिः तम् यज इत्येतत् प्र त्वे हवींऽषि जुहुरे समिद्ध इति यदा वा एष समिध्यतेऽथैतस्मिन् हवींऽषि प्रजुह्वति' ( माश ९, २, ३, ३९ ) इति ॥ ३ ॥

अग्ने॒ यज॑स्व ह॒विषा॒ यजी॑याञ्छ्रु॒ष्टी दे॒ष्णम॒भि गृ॑णीहि॒ राधः॑ ।
त्वं ह्यसि॑ रयि॒पती॑ रयी॒णां त्वं शु॒क्रस्य॒ वच॑सो म॒नोता॑ ॥ ४ ॥

अग्ने॑ । यज॑स्व । ह॒विषा॑ । यजी॑यान् । श्रु॒ष्टी । दे॒ष्णम् । अ॒भि । गृ॒णी॒हि॒ । राध॑: ।
त्वम् । हि । असि॑ । र॒यि॒ऽपति॑ः । र॒यी॒णाम् । त्वम् । शु॒क्रस्य॑ । वच॑सः । म॒नोता॑ ॥ ४ ॥

**वेङ्कट०** अग्ने देवान् हविषा यज[1] यष्टृतमः । क्षिप्रकारी भवन्[2] धनम् अभि प्रयच्छ । त्वम् हि धनानां पतिः, त्वम् दीप्तस्य स्तोत्रस्य मनोता[3] यस्य मनसि [4]स्तोत्रमोतं तादृशः[4] ॥ ४ ॥

उ॒भयं॑ ते॒ न क्षी॑यते वस॒व्यं॑ दि॒वेदि॑वे॒ जाय॑मानस्य दस्म ।
कृ॒धि क्षु॒मन्तं॑ जरि॒तार॑मग्ने कृ॒धि पतिं॑ स्वप॒त्यस्य॑ रा॒यः ॥ ५ ॥

उ॒भय॑म् । ते॒ । न । क्षी॒य॒ते॒ । व॒स॒व्य॑म् । दि॒वेऽदि॑वे । जाय॑मानस्य । द॒स्म॒ ।
कृ॒धि । क्षु॒ऽमन्त॑म् । ज॒रि॒तार॑म् । अग्ने॑ । कृ॒धि । पति॑म् । सु॒ऽअ॒प॒त्यस्य॑ । रा॒यः ॥ ५ ॥

**वेङ्कट०** [5]सायम्प्रातहोमात्मकम् उभयम् वसव्यम् ते हि[5] न कदाचित् अपि क्षीयते[6] अन्वहम् आहवनीयात्मना जायमानस्य दर्शनीय! । कृधि[7] दीयतां[8] भुज्यतामिति शब्दवन्तं स्तोतारम् । अग्ने! कृधि स्वामिनं सुपुत्रस्य धनस्य ॥ ५ ॥

सैनानी॑केन सुवि॒दत्रो॑ अ॒स्मे यष्टा॑ दे॒वाँ आय॑जिष्ठः स्व॒स्ति ।
अद॑ब्धो गो॒पा उ॒त नः॑ पर॒स्पा अग्ने॑ द्यु॒मदु॒त रे॒वद् दि॑दीहि ॥ ६ ॥

सः । ए॒ना । अनी॑केन । सु॒ऽवि॒दत्र॑ः । अ॒स्मे इति॑ । यष्टा॑ । दे॒वान् । आऽय॑जिष्ठः । स्व॒स्ति ।
अद॑ब्धः । गो॒पाः । उ॒त । न॒ः । प॒रः॒ऽपाः । अग्ने॑ । द्यु॒ऽमत् । उ॒त । रे॒वत् । दि॒दी॒हि॒ ॥ ६ ॥

**वेङ्कट०** [9]त्वम् अग्ने! अनेन[9] ज्वालालक्षणेन अनीकेन सुधनः अस्माकं देवानां यजनशीलः आयष्टृतमः[10] स्वस्ति भव । अहिंसितः त्वं गोपायिता अपि च अस्माकं परः पाता अग्ने! दीप्तियुक्तं धनयुक्तं च दीप्यस्वेति ॥ ६ ॥

[11]इति द्वितीयाष्टके षष्ठाध्याये प्रथमो वर्गः[11] ॥

---

१. नास्ति वि[1] लपं. २. भवान् वि[2]. ३. मानो° लपं. ४-४. स्तोत्रमोतन्स्वा वि[1] लपं; स्तोत्रमोतस्त्वादृशः वि[2]; °मोतत्वादृशः अ[1]; °त्रमोतस्त्वादृशः ल. ५-५. °तहोम ··· (व) सव्यदेहिः मूको; °तहोमः तव सर्वदेवहितः ल प्रस्तावः ६. नास्ति लपं. ७. कृदि वि[2] अ[1]. ८. धीय° लपं. ९-९. नास्ति वि[2] अ[1]. १०. °मः स्तौति अ[1]. ११-११. नास्ति मूको.

[ १० ]

[1]गृत्समदो भार्गवः शौनकः ( पूर्वम् आङ्गिरसः शौनहोत्रः ) ऋषिः । अग्निर्देवता । त्रिष्टुप् छन्दः[1] ।

जोहूत्रो अग्निः प्रथमः पितेवेळस्पदे मनुषा यत्समिद्धः ।
श्रियं वसानो अमृतो विचेता मर्मृजेन्यः श्रवस्यः स वाजी ॥ १ ॥

जोहूत्रः । अग्निः । प्रथमः । पिताऽइव । इळः । पदे । मनुषा । यत् । सम्ऽइद्धः ।
श्रियम् । वसानः । अमृतः । विऽचेताः । मर्मृजेन्यः । श्रवस्यः । सः । वाजी ॥ १ ॥

वेङ्कट० अत्यन्तं प्रथमम् एव पितेव आह्वातव्यः अग्निः[2], [3]यदा इलायाः[3] आस्पद उत्तरवेदिनाभौ[4] अध्वर्युणा समिद्धः । तेजोरूपम् वसानः अमृतः प्राज्ञः[5] स्फ्येनाऽश्व इव पाणिना सम्मार्जनीयः अन्नसाधनः सः अश्व इति ॥ १ ॥

श्रूया अग्निश्चित्रभानुर्हवं मे विश्वाभिर्गीर्भिरमृतो विचेताः ।
श्यावा रथं वहतो रोहिता वोतारुषाह चक्रे विभृत्रः ॥ २ ॥

श्रुयाः । अग्निः । चित्रऽभानुः । हवम् । मे । विश्वाभिः । गीःऽभिः । अमृतः । विऽचेताः ।
श्यावा । रथम् । वहतः । रोहिता । वा । उत । अरुषा । अह । चक्रे । विऽभृत्रः ॥ २ ॥

वेङ्कट० शृणोतु अग्निः चित्रदीप्तिः मदीयम् आह्वानं धनादिविषयं सर्वाभिः सह स्तुतिभिः अमृतः विवृद्धचेताः । श्याववर्णौ अश्वौ तस्य रथम् वहतः रोहितवर्णौ अपि च, कदाचित् आरोचमानौ एव अश्वौ करोति स्वरथे विविधं ह्रियमाणः सर्वस्य भर्ता वा ॥ २ ॥

उत्तानायामजनयन्त्सुषूतं भुवदग्निः पुरुपेशासु गर्भः ।
शिरिणायां चिदक्तुना महोभिरपरीवृतो वसति प्रचेताः ॥ ३ ॥

उत्तानायाम् । अजनयन् । सुऽसूतम् । भुवत् । अग्निः । पुरुऽपेशासु । गर्भः ।
शिरिणायाम् । चित् । अक्तुना । महःऽभिः । अपरिऽवृतः । वसति । प्रऽचेताः ॥ ३ ॥

वेङ्कट० उत्तानायाम् अरण्याम् अग्न्याख्यं शोभनं रेतः अजनयन् । भवति च अग्निः बहुरूपासु ओषधीषु गर्भः । शिरिणा शृणातेः हिंसाकर्मणः, शर्वर्याम् अपि अक्तुना अञ्जनेन अन्धकारेण स्वतेजोभिः अपरिवृतः वसति प्राज्ञः ॥ ३ ॥

---

१-१. नास्ति मूको. २. नास्ति मूको. ३-३. यमेद्धाय वि[२] अ[१]; यदेधाय वि[१] लपं. ४. °वेदिनाम्नि ल. ५. प्रज्ञ अ[१]; प्रज्ञः लपं.

जिघर्म्यग्निं हविषा घृतेन प्रतिक्षियन्तं भुवनानि विश्वा ।
पृथुं तिरश्चा वयसा बृहन्तं व्यचिष्ठमन्नै रभसं दृशानम् ॥ ४ ॥

जिघर्मि । अग्निम् । हविषा । घृतेन । प्रतिऽक्षियन्तम् । भुवनानि । विश्वा ।
पृथुम् । तिरश्चा । वयसा । बृहन्तम् । व्यचिष्ठम् । अन्नैः । रभसम् । दृशानम् ॥ ४ ॥

वेङ्कट० जुहोमि अग्निम् हविषा च घृतेन च । अत्र वाजसनेयकम्—"प्रत्यङ् ह्येष सर्वाणि भुवनानि क्षियति । 'पृथुं तिरश्चा वयसा बृहन्तम्' इति पृथुर्वा एष तिर्यङ् वयसो बृहन्[1] धूमेन 'व्यचिष्ठमन्नै[2] रभसं दृशानम्' इत्यवकाशवन्तम् अन्नैरन्नादं दीप्यमानम् इत्येतत्" ( माश ६,३,३,१९ ) इति । पक्षिणोऽपि पृथुम् (?) इत्यर्थो भवति । एवं हि चीयमानोऽग्निः[3] इष्टकाभिः[4] इति ॥ ४ ॥

आ विश्वतः प्रत्यञ्चं जिघर्म्यरक्षसा मनसा तज्जुषेत ।
मर्यश्रीः स्पृहयद्वर्णो अग्निर्नाभिमृशे तन्वा जर्भुराणः ॥ ५ ॥

आ । विश्वतः । प्रत्यञ्चम् । जिघर्मि । अरक्षसा । मनसा । तत् । जुषेत ।
मर्यऽश्रीः । स्पृहयत्ऽवर्णः । अग्निः । न । अभिऽमृशे । तन्वा । जर्भुराणः ॥ ५ ॥

वेङ्कट० वाजसनेयकम्—"आ सर्वतः प्रत्यञ्चं जुहोमीत्येतद् 'अरक्षसा[5] मनसा तज्जुषेत[6]' इत्यहीडमानेन मनसा तज्जोषयेतेत्येतद् 'मर्यश्रीः स्पृहयद्वर्णो अग्निः' इति मर्यश्रीर्ह्येष स्पृहयद्वर्णोऽग्निर्[7] 'नाभिमृशे तन्वा[8] जर्भुराणः' इति न ह्येषोऽभिमृशे तन्वा[9] दीप्यमानो भवति" ( माश ६,३,३,२० ) इति । मनुष्यहितश्रीः स्पृहणीयवर्ण इति ॥ ५ ॥

ज्ञेया भागं सहसानो वरेण त्वादूतासो मनुवद् वदेम ।
अनूनमग्निं जुह्वा वचस्या मधुपृचं धनसा जोहवीमि ॥ ६ ॥

ज्ञेयाः । भागम् । सहसानः । वरेण । त्वाऽदूतासः । मनुऽवत् । वदेम ।
अनूनम् । अग्निम् । जुह्वा । वचस्या । मधुऽपृचम् । धनऽसाः । जोहवीमि ॥ ६ ॥

वेङ्कट० जानीयाः स्वभागं वारकेण[10] तेजसा बलायमानः[11] । त्वं[12] दूतो येषां ते वयं त्वां यथा मनुरुवाच तथा वदेम । परिपूर्णम् अग्निम् जुह्वा च वचनेन च[13] मधुना सम्पृक्तं धनप्रदाता[14] पुनःपुनः आह्वयामि ॥ ६ ॥

[15]इति द्वितीयाष्टके षष्ठाध्याये द्वितीयो वर्गः[15] ॥

---

१. °हद् वि[1] लपं. २. °व्यविष्टम वि[2] अ[1]; व्यष्ट म° लपं. ३. पीयमा° वि[1] अ[1]. ४. °काभुः वि[1] लपं. ५ °अक्षरसा वि[2] अ[1] लपं. ६. तं जु° वि[1] लपं. ७. पृषद्° वि[1] लपं. ८. त्वा लपं. ९. तया वि[1,2] अ[1] लपं. १०. °केन वि[1] लपं. ११. °मानम् वि[2] अ[1]; °मानाः लपं. १२ नास्ति वि[1] अ[1]. १३. नास्ति अ[1]. १४. धनं प्रज्ञाता वि[1] लपं. १५-१५. नास्ति मूको.

[ ११ ]

[1]गृत्समदो भार्गवः शौनकः ( पूर्वम् आङ्गिरसः शौनहोत्रः ) ऋषिः। अग्निर्देवता।
विराट्स्थाना छन्दः, एकविंशी त्रिष्टुप्[1]।

श्रुधी हवमिन्द्र मा रिषण्यः स्याम ते दावने वसूनाम्।
इमा हि त्वामूर्जो वर्धयन्ति वसूयवः सिन्धवो न क्षरन्तः॥ १॥

श्रुधि। हवम्। इन्द्र। मा। रिषण्यः। स्याम। ते। दावने। वसूनाम्।
इमाः। हि। त्वाम्। ऊर्जः। वर्धयन्ति। वसुऽयवः। सिन्धवः। न। क्षरन्तः॥ १॥

**वेङ्कट०** श्रुधि हवम् इन्द्र! मा अस्मान् हिंसीः। भवेम तव स्वभूतानां धनानां दानाय भागिनो वयम्। इमाः हि त्वाम् ऊर्जः हवींषि वर्धयन्ति त्वत्तो[2] यजमानानां धनम् इच्छन्त्यः नद्यः इव क्षरन्त्यः॥ १॥

सृजो महीरिन्द्र या अपिन्वः परिष्ठिता अहिना शूर पूर्वीः।
अमर्त्यं चिद् दासं मन्यमानमवाभिनदुक्थैर्वावृधानः॥ २॥

सृजः। महीः। इन्द्र। याः। अपिन्वः। परिऽस्थिताः। अहिना। शूर। पूर्वीः।
अमर्त्यम्। चित्। दासम्। मन्यमानम्। अव। अभिनत्। उक्थैः। ववृधानः॥ २॥

**वेङ्कट०** हत्वा अहिं व्यसृजः महतीरपः इन्द्र! गौः पय इव, याः अपिन्वः परिवेष्टिताः अहिना हे शूर! पूर्वीः[3] पुरातनीः। दुर्मरम् अपि अहिम् असुरम् अभिमन्यमानम् अव[4] अभिनत् इन्द्रः[5] स्तोत्रैः वर्धमानः॥ २॥

उक्थेष्विन्नु शूर येषु चाकन्त्स्तोमेष्विन्द्र रुद्रियेषु च।
तुभ्येदेता यासु मन्दसानः प्र वायवे सिस्रते न शुभ्राः॥ ३॥

उक्थेषु। इत्। नु। शूर। येषु। चाकन्। स्तोमेषु। इन्द्र। रुद्रियेषु। च।
तुभ्य। इत्। एताः। यासु। मन्दसानः। प्र। वायवे। सिस्रते। न। शुभ्राः॥ ३॥

**वेङ्कट०** शूर! येषु शस्त्रेषु कामयसे स्तोमेषु[6] च इन्द्र![7] रुद्रकृतेषु। 'रुद्रः' (निघ ३,१६) इति स्तोतृनाम। तुभ्यम् एव एताः स्तुतयः, यासु त्वम् मन्दसानः भवसि, गन्त्रे प्र सिस्रते इव शोभनाः। त्वदर्थम् एव निर्गच्छन्तीवेति स्तुतीनां शोभया वदति॥ ३॥

शुभ्रं नु ते शुष्मं वर्धयन्तः शुभ्रं वज्रं बाह्वोर्दधानाः।
शुभ्रस्त्वमिन्द्र वावृधानो अस्मे दासीर्विशः सूर्येण सह्याः॥ ४॥

---

१-१. नास्ति मूको. २. त्तो मूको. ३. नास्ति वि[२]. ४. नास्ति अ[१]. ५. इन्द्र वि[२] लपं. ६. स्तोत्रेषु वि[२] लपं. ७. नास्ति मूको.

शुभ्रम् । नु । ते । शुष्मम् । वर्धयन्तः । शुभ्रम् । वज्रम् । बाह्वोः । दधानाः ।
शुभ्रः । त्वम् । इन्द्र । वव्रधानः । अस्मे इति । दासीः । विशः । सूर्येण । सह्याः ॥ ४ ॥

**वेङ्कट०** स्तुतिभिः शोभनं बलम् वर्धयन्तः शोभनम् वज्रम् तव बाह्वोः दधानाः भवामः[1]। स्तुतः सन्नादत्ते वज्रम् इति। दीप्यमानः त्वम् इन्द्र! वर्धमानः अस्माकम् उपक्षयवित्रीः[2] प्रजाः शोभनेन वीर्येण अभिभवेति ॥ ४ ॥

गुहा हितं गुह्यं गूळ्हमप्स्वपीवृतं मायिनं क्षियन्तम् ।
उतो अपो द्यां तस्तभ्वांसमहन्नहिं शूर वीर्येण ॥ ५ ॥

गुहा । हितम् । गुह्यम् । गूळ्हम् । अप्ऽसु । अपिऽवृतम् । मायिनम् । क्षियन्तम् ।
उतो इति । अपः । द्याम् । तस्तभ्वांसम् । अहन् । अहिम् । शूर । वीर्येण ॥ ५ ॥

**वेङ्कट०** गुहायां निहितम् अदृश्यम् अप्सु निगूढम् अद्भिः प्रच्छाद्यमानम् मायिनम् निवसन्तम्, अपि च आदित्यम् [3]अपः च[3] स्तम्भितवन्तं हे शूर! वीर्येण अहिम् हतवान् असि ॥ ५ ॥

[4]इति द्वितीयाष्टके षष्ठाध्याये तृतीयो वर्गः[4] ॥

स्तवा नु त इन्द्र पूर्व्या महान्युत स्तवाम नूतना कृतानि ।
स्तवा वज्रं बाह्वोरुशन्तं स्तवा हरी सूर्यस्य केतू ॥ ६ ॥

स्तव । नु । ते । इन्द्र । पूर्व्या । महानि । उत । स्तवाम । नूतना । कृतानि ।
स्तव । वज्रम् । बाह्वोः । उशन्तम् । स्तव । हरी इति । सूर्यस्य । केतू इति ॥ ६ ॥

**वेङ्कट०** हे इन्द्र! तव पूर्वकालभावीनि माहात्म्यानि अधुना स्तवाम। अपि च स्तवाम सम्प्रतितनानि कृतानि । स्तवाम वज्रम् बाह्वोः दीप्यमानम् । स्तवाम च अश्वौ बलस्य प्रज्ञापकौ ॥ ६ ॥

हरी नु त इन्द्र वाजयन्ता घृतश्चुतं स्वारमस्वार्ष्टाम् ।
वि समना भूमिरप्रथिष्टारंस्त पर्वतश्चित् सरिष्यन् ॥ ७ ॥

हरी इति । नु । ते । इन्द्र । वाजयन्ता । घृतऽश्चुतम् । स्वारम् । अस्वार्ष्टाम् ।
वि । समना । भूमिः । अप्रथिष्ट । अरंस्त । पर्वतः । चित् । सरिष्यन् ॥ ७ ॥

**वेङ्कट०** इन्द्र! तव अश्वौ बलं कुर्वन्तौ उदकस्य च्यावकं [5]शब्दं शब्दितवन्तौ। तथा तव भयात् समस्थला भूत्वा भूमिः विप्रथिताऽऽसीत् । तथा शिलोच्चयः सरिष्यन् स्वस्थाने रमते[5] ॥ ७ ॥

---

१. भवन्ति वि[1,2] अ[1] लपं. २. उपक्षयित्री वि[1,2] अ[1] लपं. ३-३. अश्वम् मूको; उदकम् ल प्रस्तावः ४-४. नास्ति मूको. ५-५. त्रुटितम् वि[1] लपं.

नि पर्वतः साद्यप्रयुच्छन्त्सं मातृभिर्वावशानो अक्रान् ।
दूरे पारे वाणीं वर्धयन्त इन्द्रेषितां धमनिं पप्रथन् नि ॥ ८ ॥

नि । पर्वतः । सादि । अप्रऽयुच्छन् । सम् । मातृऽभिः । वावशानः । अक्रान् ।
दूरे । पारे । वाणीम् । वर्धयन्तः । इन्द्रऽइषिताम । धमनिम् । पप्रथन् । नि ॥ ८ ॥

**वेङ्कट०** नि षसाद पर्वतः[1] [2]स्वस्मिन्† स्थाने अप्रमाद्यन्‡[2] । तथा अन्नयः पवमानो वायुश्च आभिः$ पुनः सम् अक्रान् सङ्गतो भवति कामयमानः । तथा दूरे[2] पारे देशे······प्रथितवन्त इति ॥ ८ ॥

इन्द्रो महां सिन्धुमाशयानं मायाविनं वृत्रमस्फुरन्निः ।
अरेजेतां रोदसी भियाने कनिक्रदतो वृष्णो अस्य वज्रात् ॥ ९ ॥

इन्द्रः । महाम् । सिन्धुम् । आऽशयानम् । मायाऽविनम् । वृत्रम् । अस्फुरत् । निः ।
अरेजेताम् । रोदसी इति । भियाने इति । कनिक्रदतः । वृष्णः । अस्य । वज्रात् ॥ ९ ॥

**वेङ्कट०** [3]इन्द्रः महान्तम् सिन्धुम् आवृत्य शयानम् मायाविनम् वृत्रम् निः जघान । अकम्पेतां द्यावापृथिवी भियाने[3] शब्दं कुर्वतः वर्षितुः अस्य वज्रात् ॥ ९ ॥

अरोरवीद् वृष्णो अस्य वज्रोऽमानुषं यन्मानुषो निजूर्वात् ।
नि मायिनो दानवस्य माया अपादयत् पपिवान्त्सुतस्य ॥ १० ॥

अरोरवीत् । वृष्णः । अस्य । वज्रः । अमानुषम् । यत् । मानुषः । निऽजूर्वात् ।
नि । मायिनः । दानवस्य । मायाः । अपादयत् । पपिऽवान् । सुतस्य ॥ १० ॥

**वेङ्कट०** वर्षितुः अस्य[4] वज्रः शब्दं चकार । यदा [5]मनुष्याणाम् अहितम्[5] मनुष्यहितः निहतवान्, तदा[6] मायाविनः[7] दानवस्य मायाः च नि अपादयत् सोमम् पपिवान् इति ॥ १० ॥

[8]इति द्वितीयाष्टके षष्ठाध्याये चतुर्थो वर्गः[8] ॥

पिबापिबेदिन्द्र शूर सोमं मन्दन्तु त्वा मन्दिनः सुतासः ।
पृणन्तस्ते कुक्षी वर्धयन्त्वित्था सुतः पौर इन्द्रमाव ॥ ११ ॥

पिबऽपिब । इत् । इन्द्र । शूर । सोमम् । मन्दन्तु । त्वा । मन्दिनः । सुतासः ।
पृणन्तः । ते । कुक्षी इति । वर्धयन्तु । इत्था । सुतः । पौरः । इन्द्रम् । आव ॥ ११ ॥

---

१. पर्वतस्य मूको. २-२. नास्ति वि[१] लपं. † अस्मिन् वि[२] अ[१] ल. ‡ अमाद्यन् वि[२] अ[१] ल. $ मद्भिः ल प्रस्तावः. ३-३. नास्ति वि[२] अ[१]. ४. °स्य च वि[२] अ[१]. ५-५. °ष्यामभिहितम् वि[१] लपं; °णामभिहित वि[२] अ[१]; °मभिहितम् ल. ६. ततः वि[१] लपं. ७. त्रुटितम् वि[२] अ[१]. ८-८. नास्ति मूको.

**वेङ्कट०** इन्द्र ! शूर ! सोमम् पिब[1] एव । मन्दन्तु त्वां[2] मदकराः सोमाः । पूरयन्तः तव कुक्षी[3] वर्धयन्तु । सत्यम् एव सुतः पूरयिता सोमः इन्द्रम् रक्षति ॥ ११ ॥

त्वे इ॑न्द्राप्य॑भूम॒ विप्रा॒ धियं॑ वनेम ऋत॒या सप॑न्तः ।
अ॒व॒स्यवो॑ धीमहि॒ प्रश॑स्तिं स॒द्यस्ते॑ रा॒यो दा॒वने॑ स्याम ॥ १२ ॥

त्वे इति॑ । इ॒न्द्र॒ । अपि॑ । अ॒भू॒म॒ । विप्राः॑ । धिय॑म् । व॒ने॒म॒ । ऋ॒त॒ऽया । सप॑न्तः ।
अ॒व॒स्यवः॑ । धी॒म॒हि॒ । प्रऽश॑स्तिम् । स॒द्यः । ते॒ । रा॒यः । दा॒वने॑ । स्या॒म॒ ॥ १२ ॥

**वेङ्कट०** हे इन्द्र ! वयं त्वयि किञ्चित् स्याम मेधाविनः कर्म च भजेम सत्यया वाचा त्वां स्पृशन्तः । अन्नेच्छवो वयं धारयामः प्रशस्तिम् । सद्यः च तुभ्यं धनस्य दात्रे स्याम इति ॥ १२ ॥

स्याम॒ ते त॑ इन्द्र॒ ये त॑ ऊ॒ती अ॑व॒स्यव॒ ऊर्जं॑ व॒र्धय॑न्तः ।
शु॒ष्मिन्त॑मं॒ यं चा॒कना॑म देवा॒स्मे र॒यिं रा॑सि वी॒रव॑न्तम् ॥ १३ ॥

स्याम॑ । ते । ते॒ । इ॒न्द्र॒ । ये । ते॒ । ऊ॒ती । अ॒व॒स्यवः॑ । ऊर्ज॑म् । व॒र्धय॑न्तः ।
शु॒ष्मिन्ऽत॑मम् । यम् । चा॒कना॑म । दे॒व॒ । अ॒स्मे इति॑ । र॒यिम् । रा॒सि॒ । वी॒रऽव॑न्तम् ॥ १३ ॥

**वेङ्कट०** हे इन्द्र ! तव रक्षणेन ये प्रीणयन्ते वयं च तव ते स्याम रक्षणेच्छवः हविः वर्धयन्तः बलवत्तमम्[4] । यम् कामयामो[5] वयम् देव ! तम् अस्मभ्यम् रयिम् प्रयच्छसि पुत्रयुक्तम् इति ॥ १३ ॥

रासि॒ क्षय॑ं॒ रासि॑ मि॒त्रम॒स्मे रासि॒ शर्ध॑ इन्द्र॒ मारु॑तं नः ।
स॒जोष॑सो॒ ये च॑ मन्द॒सा॒नाः प्र वा॒यवः॑ पा॒न्त्यग्र॑णीतिम् ॥ १४ ॥

रासि॑ । क्षय॑म् । रासि॑ । मि॒त्रम् । अ॒स्मे इति॑ । रासि॑ । शर्धः॑ । इ॒न्द्र॒ । मारु॑तम् । नः॒ ।
स॒ऽजोष॑सः । ये । च॒ । म॒न्द॒सा॒नाः । प्र । वा॒यवः॑ । पा॒न्ति॒ । अग्र॑ऽनीतिम् ॥ १४ ॥

**वेङ्कट०** देहि निवासम् मित्रम् च अस्मभ्यम् रासि च मारुतवेगम् । तथा त्वया सङ्गताः ये भवन्ति मोदमानाः ते गन्तारो वीराः प्रकर्षेण रक्षन्तु अग्रणीतिम् सेनाग्रम् इति ॥ १४ ॥

व्यन्त्विन्नु येषु॑ मन्द॒सा॒नस्तृ॒पत् सोमं॑ पाहि द्र॒ह्यदि॑न्द्र ।
अ॒स्मान्त्सु पृ॒त्स्वा त॑रु॒त्राऽव॑र्धयो॒ द्यां बृ॒हद्भि॑र॒र्कैः ॥ १५ ॥

---

१. पिब पिब वि[2] अ[1]. २. त्वा वि[2] अ[1]. ३. कुक्षिम वि[2] लपं; त्रुटितम् वि[2] अ[1]. ४. °वत्तम वि[2] अ[1]. ५. कामयानो वि[2] ल लपं; कामयानाः कामयमानाः वा ल प्रस्तावः.

व्यन्तु । इत् । नु । येषु । मन्दसानः । तृपत् । सोमम् । पाहि । द्रह्यत् । इन्द्र ।
अस्मान् । सु । पृत्ऽसु । आ । तरुत्र । अवर्धयः । द्याम् । बृहत्ऽभिः । अर्कैः ॥ १५ ॥

**वेङ्कट०** गच्छन्तु एव[1] क्षिप्रं मरुतः त्वाम् येषु त्वम् मन्दसानः भवसि। ततः तृप्यन् इन्द्र! सोमम् पिब आत्मानं दृंहयन्। अथ अस्मान् तारयितः! सुष्ठु अवर्धयः सङ्ग्रामेषु दिवं च महद्भिः अर्कैः ॥ १५ ॥

[2]इति द्वितीयाष्टके षष्ठाध्याये पञ्चमो वर्गः[2] ॥

बृहन्त इन्नु ये ते तरुत्रोक्थेभिर्वा सुम्नमाविवासान् ।
स्तृणानासो बर्हिः पस्त्यावत् त्वोता इदिन्द्र वाजमग्मन् ॥ १६ ॥

बृहन्तः । इत् । नु । ये । ते । तरुत्र । उक्थेभिः । वा । सुम्नम् । आऽविवासान् ।
स्तृणानासः । बर्हिः । पस्त्यऽवत् । त्वाऽऊताः । इत् । इन्द्र । वाजम् । अग्मन् ॥ १६ ॥

**वेङ्कट०** महान्तः एव ते भवन्ति, ये नु [3]तव भवन्ति[3] इह तरुत्र![4] शस्त्रैः च त्वां सुखकरं परिचरन्ति स्तृणन्तः बर्हिः। देवैः विड्भिः तद्वत् त्वया रक्षिताः एव हे इन्द्र! अन्नम् आप्नुवन् ॥ १६ ॥

उग्रेष्विन्नु शूर मन्दसानस्त्रिकद्रुकेषु पाहि सोममिन्द्र ।
प्रदोधुवच्छ्मश्रुषु प्रीणानो याहि हरिभ्यां सुतस्य पीतिम् ॥ १७ ॥

उग्रेषु । इत् । नु । शूर । मन्दसानः । त्रिऽकद्रुकेषु । पाहि । सोमम् । इन्द्र ।
प्रऽदोधुवत् । श्मश्रुषु । प्रीणानः । याहि । हरिऽभ्याम् । सुतस्य । पीतिम् ॥ १७ ॥

**वेङ्कट०** उद्गूर्णेषु युद्धेषु हे शूर! मोदमानः "[5]अभिप्लवत्र्यहं पूर्वं[5] त्रिकद्रुका इत्याचक्षते' ( आश्रौ ११, १,११ ) तेषु पिब सोमम् इन्द्र! प्रकम्पयन् श्मश्रुस्थितं सोमम् प्रीयमाणः याहि अश्वाभ्यां सोमस्य पानम् इति ॥ १७ ॥

धिष्वा शवः शूर येन वृत्रमवाभिनद् दानुमौर्णवाभम् ।
अपावृणोर्ज्योतिरार्याय नि सव्यतः सादि दस्युरिन्द्र ॥ १८ ॥

धिष्व । शवः । शूर । येन । वृत्रम् । अवऽअभिनत् । दानुम् । और्णऽवाभम् ।
अप । अवृणोः । ज्योतिः । आर्याय । नि । सव्यतः । सादि । दस्युः । इन्द्र ॥ १८ ॥

---

१. एवम् वि[1] अ[1] लपं. २-२. नास्ति मूको. ३-३. त भ° वि[1] अ[1]; भ° ल. ४. तरुद्र वि[1] अ[1].
५-५. °प्लवति अहं पूर्वं वि[1] लपं; °प्लवत्यहं पूर्वं वि[1] अ[1]; °प्लवदहः ल.

वेङ्कट० [1]धारय तत्[1] बलम् शूर! येन वृत्रम् अवभिन्नवान् दानुम् और्णवाभम् च असुरौ, सोमज्योतिः आर्याय प्रकाशार्थम् अप [2]अवृणोः इति[2]। तव स्तोतुः सव्याद् ऋषेः दस्युः असुरः नि सादि निषीदति विनश्यति। अथवा तव सव्यादपि हस्तात् निर्गच्छति ॥ १८ ॥

सनेम ये त ऊतिभिस्तरन्तो विश्वाः स्पृध आर्येण दस्यून्।
अस्मभ्यं तत् त्वाष्ट्रं विश्वरूपमरन्धयः साख्यस्य त्रिताय ॥ १९ ॥

सनेम। ये। ते। ऊतिऽभिः। तरन्तः। विश्वाः। स्पृधः। आर्येण। दस्यून्।
अस्मभ्यम्। तत्। त्वाष्ट्रम्। विश्वऽरूपम्। अरन्धयः। साख्यस्य। त्रिताय ॥ १९ ॥

वेङ्कट० भजेम तान् वयम् अपि, ये तव रक्षणैः त्वया च आर्येण सर्वान् स्पर्धमानान् उपक्षपयितॄंश्च तरन्तः भवन्ति। अस्मभ्यम् तदानीं त्वष्टुः पुत्रम् विश्वरूपम् वशमनयः सख्यनिष्कृत्यर्थम् त्रिताय इति। तादर्थ्ये चतुर्थ्यौ व्यधिकरणे ॥ १९ ॥

अस्य सुवानस्य मन्दिनस्त्रितस्य न्यर्बुदं वावृधानो अस्तः।
अवर्तयत् सूर्यो न चक्रं भिनद् वलमिन्द्रो अङ्गिरस्वान् ॥ २० ॥

अस्य। सुवानस्य। मन्दिनः। त्रितस्य। नि। अर्बुदम्। वृवृधानः। अस्तरित्यस्तः।
अवर्तयत्। सूर्यः। न। चक्रम्। भिनत्। वलम्। इन्द्रः। अङ्गिरस्वान् ॥ २० ॥

वेङ्कट० अस्य सोमं सुष्ठु सुवानस्य स्तोतुः त्रितस्य, अर्बुद इति विश्वरूपस्य नामान्तरम्, वर्धमानः नि अस्तः हिंसितवान् असि। अवर्तयत् सूर्यः इव रथचक्रम्[3] आत्मीयम्, अभिनत् वलम् चासुरम् अङ्गिरोभिः सहितः[4] इन्द्रः ॥ २० ॥

नूनं सा ते प्रति वरं जरित्रे दुहीयदिन्द्र दक्षिणा मघोनी।
शिक्षा स्तोतृभ्यो माति धग्भगो नो बृहद् वदेम विदथे सुवीराः ॥ २१ ॥

नूनम्। सा। ते। प्रति। वरम्। जरित्रे। दुहीयत्। इन्द्र। दक्षिणा। मघोनी।
शिक्ष। स्तोतृऽभ्यः। मा। अति। धक्। भगः। नः। बृहत्। वदेम। विदथे। सुऽवीराः ॥ २१ ॥

वेङ्कट० नूनम् इति पदपूरणः। [5]सा तव[5] मघवती[6] दक्षिणा स्तोत्रे मह्यं वरणीयम् अभिलषितं प्रति दुग्धाम्। देहि स्तोतृभ्यः कामान्। मा अस्मान् अति धाक्षीत् भजनीय इन्द्रः। बृहत्[7] वदेम यज्ञे कल्याणवीराः[8] ॥ २१ ॥

[9]इति द्वितीयाष्टके षष्ठाध्याये षष्ठो वर्गः[9] ॥

---

१-१. °यत् वि[1] लपं; °यत वि[2] अ[1] ल; धारय ल प्रस्तावः २. आवृणोति वि[1] लपं; °अवृणोति वि[2] अ[1] ल. ३. °क्रम् आयुधम् वि[2] अ[1]. ४. संहितः वि[2]. ५-५. नास्ति वि[1] अ[1]. ६. संभवति वि[2] अ[1]; मघवति वि[1] लपं. ७. महत् वि[1] अ[1]. ८. °णशीलाः वि[2] अ[1]. ९-९. नास्ति मूको.

## [ १२ ]

[१]गृत्समदो भार्गवः शौनकः (पूर्वम् आङ्गिरसः शौनहोत्रः) ऋषिः । इन्द्रो देवता । त्रिष्टुप् छन्दः[१] ।

**यो जात एव प्रथमो मनस्वान् देवो देवान् क्रतुना पर्यभूषत् ।**
**यस्य शुष्माद् रोदसी अभ्यसेतां नृम्णस्य मह्ना स जनास इन्द्रः ॥ १ ॥**

यः । जातः । एव । प्रथमः । मनस्वान् । देवः । देवान् । क्रतुना । परिऽअभूषत् ।
यस्य । शुष्मात् । रोदसी इति । अभ्यसेताम् । नृम्णस्य । मह्ना । सः । जनासः । इन्द्रः ॥ १ ॥

**वेङ्कट०** **शौनकः—** 'संयुज्य[२] तपसाऽऽत्मानम् ऐन्द्रं बिभ्रन्महद् वपुः ।
अदृश्यत मुहूर्तेन दिवि च व्योम्नि चेह च ॥

तमिन्द्रमिति मत्वा तु दैत्यौ भीमपराक्रमौ ।
धुनिश्च चुमुरिश्चोभौ[३] सायुधावभिपेततुः[४] ॥

विदित्वा स तयोर्भावम् ऋषिः पापं चिकीर्षतोः ।
यो जात इति सूक्तेन कर्माण्यैन्द्राण्यकीर्तयत्' ॥ ( बृदे ४,६६-६८ ) इति ॥

'यः जात[५] एव प्रथमः मनस्वी देवो देवान् क्रतुना कर्मणा पर्यभवत्[६] पर्यगृह्णात् पर्यरक्षदत्यक्रामदिति वा[७]' इति[७] यास्कः ( १०, १० )। यस्य शोषकात् तेजसो द्यावापृथिव्यौ अपि अबिभीताम् बलस्य च महत्त्वेन सः जनासः! इन्द्रः, नाहम् इति ॥ १ ॥

**यः पृथिवीं व्यथमानामदृंहद् यः पर्वतान् प्रकुपिताँ अरम्णात् ।**
**यो अन्तरिक्षं विममे वरीयो यो द्यामस्तभ्नात् स जनास इन्द्रः ॥ २ ॥**

यः । पृथिवीम् । व्यथमानाम् । अदृंहत् । यः । पर्वतान् । प्रऽकुपितान् । अरम्णात् ।
यः । अन्तरिक्षम् । विऽममे । वरीयः । यः । द्याम् । अस्तभ्नात् । सः । जनासः । इन्द्रः ॥ २ ॥

**वेङ्कट०** यः पृथिवीम् चलन्तीम् अदृंहत् । यः च पर्वतान् पक्षवतः प्रकुपितान् अरम्णात्[८] रम्णातिः[९] संयमनकर्मा, स्वेस्वे स्थाने रमयामासेति । [१०]यः च[१०] अन्तरिक्षम् विस्तीर्णं चकार । यः च अधः स्थित्वा दिवं धारयति ॥ २ ॥

**यो हत्वाहिमरिणात् सप्त सिन्धून् यो गा उदाजदपधा वलस्य ।**
**यो अश्मनोरन्तरग्निं जजान संवृक् समत्सु स जनास इन्द्रः ॥ ३ ॥**

---

१-१. नास्ति मूको. २. युज्यन् वि[२] अ[१]. ३. चमु° अ[१]. ४. °वपि पे° वि[२] अ[१]. ५. जातम् वि[२] अ[१]; जायमान वि[२] ल लपं. ६. नास्ति वि[२] अ[१]. ७. नास्ति अ[१]. ८. नास्ति मूको. ९. ऋम्णातिः अ[१]; नृम्णातिः वि[१,२] ल लपं. १०-१०. वायुश्च वि[१,२] अ[१] लपं.

यः। हत्वा। अहिम्। अरिणात्। सप्त। सिन्धून्। यः। गाः। उत्ऽआजत्। अपऽधा। वलस्य।
यः। अश्मनोः। अन्तः। अग्निम्। जजान। सम्ऽवृक्। समत्ऽसु। सः। जनासः। इन्द्रः॥ ३॥

**वेङ्कट०** यः च अहिम् हत्वा **निरगमयत्** सप्त **नदीः**। यः **वा पशून्** उदाजत्[1] अपधा **बिलान्तरपिहिताः** वलस्य **असुरस्य**। यः च मेघयोः मध्ये अभिघातजं वैद्युतम् अग्निम् जनयति। सः **छेत्ता सङ्ग्रामेषु** ॥ ३ ॥

**येनेमा विश्वा च्यवना कृतानि यो दासं वर्णमधरं गुहाऽकः।**
**श्वघ्नीव यो जिगीवाँ लक्षमाददर्यः पुष्टानि स जनास इन्द्रः॥ ४॥**

येन। इमा। विश्वा। च्यवना। कृतानि। यः। दासम्। वर्णम्। अधरम्। गुहा। अकरित्यकः।
श्वघ्नीऽइव। यः। जिगीवान्। लक्षम्। आदत्। अर्यः। पुष्टानि। सः। जनासः। इन्द्रः॥४॥

**वेङ्कट०** येन एतानि **सर्वाणि**[2] **च्यवनानि**[3] कृतानि। यः च **असुरं** वारयितारम् अधरम् गुहायां **करोति**। **लुब्धक इव** यः[4] जिगीवान् लक्ष्यमाणं शत्रुं भक्षयति विनाशयति पोषणानि स्तोतॄणां प्रेरयन्निति ॥ ४ ॥

**यं स्मा पृच्छन्ति कुह सेति घोरमुतेमाहुर्नैषो अस्तीत्येनम्।**
**सो अर्यः पुष्टीर्विजइवा मिनाति श्रदस्मै धत्त स जनास इन्द्रः॥ ५॥**

यम्। स्म। पृच्छन्ति। कुह। सः। इति। घोरम्। उत। ईम्। आहुः। न। एषः। अस्ति। इति। एनम्।
सः। अर्यः। पुष्टीः। विजःऽइव। आ। मिनाति। श्रत्। अस्मै। धत्त। सः। जनासः। इन्द्रः॥ ५॥

**वेङ्कट०** **युद्धे प्रविशन्तः** यम् इन्द्रम् पृच्छन्ति घोरम् **क** सः इन्द्रः इति। **अपि च** एनम् आहुः न एषः अस्ति। **अत्र विद्यते शीघ्रं प्रविश युद्धम्** इति। सः **ईश्वरः** शत्रूणाम् पुष्टीः **हिनस्ति, यथा श्वघ्नी पक्षिणो हिनस्ति**। अस्मै श्रत् धत्त[5] इति ॥ ५ ॥

[6]इति द्वितीयाष्टके षष्ठाध्याये सप्तमो वर्गः[6] ॥

**यो रध्रस्य चोदिता यः कृशस्य यो ब्रह्मणो नाधमानस्य कीरेः।**
**युक्तग्राव्णो योऽविता सुशिप्रः सुतसोमस्य स जनास इन्द्रः॥ ६॥**

यः। रध्रस्य। चोदिता। यः। कृशस्य। यः। ब्रह्मणः। नाधमानस्य। कीरेः।
युक्तऽग्राव्णः। यः। अविता। सुऽशिप्रः। सुतऽसोमस्य। सः। जनासः। इन्द्रः॥ ६॥

**वेङ्कट०** यः **समृद्धस्य** कृशस्य **च धनं** चोदयति, **यः वा ब्राह्मणस्य याचमानस्य स्तोतुः**। यः च युक्तग्राव्णः सुतसोमस्य **रक्षकः सुहनुः**[7] ॥ ६ ॥

---

१. उदाजत वि[1] अ[1]. २. शत्रुणा वि[2] अ[1]; शत्रूणाम् वि[1] लपं. ३. च्याव॰ वि[1,2] लपं. ४. नास्ति वि[2] अ[1]. ५. ॰त वचस वि[2] अ[1]; वच वि[1] लपं. ६-६. नास्ति मूको. ७. त्रुटितम् अ[1]; सुह:… वि[2].

यस्याश्वा॑सः प्र॒दिशि॒ यस्य॒ गावो॒ यस्य॒ ग्रामा॒ यस्य॒ विश्वे॒ रथा॑सः ।
यः सूर्यं॒ य उ॒षसं॑ ज॒जान॒ यो अ॒पां ने॒ता स जना॑स॒ इन्द्रः॑ ॥ ७ ॥

यस्य॑ । अश्वा॑सः । प्र॒ऽदिशि॑ । यस्य॑ । गावः॑ । यस्य॑ । ग्रामाः॑ । यस्य॑ । विश्वे॑ । रथा॑सः ।
यः । सूर्य॑म् । यः । उ॒षस॑म् । ज॒जान॑ । यः । अ॒पाम् । ने॒ता । सः । जना॑सः । इन्द्रः॑ ॥ ७ ॥

वेङ्कट० यस्य प्रदेशने स्तोतॄणाम् अश्वादयो भवन्ति । शिष्टं स्पष्टमिति ॥ ७ ॥

यं क्रन्द॑सी सं॒यती॑ वि॒ह्वये॑ते॒ परेऽव॑र उ॒भया॑ अ॒मित्राः॑ ।
स॒मा॒नं चि॒द् रथ॑मातस्थि॒वांसा॒ नाना॑ हवेते॒ स जना॑स॒ इन्द्रः॑ ॥ ८ ॥

यम् । क्रन्द॑सी इति॑ । सं॒यती॒ इति॑ स॒म्ऽयती॑ । वि॒ह्वये॑ते॒ इति॑ वि॒ऽह्वये॑ते । परे॑ । अव॑रे । उ॒भयाः॑ ।
अ॒मित्राः॑ ॥ स॒मा॒नम् । चि॒त् । रथ॑म् । आ॒त॒स्थि॒ऽवांसा॑ । नाना॑ । ह॒वे॒ते इति॑ । सः । जना॑सः । इन्द्रः॑ ॥८॥

वेङ्कट० यम् सङ्क्रन्दमाने सेने मामागच्छ मामागच्छेत्याह्वयत इति । एतदेवोक्तम्—तत्रत्या अत्रत्याश्च उभये शत्रवः[1] आह्वयन्ते[2] । एकम् एव इन्द्ररथम् आतस्थिवांसौ युयुत्सू राजानौ नाना हवेते तम् इन्द्रम् इति ॥ ८ ॥

यस्मा॒न्न ऋ॒ते वि॒जय॑न्ते॒ जना॑सो॒ यं युध्य॑माना॒ अव॑से॒ हव॑न्ते ।
यो विश्व॑स्य प्रति॒मानं॑ ब॒भूव॒ यो अ॑च्युत॒च्युत् स जना॑स॒ इन्द्रः॑ ॥ ९ ॥

यस्मा॑त् । न । ऋ॒ते । वि॒ऽजय॑न्ते । जना॑सः । यम् । युध्य॑मानाः । अव॑से । हव॑न्ते ।
यः । विश्व॑स्य । प्र॒ति॒ऽमान॑म् । ब॒भूव॑ । यः । अ॒च्यु॒त॒ऽच्युत् । सः । जना॑सः । इन्द्रः॑ ॥ ९ ॥

वेङ्कट० निगदव्याख्याता ॥ ९ ॥

यः शश्व॑तो॒ मह्येनो॒ दधा॑ना॒नम॑न्यमाना॒ञ्छर्वा॑ ज॒घान॑ ।
यः शर्ध॑ते॒ नानु॒ददा॑ति शृ॒ध्यां यो दस्यो॑र्ह॒न्ता स जना॑स॒ इन्द्रः॑ ॥ १० ॥

यः । शश्व॑तः । महि॑ । एनः॑ । दधा॑नान् । अम॑न्यमानान् । शर्वा॑ । ज॒घान॑ ।
यः । शर्ध॑ते । न । अ॒नु॒ऽददा॑ति । शृ॒ध्याम् । यः । दस्योः॑ । ह॒न्ता । सः । जना॑सः । इन्द्रः॑ ॥१०॥

---

१. नास्ति वि[1] अ[1]. २. °यन्त वि[1,2] अ[1] ल; °ह्वन्तः लपं.

**वेङ्कट०** यः बहून् महत् पापम् दधानान् इन्द्रम् अमन्यमानान् हिंसकेन वज्रेण[1] जघान। [2]यः च[2] बलम् आचरते बलवत्ताम्[3] न अनुप्रयच्छति, शीघ्रं तं हन्ति। यः च असुरस्य हन्ता इति ॥ १० ॥

[4]इति द्वितीयाष्टके षष्ठाध्यायेऽष्टमो वर्गः[4]।

यः शम्बरं पर्वतेषु क्षियन्तं चत्वारिंश्यां शरद्यन्ववि॑न्दत् ।
ओजायमानं यो अहिं जघान दानुं शयानं स जनास इन्द्रः ॥ ११ ॥

यः । शम्बरम् । पर्वतेषु । क्षियन्तम् । चत्वारिंश्याम् । शरदि । अनुऽअविन्दत् ।
ओजायमानम् । यः । अहिम् । जघान । दानुम् । शयानम् । सः । जनासः । इन्द्रः ॥ ११ ॥

**वेङ्कट०** यः शम्बरम् असुरम् इन्द्रभयात् पर्वतेषु निलीय निवसन्तम् चत्वारिंश्याम् शरदि संवत्सरे लब्धवान्। यः बलमाचरन्तम् अहिम् हतवान्, दानुम् च शयानम् इति ॥ ११ ॥

यः सप्तरश्मिर्वृषभस्तुविष्मानवासृजत्सर्तवे सप्त सिन्धून् ।
यो रौहिणमस्फुरद्वज्रबाहुर्द्यामारोहन्तं स जनास इन्द्रः ॥ १२ ॥

यः । सप्तऽरश्मिः । वृषभः । तुविष्मान् । अवऽअसृजत् । सर्तवे । सप्त । सिन्धून् ।
यः । रौहिणम् । अस्फुरत् । वज्रऽबाहुः । द्याम् । आऽरोहन्तम् । सः । जनासः । इन्द्रः ॥ १२ ॥

**वेङ्कट०** यः सप्तरश्मिः वर्षिता बलवान् अवासृजत् सरणाय सप्त [5]नदीः। यः च[5] रौहिणम् असुरं हतवान् वज्रबाहुः दिवम् आरोहन्तम् ॥ १२ ॥

द्यावा चिदस्मै पृथिवी नमेते शुष्माच्चिदस्य पर्वता भयन्ते ।
यः सोमपा निचितो वज्रबाहुर्यो वज्रहस्तः स जनास इन्द्रः ॥ १३ ॥

द्यावा । चित् । अस्मै । पृथिवी इति । नमेते इति । शुष्मात् । चित् । अस्य । पर्वताः । भयन्ते ।
यः । सोमऽपाः । निऽचितः । वज्रऽबाहुः । यः । वज्रऽहस्तः । सः । जनासः । इन्द्रः ॥१३॥

**वेङ्कट०** अस्मै द्यावापृथिवी प्रह्वीभवतः। तथा अस्य भयात् पर्वताः बिभ्यति। यः सोमपाः दृढशरीरः, तस्य बाहौ कदाचित् वज्रः, कदाचित् हस्ते इति ॥ १३ ॥

यः सुन्वन्तमवति यः पचन्तं यः शंसन्तं यः शशमानमूती ।
यस्य ब्रह्म वर्धनं यस्य सोमो यस्येदं राधः स जनास इन्द्रः ॥१४॥

---

१. नास्ति मूको. २-२. नास्ति वि[2] ३. °वत्तमन् वि[1] लपं; °वत्तमान् वि[2] अ[1] ल. ४-४. नास्ति मूको. ५-५. °दीनर्यश्च वि[1] लपं; °दीश्च वि[1] अ[1].

यः । सुन्वन्तम् । अवति । यः । पचन्तम् । यः । शंसन्तम् । यः । शशमानम् । ऊती ।
यस्य । ब्रह्म । वर्धनम् । यस्य । सोमः । यस्य । इदम् । राधः । सः । जनासः । इन्द्रः ॥ १४ ॥

**वेङ्कट०** यः अभिगमनेन सुन्वन्तम् रक्षति, चरून् पश्वङ्गानि च पचन्तम्, शस्त्राणि शंसन्तम्, स्तुतिभिः अर्चयन्तम्[1] । यस्य च ब्रह्म वर्धनम् भवति, सोमः च, यस्य इदम् अपि [2]अन्नहविः च[2] ॥ १४ ॥

**यः सुन्वते पचते दुध्र आ चिद् वाजं दर्दर्षि स किलासि सत्यः ।**
**वयं त इन्द्र विश्वह प्रियासः सुवीरासो विदथमा वदेम ॥ १५ ॥**

यः । सुन्वते । पचते । दुध्रः । आ । चित् । वाजम् । दर्दर्षि । सः । किल । असि । सत्यः ।
वयम् । ते । इन्द्र । विश्वह । प्रियासः । सुऽवीरासः । विदथम् । आ । वदेम ॥ १५ ॥

**वेङ्कट०** यः त्वं दुर्धरः सुन्वते पचते च[3] अन्नम् आ दयसि, सः त्वम् असि अमरः[4] । वयम् ते इन्द्र! सदा प्रियाः सुपुत्राः गृहं सर्वदा आभिमुख्येन वदामेति ॥ १५ ॥

[5]इति द्वितीयाष्टके षष्ठाध्याये नवमो वर्गः[5] ॥

## [ १३ ]

[5]गृत्समदो भार्गवः शौनकः ( पूर्वम् आङ्गिरसः शौनहोत्रः ) ऋषिः ।
इन्द्रो देवता । जगती छन्दः, त्रयोदशी त्रिष्टुप्[5] ।

**ऋतुर्जनित्री तस्या अपस्परि मक्षू जात आविशद् यासु वर्धते ।**
**तदाहना अभवत् पिप्युषी पयोंऽशोः पीयूषं प्रथमं तदुक्थ्यम् ॥ १ ॥**

ऋतुः । जनित्री । तस्याः । अपः । परि । मक्षु । जातः । आ । अविशत् । यासु । वर्धते ।
तत् । आहनाः । अभवत् । पिप्युषी । पयः । अंशोः । पीयूषम् । प्रथमम् । तत् । उक्थ्यम् ॥ १ ॥

**वेङ्कट०** ऋतुः चन्द्रमसो जनयित्री । तस्याः जनयित्र्या वेगात् पक्षादौ शीघ्रं जातः आ विशत्योषधीः, यासु ओषधीषु वर्धते । तत्र ग्रावस्वाहन्तव्या[6] अतिशयेन रसम्[7] आप्याययन्ती[8] भवति लता । तत् इदं त्वया उत्पाद्यमानं[9] सोमांशोः पीयूषम् सुतम् प्रथमम् एव हे इन्द्र! तुभ्यं स्तोतव्यम् ॥ १ ॥

**सध्रीमा यन्ति परि बिभ्रतीः पयो विश्वप्स्न्याय प्र भरन्त भोजनम् ।**
**समानो अध्वा प्रवतामनुष्यदे यस्ताकृणोः प्रथमं सास्युक्थ्यः ॥ २ ॥**

सध्री । ईम् । आ । यन्ति । परि । बिभ्रतीः । पयः । विश्वऽप्स्न्याय । प्र । भरन्त । भोजनम् ।
समानः । अध्वा । प्रऽवताम् । अनुऽस्यदे । यः । ता । अकृणोः । प्रथमम् । सः । असि । उक्थ्यः ॥ २ ॥

---

१. अर्चन्तम् वि[२] अ[१]. २. अन्नविश्वः वि[१]अ[१]; अहं विश्व वि[२] लपं ३. नास्ति वि[२] लप. ४. अममायो वि[१]; अमार वि[२] लपं; अमामायो अ[१]; अम··· ल; अमर्त्यः (पक्षे) ल प्रस्तावः ५-५. नास्ति मूको. ६ ग्रावयस्याहन्त तद्व्या वि[२] अ[१]; °हन्त तद या ल; °स्वानन्तप्या वि[१] लपं. ७. स्रसं वि[१] लपं. ८. °प्यायन्ती ल; °प्यायन्ति वि[१] लपं. ९. उत्पद्य° वि[१] अ[१] ल.

वेङ्कट० सध्रीचीनाः एनं समुद्रम् आगच्छन्ति[1] परितः बिभ्रत्यः उदकम्। विश्वं व्याप्तं येन स विश्वप्स्न्यः समुद्रः तस्मै भोजनम् प्र भरन्ति। समानः मार्गः समुद्राख्यः प्रवणवतां नदानाम्[2] अनुस्यन्दनाय। यः[3] तानि एतानि एवंविधानि[4] कर्माणि अकृणोः सः त्वम् प्रथमम् एव स्तोतव्यः ॥ २ ॥

अन्वेको वदति यद् ददाति तद् रूपा मिनन् तदपा एक ईयते ।
विश्वा एकस्य विनुदस्तितिक्षते यस्ताकृणोः प्रथमं सास्युक्थ्यः ॥ ३ ॥

अनु। एकः। वदति। यत्। ददाति। तत्। रूपा। मिनन्। तत्ऽअपाः। एकः। ईयते। विश्वाः। एकस्य। विऽनुदः। तितिक्षते। यः। ता। अकृणोः। प्रथमम्। सः। असि। उक्थ्यः ॥ ३ ॥

वेङ्कट० एकः उदारः सन्[5] मनसा यत् ददाति तद् वाचा अनु वदति, तुभ्यम् इदम् ददामि इति। अथापरः कश्चित् लुब्धकादिः मृगादीन् हिंसन् तत्कर्मा भूत्वा गच्छति। अथ अन्यः शान्तः अन्यस्य विविधानि नोदनानि बलाभावात् परलोकभयात् च सहते। यः त्वम् एवंविधानि ता कर्माणि अकृणोः इति ॥ ३ ॥

प्रजाभ्यः पुष्टिं विभजन्त आसते रयिमिव पृष्ठं प्रभवन्तमायते ।
असिन्वन् दंष्ट्रैः पितुरत्ति भोजनं यस्ताकृणोः प्रथमं सास्युक्थ्यः ॥ ४ ॥

प्रऽजाभ्यः। पुष्टिम्। विऽभजन्तः। आसते। रयिम्ऽइव। पृष्ठम्। प्रऽभवन्तम्। आऽयते। असिन्वन्। दंष्ट्रैः। पितुः। अत्ति। भोजनम्। यः। ता। अकृणोः। प्रथमम्। सः। असि। उक्थ्यः ॥ ४ ॥

वेङ्कट० माध्यमिका देवगणाः स्वपुष्टिं[6] प्रजाभ्यः विभजन्तः आसते वर्षाख्यं धनम् इव धारकं भूतम् [7]अतिशयेन आयते[7]। लोकः दंष्ट्रैः अखादन् दिवः पितुः आगतम् भोजनम् अत्ति, न हि ओषध्यादेः दन्ता भवन्ति ॥ ४ ॥

अधाकृणोः पृथिवीं संदृशे दिवे यो धौतीनामहिहन्नारिणक् पथः ।
तं त्वा स्तोमेभिरुदभिर्न वाजिनं देवं देवा अजनन्त्सास्युक्थ्यः ॥ ५ ॥

अध। अकृणोः। पृथिवीम्। सम्ऽदृशे। दिवे। यः। धौतीनाम्। अहिऽहन्। अरिणक्। पथः। तम्। त्वा। स्तोमेभिः। उदऽभिः। न। वाजिनम्। देवम्। देवाः। अजनन्। सः। असि। उक्थ्यः ॥

वेङ्कट० अपि च अकरोः पृथिवीम् आदित्यस्य संदर्शनाय[8], यः त्वं धावन्तीनां हे अहिहन्! अगमयः[9] मार्गान्। तम् त्वा स्तोमैः उदकैः इव अश्वम् देवम् देवाः अजनयन्, स्तुवतो[10] अग्रतः

१. आविशन्ति लपं. २. नदीनाम् मूको. ३. नास्ति वि॰ लपं. ४. एवमसि विधा° वि॰ लपं. ५. स वि॰ लपं. ६. सुपुष्टिम् अ॰. ७-७. अतीतं यन् त्रायं वि॰ लपं. ८. दर्शय वि॰ ल लपं; शोयय वि॰; शोषय अ॰, ९. अहमयोः अ॰; अगमयोः वि॰; गमनयोः वि॰ लपं, १०. स्तुवता वि॰ अ॰ लपं,

प्रादुर्भवति, यथा अद्भ्योऽश्वो जात इति। 'अप्सुयोनिर्वा अश्वः' (तै २,३,१२,२) इति श्रुतिः ॥ ५ ॥

[1]इति द्वितीयाष्टके षष्ठाध्याये दशमो वर्गः[1] ॥

यो भोजनं च दयसे च वर्धनमार्द्रादा शुष्कं मधुमद् दुदोहिथ ।
सः शेवधिं नि दधिषे विवस्वति विश्वस्यैक ईशिषे सास्युक्थ्यः ॥६॥

यः । भोजनम् । च । दयसे । च । वर्धनम् । आर्द्रात् । आ । शुष्कम् । मधुऽमत् । दुदोहिथ ।
सः । शेवऽधिम् । नि । दधिषे । विवस्वति । विश्वस्य । एकः । ईशिषे । सः । असि । उक्थ्यः ॥६॥

वेङ्कट० यः त्वम् अन्नम् वर्धनम् च प्रयच्छसि, यः च आर्द्रात् ओषध्यादेः शुष्कम् पक्वं व्रीह्यादिकं मधुरसवत् दुहोहिथ, सः त्वं निधिं धनं यजमाने नि दधासि। विश्वस्य च एकः[2] त्वम् ईशिषे इति ॥ ६ ॥

यः पुष्पिणीश्च प्रस्वश्च धर्मणाऽधि दाने व्यवनीरधारयः ।
यश्चासमा अजनो दिद्युतो दिव उरुरूर्वाँ अभितः सास्युक्थ्यः ॥ ७ ॥

यः । पुष्पिणीः । च । प्रऽस्वः । च । धर्मणा । अधि । दाने । वि । अवनीः । अधारयः ।
यः । च । असमाः । अजनः । दिद्युतः । दिवः । उरुः । ऊर्वान् । अभितः । सः । असि । उक्थ्यः ॥

वेङ्कट० यः पुष्पवतीः प्रसूतवतीः च धारणेन विविधं धारयसि फलप्रदाने ओषधीरवित्रीः। यः च त्वम् नानाविधाः द्योतमानाः विद्युतः दिवः जनयसि विस्तीर्णः विस्तीर्णान्[3] सर्वतः इति ॥ ७ ॥

यो नार्मरं सहवसुं निहन्तवे पृक्षाय च दासवेशाय चावहः ।
ऊर्जयन्त्या अपरिविष्टमास्यमुतैवाद्य पुरुकृत् सास्युक्थ्यः ॥ ८ ॥

यः । नार्मरम् । सहऽवसुम् । निऽहन्तवे । पृक्षाय । च । दासऽवेशाय । च । अवहः ।
ऊर्जयन्त्याः । अपरिऽविष्टम् । आस्यम् । उत । एव । अद्य । पुरुऽकृत् । सः । असि । उक्थ्यः ॥ ८ ॥

वेङ्कट० नृमरस्यापत्यं वसुनासुरेण सहितं निहन्तुम् पृक्षाय ऋषये दासवेशाय च प्रीणनार्थम् ऊर्जयन्त्याः पिशाचिकायाः विवृतम्[4] अपरिमितम् आस्यम् यः त्वं पुरा अवहः, सः त्वम् इदानीम् अपि बहुकृत्! स्तोतव्यो भवसि ॥ ८ ॥

---

१-१. नास्ति मूको. २. इतः वि[१,२] लपं. ३. विस्तीर्णवान् मूको; ऊर्वान् [नाप.] समुद्रान् इत्यर्थोऽङ्कः (तु. सा. ऋ ३,१,१४). ४. वृतम् वि[१] ल कपं; भवृतम् ल प्रस्तावः; विवृत्तम् वि[२].

शतं वा यस्य दश साकमाद्य एकस्य श्रुष्टौ यद्ध चोदमाविथ ।
अरज्जौ दस्यून्त्समुनब्दभीतये सुप्राव्यो अभवः सास्युक्थ्यः ॥ ९ ॥

शतम् । वा । यस्य । दश । साकम् । आ । अद्यः । एकस्य । श्रुष्टौ । यत् । ह । चोदम् । आविथ ।
अरज्जौ । दस्यून् । सम् । उनप् । दभीतये । सुप्रऽअव्यः । अभवः । सः । असि । उक्थ्यः ॥ ९ ॥

वेङ्कट० 'आशु अष्टीति श्रुष्टी' इति यास्कः ( तु. ६,१२ )। यस्य तव पानीयः [1]सोमः ग्रह-[1] शतम् भवति, अपि [2]वा दश[2] शतं साकम् । सहस्रम् इत्यर्थः । सः त्वम् एकस्य दभीतेः आश्वभिगमने समाश्रयणे तस्य चोदकं परबलं यदा रक्षितवान् असि । तदानीं रज्जुवर्जित [3]उदकबन्धे दभीतेः जयार्थम् अनेकान्[3] दस्यून् सम् उनप् अमज्जयः[4] । ततश्च सुष्ठु अभिगन्तव्यः अभवः इति ॥ ९ ॥

विश्वेदनु रोधना अस्य पौंस्यं ददुरस्मै दधिरे कृत्नवे धनम् ।
षळस्तभ्ना विष्टिरः पञ्च संदृशः परि परो अभवः सास्युक्थ्यः ॥ १० ॥

विश्वा । इत् । अनु । रोधनाः । अस्य । पौंस्यम् । ददुः । अस्मै । दधिरे । कृत्नवे । धनम् ।
षट् । अस्तभ्नाः । विऽस्तिरः । पञ्च । सम्ऽदृशः । परि । परः । अभवः । सः । असि । उक्थ्यः ॥

वेङ्कट० इन्द्रस्य पौंस्यम् आत्मनो निरुद्धा[5] यजमानाः सर्वाणि एव हवींषि कृत्नवे इन्द्राय अनु प्रददुः, धारयन्ति च प्रदातुं धनम् । षट् इत् उर्वीः इन्द्रः अस्तभ्नात् विस्तारयन्[6] पञ्च कृष्टीः । परि अभवः च सर्वं पारयिता त्वम् ॥ १० ॥

[7]इति द्वितीयाष्टके षष्ठाध्याये एकादशो वर्गः[7] ॥

सुप्रवाचनं तव वीर वीर्यं यदेकेन क्रतुना विन्दसे वसु ।
जातूष्ठिरस्य प्र वयः सहस्वतो या चकर्थ सेन्द्र विश्वास्युक्थ्यः ॥ ११ ॥

सुऽप्रवाचनम् । तव । वीर । वीर्यम् । यत् । एकेन । क्रतुना । विन्दसे । वसु ।
जातूऽस्थिरस्य । प्र । वयः । सहस्वतः । या । चकर्थ । सः । इन्द्र । विश्वा । असि । उक्थ्यः ॥ ११ ॥

वेङ्कट० सुष्ठु प्रकर्षेण सर्वसन्निधाने[8] प्रकाश्यम् तव हे वीर ! वीर्यम् यत् त्वम् एकेन कर्मणा शत्रुभ्यो धनं लभसे । जायमानस्थैर्यस्य प्ररिच्यन्ते अन्नानि बलवतः तव, यानि त्वं कृतवान् असि आहृतवान् असि शत्रुभ्यः [9]सर्वाणि । सः त्वम्[9] इन्द्र ! सर्वदा स्तुत्यः असि[10] ॥ ११ ॥

---

१-१. °मग्रश° वि[1] लपं; °मः···म° ल. २-२. द्वाद° वि[1] लपं. ३-३. बन्धने ··· कान् वि[1] अ[1]. ४. °ज्जयन् वि[1,2] अ[1] लपं; °ज्जयत् ल. ५. °रुन्धानं वि[2] अ[1]; °रुन्धानः वि[1] लपं. ६. विधारयन् वि[1] लपं. ७-७. नास्ति मूको. ८. सन्निधाने वि[2] अ[1]. ९-९. सर्वम् मूको. १०. नास्ति मूको.

अरमयः सरपसस्तराय कं तुर्वीतये च वय्याय च स्रुतिम् ।
नीचा सन्तमुदनयः परावृजं प्रान्धं श्रोणं श्रवयन्त्सास्युक्थ्यः ॥ १२ ॥

अरमयः । सरऽअपसः । तराय । कम् । तुर्वीतये । च । वय्याय । च । स्रुतिम् ।
नीचा । सन्तम् । उत् । अनयः । पराऽवृजम् । प्र । अन्धम् । श्रोणम् । श्रवयन् । सः । असि । उक्थ्यः ॥

वेङ्कट० अरमयः सरणशीलवेगः सुखं[1] तरणाय[2] उदकमध्येऽसुरैः प्रक्षिप्ताय तुर्वीतये च वय्याय च स्रुतिम् उदकम्। कुब्जत्वात् पृथिव्याम् एव वर्तमानम् परावृजम् †नाम उत् अनयः† प्रकर्षेण स्वयशः‡ श्रवयन् अन्धम् पङ्गुं च तम् इति[2] ॥ १२ ॥

अस्मभ्यं तद् वसो दानाय राधः समर्थयस्व बहु ते वसव्यम् ।
इन्द्र यच्चित्रं श्रवस्या अनु द्यून् बृहद् वदेम विदथे सुवीराः ॥ १३ ॥

अस्मभ्यम् । तत् । वसो इति । दानाय । राधः । सम् । अर्थयस्व । बहु । ते । वसव्यम् ।
इन्द्र । यत् । चित्रम् । श्रवस्याः । अनु । द्यून् । बृहत् । वदेम । विदथे । सुऽवीराः ॥ १३ ॥

वेङ्कट० [3]अस्मभ्यम् तत् हे वासयितः! दानाय धनं सङ्गमय प्रेरय। बहु ते धनम्। इन्द्र! यदि चित्रम् अन्नं दिवसेषु इच्छसि† इति[3] ॥ १३ ॥

[4]इति द्वितीयाष्टके षष्ठाध्याये द्वादशो वर्गः[4] ।

[ १४ ]

[5]गृत्समदो भार्गवः शौनकः ( पूर्वम् आङ्गिरसः शौनहोत्रः ) ऋषिः ।
इन्द्रो देवता । त्रिष्टुप् छन्दः[5] ॥

अध्वर्यवो भरतेन्द्राय सोममामत्रेभिः सिञ्चता मद्यमन्धः ।
कामी हि वीरः सदमस्य पीतिं जुहोत वृष्णे तदिदेष वष्टि ॥ १ ॥

अध्वर्यवः । भरत । इन्द्राय । सोमम् । आ । अमत्रेभिः । सिञ्चत । मद्यम् । अन्धः ।
कामी । हि । वीरः । सदम् । अस्य । पीतिम् । जुहोत । वृष्णे । तत् । इत् । एषः । वष्टि ॥ १ ॥

वेङ्कट० अध्वर्यवः! सोमम् इन्द्राय भरत। आ सिञ्चत च अत्रौ पात्रैः मदकरं तत् अन्नम्। सदैव हि असौ वीरः[2] अस्य पानं कामयते। ततः अस्मै वृष्णे[2] जुहोत। तत् एव असौ अन्नं कामयते ॥ १ ॥

---

१. सुगम् वि' लपं. २-२. नास्ति वि' लपं. †-† आमोदमनयः ल; नाम्येदनयः अ'. ‡ नास्ति मूको. ३-३. नास्ति वि' लपं. † ऋच्छति मूको. ४-४. नास्ति मूको. ५. नास्ति मूको.

अध्वर्यवो यो अपो वव्रिवांसं वृत्रं जघानाशन्येव वृक्षम् ।
तस्मा एतं भरत तद्वशायँ एष इन्द्रो अर्हति पीतिमस्य ॥ २ ॥

अध्वर्यवः । यः । अपः । वव्रिऽवांसम् । वृत्रम् । जघान । अशन्याऽइव । वृक्षम् ।
तस्मै । एतम् । भरत । तत्ऽवशाय । एषः । इन्द्रः । अर्हति । पीतिम् । अस्य ॥ २ ॥

वेङ्कट० अध्वर्यवः! यः उदकानि वारयन्तम् वृत्रम् अशन्या वृक्षम् इव हतवान्, तस्मै एतम् सोमम् भरत तत्कामाय ! सोऽयम् अस्य पानम् अर्हति ॥ २ ॥

अध्वर्यवो यो दृभीकं जघान यो गा उदाजदप हि वलं वः ।
तस्मा एतमन्तरिक्षे न वातमिन्द्रं सोमैरोर्णुत जूर्न वस्त्रैः ॥ ३ ॥

अध्वर्यवः । यः । दृभीकम् । जघान । यः । गाः । उत्ऽआजत् । अप । हि । वलम् । वरिति वः ।
तस्मै । एतम् । अन्तरिक्षे । न । वातम् । इन्द्रम् । सोमैः । आ । ऊर्णुत । जूः । न । वस्त्रैः ॥ ३ ॥

वेङ्कट० अध्वर्यवः![1] दृभीकम् असुरम् यः हतवान्, पणिभिः अपहृताः गाः च उदाजत, अपावृणोच्च मेघरूपम् वलम्[2] असुरं गवाम् आनयनाय, [3]तस्मै एतम्† सोमं विसृजत अन्तरिक्षे इव वायुम्, इन्द्रम् सोमैः आ च्छादयत जीर्णम् इव वस्त्रैः शीतार्तम्[3] ॥ ३ ॥

अध्वर्यवो य उरणं जघान नव चख्वांसं नवतिं च बाहून् ।
यो अर्बुदमव नीचा बबाधे तमिन्द्रं सोमस्य भृथे हिनोत ॥ ४ ॥

अध्वर्यवः । यः । उरणम् । जघान । नव । चख्वांसम् । नवतिम् । च । बाहून् ।
यः । अर्बुदम् । अव । नीचा । बबाधे । तम् । इन्द्रम् । सोमस्य । भृथे । हिनोत ॥ ४ ॥

वेङ्कट० [4]अध्वर्यवः! यः उरणम् असुरम् जघान नव नवतिम् च आत्मनः बाहून् युद्धाय[4] सम्पश्यन्तम्, यः अर्बुदम् नीचैः एव अव[5] बबाधे, तम् इन्द्रम् अभिगच्छत सोमस्य सम्भरणे सति ॥ ४ ॥

अध्वर्यवो यः स्वश्नं जघान यः शुष्णमशुषं यो व्यंसम् ।
यः पिप्रुं नमुचिं यो रुधिक्रां तस्मा इन्द्रायान्धसो जुहोत ॥ ५ ॥

अध्वर्यवः । यः । सु । अश्नम् । जघान । यः । शुष्णम् । अशुषम् । यः । विऽअंसम् ।
यः । पिप्रुम् । नमुचिम् । यः । रुधिऽक्राम् । तस्मै । इन्द्राय । अन्धसः । जुहोत ॥ ५ ॥

---

१. नास्ति मूको. २. वलम् वि[१२२] अ[१] लपं. ३-३. नास्ति वि[१] लपं. † एकम् वि[१] अ[१]. ४-४. नास्ति वि[१] लपं. ५. नास्ति वि[१] लपं.

वेङ्कट० स्वयं[1] न शुष्यति शोषयति च अन्यान् शुष्णः। तान् एवमादीन् सुष्ठु जघान इति ॥ ५ ॥

अध्वर्यवो यः शतं शम्बरस्य पुरो बिभेदाश्मनेव पूर्वीः ।
यो वर्चिनः शतमिन्द्रः सहस्रमपावपद् भरता सोममस्मै ॥ ६ ॥

अध्वर्यवः । यः । शतम् । शम्बरस्य । पुरः । बिभेद । अश्मनाऽइव । पूर्वीः ।
यः । वर्चिनः । शतम् । इन्द्रः । सहस्रम् । अपऽअवपत् । भरत । सोमम् । अस्मै ॥ ६ ॥

वेङ्कट० अध्वर्यवः![2] यः शम्बरस्य शतम् पूर्वीः पुरः अश्मनेव बीजादीन् अनायासेन बिभेद । तथा वर्चिनः च असुरस्य शतम् सहस्रम् च वीरान् साकम् अपावपत् पराङ्मुखान् कृतवान् इति ॥ ६ ॥

[3]इति द्वितीयाष्टके षष्ठाध्याये त्रयोदशो वर्गः[3] ॥

अध्वर्यवो यः शतमा सहस्रं भूम्या उपस्थेऽवपज्जघन्वान् ।
कुत्सस्यायोरतिथिग्वस्य वीरान् न्यवृणग् भरता सोममस्मै ॥ ७ ॥

अध्वर्यवः । यः । शतम् । आ । सहस्रम् । भूम्याः । उपऽस्थे । अवपत् । जघन्वान् ।
कुत्सस्य । आयोः । अतिथिऽग्वस्य । वीरान् । नि । अवृणक् । भरत । सोमम् । अस्मै ॥ ७ ॥

वेङ्कट० अध्वर्यवः![2] यः[4] शतम् सहस्रम् च वीरान् युद्धेषु भूम्याः उपस्थे बीजान् इव हत्वा निवपति[5] । कुत्सादीनां[6] च शत्रून् निजघानेति ॥ ७ ॥

अध्वर्यवो यन्नरः कामयाध्वे श्रुष्टी वहन्तो नशथा तदिन्द्रे ।
गभस्तिपूतं भरत श्रुतायेन्द्राय सोमं यज्यवो जुहोत ॥ ८ ॥

अध्वर्यवः । यत् । नरः । कामयाध्वे । श्रुष्टी । वहन्तः । नशथ । तत् । इन्द्रे ।
गभस्तिऽपूतम् । भरत । श्रुताय । इन्द्राय । सोमम् । यज्यवः । जुहोत ॥ ८ ॥

वेङ्कट० हे नेतारः! अध्वर्यवः! यत् यूयं कामयध्वे तत् क्षिप्रम् इन्द्राय सोमम् वहन्तः तस्मिन् प्राप्नुत । बाहुपूतम् सोमम् विश्रुताय इन्द्राय भरत[7] जुहोत च हे यष्टारः! ॥ ८ ॥

अध्वर्यवः कर्तना श्रुष्टिमस्मै वने निपूतं वन उन्नयध्वम् ।
जुषाणो हस्त्यमभि वावशे व इन्द्राय सोमं मदिरं जुहोत ॥ ९ ॥

---

१. अयं वि[2] अ[1]. २. नास्ति मूको. ३-३. नास्ति मूको. ४. नास्ति वि[2]. ५. पतति वि[1] लपं ६. न कु° वि[1,2] अ[1] लपं. ७. °त तत् अ[1].

अध्वर्यवः । कर्तन । श्रुष्टिम् । अस्मै । वने । निऽपूतम् । वने । उत् । नयध्वम् ।
जुषाणः । हस्त्यम् । अभि । वावशे । वः । इन्द्राय । सोमम् । मदिरम् । जुहोत ॥ ९ ॥

**वेङ्कट०** अध्वर्यवः![1] अस्मै आशुव्यापिनं सोमं कुरुत वृक्षविकारे कलशे। पूतम् पात्रे उत् नयध्वम्। हस्तस्थितं सोमं सेवमानः तम् अभि कामयते युष्मत् अयम् इन्द्रः। ततः अस्मै मदकरम् सोमम् जुहोत इति ॥ ९ ॥

**अध्वर्यवः पयसोधर्यथा गोः सोमेभिरीं पृणता भोजमिन्द्रम् ।**
**वेदाहमस्य निभृतं म एतद् दित्सन्तं भूयो यजतश्चिकेत ॥ १० ॥**

अध्वर्यवः । पयसा । ऊधः । यथा । गोः । सोमेभिः । ईम् । पृणत । भोजम् । इन्द्रम् ।
वेद । अहम् । अस्य । निऽभृतम् । मे । एतत् । दित्सन्तम् । भूयः । यजतः । चिकेत ॥ १० ॥

**वेङ्कट०** अध्वर्यवः![1] यथा गोः ऊधः पयसा मनुष्यान् पूरयति एवं सोमैः इन्द्रम् पूरयत दातारम्। अहम् अस्य स्वभावं जानामि। निभृतम् मम एतत्, इतः[2] पूर्वं न वः कथितम्। दातुम् इच्छन्तं यजमानं यष्टव्यः बहुतरं जानाति ॥ १० ॥

**अध्वर्यवो यो दिव्यस्य वस्वो यः पार्थिवस्य क्षम्यस्य राजा ।**
**तमूर्दरं न पृणता यवेनेन्द्रं सोमेभिस्तदपो वो अस्तु ॥ ११ ॥**

अध्वर्यवः । यः । दिव्यस्य । वस्वः । यः । पार्थिवस्य । क्षम्यस्य । राजा ।
तम् । ऊर्दरम् । न । पृणत । यवेन । इन्द्रम् । सोमेभिः । तत् । अपः । वः । अस्तु ॥ ११ ॥

**वेङ्कट०** 'पृथिवी' ( निघ १,३ ) इत्यन्तरिक्षनाम। क्षमेति पृथिव्याः ( तु. निघ १,१ )। तम् इन्द्रम् कुसूलम् इव यवेन सोमैः पूरयत। तत् भवतु भवतां कर्मेति ॥ ११ ॥

**अस्मभ्यं तद् वसो दानाय राधः समर्थयस्व बहु ते वसव्यम् ।**
**इन्द्र यच्चित्रं श्रवस्या अनु द्यून् बृहद् वदेम विदथे सुवीराः ॥ १२ ॥**

अस्मभ्यम् । तत् । वसो इति । दानाय । राधः । सम् । अर्थयस्व । बहु । ते । वसव्यम् ।
इन्द्र । यत् । चित्रम् । श्रवस्याः । अनु । द्यून् । बृहत् । वदेम । विदथे । सुऽवीराः ॥ १२ ॥

**वेङ्कट०** पूर्वं ( ऋ २,१३,१३ ) व्याख्याता ॥ १२ ॥

[3]इति द्वितीयाष्टके षष्ठाध्याये चतुर्दशो वर्गः[3] ॥

---

१. नास्ति मूको. २. इति वि' लपं. ३-३. नास्ति मूको.

[ १५ ]

[1]गृत्समदो भार्गवः शौनकः ( पूर्वम् आङ्गिरसः शौनहोत्रः ) ऋषिः।
इन्द्रो देवता। त्रिष्टुप् छन्दः[1] ॥

प्र घा न्वस्य महतो महानि सत्या सत्यस्य करणानि वोचम्।
त्रिकद्रुकेष्वपिबत् सुतस्यास्य मदे अहिमिन्द्रो जघान ॥ १ ॥

प्र। घ। नु। अस्य। महतः। महानि। सत्या। सत्यस्य। करणानि। वोचम्।
त्रिऽकद्रुकेषु। अपिबत्। सुतस्य। अस्य। मदे। अहिम्। इन्द्रः। जघान ॥ १ ॥

वेङ्कट० इदानीम् अस्य महतः महानि[2] सत्यानि[3] कर्माणि अहम् प्र वोचम् अमायस्य। तत्रैकं कर्म— त्रिकद्रुकेषु[4] सोमम् अपिबत् इति, तथा सोमस्य मदे अहिम् च अयम् हतवान् इति ॥ १ ॥

अवंशे द्यामस्तभायद् बृहन्तमा रोदसी अपृणदन्तरिक्षम्।
स धारयत् पृथिवीं पप्रथच्च सोमस्य ता मद इन्द्रश्चकार ॥ २ ॥

अवंशे। द्याम्। अस्तभायत्। बृहन्तम्। आ। रोदसी इति। अपृणत्। अन्तरिक्षम्।
सः। धारयत्। पृथिवीम्। पप्रथत्। च। सोमस्य। ता। मदे। इन्द्रः। चकार ॥ २ ॥

वेङ्कट० वंशं विनैव महान्तं दिवम् अस्तभ्नात्, आपूरयच्च तेजसा द्यावापृथिवी अन्तरिक्षम् च। तथा सः[3] अनालम्बनाम् पृथिवीम् अधारयत्, विस्तीर्णां च[3] चक्रे। तानि एतानि कर्माणि इन्द्रः[3] सोमस्य पीतस्य मदे अपिकरोति[5] ॥ २ ॥

सद्मेव प्राचो वि मिमाय मानैर्वज्रेण खान्यतृणन्नदीनाम्।
वृथासृजत् पथिभिर्दीर्घयाथैः सोमस्य ता मद इन्द्रश्चकार ॥ ३ ॥

सद्मऽइव। प्राचः। वि। मिमाय। मानैः। वज्रेण। खानि। अतृणत्। नदीनाम्।
वृथा। असृजत्। पथिऽभिः। दीर्घऽयाथैः। सोमस्य। ता। मदे। इन्द्रः। चकार ॥ ३ ॥

वेङ्कट० यथा गृहानृजून् मानदण्डैः विमितवान्[6], एवम् प्राचः सिन्धून् मानदण्डैः[7] विममे। तथा वृत्रेण परिवृतानि नदीनाम् द्वाराणि वज्रेण तृण्णवान्। अथ ता नदीः अनायासेन दीर्घगमनैः पथिभिः असृजत् इति ॥ ३ ॥

स प्रवोळ्हॄन् परिगत्या दभीतेर्विश्वमधागायुधमिद्धे अग्नौ।
सं गोभिरश्वैरसृजद् रथेभिः सोमस्य ता मद इन्द्रश्चकार ॥ ४ ॥

---

१-१. नास्ति मूको. २. महान्ति अ[1]. ३. नास्ति मूको. ४ कानि तानि वि[1] लपं.
५. च करो° वि[1] लपं. ६. विदितमत वि[2] अ[1]; विमित्रतत वि[1] लपं. ७. नास्ति अ[1] वि[2].

सः । प्रऽवोळ्हॄन् । परिऽगत्यं । दभीतेः । विश्वम् । अधाक् । आयुधम् । इद्धे । अग्नौ ।
सम् । गोभिः । अश्वैः । असृजत् । रथेभिः । सोमस्य । ता । मदे । इन्द्रः । चकार ॥ ४ ॥

**वेङ्कट०** दभीतेः अर्थाय तद्धनस्य वोढॄनपहर्तॄंश्चोरान् सर्वतो वेष्टयित्वा चोराणां सर्वम् आयुधम् अग्निमिद्ध्वा तस्मिन् इद्धे अग्नौ दग्धवान् । अथ दभीतिं गवादिभिः आत्मीयैः सम् असृजत् इति ॥ ४ ॥

स ईं महीं धुनिमेतोररम्णात् सो अस्नातॄनपारयत् स्वस्ति ।
त उत्स्नाय रयिमभि प्र तस्थुः सोमस्य ता मद इन्द्रश्चकार ॥ ५ ॥

सः । ईम् । महीम् । धुनिम् । एतोः । अरम्णात् । सः । अस्नातॄन् । अपारयत् । स्वस्ति ।
ते । उत्ऽस्नाय । रयिम् । अभि । प्र । तस्थुः । सोमस्य । ता । मदे । इन्द्रः । चकार ॥ ५ ॥

**वेङ्कट०** सः एनान् मनुष्यान् महतीं नदीं गन्तुम् अरमयत् नदीं प्रावर्तयत्[1] । ततः सः अयम् उदकाभावाद् अलब्धस्नानान् तान् स्वस्ति सम् अपारयत् । ते च स्नात्वोत्तीर्य धनम् अभि प्र तस्थुः अलक्ष्मीविनाशाद् इति ॥ ५ ॥

[2]इति द्वितीयाष्टके षष्ठाध्याये पञ्चदशो वर्गः[2] ।

सोदञ्चं सिन्धुमरिणान्महित्वा वज्रेणान उषसः सं पिपेष ।
अजवसो जविनीभिर्विवृश्चन्त्सोमस्य ता मद इन्द्रश्चकार ॥ ६ ॥

सः । उदञ्चम् । सिन्धुम् । अरिणात् । महिऽत्वा । वज्रेण । अनः । उषसः । सम् । पिपेष ।
अजवसः । जविनीभिः । विऽवृश्चन् । सोमस्य । ता । मदे । इन्द्रः । चकार ॥ ६ ॥

**वेङ्कट०** सः[3] महत्त्वेन प्राङ्मुखम् सिन्धुम् उदङ्मुखं करोति । तथा उद्यन् उषसः रथम् आत्मनो गमनाय वज्रेण सम्पिनष्टि जवहीनाः सेनाः विपरीताभिः विच्छिन्दन्निति ॥ ६ ॥

स विद्वाँ अपगोहं कनीनामाविर्भवन्नुदतिष्ठत् परावृक् ।
प्रति श्रोणः स्थाद् व्य१नगचष्ट सोमस्य ता मद इन्द्रश्चकार ॥ ७ ॥

सः । विद्वान् । अपऽगोहम् । कनीनाम् । आविः । भवन् । उत् । अतिष्ठत् । पराऽवृक् ।
प्रति । श्रोणः । स्थात् । वि । अनक् । अचष्ट । सोमस्य । ता । मदे । इन्द्रः । चकार ॥ ७ ॥

---

१. प्रवर्तयन् मूको. २-२. नास्ति मूको. ३. त्रुटितम् वि[2].

**वेङ्कट०** सः जानन्नात्मविषयं कन्यकानाम् अपगोहम् इन्द्रं तुष्टाव । पङ्गुं मां कन्यका उपभोगाय नोपतिष्ठन्तीति विषादः । अथ आत्मनः पङ्गुताम् इन्द्रप्रसादात् गतां प्रकाशयन् [१]उत् अतिष्ठत्[१] परावृक् ऋषिः । किं मम पङ्गुता नष्टा [२]उत न[२] इति परीक्षितुम् प्रत्यष्ठात् । तथा इन्द्रप्रसादादनक्षः सन् वि अपश्यच्च ॥ ७ ॥

भिनद् वलमङ्गिरोभिर्गृणानो वि पर्वतस्य दृंहितान्यैरत् ।
रिणग्रोधांसि कृत्रिमाण्येषां सोमस्य ता मद इन्द्रश्चकार ॥ ८ ॥

भिनत् । वलम् । अङ्गिरःऽभिः । गृणानः । वि । पर्वतस्य । दृंहितानि । ऐरत् ।
रिणक् । रोधांसि । कृत्रिमाणि । एषाम् । सोमस्य । ता । मदे । इन्द्रः । चकार ॥ ८ ॥

**वेङ्कट०** भिनत् वलासुरम् अङ्गिरोभिः स्तूयमानः । वि ऐरत् गवाम् आवरणस्य[३] दृढीकृतानि । तथा एषाम् असुराणाम् कृत्रिमाणि निरोधनानि प्राकारादीनि अरिणक्[४] ॥ ८ ॥

स्वप्नेनाभ्युप्या चुमुरिं धुनिं च जघन्थ दस्युं प्र दभीतिमावः ।
रम्भी चिदत्र विविदे हिरण्यं सोमस्य ता मद इन्द्रश्चकार ॥ ९ ॥

स्वप्नेन । अभिऽउप्य । चुमुरिम् । धुनिम् । च । जघन्थ । दस्युम् । प्र । दभीतिम् । आवः ।
रम्भी । चित् । अत्र । विविदे । हिरण्यम् । सोमस्य । ता । मदे । इन्द्रः । चकार ॥ ९ ॥

**वेङ्कट०** अभिवपनम् उपरि प्रक्षेपः । चुमुरिर्नामासुरः[५], धुनिश्च[६] तस्योपरि निद्रां निधाय स्वपन्तं तम् दस्युम् हतवान् असि । एवम् धुनिम् च । दभीतिम् ऋषिं च प्र आवः । रम्भी नाम कश्चित् सोऽपि अस्मिन् कलहे त्वत्तः हिरण्यम्[७] लेभे ॥ ९ ॥

नूनं सा ते प्रति वरं जरित्रे दुहीयदिन्द्र दक्षिणा मघोनी ।
शिक्षा स्तोतृभ्यो माति धग्भगो नो बृहद् वदेम विदथे सुवीराः ॥ १० ॥

नूनम् । सा । ते । प्रति । वरम् । जरित्रे । दुहीयत् । इन्द्र । दक्षिणा । मघोनी ।
शिक्ष । स्तोतृऽभ्यः । मा । अति । धक् । भगः । नः । बृहत् । वदेम । विदथे । सुवीराः ॥ १० ॥

**वेङ्कट०** पूर्वं ( ऋ २,११,२१ ) व्याख्याता ॥ १० ॥

[८]इति द्वितीयाष्टके षष्ठाध्याये षोडशो वर्गः[८] ॥

---

१-१. उपतिष्ठन् लपं. २-२. नास्ति वि[१] ल लपं. ३. अवरणार्थं वि[१] लपं. ४. रिणात् वि[२] अ[१]; रीणात् वि[१]लपं. ५. °मुरिनामा° ल प्रस्तावः ६. नास्ति वि[१] ल लपं. ७. हिरण्मयम् अ[१]. ८-८. नास्ति मूको.

[ १६ ]

[1]गृत्समदो भार्गवः शौनकः ( पूर्वम् आङ्गिरसः शौनहोत्रः ) ऋषिः ।
इन्द्रो देवता । जगती छन्दः, नवमी त्रिष्टुप्[1] ।

**प्र वः सतां ज्येष्ठतमाय सुष्टुतिमग्नाविव समिधाने हविर्भरे ।**
**इन्द्रमजुर्यं जरयन्तमुक्षितं सनाद् युवानमवसे हवामहे ॥ १ ॥**

प्र । वः । सताम् । ज्येष्ठऽतमाय । सुऽस्तुतिम् । अग्नौऽइव । समऽइधाने । हविः । भरे ।
इन्द्रम् । अजुर्यम् । जरयन्तम् । उक्षितम् । सनात् । युवानम् । अवसे । हवामहे ॥ १ ॥

**वेङ्कट०** [2]युष्मदर्थम् अहम्[2] सताम्[3] श्रेष्ठतमाय इन्द्राय सुष्टुतिम् प्र भरामि । यथा समिध्यमाने अग्नौ हविः प्रभरन्ति[4] एवम् इति । इन्द्रम् अन्यैः जरयितुम् अशक्यम् अन्यान् जरयन्तम् हविर्भिः उक्षितम् सनातनम् युवानम् रक्षणाय हवामहे ॥ १ ॥

**यस्मादिन्द्राद् बृहतः किं चनेमृते विश्वान्यस्मिन्त्संभृताधि वीर्या ।**
**जठरे सोमं तन्वी३ सहो महो हस्ते वज्रं भरति शीर्षणि क्रतुम् ॥ २ ॥**

यस्मात् । इन्द्रात् । बृहतः । किम् । चन । ईम् । ऋते । विश्वानि । अस्मिन् । समऽभृता । अधि । वीर्या ।
जठरे । सोमम् । तन्वि । सहः । महः । हस्ते । वज्रम् । भरति । शीर्षणि । क्रतुम् ॥ २ ॥

**वेङ्कट०** महतः यस्मात् इन्द्रात् ऋते बलवत् किम् अपि । न विद्यते इति वाक्यशेषः । तस्मिन्निन्द्रे विश्वानि अपि वीर्याणि सम्भृतानि भवन्ति । सः जठरे सोमम् चक्रे, शरीरे च महत् बलम्, हस्ते च वज्रम् बिभर्ति, शिरसि प्रज्ञानं यज्ञं वा ॥ २ ॥

**न क्षोणीभ्यां परिभ्वे त इन्द्रियं न समुद्रैः पर्वतैरिन्द्र ते रथः ।**
**न ते वज्रमन्वश्नोति कश्चन यदाशुभिः पतसि योजना पुरु ॥ ३ ॥**

न । क्षोणीभ्याम् । परिऽभ्वे । ते । इन्द्रियम् । न । समुद्रैः । पर्वतैः । इन्द्र । ते । रथः ।
न । ते । वज्रम् । अनु । अश्नोति । कः । चन । यत् । आशुऽभिः । पतसि । योजना । पुरु ॥३॥

**वेङ्कट०** न द्यावापृथिवीभ्यां तव वीर्यं परिभवितुं शक्यते । तथा गच्छतः तव रथः इन्द्र![5] उदकैः शिलोच्चयैः वा अविहतगतिः[6] भवति । न तव वज्रम् प्रति कः चिद् आगच्छति, यदा त्वम् आशुभिः अश्वैः पुरूणि योजनानि गच्छसि ॥ ३ ॥

---

१-१. नास्ति मूको. २-२. नास्ति वि[1] लपं. ३. नास्ति वि[2] अ[1]. ४. प्रभरति वि[1] लपं.
५. नास्ति मूको. ६. पिहित इति वि[1] लपं.

विश्वे ह्यस्मै यजताय धृष्णवे क्रतुं भरन्ति वृषभाय सश्चते ।
वृषा यजस्व हविषा विदुष्टरः पिबेन्द्र सोमं वृषभेण भानुना ॥ ४ ॥

विश्वे । हि । अस्मै । यजताय । धृष्णवे । क्रतुम् । भरन्ति । वृषभाय । सश्चते ।
वृषा । यजस्व । हविषा । विदुःऽतरः । पिब । इन्द्र । सोमम् । वृषभेण । भानुना ॥ ४ ॥

**वेङ्कट०** 'सर्वे हि अस्मै' यष्टव्याय धृष्णवे वृषभाय सङ्गच्छमानाय[२] कर्म सम्भरन्ति। त्वं च वर्षिता हविषाम् एनम् हविषा यजस्व। विद्वत्तरः त्वं च इन्द्र! वर्षित्रा[३] स्वतेजसा सोमम् पिब इति॥ ४॥

वृष्णः कोशः पवते मध्व ऊर्मिर्वृषभान्नाय वृषभाय पातवे ।
वृषणाध्वर्यू वृषभासो अद्रयो वृषणं सोमं वृषभाय सुष्वति ॥ ५ ॥

वृष्णः । कोशः । पवते । मध्वः । ऊर्मिः । वृषभऽअन्नाय । वृषभाय । पातवे ।
वृषणा । अध्वर्यू इति । वृषभासः । अद्रयः । वृषणम् । सोमम् । वृषभाय । सुस्वति ॥ ५ ॥

**वेङ्कट०** वर्षितुः सोमस्य मधुनः प्रेरकः अंशुः पवते सोमान्नाय इन्द्राय पानार्थम्। वर्षितारौ अध्वर्युः प्रतिप्रस्थाता च तथा वर्षणशीलाः ग्रावाणः च वर्षितारम् सोमम् वर्षणशीलाय[४] सुन्वन्ति[५]॥ ५॥

[६]इति द्वितीयाष्टके षष्ठाध्याये सप्तदशो वर्गः[६]॥

वृषा ते वज्र उत ते वृषा रथो वृषणा हरी वृषभाण्यायुधा ।
वृष्णो मदस्य वृषभ त्वमीशिष इन्द्र सोमस्य वृषभस्य तृप्णुहि ॥ ६ ॥

वृषा । ते । वज्रः । उत । ते । वृषा । रथः । वृषणा । हरी इति । वृषभाणि । आयुधा ।
वृष्णः । मदस्य । वृषभ । त्वम् । ईशिषे । इन्द्र । सोमस्य । वृषभस्य । तृप्णुहि ॥ ६ ॥

**वेङ्कट०** निगदव्याख्याता ॥ ६ ॥

प्र ते नावं न समने वचस्युवं ब्रह्मणा यामि सवनेषु दाधृषिः ।
कुविन्नो अस्य वचसो निबोधिषदिन्द्रमुत्सं न वसुनः सिचामहे ॥ ७ ॥

प्र । ते । नावम् । न । समने । वचस्युवम् । ब्रह्मणा । यामि । सवनेषु । दधृषिः ।
कुवित् । नः । अस्य । वचसः । निऽबोधिषत् । इन्द्रम् । उत्सम् । न । वसुनः । सिचामहे ॥ ७ ॥

---

१-१. नास्ति वि॰ लप॰  २. संभक्तमा॰ अ॰.  ३. वर्षिता मूको.  ४. ॰शीलं मूको.  ५. सुन्वन्तु ल.
६-६. नास्ति मूको.

वेङ्कट० हे[1] यजमान! तव अहम् नावम् इव नद्यां सङ्ग्रामे तारकं स्तोत्रम् इच्छन्तम् इन्द्रं धृष्टः यज्ञेषु स्तोत्रेण अभिगच्छामि। अस्माकम् इदं वचनम् इन्द्रः बहु निबुध्यताम्। इन्द्रम् कूपम् इव उदकार्थं धनानाम् अर्थाय[2] सिञ्चामह इति ॥ ७ ॥

पुरा संबाधादभ्या ववृत्स्व नो धेनुर्न वत्सं यवसस्य पिप्युषी ।
सकृत्सु ते सुमतिभिः शतक्रतो सं पत्नीभिर्न वृषणो नसीमहि ॥ ८ ॥

पुरा । सम्ऽबाधात् । अभि । आ । ववृत्स्व । नः । धेनुः । न । वत्सम् । यवसस्य । पिप्युषी ।
सकृत् । सु । ते । सुमतिऽभिः । शत_तो इति शतऽक्रतो । सम् । पत्नीभिः । न । वृषणः । नसीमहि ॥८॥

वेङ्कट० सम्बाधायाः[3] पूर्वमेव अस्मान् [4]अभि आ ववृत्स्व[4] धेनुः इव वत्सम् यवसेन तृप्ता। शतक्रतो! वयं तव सुमतिभिः सकृत् सु[5] सम् नसीमहि संसृष्टा भवेम, यथा पुमांसः पत्नीभिः सङ्गच्छन्ते तद्वत्। वृषणः इव पत्नीभिः इवेति द्वावुपमार्थीयावप्यन्विताविति ॥ ८ ॥

नूनं सा ते प्रति वरं जरित्रे दुहीयदिन्द्र दक्षिणा मघोनी ।
शिक्षा स्तोतृभ्यो माति धग्भगो नो बृहद् वदेम विदथे सुवीराः ॥ ९ ॥

नूनम् । सा । ते । प्रति । वरम् । जरित्रे । दुहीयत् । इन्द्र । दक्षिणा । मघोनी ।
शिक्ष । स्तोतृऽभ्यः । मा । अति । धक् । भगः । नः । बृहत् । वदेम । विदथे । सुऽवीराः ॥९॥

वेङ्कट० पूर्वम् ( ऋ २,११,२१ ) व्याख्यातेति ॥ ९ ॥

[6]इति द्वितीयाष्टके षष्ठाध्यायेऽष्टादशो वर्गः[6] ॥

## [ १७ ]

[6]गृत्समदो भार्गवः शौनकः ( पूर्वम् आङ्गिरसः शौनहोत्रः ) ऋषिः । इन्द्रो देवता । जगती छन्दः, अष्टमीनवम्यौ त्रिष्टुभौ[6] ।

तदस्मै नव्यमङ्गिरस्वदर्चत शुष्मा यदस्य प्रत्नथोदीरते ।
विश्वा यद् गोत्रा सहसा परीवृता मदे सोमस्य दृंहितान्यैरयत् ॥ १ ॥

तत् । अस्मै । नव्यम् । अङ्गिरस्वत् । अर्चत । शुष्माः । यत् । अस्य । प्रत्नऽथा । उत्ऽईरते ।
विश्वा । यत् । गोत्रा । सहसा । परिऽवृता । मदे । सोमस्य । दृंहितानि । ऐरयत् ॥१॥

वेङ्कट० तत् अस्मै इन्द्राय स्तोतव्यम्[7] अङ्गिरसः इव अर्चत। शोषकारः च यः। यत् अस्य पुराणाः उज्ज्वलन्ति। यत् च सर्वान् मेघान् बलेन परिवृतान् सोमस्य मदे दृढान् अपि प्रेरितवानिति ॥ १ ॥

---

१. नास्ति अ[1]. २. नास्ति मूको. ३. बाधायाः वि[2] अ[1]. ४-४. अनभ्यावनृत्सु वि[2] अ[1]. ५. नास्ति लपं. ६-६. नास्ति मूको. ७. सोतव्यम् मूको.

स भूतु यो हं प्रथमाय धायस ओजो मिमानो महिमानमातिरत् ।
शूरो यो युत्सु तन्वं परिव्यत शीर्षणि द्यां महिना प्रत्यमुञ्चत ॥ २ ॥

सः । भूतु । यः । ह । प्रथमार्य । धायसे । ओजः । मिमानः । महिमानम् । आ । अतिरत् ।
शूरः । यः । युत्ऽसु । तन्वम् । परिऽव्यत । शीर्षणि । द्याम् । महिना । प्रति । अमुञ्चत ॥ २ ॥

**वेङ्कट०** सः भवतात्, यः प्रथमाय धात्र इन्द्राय बलं कुर्वन् महिमानम् स्तोत्रैः वर्धयति, यः शूरः सङ्ग्रामेषु आत्मीयं शरीरं शत्रुभ्यः परिनिधत्ते रक्षति, शिरसि द्याम् माहात्म्येन प्रति मुञ्चते धारयति ॥ २ ॥

अधाकृणोः प्रथमं वीर्यं महद् यदस्याग्रे ब्रह्मणा शुष्ममैरयः ।
रथेष्ठेन हर्यश्वेन विच्युताः प्र जीरयः सिस्रते सध्र्यक् पृथक् ॥ ३ ॥

अध । अकृणोः । प्रथमम् । वीर्यम् । महत् । यत् । अस्य । अग्रे । ब्रह्मणा । शुष्मम् । ऐरयः ।
रथेऽस्थेन । हरिऽअश्वेन । विऽच्युताः । प्र । जीरयः । सिस्रते । सध्र्यक् । पृथक् ॥ ३ ॥

**वेङ्कट०** अपि च त्वं पूर्वम् महत् वीर्यम् कृतवान् असि, यत्[1] अस्य वीर्यस्य अग्रतः ब्रह्मणा[2] शुष्मम् सम् ऐरयः । तस्मै वीर्यायोपहृतवानसीत्यर्थः । रथस्थेन हर्यश्वेन इन्द्रेण[3] विच्याविताः क्षिप्रकारिणो वीराः युद्धम् अपहाय सङ्घशो गच्छन्ति एकैकशश्च ॥ ३ ॥

अधा यो विश्वा भुवनाभि मज्मनेशानकृत् प्रवया अभ्यवर्धत ।
आद् रोदसी ज्योतिषा वह्निरातनोत् सीव्यन् तमांसि दुधिता समव्ययत् ॥ ४ ॥

अध । यः । विश्वा । भुवना । अभि । मज्मना । ईशानऽकृत् । प्रऽवयाः । अभि । अवर्धत ।
आत् । रोदसी इति । ज्योतिषा । वह्निः । आ । अतनोत् । सीव्यन् । तमांसि । दुधिता । सम् । अव्ययत् ॥ ४ ॥

**वेङ्कट०** अपि च यः सर्वाणि भुवनानि[4] बलेन अभिभवति, स स्वामित्वस्य कर्ता प्रसिद्धान्नः अभि वर्धते । अनन्तरम् एव द्यावापृथिवी ज्योतिषा[5] वोढा इन्द्रः विस्तारयति । सूच्येव तेजसा तमांसि सीव्यन् दुर्निहितानि सङ्गमयति[6] ॥ ४ ॥

स प्राचीनान् पर्वतान् दृंहदोजसाऽधराचीनमकृणोदपामपः ।
अधारयत् पृथिवीं विश्वधायसमस्तभ्नान्मायया द्यामवस्रसः ॥ ५ ॥

सः । प्राचीनान् । पर्वतान् । दृंहत् । ओजसा । अधराचीनम् । अकृणोत् । अपाम् । अपः ।
अधारयत् । पृथिवीम् । विश्वऽधायसम् । अस्तभ्नात् । मायया । द्याम् । अवऽस्रसः ॥ ५ ॥

---

१. तत् वि[१] अ[१]. २. नास्ति मूको. ३. नास्ति वि[१]. ४. नास्ति वि[१] लपं. ५. ज्योतिषां लपं; °तिषः ल. ६. सहग° वि[२] अ[१].

वेङ्कट० सः शिलोच्चयान् ऊर्ध्वाग्रान् अदृंहत् पृथिव्यां बलेन, तथा अपाम् वेगम् अवाङ्मुखं प्रवणाभिमुखम् अकरोत्, अधारयत् च विश्वस्य धात्रीम् पृथिवीम्, द्याम् च अस्तभ्नात् प्रज्ञानेन अवस्रंसनात् ॥ ५ ॥

[1]इति द्वितीयाष्टके षष्ठाध्याये एकोनविंशो वर्गः[1] ॥

सास्मा अरं बाहुभ्यां यं पिताकृणोद् विश्वस्मादा जनुषो वेदसस्परि ।
येना पृथिव्यां नि क्रिविं शयध्यै वज्रेण हत्व्यवृणक् तुविष्वणिः ॥ ६ ॥

सः । अस्मै । अरम् । बाहुऽभ्याम् । यम् । पिता । अकृणोत् । विश्वस्मात् । आ । जनुषः । वेदसः । परि ।
येन । पृथिव्याम् । नि । क्रिविम् । शयध्यै । वज्रेण । हत्वी । अवृणक् । तुविऽस्वनिः ॥ ६ ॥

वेङ्कट० सः सोमः अस्मै इन्द्राय पर्याप्तो[2] भवति, यम् अस्य पालयिता यजमानः करोति बाहुभ्याम् सर्वस्मात् एव जातात् धनात्। परिः पञ्चम्यर्थं स्फुटीकरोति। येन [3]सोमेन गौतमस्य[3] अग्रतः शाययितुं[4] दूरस्थं कूपम्[5] वज्रेण हत्वा [6]नि अवृणक्[6] महास्वनः आनयनार्थं[7] कूपम्। अस्य [8]वज्रं मूले[8] निधाय मूलमच्छिनद् इत्यर्थः ॥ ६ ॥

अमाजूरिव पित्रोः सचा सती समानादा सदसस्त्वामिये भगम् ।
कृधि प्रकेतमुप मास्या भर दद्धि भागं तन्वो३ येन मामहः ॥ ७ ॥

अमाजूःऽइव । पित्रोः । सचा । सती । समानात् । आ । सदसः । त्वाम् । इये । भगम् ।
कृधि । प्रऽकेतम् । उप । मासि । आ । भर । दद्धि । भागम् । तन्वः । येन । ममहः ॥ ७ ॥

वेङ्कट० दौर्भाग्यादलब्धपतिका यावज्जीवम् पित्रोः सह जीर्णा अस्मिन् गृहे पितृभ्यां भवामि इति यदा अमन्यत, आत्मनः पितृभ्यां च साधारणात् पितृगृहाद् अन्यत्र पतिगृहं गन्तुम् इन्द्र! त्वाम् कन्यका भगम् ययाचे। तदा त्वं च कृतवान् असि प्रज्ञानं तद्वचनस्य। ताम् उप मासि पूजयसि आहरसि च। तस्यै भाग्यं प्रयच्छसि शरीरस्य। येन तां पूजितवान् असि। पूरणम् इव इति ॥ ७ ॥

भोजं त्वामिन्द्र वयं हुवेम ददिष्ट्वमिन्द्रापांसि वाजान् ।
अविड्ढीन्द्र चित्रया न ऊती कृधि वृषन्निन्द्र वस्यसो नः ॥ ८ ॥

भोजम् । त्वाम् । इन्द्र । वयम् । हुवेम । ददिः । त्वम् । इन्द्र । अपांसि । वाजान् ।
अविड्ढि । इन्द्र । चित्रया । नः । ऊती । कृधि । वृषन् । इन्द्र । वस्यसः । नः ॥ ८ ॥

---

१-१. नास्ति मूको. २. 'र्याप्तम् वि[1,2] अ[1] लपं. ३-३. सोमस्य अ[1]; °न गोत° वि[1]. ४. शयितुम् वि[2] अ[1]. ५. नास्ति वि[1] लपं. ६-६. न्यावृणक् वि[2] अ[1]. ७. नयनार्थं लपं; नयार्थं वि[2]. ८-८. वज्रे भूवं वि[2]; वज्रे मूरं वि[1] लपं; वज्रमूले अ[1] ल.

**वेङ्कट०** दातारम् इन्द्र! त्वा वयम्[1] हुवेम। दाता त्वम् इन्द्र! कर्माणि अन्नानि च। रक्ष अस्मान् इन्द्र! चित्रेण रक्षणेन। कुरु वृषन्![2] वसीयसः अस्मानिति ॥ ८ ॥

नूनं सा ते प्रति वरं जरित्रे दुहीयदिन्द्र दक्षिणा मघोनी।
शिक्षा स्तोतृभ्यो माति धग्भगो नो बृहद् वदेम विदथे सुवीराः ॥ ९ ॥

नूनम्। सा। ते। प्रति। वरम्। जरित्रे। दुहीयत्। इन्द्र। दक्षिणा। मघोनी।
शिक्ष। स्तोतृऽभ्यः। मा। अति। धक्। भगः। नः। बृहत्। वदेम। विदथे। सुऽवीराः ॥९॥

**वेङ्कट०** पूर्वम् ( ऋ २,११,२१ ) व्याख्यातेयम् ऋक् ॥ ९ ॥

[3]इति द्वितीयाष्टके षष्ठाध्याये विंशो वर्गः[3] ॥

[ १८ ]

[1]गृत्समदो भार्गवः शौनकः ( पूर्वम् आङ्गिरसः शौनहोत्रः ) ऋषिः। इन्द्रो देवता। त्रिष्टुप् छन्दः[1]।

प्राता रथो नवो योजि सस्निश्चतुर्युगस्त्रिकशः सप्तरश्मिः।
दशारित्रो मनुष्यः स्वर्षाः स इष्टिभिर्मतिभी रंह्यो भूत् ॥ १ ॥

प्रातरिति। रथः। नवः। योजि। सस्निः। चतुःऽयुगः। त्रिऽकशः। सप्तऽरश्मिः।
दशऽअरित्रः। मनुष्यः। स्वःऽसाः। सः। इष्टिऽभिः। मतिऽभिः। रंह्यः। भूत् ॥ १ ॥

**वेङ्कट०** प्रातरेव रथः नवतरः युक्तः[4] शुद्धः चतुर्भिः युगैः युक्तः तिसृभिः च अश्वाजनीभिः युक्तः सप्तभिः च रश्मिभिः यमनसाधनैः दशभिः अरित्रैः च मनुष्येभ्यो हितः स्वर्गस्य सम्भक्ता। सः रथः इष्टिभिः स्तुतिभिः च रंहणीयो नेयः भवति। तत्र महर्त्विजो युगाः, ऋचो यजूंषि सामानीति कशाः, दश चमसा भवन्ति, सप्त छन्दांसि ॥ १ ॥

सास्मा अरं प्रथमं स द्वितीयमुतो तृतीयं मनुषः स होता।
अन्यस्या गर्भमन्य ऊं जनन्त सो अन्येभिः सचते जेन्यो वृषा ॥ २ ॥

सः। अस्मै। अरम्। प्रथमम्। सः। द्वितीयम्। उतो इति। तृतीयम्। मनुषः। सः। होता।
अन्यस्याः। गर्भम्। अन्ये। ऊँ इति। जनन्त। सः। अन्येभिः। सचते। जेन्यः। वृषा ॥ २ ॥

**वेङ्कट०** सः यज्ञः इन्द्राय प्रथमम् पर्याप्तं प्रातःसवने। एवं माध्यन्दिने तृतीयसवने च। सः[5]

---

१. नास्ति वि' लपं. २. ०ष मूको. ३-३. नास्ति मूको. ४. युज्मः ल, लपं; योजितः ल प्रस्तावः. ५. नास्ति वि[2] अ'.

यज्ञः[1] मनुष्यस्य देवेभ्यः स्वधनं प्रयच्छतः प्रदाता, देवान् वा आत्मना आह्वयति। पृथिव्या उत्पन्नैः हविर्भिः वायव्यैः च यज्ञो जायते इति पृथिव्याः गर्भं उच्यते। तम् ऋत्विजः जनयन्ति। सः च जातः देवैः सङ्गच्छते जयशीलः कामानां वर्षिता इति ॥ २ ॥

हरी नु कं रथ इन्द्रस्य योजमायै सूक्तेन वचसा नवेन ।
मो षु त्वामत्र बहवो हि विप्रा नि रीरमन् यजमानासो अन्ये ॥ ३ ॥

हरी इति । नु । कम् । रथे । इन्द्रस्य । योजम् । आऽयै । सुऽउक्तेन । वचसा । नवेन ।
मो इति । सु । त्वाम् । अत्र । बहवः । हि । विप्राः । नि । रीरमन् । यजमानासः । अन्ये ॥३॥

वेङ्कट० एवं वितते यज्ञे अश्वौ सम्प्रत्यहम् इन्द्ररथे योजयामि आयातुम् सुष्ठूच्यमानेन स्तोत्रेण नवतरेण। मा त्वाम् अन्ये यजमानाः अस्मिन् अहनि आह्वयन्तु। बहवः हि भवन्तु[2] मेधाविनो लोके। ते सर्वे नि रमयन्तु। अद्य विरमन्तु अन्ये यजमाना इति ॥ ३ ॥[3]

आ द्वाभ्यां हरिभ्यामिन्द्र याह्या चतुर्भिरा षड्भिर्हूयमानः ।
आष्टाभिर्दशभिः सोमपेयमयं सुतः सुमख मा मृधस्कः ॥ ४ ॥

आ । द्वाभ्याम् । हरिऽभ्याम् । इन्द्र । याहि । आ । चतुःऽभिः । आ । षट्ऽभिः । हूयमानः ।
आ । अष्टाभिः । दशऽभिः । सोमऽपेयम् । अयम् । सुतः । सुऽमख । मा । मृधः । कुरिति कः ॥ ४॥

वेङ्कट० सोमपानं प्रत्यागमनम्। अयं सोमः त्वदर्थं सुतः, सम्प्रति मा सङ्ग्रामं कार्षीः, क्रोधं वा मा कुर्विति[4] ॥ ४ ॥

आ विंशत्या त्रिंशता याह्यर्वाङा चत्वारिंशता हरिभिर्युजानः ।
आ पञ्चाशता सुरथेभिरिन्द्रा षष्ट्या सप्तत्या सोमपेयम् ॥ ५ ॥

आ । विंशत्या । त्रिंशता । याहि । अर्वाङ् । आ । चत्वारिंशता । हरिऽभिः । युजानः ।
आ । पञ्चाशता । सुऽरथेभिः । इन्द्र । आ । षष्ट्या । सप्तत्या । सोमऽपेयम् ॥ ५ ॥

वेङ्कट० निगदव्याख्याता ॥ ५ ॥

[5]इति द्वितीयाष्टके षष्ठाध्याये एकविंशो वर्गः[5] ॥

आशीत्या नवत्या याह्यर्वाङा शतेन हरिभिरुह्यमानः ।
अयं हि ते शुनहोत्रेषु सोम इन्द्र त्वाया परिषिक्तो मदाय ॥ ६ ॥

---

१. यज्ञे वि[1] लपं. २. °वन्ति वि[1] लपं. ३. इतः परम् तिस्रो निगदव्याख्याताः मूको. ४. कुर्वीति वि[1]. ५-५. नास्ति मूको.

आ । अशीत्या । नवत्या । याहि । अर्वाङ् । आ । शतेन॑ । हरि॑ऽभिः । उह्यमा॑नः ।
अयम् । हि । ते । शुनऽहोत्रेषु । सोम॑ः । इन्द्र॑ । त्वाऽया । परि॑ऽसिक्तः । मदा॑य ॥ ६ ॥

वेङ्कट० त्वाया[1] त्वत्कामनया । तव मदार्थम् परिषिक्तः इति ॥ ६ ॥

**मम॒ ब्रह्मे॑न्द्र या॒ह्यच्छा॒ विश्वा॒ हरी॑ धु॒रि धि॑ष्वा॒ रथ॑स्य ।**
**पु॒रु॒त्रा हि वि॒हव्यो॑ ब॒भूथा॒स्मिञ्छू॑र॒ सव॑ने मादयस्व ॥ ७ ॥**

मम॑ । ब्रह्म॑ । इन्द्र । याहि । अच्छ॑ । विश्वा॑ । हरी॒ इति॑ । धुरि । धिष्व । रथ॑स्य ।
पुरुऽत्रा । हि । विऽहव्य॑ः । बभूथ॑ । अस्मिन् । शूर । सव॑ने । मादयस्व ॥ ७ ॥

वेङ्कट० इन्द्र! मम स्तोत्राणि प्रति आगच्छ। तदर्थम् रथस्य धुरि अश्वौ स्थापय। त्वं बहुषु स्थानेषु विविधं मय्यागच्छ मय्यागच्छ इति आह्वातव्यः भवसि। सम्प्रति अस्मिन् यज्ञे शूर! मादयस्व इति ॥ ७

**न म॒ इन्द्रे॑ण स॒ख्यं वि यो॑षद॒स्मभ्य॑म॒स्य दक्षि॑णा दुहीत ।**
**उप॒ ज्येष्ठे॒ वरू॑थे॒ गभ॑स्तौ प्रा॒येप्रा॑ये जिगी॒वांस॑ः स्याम ॥ ८ ॥**

न । मे । इन्द्रे॑ण । सख्यम् । वि । योषत् । अस्मभ्य॑म् । अस्य । दक्षि॑णा । दुहीत ।
उप॑ । ज्येष्ठे॑ । वरू॑थे । गभ॑स्तौ । प्रायेऽप्रा॑ये । जिगीवांस॑ः । स्याम ॥ ८ ॥

वेङ्कट०
'निहत्य तौ गृत्समदम् ऋषिं शक्रोऽभ्यभाषत ।
यथेष्टं मां सखे! पश्य प्रियत्वं ह्यागतोऽसि[2] मे ॥ १ ॥

वरं गृहाण मत्तस्त्वम् अक्षयं चास्तु ते तपः ।
प्रह्वस्त्वं[3] प्रत्युवाचर्षिर् अस्माकं वदतां वर[4] ॥ २ ॥

तनूनामस्तु [5]चारिष्टिर् वाक् चास्तु हृदयङ्गमा[5] ।
सुवीरा रयिमन्तश्च वयं त्वामिन्द्र! धीमहे[6] ॥ ३ ॥

इन्द्र![7] त्वां च[8] विजानीमो वयं जन्मनि जन्मनि ।
त्वद्गतश्चैष मे भावो [9]मापगास्त्वं रथीतरः[9] ॥ ४ ॥

तथेत्युक्त्वा[10] तुराषाट् तु[11] पाणौ जग्राह दक्षिणे ।
ऋषिश्चास्य सखित्वेन पाणिना पाणिमस्पृशत्' ॥ ५ ॥ (बृदे ४,७०-७३,७५) इति ॥

---

१. त्वया मूको. २. °यस्त्वभ्याग° मूको. ३. प्रभुस्त्वं मूको. ४. वरः ल. ५-५. वाचश्च °गमाः मूको. ६. धीमहि मूको. ७. इन्द्रं मूको. ८. न ल. ९-९. मापगात् तु रथीतर मूको. १०. रथे° वि° अ° लपं. ११. तं मूको.

**वेङ्कट०** न मे इदम् इन्द्रेण सञ्जातम् सख्यम् वियुतं भवतु। अस्मभ्यम् अस्य इन्द्रस्य दानम् अभिलषितं प्रयच्छतु। वयम् इन्द्रस्य श्रेष्ठे वारके शत्रूणां बाहौ उप स्याम तदाश्रया भवाम प्रयाणेप्रयाणे शत्रून्[1] जिगीवांसः इति ॥ ८ ॥

नूनं सा ते प्रति वरं जरित्रे दुहीयदिन्द्र दक्षिणा मघोनी ।
शिक्षा स्तोतृभ्यो माति धग्भगो नो बृहद् वदेम विदथे सुवीराः ॥ ९ ॥

नूनम् । सा । ते । प्रति । वरम् । जरित्रे । दुहीयत् । इन्द्र । दक्षिणा । मघोनी ।
शिक्ष । स्तोतृऽभ्यः । मा । अति । धक् । भगः । नः । बृहत् । वदेम । विदथे । सुऽवीराः ॥९॥

**वेङ्कट०** पूर्वम् ( ऋ २,११,२१ ) व्याख्याता ॥ ९ ॥

[2]इति द्वितीयाष्टके षष्ठाध्याये द्वाविंशो वर्गः[2] ॥

[ १९ ]

[2]गृत्समदो भार्गवः शौनकः ( पूर्वम् आङ्गिरसः शौनहोत्रः ) ऋषिः ।
इन्द्रो देवता । त्रिष्टुप् छन्दः[2] ।

अपाय्यस्यान्धसो मदाय मनीषिणः सुवानस्य प्रयसः ।
यस्मिन्निन्द्रः प्रदिवि वावृधान ओको दधे ब्रह्मण्यन्तश्च नरः ॥ १ ॥

अपायि । अस्य । अन्धसः । मदाय । मनीषिणः । सुवानस्य । प्रयसः ।
यस्मिन् । इन्द्रः । प्रऽदिवि । ववृधानः । ओकः । दधे । ब्रह्मण्यन्तः । च । नरः ॥ १ ॥

**वेङ्कट०** अस्य अद्यमानस्य मदार्थं मेधाविनः प्रसूयमानस्य अन्नस्य[3] अंशः अपायि, यस्मिन् इन्द्रः पुराणे प्रदीप्यमाने वा वर्धमानः स्थानं धारयति, स्तोत्रमिच्छन्तः मनुष्याः च इति ॥ १ ॥

अस्य मन्दानो मध्वो वज्रहस्तोऽहिमिन्द्रो अर्णोवृतं वि वृश्चत् ।
प्र यद् वयो न स्वसराण्यच्छा प्रयांसि च नदीनां चक्रमन्त ॥ २ ॥

अस्य । मन्दानः । मध्वः । वज्रऽहस्तः । अहिम् । इन्द्रः । अर्णःऽवृतम् । वि । वृश्चत् ।
प्र । यत् । वयः । न । स्वसराणि । अच्छ । प्रयांसि । च । नदीनाम् । चक्रमन्त ॥ २ ॥

**वेङ्कट०** अस्य मधुसदृशस्य सोमस्य तृप्यन् वज्रहस्तः इन्द्रः उदकस्य वारकम् अहिम् वि वृश्चत्। यदा पक्षिणः इव स्वावस्थानानि प्रति नदीनाम् वेगाः[4] च प्र चक्रमन्त गन्तुमुपचक्रमिरे। अहिं च हतवान्, तदानीमेव नदीश्च प्रावर्तयदित्यर्थः ॥ २ ॥

---

१. शत्रुम् वि[2] अ[1]. २-२. नास्ति मूको. ३ अन्नस्य मूको. ४. वेगं वेगान् वि[2]; वेगाद् वेगान् अ[1]; वेगा वि[1] लपं; वेगान् ल.

स माहिन इन्द्रो अर्णो अपां प्रैरयदहिहाच्छा समुद्रम् ।
अजनयत् सूर्यं विदद् गा अक्तुनाह्नां वयुनानि साधत् ॥ ३ ॥

सः । माहिनः । इन्द्रः । अर्णः । अपाम् । प्र । ऐरयत् । अहिऽहा । अच्छ । समुद्रम् ।
अजनयत् । सूर्यम् । विदत् । गाः । अक्तुना । अह्नाम् । वयुनानि । साधत् ॥ ३ ॥

**वेङ्कट०** सः महान् इन्द्रः अपाम् स्रोतः समुद्रम् प्रति प्र ऐरयत् अहेर्हन्ता । सूर्यम् च अजनयत्, असुरैर्हृताः गाः च अविन्दत्[1], अञ्जनसाधनेन तेजसा अह्नाम् प्रज्ञानानि साधयति ॥ ३ ॥

सो अप्रतीनि मनवे पुरूणीन्द्रो दाशद् दाशुषे हन्ति वृत्रम् ।
सद्यो यो नृभ्यो अतसाय्यो भूत् पस्पृधानेभ्यः सूर्यस्य सातौ ॥ ४ ॥

सः । अप्रतीनि । मनवे । पुरूणि । इन्द्रः । दाशत् । दाशुषे । हन्ति । वृत्रम् ।
सद्यः । यः । नृऽभ्यः । अतसाय्यः । भूत् । पस्पृधानेभ्यः । सूर्यस्य । सातौ ॥ ४ ॥

**वेङ्कट०** सः इन्द्रो मनुष्याय यजमानाय असदृशानि पुरूणि धनानि प्रयच्छति, हन्ति च वृत्रम्, सद्यः एव यः मनुष्येभ्यः समाश्रयणीयः अभूत् स्पर्धमानेभ्यः [2]सूर्यस्य सौवश्व्यशत्रोः[2] युद्धे सम्भजन इति । 'प्रैतशं सूर्ये पस्पृधानम्' ( ऋ १,६१,१५ ) इत्युक्तमिति च[3] ॥ ४ ॥

स सुन्वत इन्द्रः सूर्यमा देवो रिणङ्मर्त्याय स्तवान् ।
आ यद् रयिं गुहदवद्यमस्मै भरदंशं नैतशो दशस्यन् ॥ ५ ॥

सः । सुन्वते । इन्द्रः । सूर्यम् । आ । देवः । रिणक् । मर्त्याय । स्तवान् ।
आ । यत् । रयिम् । गुहत्ऽअवद्यम् । अस्मै । भरत् । अंशम् । न । एतशः । दशस्यन् ॥ ५ ॥

**वेङ्कट०** सः इन्द्रः सुन्वते एतशाय सूर्यम् नाम शत्रुम् आ रिणक् जघान स्तूयमानः यदा [4]आ भरत्[4] धनं हविराख्यं[5] निरवद्यम् अस्मै इन्द्राय पिता पुत्राय अंशम् इव प्रयच्छन् एतशनामा[6] ऋषिः ॥ ५ ॥

[7]इति द्वितीयाष्टके षष्ठाध्याये त्रयोविंशो वर्गः[7] ॥

स रन्धयत् सदिवः सारथये शुष्णमशुषं कुयवं कुत्साय ।
दिवोदासाय नवतिं च नवेन्द्रः पुरो व्यैरच्छम्बरस्य ॥ ६ ॥

---

१. अविन्दम् वि[1] लपं. २-२. सौवश्व्य सूर्यस्य शत्रोः वि[1]; सौपश्व सूर्यस्य शत्रोः अ[1]; सौवश्च सूर्यस्य शत्रोः वि[3]; सौपश्च सूर्यस्य शत्रोः लपं. ३. नास्ति वि[1]. ४-४. अभरत् मूको. ५. सुवि° वि[3]; स्थवि° अ[1]. ६. एतना° वि[3]. ७-७. नास्ति मूको.

सः । रन्धयत् । सऽदिवः । सारथये । शुष्णम् । अशुषम् । कुयवम् । कुत्साय ।
दिवःऽदासाय । नवतिम् । च । नव । इन्द्रः । पुरः । वि । ऐरत् । शम्बरस्य ॥ ६ ॥

**वेङ्कट०** सः वशमनयत् दीप्तिसहितः एकं रथम् आस्थाय सारथ्यं कुर्वते शुष्णम् असुरम् शोषयितुम् अशक्यं कुयवम् च कुत्साय ऋषये। दिवोदासाय राज्ञे नवतिम् नव च इन्द्रः पुरः शम्बरस्य स्वभूताः वि ऐरयत् इति ॥ ६ ॥

**एवा त इन्द्रोचथमहेम श्रवस्या न त्मना वाजयन्तः ।**
**अश्याम तत् साप्तमाशुषाणा ननमो वधरदेवस्य पीयोः ॥ ७ ॥**

एव । ते । इन्द्र । उचथम् । अहेम । श्रवस्या । न । त्मना । वाजयन्तः ।
अश्याम । तत् । साप्तम् । आशुषाणाः । ननमः । वधः । अदेवस्य । पीयोः ॥ ७ ॥

**वेङ्कट०** एवं तव इन्द्र! स्तोत्रं प्रेरितवन्तः, यथा अन्नेच्छयोदारं दरिद्रा वाग्भिः स्तुवन्ति। एवं स्वयमेव स्तुवन्तः प्राप्नवाम[1] तत् सप्तपरिमाणं रत्नजातं शत्रुस्थं त्वां स्तुतिभिः व्याप्नुवन्तः। तदर्थम् असुरस्य [2]हिंसितुः वधार्थम् आत्मीयं वज्रं नमयेति[2] ॥ ७ ॥

**एवा ते गृत्समदाः शूर मन्मावस्यवो न वयुनानि तक्षुः ।**
**ब्रह्मण्यन्त इन्द्र ते नवीय इषमूर्जं सुक्षितिं सुम्नमश्युः ॥ ८ ॥**

एव । ते । गृत्सऽमदाः । शूर । मन्म । अवस्यवः । न । वयुनानि । तक्षुः ।
ब्रह्मण्यन्तः । इन्द्र । ते । नवीयः । इषम् । ऊर्जम् । सुऽक्षितिम् । सुम्नम् । अश्युः ॥ ८ ॥

**वेङ्कट०** [2]एवम् ते गृत्समदाः[2] हे शूर! स्तोत्राणि स्तुतवन्तः जिगमिषवः इव मार्गान् नवतरं ब्रह्म तुभ्यम् इच्छन्तः अन्नं रसं शोभननिवासं[3] गृहं सुखं च प्राप्नुयुः ॥ ८ ॥

**नूनं सा ते प्रति वरं जरित्रे दुहीयदिन्द्र दक्षिणा मघोनी ।**
**शिक्षा स्तोतृभ्यो माति धग्भगो नो बृहद् वदेम विदथे सुवीराः ॥ ९ ॥**

नूनम् । सा । ते । प्रति । वरम् । जरित्रे । दुहीयत् । इन्द्र । दक्षिणा । मघोनी ।
शिक्ष । स्तोतृऽभ्यः । मा । अति । धक् । भगः । नः । बृहत् । वदेम । विदथे । सुवीराः ॥९॥

**वेङ्कट०** पूर्वम् ( ऋ २, ११,२१ ) व्याख्याता ॥ ९ ॥

[4]इति द्वितीयाष्टके षष्ठाध्याये चतुर्विंशो वर्गः[4] ॥

---

१. प्राप्नुवा(?या)म वि[२] अ[१]. २-२. त्रुटितम् वि[२] अ[१]. ३. °वनं नि° वि[१,२] ल लर्प.
४-४. नास्ति मूको.

[ २० ]

[1]गृत्समदो भार्गवः शौनकः ( पूर्वम् आङ्गिरसः शौनहोत्रः ) ऋषिः।
इन्द्रो देवता। त्रिष्टुप् छन्दः, तृतीया विराड्रूपा[1]।

वयं ते वय इन्द्र विद्धि षु णः प्र भरामहे वाजयुर्न रथम्।
विपन्यवो दीध्यतो मनीषा सुम्नमियक्षन्तस्त्वावतो नॄन्॥ १॥

वयम्। ते। वयः। इन्द्र। विद्धि। सु। नः। प्र। भरामहे। वाजऽयुः। न। रथम्।
विपन्यवः। दीध्यतः। मनीषा। सुम्नम्। इयक्षन्तः। त्वाऽवतः। नॄन्॥ १॥

**वेङ्कट०** वयम् तुभ्यम् [2]इन्द्र! अन्नं[2] प्रेरयामः। अस्मान्[3] सुष्ठु बुध्यस्व। प्र भरस्व रथम् अन्नम् इच्छन् इव महते कर्मणे। स्तोतारः स्तुत्या दीप्यमानाः सुखं प्राप्तुम् इच्छन्तः त्वत्सदृशान् नेतॄन् अभिगच्छन्तीति॥ १॥

त्वं न इन्द्र त्वाभिरूती त्वायतो अभिष्टिपासि जनान्।
त्वमिनो दाशुषो वरूतेत्थाधीरभि यो नक्षति त्वा॥ २॥

त्वम्। नः। इन्द्र। त्वाभिः। ऊती। त्वाऽयतः। अभिष्टिऽपा। असि। जनान्।
त्वम्। इनः। दाशुषः। वरूता। इत्थाऽधीः। अभि। यः। नक्षति। त्वा॥ २॥

**वेङ्कट०** त्वम्[4] इन्द्र! त्वदीयाभिः ऊतिभिः त्वत्कामान् अभीष्टानां रक्षिता अस्मान् अपि रक्ष जनान्। त्वम् स्वामी दाशुषः सम्भक्ता, यः त्वाम् एवंविधकर्मा अभि व्याप्नोति॥ २॥

स नो युवेन्द्रो जोहूत्रः सखा शिवो नरामस्तु पाता।
यः शंसन्तं यः शशमानमूती पचन्तं च स्तुवन्तं च प्रणेषत्॥ ३॥

सः। नः। युवा। इन्द्रः। जोहूत्रः। सखा। शिवः। नराम्। अस्तु। पाता।
यः। शंसन्तम्। यः। शशमानम्। ऊती। पचन्तम्। च। स्तुवन्तम्। च। प्रऽनेषत्॥ ३॥

**वेङ्कट०** सः इन्द्रः युवा अस्माकम् आह्वातव्यः कल्याणः सखा नेतॄणाम् अस्तु रक्षकः। यः शंसन्तम् मार्गेण प्रणयति, शशातिः उद्योगकर्मा, आत्मार्थम् उद्युक्तमेव पचन्तम् स्तुवन्तम् च॥ ३॥

तमु स्तुष इन्द्रं तं गृणीषे यस्मिन् पुरा वावृधुः शाशदुश्च।
स वस्वः कामं पीपरदियानो ब्रह्मण्यतो नूतनस्यायोः॥ ४॥

---

१-१. नास्ति मूको. २-२. प्राणमन्नं वि[1]. ३. अस्मात् वि[1]. ४. त्वम् अस्मान् मूको.

तम् । ऊँ इति । स्तुषे । इन्द्रम् । तम् । गृणीषे । यस्मिन् । पुरा । वावृधुः । शाशदुः । च ।
सः । वस्वः । कामम् । पीपरत् । इयानः । ब्रह्मण्यतः । नूतनस्य । आयोः ॥ ४ ॥

**वेङ्कट०** तम् एव स्तौमि इन्द्रम्, तम् एव च[1] शंसामि, यस्मिन् पुरा स्तोतारो वावृधुः[2] शाशदुः च शत्रून्। [3]सः गच्छन् याच्यमानो[3] वा[4] धनेन कामम् पूरयतु स्तुतिम् इच्छतः सम्प्रतितनस्य मनुष्यस्य गृत्समदस्य ॥ ४ ॥

सो अङ्गिरसामुचथा जुजुष्वान् ब्रह्मा तूतोदिन्द्रो गातुमिष्णन् ।
मुष्णन्नुषसः सूर्येण स्तवानश्नस्य चिच्छिश्नथत् पूर्व्याणि ॥ ५ ॥

सः । अङ्गिरसाम् । उचथा । जुजुष्वान् । ब्रह्म । तूतोत् । इन्द्रः । गातुम् । इष्णन् ।
मुष्णन् । उषसः । सूर्येण । स्तवान् । अश्नस्य । चित् । शिश्नथत् । पूर्व्याणि ॥ ५ ॥

**वेङ्कट०** सः इन्द्रः अङ्गिरसाम् स्तोत्राणि सेवमानः आदित्यं प्रेरयति गमनम् इच्छन्। सूर्येण उद्यता उषसः विनाशयन् स्तूयमानः मेघस्य अपि श्लथयति[5] पूर्वकालप्रादुर्भूतानि शरीराणि ॥ ॥ ५ ॥

[6]इति द्वितीयाष्टके षष्ठाध्याये पञ्चविंशो वर्गः[6] ॥

स ह श्रुत इन्द्रो नाम देव ऊर्ध्वो भुवन्मनुषे दस्मतमः ।
अव प्रियमर्शसानस्य साह्वाञ्छिरो भरद् दासस्य स्वधावान् ॥ ६ ॥

सः । ह । श्रुतः । इन्द्रः । नाम । देवः । ऊर्ध्वः । भुवत् । मनुषे । दस्मऽतमः ।
अव । प्रियम् । अर्शसानस्य । सह्वान् । शिरः । भरत् । दासस्य । स्वधाऽवान् ॥ ६ ॥

**वेङ्कट०** सः विश्रुतः इन्द्रः नाम देवः प्रातः ऊर्ध्वः भवति मनुष्याणां दर्शनीयतमः । सोऽयं प्रजा बाधमानस्य वृत्रासुरस्य प्रियम् शिरः अवाभरत्[7] सहनशीलः अन्नवान् इति ॥ ६ ॥

स वृत्रहेन्द्रः कृष्णयोनीः पुरंदरो दासीरैरयद् वि ।
अजनयन् मनवे क्षामपश्च सत्रा शंसं यजमानस्य तूतोत् ॥ ७ ॥

सः । वृत्रऽहा । इन्द्रः । कृष्णऽयोनीः । पुरम्ऽदरः । दासीः । ऐरयत् । वि ।
अजनयत् । मनवे । क्षाम् । अपः । च । सत्रा । शंसम् । यजमानस्य । तूतोत् ॥ ७ ॥

**वेङ्कट०** [6]सः वृत्रहा इन्द्रः[6] कृष्णासुरो यासां योनिषु ताः असुरस्त्रीः पुरंदरः वज्रेण वि ऐरयत् 'यः कृष्णगर्भा निरहन्' ( ऋ १,१०१,१ ) इत्युक्तमिति । तथा मनवे उदकं क्षेत्रम् च अजनयत् । सत्यम् एव यजमानस्य अभिलषितं प्रेरयति ॥ ७ ॥

---

१. नास्ति लपं. २. वव्° वि[1] लपं. ३-३. सङ्गच्छन् याचमानो मूको. ४. नास्ति वि[1]. ५. श्नथयिति वि[1]. ६-६. नास्ति मूको. ७. अपा° वि[1]; °भवत् लपं.

तस्मै तवस्य१मनु दायि सत्रेन्द्राय देवेभिरर्णसातौ ।
प्रति यदस्य वज्रं बाह्वोर्धुर्हत्वी दस्यून् पुर आयसीर्नि तारीत् ॥ ८ ॥

तस्मै । तवस्यम् । अनु । दायि । सत्रा । इन्द्राय । देवेभिः । अर्णऽसातौ ।
प्रति । यत् । अस्य । वज्रम् । बाह्वोः । धुः । हत्वी । दस्यून् । पुरः । आयसीः । नि । तारीत् ॥८॥

वेङ्कट० उदकं यस्मिँल्लभ्यते सङ्ग्रामे तत्र अस्य बलवत्तां दृष्ट्वा तस्मै[1] इन्द्राय बलवद्भिः देवैः सत्यमेव करप्रदानं कृतम् । 'अनु ते दायि मह इन्द्रियाय' (ऋ ६,२५,८) इति मन्त्रः । स्तोत्रेण यदा अस्य वज्रम् बाह्वोः निदधुः देवाः तदा दस्यून् हत्वा शत्रूणाम् अयसा निर्मिताः पुरीः नि तारीत् इति ॥८॥

नूनं सा ते प्रति वरं जरित्रे दुहीयदिन्द्र दक्षिणा मघोनी ।
शिक्षा स्तोतृभ्यो माति धग्भगो नो बृहद् वदेम विदथे सुवीराः ॥ ९ ॥

नूनम् । सा । ते । प्रति । वरम् । जरित्रे । दुहीयत् । इन्द्र । दक्षिणा । मघोनी ।
शिक्ष । स्तोतृऽभ्यः । मा । अति । धक् । भगः । नः । बृहत् । वदेम । विदथे । सुवीराः ॥९॥

वेङ्कट० पूर्वम् ( ऋ २,११,२१ ) व्याख्याता ॥ ९ ॥

[2]इति द्वितीयाष्टके षष्ठाध्याये षड्विंशो वर्गः[2] ॥

## [ २१ ]

[2]गृत्समदो भार्गवः शौनकः ( पूर्वम् आङ्गिरसः शौनहोत्रः ) ऋषिः ।
इन्द्रो देवता । जगती छन्दः, षष्ठी त्रिष्टुप्[2] ।

विश्वजिते धनजिते स्वर्जिते सत्राजिते नृजित उर्वराजिते ।
अश्वजिते गोजिते अब्जिते भरेन्द्राय सोमं यजताय हर्यतम् ॥ १ ॥

विश्वऽजिते । धनऽजिते । स्वःऽजिते । सत्राऽजिते । नृऽजिते । उर्वराऽजिते ।
अश्वऽजिते । गोऽजिते । अप्ऽजिते । भर । इन्द्राय । सोमम् । यजताय । हर्यतम् ॥ १ ॥

वेङ्कट० 'विश्वजिते' इत्यस्य प्रपञ्चः शेषः । स्वः[1] स्वर्गः । सत्राशब्दो महच्छब्दपर्यायः, महदपि जयति धनम् इति । हर्यतम् स्पृहणीयम् इति ॥ १ ॥

अभिभुवेऽभिभङ्गाय वन्वतेऽषाळ्हाय सहमानाय वेधसे ।
तुविग्रये वह्नये दुष्टरीतवे सत्रासाहे नम इन्द्राय वोचत ॥ २ ॥

---

१. नास्ति वि[1] लपं. २-२. नास्ति मूको.

अभिऽभुवे । अभिऽभञ्जाय । वन्वते । अषाळ्हाय । सहमानाय । वेधसे ।
तुविऽग्रये । वह्नये । दुस्तरीतवे । सत्राऽसहे । नमः । इन्द्राय । वोचत ॥ २ ॥

**वेङ्कट०** शत्रूणामभिभवित्रे पुरामभिभञ्जकाय[१] वननं शत्रूणां कुर्वते[२] शत्रुभिरसोढाय[३] तान् सहमानाय [४]सर्वस्य विधात्रे[४] बहुस्तुतये वोढ्रे शत्रुभिः दुस्तराय बहूनाम् अभिभवित्रे इन्द्राय[५] नमस्कारं ब्रूत ॥ २ ॥

सत्रासाहो जनभक्षो जनंसहश्च्यवनो युध्मो अनु जोषमुक्षितः ।
वृतंचयः सहुरिर्विक्ष्वारित इन्द्रस्य वोचं प्र कृतानि वीर्या ॥ ३ ॥

सत्राऽसहः । जनऽभक्षः । जनम्ऽसहः । च्यवनः । युध्मः । अनु । जोषम् । उक्षितः ।
वृतम्ऽचयः । सहुरिः । विक्षु । आरितः । इन्द्रस्य । वोचम् । प्र । कृतानि । वीर्या ॥ ३ ॥

**वेङ्कट०** बहूनामभिभविता जनानां सम्भक्ता अभिभविता परेषाम्[६] । च्यावयिता च[७] योद्धा सेवानन्तरं सोमेन सिक्तः । परिवृतस्य बलस्य चाययिता सहनशीलः शत्रुषु तदायुधैः[८] सआतारः । तस्य इन्द्रस्य [९]प्र ब्रवीमि[९] कृतानि वीर्याणि ॥ ३ ॥

अनानुदो वृषभो दोधतो वधो गम्भीर ऋष्वो असमष्टकाव्यः ।
रध्रचोदः श्नथनो वीळितस्पृथुरिन्द्रः सुयज्ञ उषसः स्वर्जनत् ॥ ४ ॥

अनानुऽदः । वृषभः । दोधतः । वधः । गम्भीरः । ऋष्वः । असमष्टऽकाव्यः ।
रध्रऽचोदः । श्नथनः । वीळितः । पृथुः । इन्द्रः । सुऽयज्ञः । उषसः । स्वः । जनत् ॥ ४ ॥

**वेङ्कट०** अनुदानवर्जितोऽनपेक्षितबलप्रदानः वर्षिता कामानां कम्पयतः हन्ता, [१०]ग्रहणवान् महान्[१०] असमाप्तस्तोत्रः, रध्राः[११] असुराः[११] रन्ध्रं कुर्वन्ति शरीरे इति, असुराणां प्रेरकः, श्नथयिता[१२] सेनासङ्घस्य, दृढीकृतः पृथुः इन्द्रः शोभनयज्ञः[१४] उषसः स्वः आदित्यं च जनयति ॥ ४ ॥

यज्ञेन गातुमप्तुरो विविद्रिरे धियो हिन्वाना उशिजो मनीषिणः ।
अभिस्वरा निषदा गा अवस्यव इन्द्रे हिन्वाना द्रविणान्याशत ॥ ५ ॥

यज्ञेन । गातुम् । अप्ऽतुरः । विविद्रिरे । धियः । हिन्वानाः । उशिजः । मनीषिणः ।
अभिऽस्वरा । निऽसदा । गाः । अवस्यवः । इन्द्रे । हिन्वानाः । द्रविणानि । आशत ॥ ५ ॥

---

१. पुराणाम° त्रि[२] अ[१]. २. नास्ति वि[१,२] लपं. ३. °रभिसो° मूको. ४-४. सर्वस्ववि° वि[१] अ[१]. ५. नास्ति मूको. ६. च तेषाम् वि[१] अ[१]. ७. नास्ति लपं. ८. तथायु° अ[१]. ९-९. ब्रवी° वि[१] लपं. १०-१०. नास्ति लपं. ११. रन्ध्रः मूको. १२. नास्ति वि[१,२] अ[१] लपं. १३. श्लथवितां (?ता) लपं. १४. °नप्रज्ञः ल लपं.

**वेङ्कट०** यज्ञेन अपां प्रेरयितुः इन्द्रस्य गमनं लब्धवन्तः कर्माणि प्रेरयन्तः[1] ऋत्विजः मेधाविनः अभिगमनेन निषदनेन च अस्मिन् इन्द्रे वाचः हिन्वानाः रक्षणेच्छवो मर्त्याः धनानि प्राप्नुवन्ति ॥ ५ ॥

इन्द्र श्रेष्ठानि द्रविणानि धेहि चित्तिं दक्षस्य सुभगत्वमस्मे ।
पोषं रयीणामरिष्टिं तनूनां स्वाद्मानं वाचः सुदिनत्वमह्नाम् ॥ ६ ॥

इन्द्र । श्रेष्ठानि । द्रविणानि । धेहि । चित्तिम् । दक्षस्य । सुभगऽत्वम् । अस्मे इति ।
पोषम् । रयीणाम् । अरिष्टिम् । तनूनाम् । स्वाद्मानम् । वाचः । सुदिनऽत्वम् । अह्नाम् ॥ ६ ॥

**वेङ्कट०** हे इन्द्र! त्वं प्रशस्यतराणि धनानि प्रयच्छ । तथा प्राणस्य विज्ञानं प्रयच्छ । अस्माकं शरीरसौभाग्यं[2] देहि । [3]धनानाम् पोषम् देहि[3], तथा अङ्गानाम् अविनाशम्, वाचः मधुमत्त्वम्, अह्नाम् सुदिनत्वम् इति ॥ ६ ॥

[4]इति द्वितीयाष्टके षष्ठाध्याये सप्तविंशो वर्गः[4] ॥

## [ २२ ]

[4]गृत्समदो भार्गवः शौनकः ( पूर्वम् आङ्गिरसः शौनहोत्रः ) ऋषिः । इन्द्रो देवता । प्रथमा अष्टिः, द्वितीयातृतीये अतिशक्वर्यौ, चतुर्थी अष्टिः अतिशक्वरी वा छन्दः[4] ।

त्रिकद्रुकेषु महिषो यवाशिरं तुविशुष्मस्तृपत् सोममपिबद् विष्णुना सुतं यथावशत् ।
स ईं ममाद महि कर्म कर्तवे महामुरुं सैनं सश्चद् देवो देवं सत्यमिन्द्रं सत्य इन्दुः ॥ १ ॥

त्रिऽकद्रुकेषु । महिषः । यवऽआशिरम् । तुविऽशुष्मः । तृपत् । सोमम् । अपिबत् । विष्णुना । सुतम् । यथा । अवशत् ॥ सः । ईम् । ममाद । महि । कर्म । कर्तवे । महाम् । उरुम् । सः । एनम् । सश्चत् । देवः । देवम् । सत्यम् । इन्द्रम् । सत्यः । इन्दुः ॥ १ ॥

**वेङ्कट०** त्रिकद्रुकेषु[5] यज्ञेषु महान् यवसक्तुश्रयणं बहुबलः तृप्यन् सोमम् अपिबत् विष्णुना सह सुतम् यथा कामयते । सः च एनं मदयति महत् कर्म कर्तुं वृत्रवधादिकं महान्तं विस्तीर्णम् । सः सोमः एनम् सेवते देवः देवम् सत्यकर्माणम्[6] इन्द्रम्[7] सत्यकर्मा इन्दुः[8] ॥ १ ॥

अध त्विषीमाँ अभ्योजसा क्रिविं युधाभवदा रोदसी अपृणदस्य मज्मना प्र वावृधे ।
अधत्तान्यं जठरे प्रेमरिच्यत सैनं सश्चद् देवो देवं सत्यमिन्द्रं सत्य इन्दुः ॥ २ ॥

---

१. प्रेरयन्ति वि[1] लपं. २. शरीरस्य सौ° वि[1,2] अ[1]. ३-३. नास्ति वि[2] अ[1]. ४-४. नास्ति मूको. ५. नास्ति लपं. ६. नास्ति वि[1] लपं. ७. इन्द्रः वि[1]. ८. इन्द्रः मूको.

अध । त्विषिऽमान् । अभि । ओजसा । क्रिविम् । युधा । अभवत् । आ । रोदसी इति ।
अपृणत् । अस्य । मज्मना । प्र । ववृधे ॥ अधत्त । अन्यम् । जठरे । प्र । ईम् । अरिच्यत ।
सः । एनम् । सश्चत् । देवः । देवम् । सत्यम् । इन्द्रम् । सत्यः । इन्दुः ॥ २ ॥

वेङ्कट० अथ दीप्तिमान् अभि अभवत् युद्धेन बलकृतेन, 'क्रिविः' ( निघ ३,२३ ) इति कूपनाम, तत्सदृशं यज्ञम् । अथ अस्य यज्ञस्य बलेन द्यावापृथिवी तेजसा आ अपूरयत्[1], स्वयं च प्रवृद्ध आसीत् । अथ अन्यम् सोमम् सः जठरे निदधे, प्र अरेचयच्च पानशिष्टम् ॥ २ ॥

साकं जातः क्रतुना साकमोजसा ववक्षिथ साकं वृद्धो वीर्यैः सासहिर्मृधो विचर्षणिः ।
दाता राधः स्तुवते काम्यं वसु सैनं सश्चद् देवो देवं सत्यमिन्द्रं सत्य इन्दुः ॥ ३ ॥

साकम् । जातः । क्रतुना । साकम् । ओजसा । ववक्षिथ । साकम् । वृद्धः । वीर्यैः । ससहिः ।
मृधः । विऽचर्षणिः ॥ दाता । राधः । स्तुवते । काम्यम् । वसु । सः । एनम् ।
सश्चत् । देवः । देवम् । सत्यम् । इन्द्रम् । सत्यः । इन्दुः ॥ ३ ॥

वेङ्कट० प्रज्ञानेन बलेन च सह जातः त्वं सर्वं जगद् वहसि सह वीर्यैः प्रवृद्धः सोढा शत्रून्[2] जगतो विद्रष्टा । दाता इति तृन् प्रत्ययः, दानशीलः । स्तुवते साधकम् अभिलषितं धनं दातेति ॥ ३ ॥

तव त्यन्नर्यं नृतोऽप इन्द्र प्रथमं पूर्व्यं दिवि प्रवाच्यं कृतम् ।
यद् देवस्य शवसा प्रारिणा असुं रिणन्नपः ।
भुवद् विश्वमभ्यादेवमोजसा विदादूर्जं शतक्रतुर्विदादिषम् ॥ ४ ॥

तव । त्यत् । नर्यम् । नृतो इति । अपः । इन्द्र । प्रथमम् । पूर्व्यम् । दिवि । प्रऽवाच्यम् । कृतम् ।
यत् । देवस्य । शवसा । प्र । अरिणाः । असुम् । रिणन् । अपः ।
भुवत् । विश्वम् । अभि । अदेवम् । ओजसा । विदात् । ऊर्जम् । शतऽक्रतुः । विदात् । इषम् ॥ ४ ॥

वेङ्कट० तव एतत् नर्यम् नेतः! कर्म पूर्वकालकृतम्[3] दिवि स्थितस्य मम प्रथमम् प्रवाच्यम् भवति । किं तत् कर्म । यत् त्वम् देवस्य तव बलेन प्र अगमयः असितारम् असुरं वृत्रम् उदकात् । निर्गमयन् । अभि भवतु सर्वम् असुरं बलेन शतक्रतुः लभतां[4] रसम् अन्नं च ॥ ४ ॥

[5]इति द्वितीयाष्टके षष्ठाध्यायेऽष्टाविंशो वर्गः[5] ॥

---

१. °यत् च वि[1]. २. शत्रुम् वि[2] अ[1]. ३. पूर्वक° वि[1] लपं. ४. °तां च वि[1,2] अ[1] लपं.
५-५. नास्ति मूको.

[ २३ ]

[1]गृत्समदो भार्गवः शौनकः ( पूर्वम् आङ्गिरसः शौनहोत्रः ) ऋषिः । प्रथमापञ्चमीनवम्ये-
कादशीसप्तदश्येकोनविंशीनां ब्रह्मणस्पतिर्देवता, अन्यासां बृहस्पतिः ।
जगती छन्दः, पञ्चदश्येकोनविंश्यौ त्रिष्टुभौ[1] ॥

गणानां त्वा गणपतिं हवामहे कविं कवीनामुपमश्रवस्तमम् ।
ज्येष्ठराजं ब्रह्मणां ब्रह्मणस्पत आ नः शृण्वन्नूतिभिः सीद सादनम् ॥ १ ॥

गणानाम् । त्वा । गणऽपतिम् । हवामहे । कविम् । कवीनाम् । उपमश्रवःऽतमम् ।
ज्येष्ठऽराजम् । ब्रह्मणाम् । ब्रह्मणः । पते । आ । नः । शृण्वन् । ऊतिऽभिः । सीद । सदनम् ॥ १ ॥

**वेङ्कट०** देवगणानां पतिं त्वाम्[2] हवामहे । कवीनाम् अपि कविम् । येषां श्रुतेन अन्यस्य श्रुतमुपमीयते ते उपमश्रवसः[3], तान् अपि अयम् अतिशेते । श्रेष्ठानाम् अपि राजानम् । हे मन्त्राणाम् पते! अस्माकम् इदं बर्हिः[4] स्तोत्रम् शृण्वन् रक्षणैः सह आ सीद ॥ १ ॥

देवाश्चित् ते असुर्य प्रचेतसो बृहस्पते यज्ञियं भागमानशुः ।
उस्राइव सूर्यो ज्योतिषा महो विश्वेषामिज्जनिता ब्रह्मणामसि ॥ २ ॥

देवाः । चित् । ते । असुर्य । प्रऽचेतसः । बृहस्पते । यज्ञियम् । भागम् । आनशुः ।
उस्राःऽइव । सूर्यः । ज्योतिषा । महः । विश्वेषाम् । इत् । जनिता । ब्रह्मणाम् । असि ॥ २ ॥

**वेङ्कट०** देवाः अपि तव प्रसादात् असुराणां हन्तः! प्रकृष्टज्ञानस्य बृहस्पते! यज्ञियम् भागम् प्राप्नुवन्ति । यस्मात् त्वं महान् सूर्यः इव ज्योतिषा प्रभाः[5] सर्वविधानां मन्त्राणां जनयिता भवसि असुरघ्नानामिति ॥ २ ॥

आ विबाध्या परिरापस्तमांसि च ज्योतिष्मन्तं रथमृतस्य तिष्ठसि ।
बृहस्पते भीमममित्रदम्भनं रक्षोहणं गोत्रभिदं स्वर्विदम् ॥ ३ ॥

आ । विऽबाध्य । परिऽरपः । तमांसि । च । ज्योतिष्मन्तम् । रथम् । ऋतस्य । तिष्ठसि ।
बृहस्पते । भीमम् । अमित्रऽदम्भनम् । रक्षःऽहनम् । गोत्रऽभिदम् । स्वःऽविदम् ॥ ३ ॥

**वेङ्कट०** आ तिष्ठसि परितो रक्षः तमांसि च विविधं बाधित्वा[6] ज्योतिष्मन्तम् रथम् यज्ञस्य गमनार्थम् बृहस्पते! भीमम् अमित्रदम्भनम् रक्षसां हन्तारं मेघभिदम् उदकस्य लम्भयितारम् ॥ ३ ॥

---

१-१. नास्ति मूको. २. त्वा अ[1]. ३. नास्ति वि[1]. ४. बर्हि वि[1] लपं; बहि अ[1]; बर्हिः वि[2]; नास्ति ल. ५. प्रभा वि[1,2] क लपं; प्रभया अ[1]. ६. बाधयित्वा वि[1] लपं.

सुनीतिभिर्नयसि त्रायसे जनं यस्तुभ्यं दाशान्न तमंहो अश्नवत् ।
ब्रह्मद्विषस्तपनो मन्युमीरसि बृहस्पते महि तत् ते महित्वनम् ॥ ४ ॥

सुनीतिऽभिः । नयसि । त्रायसे । जनम् । यः । तुभ्यम् । दाशात् । न । तम् । अंहः । अश्नवत् ।
ब्रह्मऽद्विषः । तपनः । मन्युऽमीः । असि । बृहस्पते । महि । तत् । ते । महिऽत्वनम् ॥ ४ ॥

**वेङ्कट०** तं जनम् शोभननयनैः नयसि रक्षसि च, यः तुभ्यम् हविः प्रयच्छति । न च तं होतारं[1] व्याप्नोति दारिद्र्यम् । ब्रह्मद्विषः असुरस्य तापयिता तं[2] [3]प्रति मन्योश्च[3] कर्ता भवसि । बृहस्पते ! [4]महत् तत्[4] ते महत्त्वम् ॥ ४ ॥

न तमंहो न दुरितं कुतश्चन नारातयस्तितिरुर्न द्वयाविनः ।
विश्वा इदस्माद् ध्वरसो वि बाधसे यं सुगोपा रक्षसि ब्रह्मणस्पते ॥ ५ ॥

न । तम् । अंहः । न । दुःऽइतम् । कुतः । चन । न । अरातयः । तितिरुः । न । द्वयाविनः ।
विश्वाः । इत् । अस्मात् । ध्वरसः । वि । बाधसे । यम् । सुऽगोपाः । रक्षसि । ब्रह्मणः । पते ॥५॥

**वेङ्कट०** न तम् अंहः अश्नोति, नापि दुरितम् अस्य कुतः चिदागच्छति । न च एनं शत्रवः तरन्ति, नापि द्वयाविनः सत्यानृतयुक्ताः । तथा त्वम् अस्मात् सर्वाः एव हिंसाः वि[5] बाधसे, यम् [6]ब्रह्मणः पते ![6] त्वम् सुगोपाः रक्षसि ॥ ५ ॥

[6]इति द्वितीयाष्टके षष्ठाध्याये एकोनत्रिंशो वर्गः[6] ॥

त्वं नो गोपाः पथिकृद् विचक्षणस्तव व्रताय मतिभिर्जरामहे ।
बृहस्पते यो नो अभि ह्वरो दधे स्वा तं मर्मर्तु दुच्छुना हरस्वती ॥ ६ ॥

त्वम् । नः । गोपाः । पथिऽकृत् । विऽचक्षणः । तव । व्रताय । मतिऽभिः । जरामहे ।
बृहस्पते । यः । नः । अभि । ह्वरः । दधे । स्वा । तम् । मर्मर्तु । दुच्छुना । हरस्वती ॥ ६ ॥

**वेङ्कट०** त्वम् नः गोपायिता मार्गकृत् प्राज्ञः । तव यज्ञार्थं वयं स्तुतिभिः स्तुमः । बृहस्पते ! यः अस्माकं हिंसाम् अभि दधाति, स्वा एव तम् मारयतु अबुद्धिः हिंसायुक्ता[7] । तेजोविशेषं हरः, येनान्यं हरति ॥ ६ ॥

---

१. त्रुटितम् वि[२] अ[१]. २. नास्ति वि[२] अ[१] ल लपं. ३-३. प्रतिमन्यो° वि[२] अ[१] ल लपं. ४-४. नास्ति वि[२] लपं. ५. अपि वि[२] अ[१]. ६-६. नास्ति मूको. ७. °सासंयु° वि[२] अ[१].

उत वा यो नो मर्चयादनागसोऽरातीवा मर्तः सानुको वृकः ।
बृहस्पते अप तं वर्तया पथः सुगं नो अस्यै देववीतये कृधि ॥ ७ ॥

उत । वा । यः । नः । मर्चयात् । अनागसः । अरातिऽवा । मर्तः । सानुकः । वृकः ।
बृहस्पते । अप । तम् । वर्तय । पथः । सुऽगम् । नः । अस्यै । देवऽवीतये । कृधि ॥ ७ ॥

वेङ्कट० अपि च यः अस्मानसिना[1] छिन्द्यात् अनागसः अरातित्वम् आचरन् मनुष्यः समुच्छ्रितः[2] वृकः, बृहस्पते![3] तम् अस्माकम् मार्गात् अप वर्तय। शोभनगमनं मार्गम् अस्माकम् अस्यै इष्टये[4] कुर्विति ॥७॥

त्रातारं त्वा तनूनां हवामहेऽवस्पर्तरधिवक्तारमस्मयुम् ।
बृहस्पते देवनिदो नि बर्हय मा दुरेवा उत्तरं सुम्नमुन्नशन् ॥ ८ ॥

त्रातारम् । त्वा । तनूनाम् । हवामहे । अवऽस्पर्तः । अधिऽवक्तारम् । अस्मऽयुम् ।
बृहस्पते । देवऽनिदः । नि । बर्हय । मा । दुःऽएवाः । उत्ऽतरम् । सुम्नम् । उत् । नशन् ॥ ८ ॥

वेङ्कट० रक्षितारं त्वाम् अङ्गानाम् हवामहे अवहिंसितः! अस्माकम् अधिवक्तारम् अस्मत्कामम् । बृहस्पते! देवनिन्दकान् नि बर्हय। मा दुर्गमाः नितरां सुखम् उत् नशन् [5]अद्य आप्नुवन्तु[5], दुरारोहमिति ॥ ८ ॥

त्वया वयं सुवृधा ब्रह्मणस्पते स्पार्हा वसु मनुष्या ददीमहि ।
या नो दूरे तळितो या अरातयोऽभि सन्ति जम्भया ता अनप्नसः ॥ ९ ॥

त्वया । वयम् । सुऽवृधा । ब्रह्मणः । पते । स्पार्हा । वसु । मनुष्या । आ । ददीमहि ।
याः । नः । दूरे । तळितः । याः । अरातयः । अभि । सन्ति । जम्भय । ताः । अनप्नसः ॥ ९ ॥

वेङ्कट० त्वया वयम् सुवर्धयित्रा[6] ब्रह्मणः पते! स्पृहणीयानि धनानि मनुष्येभ्यः[7] आ ददीमहि। याः च नः दूरे अरातयः शत्रुसेनाः याः च तळितः अन्तिकस्थाः अभि सन्ति। विनाशय ताः[8]। 'अप्न इति 'रूपनाम' इति यास्कः ( ३, ११ )। अरूपाः[9] अकर्मणो वेति द्रष्टव्यम् इति। हिंसका वा तळितः ताडयन्ति इति ॥ ९ ॥

त्वया वयमुत्तमं धीमहे वयो बृहस्पते पप्रिणा सस्निना युजा ।
मा नो दुःशंसो अभिदिप्सुरीशत प्र सुशंसा मतिभिस्तारिषीमहि ॥ १० ॥

---

१. °सिता वि[2] ल; °सिच् लपं. २. °तः वा वि[2] अ[1]. ३. नास्ति मूको. ४. इष्टे वि[1]; इष्टेः वि[1] अ[1] ल लपं. ५-५. उद्‌याप्नु° अ[1]. ६. °यिता मूको. ७. °भ्यो मे वि[1] लपं. ८. तान् मूको. ९-९. °नामारूपाः इति यास्कः वि[1] अ[1] लपं; नास्ति वि[1].

त्वया । वयम् । उत्ऽतमम् । धीमहे । वयः । बृहस्पते । पप्रिणा । सस्निना । युजा ।
मा । नः । दुःऽशंसः । अभिऽदिप्सुः । ईशत । प्र । सुऽशंसाः । मतिऽभिः । तारिषीमहि ॥१०॥

वेङ्कट० त्वया वयम् उत्तमम् अन्नं धारयेमहि बृहस्पते! पूरयित्रा शुद्धेन सहायेन। मा अस्माकम् स्तेनः अभिदम्भितुम् इच्छन् ईशिष्ट। तम्(?) प्र तारिषीमहि वयं स्तुतिभिः सुशंसनाः इति ॥ १० ॥

[1]इति द्वितीयाष्टके षष्ठाध्याये त्रिंशो वर्गः[1] ॥

अनानुदो वृषभो जग्मिराहवं निष्टप्ता शत्रुं पृतनासु सासहिः ।
असि सत्य ऋणया ब्रह्मणस्पत उग्रस्य चिद् दमिता वीळुहर्षिणः ॥ ११ ॥

अननुऽदः । वृषभः । जग्मिः । आऽहवम् । निःऽतप्ता । शत्रुम् । पृतनासु । ससहिः ।
असि । सत्यः । ऋणऽयाः । ब्रह्मणः । पते । उग्रस्य । चित् । दमिता । वीळुऽहर्षिणः ॥ ११ ॥

वेङ्कट० सकृदेव दाता[2] कामानां वर्षिता युद्धं गन्ता शत्रोः तापयिता युद्धेषु सहनशीलो भवसि सत्यकर्मा ऋणानां च यापयिता, कामानां प्रदातेत्यर्थः। उग्रस्य अपि दमयिता दृढान् अपि हर्षयतो[3] भयेन हृष्टतनूरुहान् कुर्वतः ॥ ११ ॥

अदेवेन मनसा यो रिषण्यति शासामुग्रो मन्यमानो जिघांसति ।
बृहस्पते मा प्रणक् तस्य नो वधो नि कर्म मन्युं दुरेवस्य शर्धतः ॥ १२ ॥

अदेवेन । मनसा । यः । रिषण्यति । शासाम् । उग्रः । मन्यमानः । जिघांसति ।
बृहस्पते । मा । प्रणक् । तस्य । नः । वधः । नि । कर्म । मन्युम् । दुःऽएवस्य । शर्धतः ॥१२॥

वेङ्कट० असम्प्रमाणेन मनसा यः अस्मान् बाधते, शासनं च अस्मदीयम् उद्गूर्णः क्रुध्यन् जिघांसति, बृहस्पते! अस्य आयुधम् मा अस्मान् हिनस्तु। नि कुर्मः[4] मन्युम् दुष्टस्य आगच्छतः वेगं कुर्वतः ॥१२॥

भरेषु हव्यो नमसोपसद्यो गन्ता वाजेषु सनिता धनंधनम् ।
विश्वा इदर्यो अभिदिप्स्वो३ मृधो बृहस्पतिर्वि ववर्हा रथाँइव ॥ १३ ॥

भरेषु । हव्यः । नमसा । उपऽसद्यः । गन्ता । वाजेषु । सनिता । धनम्ऽधनम् ।
विश्वाः । इत् । अर्यः । अभिऽदिप्स्वः । मृधः । बृहस्पतिः । वि । ववर्ह । रथान्ऽइव ॥ १३ ॥

वेङ्कट० सङ्ग्रामेषु आह्वातव्यः हविषा उपगन्तव्यः गन्ता युद्धेषु दाता सर्वं धनं सर्वाः एव अभिदम्भितुम् इच्छन्तीः मृधः शत्रून् बृहस्पतिः वि ववर्ह विविनक्ति[5], रथान् इव वेगेन आपततः ॥ १३ ॥

तेजिष्ठया तपनी रक्षसस्तप ये त्वा निदे दधिरे दृष्टवीर्यम् ।
आविस्तत् कृष्व यदसत् त उक्थ्यं१ बृहस्पते वि परिरापो अर्दय ॥ १४ ॥

---

१-१. नास्ति मूको. २. नास्ति वि॰ ल॰. ३. °तो बलेन अ॰. ४. कुर्म मूको. ५. विविश्वति मूको.

तेजिष्ठया । तपनी । रक्षसः । तप । ये । त्वा । निदे । दधिरे । दृष्टऽवीर्यम् ।
आविः । तत् । कृष्व । यत् । असत् । ते । उक्थ्यम । बृहस्पते । वि । परिऽरपः । अर्दय ॥

वेङ्कट० तीक्ष्णेन शस्त्रेण राक्षसान् तप, ये राक्षसाः त्वाम् दृष्टवीर्यं योद्धुम् अशक्नुवन्तः निन्दितुं तिष्ठन्ति । आविः कृणुष्व तत्, यत् भवति तव स्तोतव्यं वीर्यम् । बृहस्पते! वि अर्दय च परिरपः परितो लपतो राक्षसानिति ॥ १४ ॥

बृहस्पते अति यदर्यो अर्हाद् द्युमद् विभाति क्रतुमज्जनेषु ।
यद् दीदयच्छवस ऋतप्रजात तदस्मासु द्रविणं धेहि चित्रम् ॥ १५ ॥

बृहस्पते । अति । यत् । अर्यः । अर्हात् । द्युऽमत् । विऽभाति । क्रतुऽमत् । जनेषु ।
यत् । दीदयत् । शवसा । ऋतऽप्रजात । तत् । अस्मासु । द्रविणम् । धेहि । चित्रम ॥१५॥

वेङ्कट० बृहस्पते! यत् [1]'उदारोऽप्यत्यन्तं'[1] पूजयति, कथम् इदम् अनेन दत्तम् इति । यत्[2] दीप्तिमत्[3] कर्मवच्च जनेषु विभाति । यत् च[4] दीपयति बलेन । यज्ञार्थं प्रजात! तादृशं धनम् चित्रम् अस्मासु स्थापय इति ॥ १५ ॥

[5]इति द्वितीयाष्टके षष्ठाध्याये एकत्रिंशो वर्गः[5] ॥

मा नः स्तेनेभ्यो ये अभि द्रुहस्पदे निरामिणो रिपवोऽन्नेषु जागृधुः ।
आ देवानामोहते वि व्रयो हृदि बृहस्पते न परः साम्नो विदुः ॥ १६ ॥

मा । नः । स्तेनेभ्यः । ये । अभि । द्रुहः । पदे । निराऽमिणः । रिपवः । अन्नेषु । जगृधुः ।
आ । देवानाम् । ओहते । वि । व्रयः । हृदि । बृहस्पते । न । परः । साम्नः । विदुः ॥ १६ ॥

वेङ्कट० मा नः स्तेनेभ्यः वशं नय, ये स्तेनाः द्रोहस्य स्थाने तिष्ठन्तो निर्गतरमणाः रिपवः अन्नेषु अभि जागृधुः अभिकाङ्क्षन्ति अपहर्तुं माम् इव । वहन्ति[6] च देवानां हृदये व्रीडाम्, तेभ्यः[7] बृहस्पते! त्वदन्ये न केचन साम जानन्ति । 'साम वै रक्षोहा' ( तै ६,६,३,१ ) इति ब्राह्मणम् इति ॥ १६ ॥

विश्वेभ्यो हि त्वा भुवनेभ्यस्परि त्वष्टाजनत् साम्नःसाम्नः कविः ।
स ऋणचिदृणया ब्रह्मणस्पतिर्द्रुहो हन्ता मह ऋतस्य धर्तरि ॥ १७ ॥

विश्वेभ्यः । हि । त्वा । भुवनेभ्यः । परि । त्वष्टा । अजनत् । साम्नःऽसाम्नः । कविः ।
सः । ऋणऽचित् । ऋणऽयाः । ब्रह्मणः । पतिः । द्रुहः । हन्ता । महः । ऋतस्य । धर्तरि ॥१७॥

---

१-१. °रोऽपि वि[1] लपं; °रोऽत्यन्तं ल. २. नास्ति वि[1] लपं; येन वि[2] अ[1] ल. ३. दीप्तिमान् ल लपं. ४. नास्ति अ[1]. ५-५. नास्ति मूको. ६. हन्ति मूको. ७. °भ्यः इति वि[1,2] अ[1] लपं.

वेङ्कट० सर्वेभ्यः भूतेभ्यः उच्छ्रितम् हि त्वाम् त्वष्टा जनयामास । त्वं नानाविधानि सामानि जानासि । सः त्वं स्तोतृणां कामम् ऋणमिव हृदये चिनोषि, ऋणस्य च यापयिता भवसि[१] । ब्रह्मणः पतिः महतः यज्ञस्य धर्तरि द्रोग्धारं हन्ति ॥ १७ ॥

तव॑ श्रि॒ये व्य॑जिहीत॒ पर्व॑तो॒ गवां॑ गो॒त्रमु॒दसृ॑जो॒ यद॑ङ्गिरः ।
इन्द्रे॑ण यु॒जा तम॑सा॒ परी॑वृतं॒ बृह॑स्पते॒ निर॒पामौ॑ब्जो अर्ण॒वम् ॥ १८ ॥

तव॑ । श्रि॒ये । वि । अ॒जि॒ही॒त॒ । पर्व॑तः । गवा॑म् । गो॒त्रम् । उ॒त्ऽअसृ॑जः । यत् । अ॒ङ्गि॒रः ।
इन्द्रे॑ण । यु॒जा । तम॑सा । परि॑ऽवृतम् । बृह॑स्पते । निः । अ॒पाम् । औ॒ब्जः । अ॒र्ण॒वम् ॥ १८ ॥

वेङ्कट० तव श्रयणार्थं शिलोच्चयः द्वारं विहाय उभयतोऽतिष्ठत, यदा त्वम् अङ्गिरसां कुले जात! गवाम् समूहम् उदसृजः पणिभिरपहृतम्, तथा [२]इन्द्रेण सहायेन[२] मेघतमसा वृत्रेण परिवृतम् बृहस्पते! अपाम्[३] अर्णवम् मेघम् निः औब्जः[४], उब्जतिः वधकर्मा, तेजोभिरधो विद्धवान् असि इति ॥ १८ ॥

ब्रह्म॑णस्पते॒ त्वम॒स्य य॒न्ता सू॒क्तस्य॑ बोधि॒ तन॑यं च जिन्व ।
विश्वं॒ तद् भ॒द्रं यदव॑न्ति दे॒वा बृ॒हद् व॑देम वि॒दथे॑ सु॒वीराः॑ ॥ १९ ॥

ब्रह्म॑णः । प॒ते॒ । त्वम् । अ॒स्य । य॒न्ता । सु॒ऽउ॒क्तस्य॑ । बो॒धि॒ । तन॑यम् । च॒ । जि॒न्व॒ ।
विश्व॑म् । तत् । भ॒द्रम् । यत् । अव॑न्ति । दे॒वाः । बृ॒हत् । व॒दे॒म॒ । वि॒दथे॑ । सु॒ऽवीराः॑ ॥ १९ ॥

वेङ्कट० [५]ब्रह्मणः पते![५] त्वम् इदं जगत् सर्वं नियच्छसि । स त्वम् इदं सूक्तं बुध्यस्व । त्वत्कुलजातत्वात् तव तनयम् माम् च प्रीणय । विश्वं तत् भद्रम् एव भवति यत्[६] रक्षन्ति[७] देवाः । वयं च त्वद्रक्षिताः बृहत् वदेम विदथे सुवीराः इति ॥ १९ ॥

[५]इति द्वितीयाष्टके षष्ठाध्याये द्वात्रिंशो वर्गः[५] ॥

षष्ठं व्याख्यद् द्वितीयस्य माधवोऽध्यायमञ्जसा ।
सङ्कर्षणानुजो यस्य भ्राताऽऽसीदनुजः कविः[६] ॥

इति वेङ्कटमाधवाचार्यविरचिते ऋक्संहिताव्याख्याने
द्वितीयाष्टके षष्ठोऽध्यायः ॥

—*—

इति ऋग्वेदे सभाष्ये द्वितीयाष्टके षष्ठोऽध्यायः ॥



१. भवति मूको. २-२. इथेन्द्र स° वि॰ लपं. ३. नास्ति वि॰ अ॰. ४. °ब्जः इति वि॰ लपं. ५-५. नास्ति मूको. ६. नास्ति वि॰ लपं. ७. नास्ति वि॰.

## अथ द्वितीयाष्टके सप्तमोऽध्यायः

वेङ्कट०

'सेमामविड्ढि प्रभृतिम्' व्याचिख्यासति माधवः।
तत्राक्रियेषु वाक्येषु कर्तव्यमुपदिश्यते ॥ १ ॥

अपेक्षया क्रियाक्षेपः कारकाणामिति स्थितिः।
'यास्ते प्रजा अमृतस्य परस्मिन्'[1] परिचरन्ति ॥ २ ॥

'दस्रा ह यद्रेक्णः'[2] इति याचते वामिति क्रिया।
'ता जिह्वया सदमेदं सुमेधाः'[3] याचते जलम् ॥ ३ ॥

उपसर्गाः प्रयुज्यन्ते क्रियाक्षेपाय च[4] क्वचित्।
'यस्ते सखिभ्य आ वरम्'[5] आप्रयच्छेदिति क्रिया ॥ ४ ॥

'इमे सोमास इन्दवः सुतासो[6] अधि'[7] आसते क्रिया।
'अर्चन्ननु[8] स्वराज्यम्'[9] इत्यत्रान्वास्ते[10] क्रियापदम् ॥ ५ ॥

पश्येद् यदादियोगेऽपि निहतं[11] यदि तिङ्पदम्।
मध्ये क्रियापदाक्षेपस्तत्तद्वाक्यानुरूपतः[12] ॥ ६ ॥

[13]'महाँ इन्द्रो य ओजसा'†, 'प्र यद्दिवो हरिवः'‡ च।
'न यो वराय मरुताम्$'[13] ऋचस्तत्र निदर्शनम् ॥ ७ ॥

'अश्वं न त्वा वारवन्तम्'[14], 'मनोजवेभिरिषिरैः'[15]।
'ऋता यद् गर्भमदितिः'[16] आक्षिपन्ति[17] क्रियामिमाः[18] ॥ ८ ॥

[19]यदोपमेये नान्वेति[19] [20]क्रियाशब्दस्तदाऽपि च।
उपमेयान्वये योग्यामन्यामध्याहरेत् क्रियाम्[20] ॥ ९ ॥

'नासत्याभ्यां बर्हिरिव'[21], 'सुनाद्राजभ्यो × जुहोमि'[22]।
'अग्नाविव समिधाने'[23] ऋचस्तत्र निदर्शनम् ॥ १० ॥

---

१. ऋ १,४३,९. २. ऋ १,१५८,१. ३. ऋ ६,६७,८ ४. नास्ति वि[1] लपं. ५. ऋ १,४,४. ६. सुता वि[1] अ[1] वेंऋअ. ७. ऋ १,१६,६. ८. ननु वि[1] लपं ९ ऋ १,८०,१. १०. °त्र वास्ते वि[1] लपं; °त्यत्रान्ते वि[2] अ[1]. ११. निहितं वि[2] लपं. १२. °नुरूप···वि[3]; °नुसारतः अ[1] वेंऋअ. १३-१३. नास्ति वि[2] अ[1]. † ऋ ८,६,१. ‡ ऋ १,३३,५. $ ऋ १,१४३,५. १४. ऋ १,२७,१. १५. ऋ ६,६२,३. १६. ऋ ६,६७,४. १७. °ति वि[1] लपं १८. °मिमाम् वि[1] लपं; क्रिया इमाः वेंऋअ. १९-१९. °मयेना° वेंऋअ. २०-२०. क्रिया···क्रियाम् वि[2] अ[1]. २१. ऋ १,११६,१. २२. ऋ २,२७,१. २३. ऋ २,१६,१.

'यच्चिद्धि ते विशो यथा[1]', 'स नो [2]वृष्टिं दिवस्परि[2]' ।
अपेक्षन्ते‡ क्रियामेता‡ इत्याक्षेपः प्रपञ्चितः ॥ इति[2] ॥ ११ ॥

[ २४ ]

[3]गृत्समदो भार्गवः शौनकः ( पूर्वम् आङ्गिरसः शौनहोत्रः ) ऋषिः । ब्रह्मणस्पतिर्देवता, प्रथमादशम्योर्बृहस्पतिः, द्वादश्या इन्द्राब्रह्मणस्पती । जगती छन्दः, द्वादशीषोडश्यौ त्रिष्टुभौ[3] ।

सेमामविड्ढि प्रभृतिं य ईशिषेऽया विधेम नवया महा गिरा ।
यथा नो मीढ्वान्त्स्तवते सखा तव बृहस्पते सीषधः सोत नो मतिम् ॥ १ ॥

सः । इमाम् । अविड्ढि । प्रऽभृतिम् । यः । ईशिषे । अया । विधेम । नवया । महा । गिरा ।
यथा । नः । मीढ्वान् । स्तवते । सखा । तव । बृहस्पते । सीसधः । सः । उत । नः । मतिम् ॥ १ ॥

वेङ्कट० गृत्समदः । सः[4] इमाम् प्रक्रियमाणां[5] स्तुतिम् [3]अविड्ढि धनप्रदानेन यः[3] त्वं धनस्य ईशिषे । अनया परिचरेम नवया महत्या स्तुत्या । यथा अस्माकं [6]हविषां सेक्ता सखा† होता तव स्तुतिं करोति[6], हे बृहस्पते ! साधय अस्माकम् अभिलषितं तथेति ॥ १ ॥

यो नन्त्वान्यनमन्न्योजसोतादर्दर्मन्युना शम्बराणि वि ।
प्राच्यावयदच्युता ब्रह्मणस्पतिरा चाविशद् वसुमन्तं वि पर्वतम् ॥ २ ॥

यः । नन्त्वानि । अनमत् । नि । ओजसा । उत । अदर्दः । मन्युना । शम्बराणि । वि ।
प्र । अच्यवयत् । अच्युता । ब्रह्मणः । पतिः । आ । च । अविशत् । वसुऽमन्तम् । वि । पर्वतम् ॥२॥

वेङ्कट० यः नमनीयानि बलेन नि नमयति । अपि च स विदारयति क्रोधेन [7]असुरकुलानि । प्रच्यावयति च अच्युतानि ब्रह्मणस्पतिः[7] । तथा पणिभिः[8] अपहृतैः[8] पशुभिस्तद्वन्तं शिलोच्चयम् च वि[9] आ अविशत् सः । मन्युना तच्चेति ॥ २ ॥

तद् देवानां देवतमाय कर्त्वमश्रथ्नन् दृळ्हाव्रदन्त वीळिता ।
उद् गा आजदभिनद् ब्रह्मणा वलमगूहत् तमो व्यचक्षयत् स्वः ॥ ३ ॥

तत् । देवानाम् । देवऽतमाय । कर्त्वम् । अश्रथ्नन् । दृळ्हा । अव्रदन्त । वीळिता ।
उत् । गाः । आजत् । अभिनत् । ब्रह्मणा । वलम् । अगूहत् । तमः । वि । अचक्षयत् । स्व१रिति स्वः ॥३॥

---

१. ऋ १,२५,१. २-२. वृष्टिं···त इति वि[1] अ[1]. † ऋ २,६,५. ‡ °क्षेत वि[1]; °क्षेते वेंऋथ. ‡ °मेत वेंऋथ वि[1]. ३-३. नास्ति मूको. ४. नास्ति वि[1]. ५. प्रक्षि° वि[1,2] अ[1] लपं. ६-६. ···रोति वि[2] अ[1]. † तथा मूको. ७-७. नास्ति वि[2] अ[1]. † नास्ति मूको. ८. हृतैः वि[2] अ[1]. ९. नास्ति मूको.

**वेङ्कट०** तत् देवानाम् **अतिशयेन** देवाय [1]**कर्म, यत्**[1] गाः [2]**आजिघृक्षतः अस्य** विवृतद्वाराणि **अभवन्**[2], **दृढान्यपि असुरकुलानि मृदूनि, ततो यत्** पशून् उत् आजत्, अभिनत् **च मन्त्रेण असुरम्, अन्धकारं च तत्रत्यम्** अगूहत्, **व्यदर्शयच्च आदित्यम्** ॥ ३ ॥

अश्मास्यमवतं ब्रह्मणस्पतिर्मधुधारमभि यमोजसातृणत् ।
तमेव विश्वे पपिरे स्वर्दृशो बहु साकं सिसिचुरुत्समुद्रिणम् ॥ ४ ॥

अश्मऽआस्यम् । अवतम् । ब्रह्मणः । पतिः । मधुऽधारम् । अभि । यम् । ओजसा । अतृणत् ।
तम् । एव । विश्वे । पपिरे । स्वःऽदृशः । बहु । साकम् । सिसिचुः । उत्सम् । उद्रिणम् ॥ ४ ॥

**वेङ्कट०** [1]**अश्मपिहितास्यम् कञ्चन कूपम्**[1] ब्रह्मणः पतिः मधुधारम् अभि अतृणत् यम् **बलेन । मधुधारम् इति तत्रत्यगवाभिप्रायम्** । तम् एव विश्वे **पिबन्ति देवाः, ततो हविषामुत्पत्तेः । [3]बहु च सह समुन्दनवद् गोधनम् ततः कूपात्** उत्सं[3] सिसिचुः इति । **यास्कस्त्वाह —** अशनवन्तमास्यन्दनवन्तम् अवातितम्[4] ब्रह्मणस्पतिः मधुधारम् अभि[5] यमोजसा बलेनाभ्यतृणत्, तमेव सर्वे [3]पिबन्ति रश्मयः सूर्यदृशः बह्वेनं सह सिञ्चन्ति उत्समुद्रिणम्[3] उदकवन्तम्' (१०,१३) इति ॥ ४ ॥

सना ता का चिद् भुवना भवीत्वा माद्भिः शरद्भिर्दुरो वरन्त वः ।
अयतन्ता चरतो अन्यदन्यदिद् या चकार वयुना ब्रह्मणस्पतिः ॥ ५ ॥

सना । ता । का । चित् । भुवना । भवीत्वा । मात्ऽभिः । शरत्ऽभिः । दुरः । वरन्त । वः ।
अयतन्ता । चरतः । अन्यत्ऽअन्यत् । इत् । या । चकार । वयुना । ब्रह्मणः । पतिः ॥ ५ ॥

**वेङ्कट०** **यानि प्रज्ञानानि मन्त्रैः**[6] ब्रह्मणः पतिः चकार, तानि कानि चित् **सनातनानि भूतानि भूत्वा असुरान् माथयद्भिः** [7]**शरैः सह** देवाः† **युष्मदर्थम् पर्वतस्य द्वाराणि अभजन्**[7], **तेषां भूतानाम्** अन्यदन्यत् **च भूतम् प्रयत्नमकुर्वाणे सम्भ्रान्ते ब्रह्मणस्पतेः निर्गच्छतः इति** ॥ ५ ॥

[8]इति द्वितीयाष्टके सप्तमाध्याये प्रथमो वर्गः[8] ॥

अभिनक्षन्तो अभि ये तमानशुर्निधिं पणीनां परमं गुहा हितम् ।
ते विद्वांसः प्रतिचक्ष्यानृता पुनर्यत उ आयन् तदुदीयुराविशम् ॥ ६ ॥

अभिऽनक्षन्तः । अभि । ये । तम् । आनशुः । निऽधिम् । पणीनाम् । परमम् । गुहा । हितम् ।
ते । विद्वांसः । प्रतिऽचक्ष्य । अनृता । पुनः । यतः । ऊँ इति । आयन् । तत् । उत् । ईयुः । आऽविशम् ॥

---

**१-१. नास्ति वि[१] लपं. २-२.** 'घृक्ष ··· ण्यभवन् वि[२]; °घृक्षः भवन् अ[१]. **३-३. त्रटितम् वि[२] अ[१]. ४.** °तम् मेघं **मूको. ५. नास्ति मूको. ६. नास्ति वि[१] लपं. ७-७.** °यद्भिः भजन **वि[२] अ[१]. † हे दे° वि[१]. ८-८ नास्ति मूको.**

वेङ्कट० अभिगच्छन्तः ये तम् आसवन्तः [1]निधिम् पणिभिः अपहृतम् उत्तमं गुहायां निहितम्। ते प्राज्ञाः[1]† तत्र गोधनविषयाणि असुराणाम् अनृतानि मायाः दृष्ट्वा पुनः च यतो देवलोकात् आयन्, तम् एव आविश्य उत् ईयुः इति दूतावाह। अस्योत्तरा [2]भूयसे निर्वचनाय[2] ॥ ६ ॥

ऋतावानः प्रतिचक्ष्यानृता पुनरात आ तस्थुः कवयो महस्पथः ।
ते बाहुभ्यां धमितमग्निमश्मनि नकिः षो अस्त्यरणो जहुर्हि तम् ॥ ७ ॥

ऋतऽवानः । प्रतिऽचक्ष्य । अनृता । पुनः । आ । अतः । आ । तस्थुः । कवयः । महः । पथः ।
ते । बाहुऽभ्याम् । धमितम् । अग्निम् । अश्मनि । नकिः । सः । अस्ति । अरणः । जहुः । हि । तम् ॥

वेङ्कट० [1]सत्यवन्तोऽसुराणाम्[1] अनृतानि दृष्ट्वा ततस्ते पुनः च आस्थिताः विद्वांसः महतो[4] मार्गाद् देवलोकं प्रति गन्तुम्। ते बाहुभ्याम् धमितम् अग्निम् अश्मनि तस्मिन् [4]पर्वते निदधुः। ततश्च तस्मिन् पुरे न कश्चित् सः अरणः† विद्यते पुरः सर्वः[5] अप्यग्निना दग्धः, यस्मात् तत्र दूताः अग्निं तम् जहुः इति ॥ ७ ॥

ऋतज्येन क्षिप्रेण ब्रह्मणस्पतिर्यत्र वष्टि प्र तदश्नोति धन्वना ।
तस्य साध्वीरिषवो याभिरस्यति नृचक्षसो दृशये कर्णयोनयः ॥ ८ ॥

ऋतऽज्येन । क्षिप्रेण । ब्रह्मणः । पतिः । यत्र । वष्टि । प्र । तत् । अश्नोति । धन्वना ।
तस्य । साध्वीः । इषवः । याभिः । अस्यति । नृऽचक्षसः । दृशये । कर्णऽयोनयः ॥ ८ ॥

वेङ्कट० सत्यज्येन दृढज्येन शराणां क्षेपकेण धनुषा सह [6]यत्र इच्छति, तत्र प्रगच्छति ब्रह्मणः पतिः। तस्य साधवः शराः[6], यैः प्रेरयति मनुष्याणां द्रष्टॄन् भूम्याः कृत्तप्रदेशजातान् असुरान्[7] देवानां दर्शनाय। देवानाम् अग्रतो वधाय [2]तान् दर्शयति इति[2] ॥ ८ ॥

स संनयः स विनयः पुरोहितः स सुष्टुतः स युधि ब्रह्मणस्पतिः ।
चाक्ष्मो यद् वाजं भरते मती धनाऽऽदित् सूर्यस्तपति तप्यतुर्वृथा ॥ ९ ॥

सः । सम्ऽनयः । सः । विऽनयः । पुरःऽहितः । सः । सुऽस्तुतः । सः । युधि । ब्रह्मणः । पतिः ।
चाक्ष्मः । यत् । वाजम् । भरते । मती । धना । आत् । इत् । सूर्यः । तपति । तप्यतुः । वृथा ॥९॥

वेङ्कट० [2]सः मन्त्रैर्विश्लिष्टान्[2] सन्नयति। सङ्गतांश्च[8] विश्लथयति। देवैः पुरोहितः सुष्ठु च स्तूयते,

---

१-१. नि ⋯ ज्ञाः वि[2] त्रुटितम् अ[1]. † प्रज्ञा वि[1]. २-२. नास्ति वि[1] अ[1]. ३. ⋯ णाम् वि[1] अ[1]. ४. नास्ति वि[1]. ५-५. त्रुटितम् अ[1]; ⋯ वैः वि[1]. † नास्ति मूको. ६-६ नास्ति अ[1]; ⋯ धवः वि[1]. ७. सुरा वि[2] अ[1]. ८. संनतां° कर्प.

युद्धेषु च प्रादुर्भवति [1]सः ब्रह्मणः पतिः[1]। सोऽयम् दर्शयति मनुष्यस्य स्तुत्यम् [2]यत् अन्नम्, धनानि च भरते। ततोऽनन्तरं स[2] सुवीर्यः[3] तपति शत्रूंस्तापयिताऽनायासेन ॥ ९ ॥

विभु प्रभु प्रथमं मेहनावतो बृहस्पतेः सुविदत्राणि राध्या ।
इमा सातानि वेन्यस्य वाजिनो येन जना उभये भुञ्जते विशः ॥ १० ॥

विऽभु । प्रऽभु । प्रथमम् । मेहनाऽवतः । बृहस्पतेः । सुऽविदत्राणि । राध्या ।
इमा । सातानि । वेन्यस्य । वाजिनः । येन । जनाः । उभये । भुञ्जते । विशः ॥ १० ॥

वेङ्कट० विभूनि प्रभूणि च प्रथमम् एव हविर्भिः सिञ्चतो यजमानस्य [4]बृहस्पतेः शोभनधनानि राध्यानि भवन्ति इमानि दानानि[4] वेनानां कामयितॄणाम् आश्रयस्य बलवतोऽस्य, येन देवाः मनुष्याः च भुञ्जते इति ॥ १० ॥

[1]इति द्वितीयाष्टके सप्तमाध्याये द्वितीयो वर्गः[1]।

योऽवरे वृजने विश्वथा विभुर्महामु रण्वः शवसा ववक्षिथ ।
स देवो देवान् प्रति पप्रथे पृथु विश्वेदु ता परिभूर्ब्रह्मणस्पतिः ॥ ११ ॥

यः । अवरे । वृजने । विश्वऽथा । विऽभुः । महाम् । ऊँ इति । रण्वः । शवसा । ववक्षिथ ।
सः । देवः । देवान् । प्रति । पप्रथे । पृथु । विश्वा । इत् । ऊँ इति । ता । परिऽभूः । ब्रह्मणः । पतिः ॥ ११ ॥

वेङ्कट० यः त्वम् अवरे न्यूने [5]वृजने विश्वथा विभुः महाम् उ रण्वः[5] बलेन वहसि। परोक्षः शेषः। सः देवः देवान् प्रति पप्रथे प्रथयामास पृथु बलम् आत्मीयम्। विश्वानि एव तानि परिभवति युद्धानि [2]अयम् अरानिव नेमिः[2] ॥ ११ ॥

विश्वं सत्यं मघवाना युवोरिदापश्चन प्र मिनन्ति व्रतं वाम् ।
अच्छेन्द्राब्रह्मणस्पती हविर्नोऽन्नं युजेव वाजिना जिगातम् ॥ १२ ॥

विश्वम् । सत्यम् । मघवाना । युवोः । इत् । आपः । चन । प्र । मिनन्ति । व्रतम् । वाम् ।
अच्छ । इन्द्राब्रह्मणस्पती इति । हविः । नः । अन्नम् । युजाऽइव । वाजिना । जिगातम् ॥ १२ ॥

वेङ्कट० [2]इन्द्रश्च देवता[2]। हे धनवन्तौ! युवयोरेव विश्वम् सत्यम् भवति। तथा युवयोरेव वृष्टयर्थं कर्म आपः अपि न हिंसन्ति[6]। हे इन्द्राब्रह्मणस्पती! [7]अस्मदीयम् हविः प्रति आगच्छतम्, यथा घासलक्षणम् अन्नम् सहितौ[7] द्वावश्वाविति ॥ १२ ॥

---

१-१. नास्ति मूको. २-२. नास्ति वि[२] अ[१]. ३. सर्ववै: वि[१,२]; सर्ववीर्यः अ[१]. ४. बृहस्प…नि वि[२]; बृहस्पति…नि अ[१]. ५-५. नास्ति वि[२] अ[१] लपं. ६. नास्ति वि[२] अ[१]. ७-७. अस्मदी…वि[२] अ[१].

उताशिष्ठा अनु शृण्वन्ति वह्नयः सभेयो विप्रो भरते मती धना ।
वीळुद्वेषा अनु वश ऋणमाददिः स ह वाजी समिथे ब्रह्मणस्पतिः ॥१३॥

उत । आशिष्ठाः । अनु । शृण्वन्ति । वह्नयः । सभेयः । विप्रः । भरते । मती । धना ।
वीळुऽद्वेषाः । अनु । वशा । ऋणम् । आऽददिः । सः । ह । वाजी । सम्ऽइथे । ब्रह्मणः । पतिः ॥१३॥

**वेङ्कट०** अपि च शीघ्रतरा भूत्वा भवतोरनुशासनं देवाश्च अनु शृण्वन्ति वोढारः । तथा तुभ्यं सभायां साधुर्होता भरते [1]स्तुत्या हवींषि। स दृढक्रोधो वशायाः पशोः पश्चाद्[1] यजमानानाम् ऋणम् आददिः एभ्यो देयमस्ति इति मन्यमानः । सः अयम् बलवान् भवति युद्धे ब्रह्मणः पतिः[2] इति ॥ १३ ॥

ब्रह्मणस्पतेरभवद् यथावशं सत्यो मन्युर्महि कर्मा करिष्यतः ।
यो गा उदाजत् स दिवे वि चाभजन् महीव रीतिः शवसासरत् पृथक् ॥ १४ ॥

ब्रह्मणः । पतेः । अभवत् । यथाऽवशम् । सत्यः । मन्युः । महि । कर्म । करिष्यतः ।
यः । गाः । उत्ऽआजत् । सः । दिवे । वि । च । अभजत् । महीऽइव । रीतिः । शवसा । असरत् । पृथक् ॥

**वेङ्कट०** ब्रह्मणः पतेः स्वबुद्ध्यनुगुणम् सत्यः एव [3]क्रोधो भवति महत् कर्म करिष्यतः । यः पणिभिरपहृताः गाः[3] उदाजत्, सः दिवे तत्रत्येभ्यो देवेभ्यो यथास्वं वि अभजत् च । महतीव उदकरीतिः वेगेन स्वंस्वं गृहं प्रति असरत् गवां समूह इति ॥ १४ ॥

ब्रह्मणस्पते सुयमस्य विश्वहा रायः स्याम रथ्यो३ वयस्वतः ।
वीरेषु वीराँ उप पृङ्धि नस्त्वं यदीशानो ब्रह्मणा वेषि मे हवम् ॥ १५ ॥

ब्रह्मणः । पते । सुऽयमस्य । विश्वहा । रायः । स्याम । रथ्यः । वयस्वतः ।
वीरेषु । वीरान् । उप । पृङ्धि । नः । त्वम् । यत् । ईशानः । ब्रह्मणा । वेषि । मे । हवम् ॥१५॥

**वेङ्कट०** [4]ब्रह्मणः पते! शोभननियमनस्य सर्वदा धनस्य[4] नेतारः स्याम अन्नवतः । वीरेषु पुत्रेषु अस्माकम् त्वम् वीरान् उपचर्यया[5] अनुस्यूतं वीरान् प्रयच्छ । यदा स्वामी हविषा सह कामयसे मम आह्वानम् ॥ १५ ॥

ब्रह्मणस्पते त्वमस्य यन्ता सूक्तस्य बोधि तनयं च जिन्व ।
विश्वं तद् भद्रं यदवन्ति देवा बृहद् वदेम विदथे सुवीराः ॥ १६ ॥

---

१-१. स्तु ··· पश्चाद् वि[2] अ[1]. २. नास्ति मूको. ३-३. नास्ति वि[2] अ[1]. ४-४. नास्ति वि[2] अ[1] लपं. ५. उपवर्ज्यया वि[2] लपं.

ब्रह्मणः । पते । त्वम् । अस्य । यन्ता । सुऽउक्तस्य । बोधि । तनयम् । च । जिन्व ।
विश्वम् । तत् । भद्रम् । यत् । अवन्ति । देवाः । बृहत् । वदेम । विदथे । सुऽवीराः ॥१६॥

**वेङ्कट०** पूर्वम् ( ऋ २,२३,१९ ) व्याख्यास्येयम् ॥ १६ ॥

[1]इति द्वितीयाष्टके सप्तमाध्याये तृतीयो वर्गः[1] ॥

[ २५ ]

[1]गृत्समदो भार्गवः शौनकः ( पूर्वम् आङ्गिरसः शौनहोत्रः ) ऋषिः । ब्रह्मणस्पतिर्देवता । जगती छन्दः ।[1]

इन्धानो अग्निं वनवद् वनुष्यतः कृतब्रह्मा शूशुवद् रातहव्य इत् ।
जातेन जातमति स प्र सर्सृते यंयं युजं कृणुते ब्रह्मणस्पतिः ॥ १ ॥

इन्धानः । अग्निम् । वनवत् । वनुष्यतः । कृतऽब्रह्मा । शूशुवत् । रातऽहव्यः । इत् ।
जातेन । जातम् । अति । सः । प्र । सर्सृते । यम्ऽयम् । युजम् । कृणुते । ब्रह्मणः । पतिः ॥१॥

**वेङ्कट०** [2]अयम् ब्रह्मणः पतिः यम्[2] यम् सहायं करोति, सः अग्निम् इन्धानः यज्ञार्थं हन्ति हन्तुमिच्छतः शत्रून् । तथा कृतस्तोत्रो देवानां वर्धते दत्तहविष्कश्च । [3]तथा स्वेन मनुष्येण शत्रुमनु †अति प्र सरति† अतिप्रसरिष्यति[3] च ॥ १ ॥

वीरेभिर्वीरान् वनवद् वनुष्यतो गोभी रयिं पप्रथद् बोधति त्मना ।
तोकं च तस्य तनयं च वर्धते यंयं युजं कृणुते ब्रह्मणस्पतिः ॥ २ ॥

वीरेभिः । वीरान् । वनवत् । वनुष्यतः । गोभिः । रयिम् । पप्रथत् । बोधति । त्मना ।
तोकम् । च । तस्य । तनयम् । च । वर्धते । यम्ऽयम् । युजम् । कृणुते । ब्रह्मणः । पतिः ॥२॥

**वेङ्कट०** आत्मीयैः वीरैः अन्यान् वीरान् हन्तुम् इच्छतो हन्ति । गोभिः च धनं प्रथयति । बुध्यते च आत्मना विधेयम् । तथा [1]पुत्रम् तस्य पुत्रम् च वर्धयति[1] ॥ २ ॥

सिन्धुर्न क्षोदः शिमीवाँ ऋघायतो वृषेव वध्रीँरभि वष्टयोजसा ।
अग्नेरिव प्रसितिर्नाह वर्तवे यंयं युजं कृणुते ब्रह्मणस्पतिः ॥ ३ ॥

सिन्धुः । न । क्षोदः । शिमीऽवान् । ऋघायतः । वृषाऽइव । वध्रीन् । अभि । वष्टि । ओजसा ।
अग्नेःऽइव । प्रऽसितिः । न । अह । वर्तवे । यम्ऽयम् । युजम् । कृणुते । ब्रह्मणः । पतिः ॥ ३ ॥

---

१-१. नास्ति मूको. २-२. त्रुटितम् वि[२] अ[१]. ३-३. °तथा ··· सरस्वती वि[२] अ[१].
†-† अतिरसस्यति वि[१] लभं; अतिसरस्यति ल.

**वेङ्कट०** सिन्धुः नदी[1] इव उदकं कर्मवान् भूत्वा हिंसकान् शत्रुषु प्रहिणोति। तथा शत्रून् अयम्[2] अभि भवति ओजसा[3], यथा साण्ड ऋषभः छिन्नवृषणान् । सः [4]अग्नेः इव ज्वालाबन्धः न निवारयितुं शक्यत[4] इति ॥ ३ ॥

तस्मा अर्षन्ति दिव्या असश्चतः स सत्वभिः प्रथमो गोषु गच्छति ।
अनिभृष्टतविषिर्हन्त्योजसा यंयं युजं कृणुते ब्रह्मणस्पतिः ॥ ४ ॥

तस्मै । अर्षन्ति । दिव्याः । असश्चतः । सः । सत्वऽभिः । प्रथमः । गोषु । गच्छति ।
अनिभृष्टऽतविषिः । हन्ति । ओजसा । यम्ऽयम् । युजम् । कृणुते । ब्रह्मणः । पतिः ॥ ४ ॥

**वेङ्कट०** तस्मै निपतन्ति दिव्याः आपः सङ्गवर्जिताः । सः आत्मीयैः परिचारकैः सह प्रथममेव गोषु[5] गच्छति । शत्रुभिः [6]अनपभ्रंशितबलः हन्ति तान् बलेन[6] ॥ ४ ॥

तस्मा इद् विश्वे धुनयन्त सिन्धवोऽच्छिद्रा शर्म दधिरे पुरूणि ।
देवानां सुम्ने सुभगः स एधते यंयं युजं कृणुते ब्रह्मणस्पतिः ॥ ५ ॥

तस्मै । इत् । विश्वे । धुनयन्त । सिन्धवः । अच्छिद्रा । शर्म । दधिरे । पुरूणि ।
देवानाम् । सुम्ने । सुऽभगः । सः । एधते । यम्ऽयम् । युजम् । कृणुते । ब्रह्मणः । पतिः ॥ ५ ॥

**वेङ्कट०** तस्मै[7] एव सर्वे सिन्धवः स्यन्दन्ते, तथा अच्छिद्राणि[8] बहूनि गृहाणि तं धारयन्ति, देवदत्ते सुखे सुधनः सः वर्धते ॥ ५ ॥

[9]इति द्वितीयाष्टके सप्तमाध्याये चतुर्थो वर्गः[9] ॥

## [ २६ ]

[1]गृत्समदो भार्गवः शौनकः ( पूर्वम् आङ्गिरसः शौनहोत्रः ) ऋषिः ।
ब्रह्मणस्पतिर्देवता । जगती छन्दः[1] ।

ऋजुरिच्छंसो वनवद् वनुष्यतो देवयन्निददेवयन्तमभ्यसत् ।
सुप्रावीरिद् वनवत् पृत्सु दुष्टरं यज्वेदयज्योर्वि भजाति भोजनम् ॥ १ ॥

ऋजुः । इत् । शंसः । वनवत् । वनुष्यतः । देवऽयन् । इत् । अदेवऽयन्तम् । अभि । असत् ।
सुप्रऽअवीः । इत् । वनवत् । पृत्ऽसु । दुस्तरम् । यज्वा । इत् । अयज्योः । वि । भजाति । भोजनम् ॥

**वेङ्कट०** ऋजुः एव देवानां [10]स्तोमो हन्ति शत्रून्, देवानिच्छन्नेव अदेवयन्तम् अभि भवति । देवैः[10] सुष्ठु

---

१. नास्ति वि[1] लपं; ··· नदी अ[1]. २. नास्ति वि[1]. ३. नास्ति मूको. ४-४. °ग्ने ··· त वि[2] अ[1]. ५. गोष्ठे लपं. ६-६ नास्ति वि[2] अ[1]. ७. नास्ति वि[2] अ[1]. ८. च्छिद्राणि ल. ९-९ नास्ति मूको. १०-१०. °मो ··· वैः वि[2] अ[1].

प्ररक्ष्यमाण एव हन्ति युद्धेषु दुस्तरम् शत्रुम्, यज्वा एव अयजमानस्य[1] धनमादत्त इति, तदिदं सर्वं ब्रह्मणस्पतिनेत्थं भवतीति ॥ १ ॥

यजस्व वीर प्र विहि मनायतो भद्रं मनः कृणुष्व वृत्रतूर्ये ।
हविष्कृणुष्व सुभगो यथाससि ब्रह्मणस्पतेरव आ वृणीमहे ॥ २ ॥

यजस्व । वीर । प्र । विहि । मनायतः । भद्रम् । मनः । कृणुष्व । वृत्रऽतूर्ये ।
हविः । कृणुष्व । सुऽभगः । यथा । अससि । ब्रह्मणः । पतेः । अवः । आ । वृणीमहे ॥ २ ॥

**वेङ्कट०** [2]युयुत्सो! ब्रह्मणस्पतिम् यजस्व । प्र गच्छ अनन्तरं मन्यमानान् शत्रून्[2] । गत्वा च भद्रम् मनः उद्युक्तं[3] कुरु युद्धे । हविः च देवेभ्यः कुरु, यथा सुधनो भवसि । सर्वे वयं तव ब्रह्मणः पतेः रक्षणम्[4] आ वृणीमहे ॥ २ ॥

स इज्जनेन स विशा स जन्मना स पुत्रैर्वाजं भरते धना नृभिः ।
देवानां यः पितरमाविवासति श्रद्धामना हविषा ब्रह्मणस्पतिम् ॥ ३ ॥

सः । इत् । जनेन । सः । विशा । सः । जन्मना । सः । पुत्रैः । वाजम् । भरते । धना । नृऽभिः ।
देवानाम् । यः । पितरम् । आऽविवासति । श्रद्धाऽमनाः । हविषा । ब्रह्मणः । पतिम् ॥ ३ ॥

**वेङ्कट०** [5]सः एव जनपदेन जनपदस्थैः मनुष्यैः[5] च अन्नं धनानि च बिभर्ति, तथा[6] सर्वेण जातेन रक्षणेन आत्मीयैः पुत्रैर्दासैश्च सह, यः देवानाम् पालयितारम् ब्रह्मणः [7]पतिम् परिचरति श्रद्धानमनस्कः† हविषा इति[7] ॥ ३ ॥

यो अस्मै हव्यैर्घृतवद्भिरविधत् प्र तं प्राचा नयति ब्रह्मणस्पतिः ।
उरुष्यतीमंहसो रक्षती रिषोंऽहोश्चिदस्मा उरुचक्रिरद्भुतः ॥ ४ ॥

यः । अस्मै । हव्यैः । घृतवत्ऽभिः । अविधत् । प्र । तम् । प्राचा । नयति । ब्रह्मणः । पतिः ।
उरुष्यति । ईम् । अंहसः । रक्षति । रिषः । अंहोः । चित् । अस्मै । उरुऽचक्रिः । अद्भुतः ॥४॥

**वेङ्कट०** यः अस्मै हविर्भिः घृतसहितैः परिचरति, तम् असौ देवः ऊर्ध्वं नयति, अवर्तेः[8] च रक्षति एनम्, तथा हिंसितुः च रक्षति, [9]आहन्तुश्च । अस्मै †बहु करोति† महान् इति[9] ॥ ४ ॥

[10]इति द्वितीयाष्टके सप्तमाध्याये पञ्चमो वर्गः[10] ॥

---

१. यजमानस्य वि[1?2] लपं; ययमा° अ[1]. २-२ त्रुटितम् वि[2] अ[1]. ३. इत्युक्तं मूको. ४. °णाम् वि[1]. ५-५. ···थ्यैः वि[2]; नुवदैः अ[1]. ६. यथा मूको. ७-७. त्रुटितम् वि[2] अ[1]. † श्रद्धामनस्कः क प्रस्तावः; श्रद्धानम° वि[1]. ८. आवर्त्तेः वि[1] लपं; अ त्तेः वि[2] अ[1] ल. ९-९. त्रुटितम् वि[2] अ[1]. †-† बहुक° ल. १०-१०. नास्ति मूको.

[ २७ ]

[1]कूर्मो गार्त्समदो गृत्समदो वा ऋषिः । आदित्या देवता । त्रिष्टुप् छन्दः[1] ।

इमा गिर आदित्येभ्यो घृतस्नूः सनाद् राजभ्यो जुह्वा जुहोमि ।
शृणोतु मित्रो अर्यमा भगो नस्तुविजातो वरुणो दक्षो अंशः ॥ १ ॥

इमाः । गिरः । आदित्येभ्यः । घृतऽस्नूः । सनात् । राजऽभ्यः । जुह्वा । जुहोमि ।
शृणोतु । मित्रः । अर्यमा । भगः । नः । तुविऽजातः । वरुणः । दक्षः । अंशः ॥ १ ॥

वेङ्कट० कूर्मो गार्त्समदः । इमाः स्तुतीः आदित्येभ्यः घृतप्रस्राविणीरिव स्वादुतया सनातनेभ्यः राजभ्यः यथा जुह्वा आहुतीर्जुहोति, [2]एवम् †प्रब्रवीमि । ताश्चास्माकम्† मित्रादयः[2] सप्तादितेः पुत्राः[3] शृण्वन्तु अन्वहं जायमानाः । बहुजनन इन्द्रः । धाता दक्षः इति ॥ १ ॥

इमं स्तोमं सक्रतवो मे अद्य मित्रो अर्यमा वरुणो जुषन्त ।
आदित्यासः शुचयो धारपूता अवृजिना अनवद्या अरिष्टाः ॥ २ ॥

इमम् । स्तोमम् । सऽक्रतवः । मे । अद्य । मित्रः । अर्यमा । वरुणः । जुषन्त ।
आदित्यासः । शुचयः । धारऽपूताः । अवृजिनाः । अनवद्याः । अरिष्टाः ॥ २ ॥

वेङ्कट० इमम् स्तोमम् समानकर्माणः मे [4]अद्य †मित्रादयः सेवन्ताम् आदित्याः निर्मलाः†[4] पूतसोमधाराः अक्लोदकाः अवद्यरहिताः अहिंसिताः ॥ २ ॥

त आदित्यास उरवो गभीरा अदब्धासो दिप्सन्तो भूर्यक्षाः ।
अन्तः पश्यन्ति वृजिनोत साधु सर्वं राजभ्यः परमा चिदन्ति ॥ ३ ॥

ते । आदित्यासः । उरवः । गभीराः । अदब्धासः । दिप्सन्तः । भूरिऽअक्षाः ।
अन्तरिति । पश्यन्ति । वृजिना । उत । साधु । सर्वम् । राजऽभ्यः । परमा । चित् । अन्ति ॥ ३ ॥

वेङ्कट० ते[5] आदित्याः बृहच्छरीराः गम्भीराः अहिंसिताः शत्रून् [6]हिंसितुम् इच्छन्तो बहुदर्शनाः । ते मनुष्याणाम्[6] अन्तः स्थित्वा पापानि साधूनि च पश्यन्ति । सर्वम् एषाम् अपि दूरस्थानि अन्तिके भवन्ति तत्रतत्र सद्भावात्[7] ॥ ३ ॥

धारयन्त आदित्यासो जगत् स्था देवा विश्वस्य भुवनस्य गोपाः ।
दीर्घाधियो रक्षमाणा असुर्यमृतावानश्चयमाना ऋणानि ॥ ४ ॥

---

१-१. नास्ति मूको. २-२. नास्ति अ[1]. †-† नास्ति वि[2]. ३. °त्राः इति वि[2] अ[1].
४-४. नास्ति अ[1]. †-† नास्ति वि[1]. ५. नास्ति वि[3] लपं. ६-६. हि ··· णाम् वि[2]; नास्ति अ[1].
७. सम्भवान् वि[2] लपं.

धारयन्तः । आदित्यासः । जगत् । स्थाः । देवाः । विश्वस्य । भुवनस्य । गोपाः ।
दीर्घऽधियः । रक्षमाणाः । असुर्यम् । ऋतऽवानः । चयमानाः । ऋणानि ॥ ४ ॥

**वेङ्कट०** धारयन्तः आदित्याः जङ्गमं स्थावरं च देवाः विश्वस्य भुवनस्य गोपायितारः दीर्घकर्माणः रक्षमाणाः असुराणां स्वभूतं बलं यज्ञियाः मनुष्याणाम् ऋणानि चायमानाः ॥ ४ ॥

विद्याम॑दित्या अव॑सो वो अ॒स्य यद॑र्यमन् भ॒य आ चि॑न्मयो॒भु ।
यु॒ष्माकं॑ मित्रावरुणा॒ प्रणी॑तौ॒ परि॒ श्वभ्रे॑व दुरि॒तानि॑ वृज्याम् ॥ ५ ॥

वि॒द्याम् । आ॒दि॒त्याः॒ । अव॑सः । वः॒ । अ॒स्य । यत् । अ॒र्य॒म॒न् । भ॒ये । आ । चि॒त् । म॒यः॒ऽभु ।
यु॒ष्माक॑म् । मि॒त्रा॒व॒रु॒णा॒ । प्रऽनी॑तौ । परि॑ । श्वभ्रा॑ऽइव । दुः॒ऽइ॒तानि॑ । वृ॒ज्या॒म् ॥ ५ ॥

**वेङ्कट०** हे आदित्याः! युष्मदीयं रक्षणमहं लभेय, अर्यमन्! मनुष्यस्य[1] भये सति यत् रक्षणम् आगत्य सुखं भावयति। हे मित्रावरुणौ! अहमादित्यानां [2]प्रणयने परि वर्जयामि अवटानीव दुरितानि[2] ॥ ५ ॥

[3]इति द्वितीयाष्टके सप्तमाध्याये षष्ठो वर्गः[3] ॥

सु॒गो हि वो॑ अर्यमन् मित्र॒ पन्था॑ अनृक्ष॒रो व॑रुण सा॒धुरस्ति॑ ।
तेना॑दित्या॒ अधि॑ वोचता॒ नो॒ यच्छ॑ता नो दुष्परि॒हन्तु॒ शर्म॑ ॥ ६ ॥

सु॒ऽगः । हि । व॒ः । अ॒र्य॒म॒न् । मि॒त्र॒ । पन्थाः॑ । अ॒नृ॒क्ष॒रः । व॒रु॒ण॒ । सा॒धुः । अस्ति॑ ।
तेन॑ । आ॒दि॒त्याः॒ । अधि॑ । वो॒च॒त॒ । न॒ः । यच्छ॑त । न॒ः । दु॒ःऽप॒रि॒हन्तु॑ । शर्म॑ ॥ ६ ॥

**वेङ्कट०** हे अर्यमन्! मित्र! वरुण! सुगमः कण्टकवर्जितश्च पन्थाः युष्माकम् अस्ति हि। तेन हे आदित्याः! अस्मान्[4] प्रणयन्तः[5] अस्माकमधिवचनं कुरुत। यच्छत [2]च अस्मभ्यम् शत्रुभिः दुष्परिहरणं सुखम्[2] ॥ ६ ॥

पिप॑र्तु नो॒ अदि॑ती॒ राज॑पु॒त्राति॒ द्वेषां॒स्यर्य॒मा सु॒गेभिः॑ ।
बृ॒हन्मि॒त्रस्य॒ वरु॑णस्य॒ शर्मोप॑ स्याम पु॒रुवी॑रा॒ अरि॑ष्टाः ॥ ७ ॥

पिप॑र्तु । न॒ः । अदि॑तिः । राज॑ऽपुत्रा । अति॑ । द्वेषां॑सि । अ॒र्य॒मा । सु॒ऽगेभिः॑ ।
बृ॒हत् । मि॒त्रस्य॑ । वरु॑णस्य । शर्म॑ । उप॑ । स्या॒म॒ । पु॒रु॒ऽवीराः॑ । अरि॑ष्टाः ॥ ७ ॥

---

१. यद् म° वि[२] अ[१] ल लपं. २-२. नास्ति वि[२] अ[१]. ३-३. नास्ति मूको. ४. ताम् वि[१२] अ[१] लपं.
५. °यत ल.

**वेङ्कट०** राजानः पुत्रा यस्याः सा अदितिः अस्मान् अति पारयतु सुगमैर्मार्गैः शत्रून्, अर्यमा च। मित्रावरुणयोर्महत् शर्म वयम् उप स्याम बहुपुत्रा अहिंसिताः ॥ ७ ॥

**तिस्रो भूमीर्धारयन् त्रीँरुत द्यून् त्रीणि व्रता विदथे अन्तरेषाम् ।**
**ऋतेनादित्या महि वो महित्वं तदर्यमन् वरुण मित्र चारु ॥ ८ ॥**

तिस्रः । भूमीः । धारयन् । त्रीन् । उत । द्यून् । त्रीणि । व्रता । विदथे । अन्तः । एषाम् ।
ऋतेन । आदित्याः । महि । वः । महिऽत्वम् । तत् । अर्यमन् । वरुण । मित्र । चारु ॥ ८ ॥

**वेङ्कट०** [1]महत्त्वात् लोका भूमय उच्यन्ते, दीप्तत्वाद् दिवः । तिस्रः एव वः[1] भूमयः सन्ति, दिवश्च । 'तिस्रो द्यावः सवितुः' ( ऋ १,३५,६ ) इति मन्त्रः । त्रीणि च यज्ञे अन्तः एषाम् व्रतानि इति सवनाभिप्रायम् । सत्येनैव महत् हे आदित्याः ! भवतां महत्त्वम् । तत् [2]कल्याणं च इति[2] ॥ ८ ॥

**त्री रोचना दिव्या धारयन्त हिरण्ययाः शुचयो धारपूताः ।**
**अस्वप्नजो अनिमिषा अदब्धा उरुशंसा ऋजवे मर्त्याय ॥ ९ ॥**

त्री । रोचना । दिव्या । धारयन्त । हिरण्ययाः । शुचयः । धारऽपूताः ।
अस्वप्नऽजः । अनिऽमिषाः । अदब्धाः । उरुऽशंसाः । ऋजवे । मर्त्याय ॥ ९ ॥

**वेङ्कट०** [3]दिव्यानि त्रीणि रोचनानि लोकान् इमे[3] धारयन्ति हिरण्मयशरीराः निर्मलाः धाराभिरिव पूताः जाग्रतो निमेषवर्जिताः अहिंसिताः साधवे[4] यजमानाय बह्वाशंसनाः ॥ ९ ॥

**त्वं विश्वेषां वरुणासि राजा ये च देवा असुर ये च मर्ताः ।**
**शतं नो रास्व शरदो विचक्षेऽश्यामायूंषि सुधितानि पूर्वा ॥ १० ॥**

त्वम् । विश्वेषाम् । वरुण । असि । राजा । ये । च । देवाः । असुर । ये । च । मर्ताः ।
शतम् । नः । रास्व । शरदः । विऽचक्षे । अश्याम । आयूंषि । सुऽधितानि । पूर्वा ॥ १० ॥

**वेङ्कट०** [5]उभयीनाम्† वरुण! दैवीनां‡ मानुषीणाम् च विशाम्[5] राजा असि[6] बलवन्![7] । सः त्वम् अस्माकम् शतम् शरदः विदर्शनाय देहि । अश्याम[8] अन्नानि त्वयि सुनिहितानि पूर्वाणि ॥ १० ॥

[9]इति द्वितीयाष्टके सप्तमाध्याये सप्तमो वर्गः[9] ॥

**न दक्षिणा वि चिकिते न सव्या न प्राचीनमादित्या नोत पश्चा ।**
**पाक्या चिद् वसवो धीर्या चिद् युष्मानीतो अभयं ज्योतिरश्याम् ॥ ११ ॥**

---

१-१. ···वपा वि[1] अ[1]. २-२. कला···वि[1]; काला···अ[1]. ३-३. ···निमे वि[1] अ[1]. ४. साधवो वि[1] अ[1] लपं. ५-५. ··· शान् वि[1]; त्रुटितम् अ[1]. † उभयेषाम् वि[1] ल लपं. ‡ देवी° ल लपं. ६. नास्ति मूको. ७. °वान् मूको. ८. °श्यामः वि[1,1] अ[1]. ९-९. नास्ति मूको.

न । दक्षिणा । वि । चिकिते । न । सव्या । न । प्राचीनम् । आदित्याः । न । उत । पश्चा ।
पाक्या । चित् । वसवः । धीर्या । चित् । युष्माऽनीतः । अभयम् । ज्योतिः । अश्याम् ॥११॥

**वेङ्कट०** रात्रावन्धकारसद्भावात्[1] न [2]चतसृष्वपि दिक्षु किञ्चिदपि ज्ञायते । तथा सति[2] पक्तव्योऽप्राज्ञो[3] धीरो वाऽहं युष्माभिः प्रणीतः अभयम् तेजः अश्याम् हे वासयितारः ! ॥ ११ ॥

यो राजभ्य ऋतनिभ्यो ददाश यं वर्धयन्ति पुष्टयश्च नित्याः ।
स रेवान् याति प्रथमो रथेन वसुदावा विदथेषु प्रशस्तः ॥ १२ ॥

यः । राजभ्यः । ऋतनिऽभ्यः । ददाश । यम् । वर्धयन्ति । पुष्टयः । च । नित्याः ।
सः । रेवान् । याति । प्रथमः । रथेन । वसुऽदावा । विदथेषु । प्रऽशस्तः ॥ १२ ॥

**वेङ्कट०** निगदव्याख्याता ॥ १२ ॥

शुचिरपः सूयवसा अदब्ध उप क्षेति वृद्धवयाः सुवीरः ।
नकिष्टं घ्नन्त्यन्तितो न दूराद् य आदित्यानां भवति प्रणीतौ ॥ १३ ॥

शुचिः । अपः । सुऽयवसाः । अदब्धः । उप । क्षेति । वृद्धऽवयाः । सुऽवीरः ।
नकिः । तम् । घ्नन्ति । अन्तितः । न । दूरात् । यः । आदित्यानाम् । भवति । प्रऽनीतौ ॥१३॥

**वेङ्कट०** शुचिः, शोचतेः [4]दीप्तिकर्मणः, उदकानि सुसस्यानि अहिंसितः उप निवसति[4] प्रवृद्धान्नः सुपुत्रः । तम् न केचन[5] घ्नन्ति समीपात् दूरात् वोत्थाय, यः[6] आदित्यानाम् भवति प्रणयने ॥ १३ ॥

अदिते मित्र वरुणोत मृळ यद् वो वयं चकृमा कच्चिदागः ।
उर्वश्यामभयं ज्योतिरिन्द्र मा नो दीर्घा अभि नशन्तमिस्राः ॥ १४ ॥

अदिते । मित्र । वरुण । उत । मृळ । यत् । वः । वयम् । चकृम । कत् । चित् । आगः ।
उरु । अश्याम् । अभयम् । ज्योतिः । इन्द्र । मा । नः । दीर्घाः । अभि । नशन् । तमिस्राः ॥१४॥

**वेङ्कट०** अदिते ! मित्र ! अपि च वरुण ! दयां कुरु, [7]यत्[†] किम् चित् वः वयम् आगः कृतवन्तः । हे इन्द्र ![‡][7] महत् अभयम् ज्योतिः अश्याम् । मा[8] अस्मान् दीर्घाः अभि व्याप्नुवन्तु तमिस्राः ॥ १४ ॥

---

१. °रः सद्भावात् वि[1] अ[1]; °रसंभवात् लपं. २-२. च ⋯ वि[1] अ[1]. ३. वक्तव्यो° वि[1,2] अ[1] लपं. ४-४. दीप्ति⋯ति वि[1]; दीप्ति ⋯ अ[1]. ५. तेवन वि[1] अ[1]. ६. नास्ति वि[1] लपं. ७-७. त्रुटितम् वि[2]; नास्ति अ[1]. † यदि वि[1] लपं. ‡ नास्ति लपं. ८. नास्ति लपं.

उभे अस्मै पीपयतः समीची दिवो वृष्टिं सुभगो नाम पुष्यन् ।
उभा क्षयावाजयन् याति पृत्सूभावर्धौ भवतः साधू अस्मै ॥ १५ ॥

उभे इति । अस्मै । पीपयतः । समीची इति सम्ऽईची । दिवः । वृष्टिम् । सुऽभगः । नाम । पुष्यन् ।
उभा । क्षयौ । आऽजयन् । याति । पृत्ऽसु । उभौ । अर्धौ । भवतः । साधू इति । अस्मै ॥१५॥

**वेङ्कट०** द्यावापृथिवी समीची[1] अस्मै कामम् आप्याययतः । तत्र दिवः [2]असौ सुभगः वृष्टिम् पुष्यन् भवति । नाम इति पूरणम्[2] । एवमह्नि रात्रौ चाऽऽभिमुख्येन जयन्[3] याति युद्धेषु । तथोभे अर्धे पूर्वकायोऽपरकायश्च अस्मै साधुनी भवतः ॥ १५ ॥

या वो माया अभिद्रुहे यजत्राः पाशा आदित्या रिपवे विचृत्ताः ।
अश्वीव ताँ अति येषं रथेनारिष्टा उरावा शर्मन्त्स्याम ॥ १६ ॥

याः । वः । मायाः । अभिऽद्रुहे । यजत्राः । पाशाः । आदित्याः । रिपवे । विऽचृत्ताः ।
अश्वीऽइव । तान् । अति । येषम् । रथेन । अरिष्टाः । उरौ । आ । शर्मन् । स्याम ॥ १६ ॥

**वेङ्कट०** याः [4]वः मायाः† अभिद्रोग्धुः हे‡ यज्ञियाः!, ये च पाशाः† हे आदित्याः! रिपूणाम्[4] अर्थाय प्रसारिताः, अश्ववान् इव तान् रथेन अहमतीत्य यायाम्, अक्षताश्च महति सुखे आ भवेमेति[1] ॥ १६ ॥

माहं मघोनो वरुण प्रियस्य भूरिदाव्न आ विदं शूनमापेः ।
मा रायो राजन्त्सुयमादव स्थां बृहद् वदेम विदथे सुवीराः ॥ १७ ॥

मा । अहम् । मघोनः । वरुण । प्रियस्य । भूरिऽदाव्नः । आ । विदम् । शूनम् । आपेः ।
मा । रायः । राजन् । सुऽयमात् । अव । स्थाम् । बृहत् । वदेम । विदथे । सुऽवीराः ॥१७॥

**वेङ्कट०** न अहम् धनवतः[5] सख्युः हे [6]वरुण! शूनम् मां वृद्धं त्वं धनप्रदानेन वर्धयेति आविदम् आवेदयानि बहुदानस्य[6] आपेः च। मा[7] अहम् राजन्![8] धनात्[8] सुयमात्[9] अवरूढो भवामि सुष्ठु नियच्छतीति ॥ १७ ॥

[10]इति द्वितीयाष्टके सप्तमाध्यायेऽष्टमो वर्गः[10] ॥

[ २८ ]

[10]कूर्मो गार्त्समदो गृत्समदो वा ऋषिः । वरुणो देवता । त्रिष्टुप् छन्दः[10] ।

इदं कवेरादित्यस्य स्वराजो विश्वानि सान्त्यभ्यस्तु मह्ना ।
अति यो मन्द्रो यजथाय देवः सुकीर्तिं भिक्षे वरुणस्य भूरेः ॥ १ ॥

---

१. नास्ति मूको. २-२. °सौ ··· णम् वि[2] अ[2]. ३. जनयन् ल लपं. ४-४. वः पूणाम् वि[2] अ[2]. † नास्ति मूको. ‡ ये वि[1] ल लपं. ५. मघवतः लपं. ६-६. °ण! दुदानस्य वि[2] अ[2]. ७. नास्ति वि[2]. ८. नास्ति वि[1] ल. ९. सुदयात् वि[1] लपं. १०-१०. नास्ति मूको.

इदम् । कवेः । आदित्यस्य । स्वऽराजः । विश्वानि । सन्ति । अभि । अस्तु । मह्ना ।
अति । यः । मन्द्रः । यजथाय । देवः । सुऽकीर्तिम् । भिक्षे । वरुणस्य । भूरेः ॥ १ ॥

**वेङ्कट०** इदम् अहं क्रान्तस्यादितेः पुत्रस्य स्वराजः विश्वानि [1]विद्यमानानि कर्माणि महता स्तोत्रेणाभिभवामि । मादयिता यः† देवः अत्यन्तं यजमानाय भवति[1], तस्य प्रवृद्धस्य[2] वरुणस्य [3]शोभनकीर्तनं धनम्[3] भिक्षे ॥ १ ॥

**तव व्रते सुभगासः स्याम स्वाध्यो वरुण तुष्टुवांसः ।**
**उपायन उषसां गोमतीनामग्नयो न जरमाणा अनु द्यून् ॥ २ ॥**

तव । व्रते । सुऽभगासः । स्याम । सुऽआध्यः । वरुण । तुस्तुऽवांसः ।
उपऽअयने । उषसाम् । गोऽमतीनाम् । अग्नयः । न । जरमाणाः । अनु । द्यून् ॥ २ ॥

**वेङ्कट०** तव कर्मणि सुभगाः स्याम सुकर्माणो हे वरुण! [4]स्वाम् तुष्टुवांसः । उषसाम् शब्दवतीनाम् उपायने† अग्नयः इव स्तूयमाना[4] अन्वहम् । ते यथा दीप्ताः शोभनाः, एवं[5] वयमपि स्यामेति ॥ २ ॥

**तव स्याम पुरुवीरस्य शर्मन्नुरुशंसस्य वरुण प्रणेतः ।**
**यूयं नः पुत्रा अदितेरदब्धा अभि क्षमध्वं युज्याय देवाः ॥ ३ ॥**

तव । स्याम । पुरुऽवीरस्य । शर्मन् । उरुऽशंसस्य । वरुण । प्रनेतरिति प्रऽनेतः ।
यूयम् । नः । पुत्राः । अदितेः । अदब्धाः । अभि । क्षमध्वम् । युज्याय । देवाः ॥ ३ ॥

**वेङ्कट०** तव स्याम बहुवीरस्य[6] सुखे बहुस्तुतस्य हे वरुण! प्रणेतः! । [7]यूयम् अस्मान् अदितेः पुत्राः! अहिंसिताः! अश्ववहनाय शक्तान्† कुरुत[7] देवाः![8] । 'अभि नो वीरो अर्वति क्षमेत' ( ऋ २,३३,१ ) इति मन्त्रः ॥ ३ ॥

**प्र सीमादित्यो असृजद् विधर्ताँ ऋतं सिन्धवो वरुणस्य यन्ति ।**
**न श्राम्यन्ति न वि मुचन्त्येते वयो न पप्तू रघुया परिज्मन् ॥ ४ ॥**

प्र । सीम् । आदित्यः । असृजत् । विऽधर्ता । ऋतम् । सिन्धवः । वरुणस्य । यन्ति ।
न । श्राम्यन्ति । न । वि । मुचन्ति । एते । वयः । न । पप्तुः । रघुऽया । परिऽज्मन् ॥ ४ ॥

**वेङ्कट०** सिन्धून् वरुणः[9] सर्वतः प्र असृजत् विधर्ता । वरुणस्य उदकमेव ते न प्राप्नुवन्ति [10]न श्राम्यन्ति न च स्यन्दनं कदाचित् वि मुञ्चन्ति† एते‡ । पक्षिणः[10] इव पतन्ति लघवः परितो गमने ॥ ४ ॥

---

१-१. °माना ⋯ भ° वि[२] अ[१]. † नास्ति मूको. २. वृद्ध° वि[१]. ३-३. °तनधनम् वि[१] लपं. ४-४. त्रुटितम् वि[२] अ[१]. † नास्ति मूको ५. एव वि[२]. ६. °वीर्यस्य वि[२] अ[१]. ७-७. यूय ⋯ रुत वि[२] अ[१]. † शक्तं वि[१] ल लपं. ८ नास्ति मूको. ९. नास्ति वि[१] लपं. १०-१०. त्रुटितम् वि[२] अ[१]. † °मुञ्चति वि[१] ल लपं. ‡ नास्ति मूको.

वि मच्छ्रथाय रशनामिवाग ऋध्याम ते वरुण खामृतस्य ।
मा तन्तुश्छेदि वयतो धियं मे मा मात्रा शार्यपसः पुर ऋतोः ॥ ५ ॥

वि । मत् । श्रथय । रशनाम्ऽइव । आगः । ऋध्याम । ते । वरुण । खाम् । ऋतस्य ।
मा । तन्तुः । छेदि । वयतः । धियम् । मे । मा । मात्रा । शारि । अपसः । पुरा । ऋतोः ॥५॥

**वेङ्कट०** हे वरुण! मत्तो रज्जुम् इव पापं विश्लथय[1] । प्राप्नुयाम तव अभ्युदयस्य नदीम् । मा सूत्रम् छिन्नं[2] भवतु कर्म [3]वयतः मे । मा च मात्रा शीर्णा भवतु । कर्मणः[3] पुरा संस्थानकालाद् इति कर्मकरणं[4] वस्त्रकरणमिवाह ॥ ५ ॥

[5]इति द्वितीयाष्टके सप्तमाध्याये नवमो वर्गः[5] ॥

अपो सु म्यक्ष वरुण भियसं मत् सम्राळृतावोऽनु मा गृभाय ।
दामेव वत्साद् वि मुमुग्ध्यंहो नहि त्वदारे निमिषश्चनेशे ॥ ६ ॥

अपो इति । सु । म्यक्ष । वरुण । भियसम् । मत् । सम्ऽराट् । ऋतऽवः । अनु । मा । गृभाय ।
दामऽइव । वत्सात् । वि । मुमुग्धि । अंहः । नहि । त्वत् । आरे । निऽमिषः । चन । ईशे ॥६॥

**वेङ्कट०** हे वरुण! मत्तो भयं सुष्ठु अपगमय । हे सम्राट्! सत्यवन्! माम् अनुगृहाण । [6]वत्सात् तन्तिमिव पापं विमोचय । नहि त्वयि असति[6] कश्चन निमेषस्य चेश्वरो भवति ॥ ६ ॥

मा नो वधैर्वरुण ये त इष्टावेनः कृण्वन्तमसुर भ्रीणन्ति ।
मा ज्योतिषः प्रवसथानि गन्म वि षू मृधः शिश्रथो जीवसे नः ॥ ७ ॥

मा । नः । वधैः । वरुण । ये । ते । इष्टौ । एनः । कृण्वन्तम् । असुर । भ्रीणन्ति ।
मा । ज्योतिषः । प्रऽवसथानि । गन्म । वि । सु । मृधः । शिश्रथः । जीवसे । नः ॥ ७ ॥

**वेङ्कट०** मा अस्मान् आयुधैः हे वरुण! हिंसीः, ये तव यज्ञे वर्तामहे । पापं [7]कुर्वन्तं बलवन्! तवाऽऽयुधानि यानि हिंसन्ति तैः । मा[7] वयम् ज्योतिषः प्रवासान् वियोगान् गन्म[8], सूर्यं पश्येम । अस्माकं जीवनाय शत्रून् सुष्ठु विश्रथयेति ॥ ७ ॥

नमः पुरा ते वरुणोत नूनमुतापरं तुविजात ब्रवाम ।
त्वे हि कं पर्वते न श्रितान्यप्रच्युतानि दूळभ व्रतानि ॥ ८ ॥

---

१. विश्लषय वि[2] अ[1]. २. नास्ति वि[1]. ३-३. नास्ति वि[1] अ[2]. ४. करणं वि[1] लपं ५-५. नास्ति मूको. ६-६. ⋯सति वि[2] अ[1]. ७-७. कुर्वे ⋯ वि[2] अ[1]. ८. अगन्म मूको.

नमः । पुरा । ते । वरुण । उत । नूनम् । उत । अपरम् । तुविऽजात । ब्रवाम ।
त्वे इति । हि । कम् । पर्वते । न । श्रितानि । अप्रऽच्युतानि । दुःऽदभ । व्रतानि ॥ ८ ॥

**वेङ्कट०** पुरा च ते[1] नमः वरुण! [2]सम्प्रति च अपि च तवोर्ध्वमपि बहुजनन! ब्रवाम[2]। त्वयि हि पर्वते इव श्रितानि, कम् इति पूरणम्, अप्रच्युतानि हे[3] दुर्दभ![4] तव कर्माणि ॥ ८ ॥

**परं ऋणा सावीरध मत्कृतानि माहं राजन्नन्यकृतेन भोजम् ।**
**अव्युष्टा इन्नु भूयसीरुषास आ नो जीवान् वरुण तासु शाधि ॥ ९ ॥**

परा । ऋणा । सावीः । अध । मत्ऽकृतानि । मा । अहम् । राजन् । अन्यऽकृतेन । भोजम् ।
अविऽउष्टाः । इत् । नु । भूयसीः । उषसः । आ । नः । जीवान् । वरुण । तासु । शाधि ॥९॥

**वेङ्कट०** अपि च अस्मत्कृतानि ऋणानि परा सावीः, मा[5] अहम् [6]राजन्! अन्यप्रयुक्तेन धनेन भोजम्। अव्युष्टाः एव मम बह्व्यः[6] उषसः। ऋणभयादनागतायां निद्रायाम् एवम् अन्युच्छन्तीषु तास्वस्मान् जीवतः हे वरुण! कुरु स्वेनैव धनेन ॥ ९ ॥

**यो मे राजन् युज्यो वा सखा वा स्वप्ने भयं भीरवे मह्यमाह ।**
**स्तेनो वा यो दिप्सति नो वृको वा त्वं तस्माद् वरुण पाह्यस्मान् ॥ १० ॥**

यः । मे । राजन् । युज्यः । वा । सखा । वा । स्वप्ने । भयम् । भीरवे । मह्यम् । आह ।
स्तेनः । वा । यः । दिप्सति । नः । वृकः । वा । त्वम् । तस्मात् । वरुण । पाहि । अस्मान् ॥१०॥

**वेङ्कट०** यः मे राजन् वरुण! नियोक्तव्यः[7] वा [8]सखा वा स्वप्ने भयम् दृष्टमिति भीरवे मह्यम् वदति, स्तेनः[8] वा वृकः वा अस्मान् हिंसितुमिच्छति त्वम् तस्मात् वरुण! अस्मान् रक्षेति ॥ १० ॥

**माहं मघोनो वरुण प्रियस्य भूरिदाव्न आ विदं शूनमापेः ।**
**मा रायो राजन्त्सुयमादव स्थां बृहद् वदेम विदथे सुवीराः ॥ ११ ॥**

मा । अहम् । मघोनः । वरुण । प्रियस्य । भूरिऽदाव्नः । आ । विदम् । शूनम् । आपेः ।
मा । रायः । राजन् । सुऽयमात् । अव । स्थाम् । बृहत् । वदेम । विदथे । सुऽवीराः ॥ ११ ॥

**वेङ्कट०** ( ऋ २,२७,१७ द्र. ) ॥ ११ ॥

[9]इति द्वितीयाष्टके सप्तमाध्याये दशमो वर्गः[9] ॥

---

१. तव वि[1] ल लपं.　२-२. …वाम वि[2] अ.　३. नास्ति ल लपं.　४. दुर्दम्भ अ[1].
५. च लपं.　६-६. …ह्य वि[1] अ[1].　७. °क्त्यो नो वि[2] अ[1].　८-८. नास्ति वि[2]; …नो अ[1].
९-९. नास्ति मूको.

[ २९ ]

[1]कूर्मो गार्त्समदो गृत्समदो वा ऋषिः। विश्वे देवा देवता। त्रिष्टुप् छन्दः[1]।

धृतव्रता आदित्या इषिरा आरे मत् कर्त रहसूरिवागः।
शृण्वतो वो वरुण मित्र देवा भद्रस्य विद्वाँ अवसे हुवे वः॥ १॥

धृतऽव्रताः। आदित्याः। इषिराः। आरे। मत्। कर्त। रहसूःऽइव। आगः।
शृण्वतः। वः। वरुण। मित्र। देवाः। भद्रस्य। विद्वान्। अवसे। हुवे। वः॥ १॥

**वेङ्कट०** हे धृतकर्माणः! आदित्याः! हविषाम् [2]एषणशीलाः! दूरे मत्तः कुरुत पापम्, ये रहस्यमन्यस्मै प्रेरयन्ति तानिव मन्त्रवेलायाम्। हे वरुणादयः! स्तुतीः शृण्वतः भवतो† भद्रं‡ जानन् रक्षणाय ह्वयामि। पुनः वः इति पूरणम् इति[2]॥ १॥

यूयं देवाः प्रमतिर्यूयमोजो यूयं द्वेषांसि सनुतर्युयोत।
अभिक्षत्तारो अभि च क्षमध्वमद्या च नो मृळयतापरं च॥ २॥

यूयम्। देवाः। प्रऽमतिः। यूयम्। ओजः। यूयम्। द्वेषांसि। सनुतः। युयोत।
अभिऽक्षत्तारः। अभि। च। क्षमध्वम्। अद्य। च। नः। मृळयत। अपरम्। च॥ २॥

**वेङ्कट०** [3]यूयम् देवाः! प्रमतिमाश्रिताः कुरुत† ओजः च, यूयम् एव अन्तर्हितानि द्वेषांसि पृथक् कुरुत, अभिक्षमणशीलाः अभि‡ च क्षमध्वम्, अद्य इवः च अस्मान् सुखयतेति[3]॥ २॥

किमू नु वः कृणवामापरेण किं सनेन वसव आप्येन।
यूयं नो मित्रावरुणादिते च स्वस्तिमिन्द्रामरुतो दधात॥ ३॥

किम्। ऊँ इति। नु। वः। कृणवाम। अपरेण। किम्। सनेन। वसवः। आप्येन।
यूयम्। नः। मित्रावरुणा। अदिते। च। स्वस्तिम्। इन्द्रामरुतः। दधात॥ ३॥

**वेङ्कट०** [4]युष्मभ्यं सम्प्रतितनेन किम् उ सनातनेन† हविषा परिचरणम् कृणवाम, अथवा अपरेण इति। शिष्टं स्पष्टम्‡[4]॥ ३॥

हये देवा यूयमिदापयः स्थ ते मृळत नाधमानाय मह्यम्।
मा वो रथो मध्यमवाळृते भून्मा युष्मावत्स्वापिषु श्रमिष्म॥ ४॥

---

१-१. नास्ति मूको. २-२. एषण ··· वि[2] अ[1]. † °तां वि[1] ल लपं. ‡ अभद्रम् वि[2].
३-३. त्रुटितम् वि[3] अ[1]. † °रुथ वि[1] लपं. ‡ अपि वि[1] लप. ४-४. त्रुटितम् वि[3] अ[1].
† संस्तुतेन लपं; संस्कृतेन वि[1]. ‡ °ष्टम् इति वि[1].

ह्रुये । दे॒वाः॒ । यू॒यम् । इत् । आ॒पयः॑ । स्थ । ते । मृ॒ळ॒त॒ । नाध॑मानाय । मह्य॑म् ।
मा । वः॒ । रथः॑ । म॒ध्य॒म॒ऽवाट् । ऋ॒ते । भू॒त् । मा । यु॒ष्माव॑त्ऽसु । आ॒पिषु॑ । श्र॒मि॒ष्म ॥ ४ ॥

वेङ्कट० [1]हे देवाः! यूयम् एव मम बन्धवः स्थ, ते सुखयत याचमानाय मह्यम् । मा युष्माकम् रथः मध्ये भवन्तमन्तरिक्षं यो वहति दिवो युष्मान् स युष्माभिः ऋते भवतु । भवद्भिः सह गच्छतु । मा वयं युष्मत्सदृशेषु बन्धुषु सत्सु श्रमाम धनाभावादिनेति[1] ॥ ४ ॥

प्र व॒ एको॑ मिमय॒ भूर्यागो॒ यन्मा॑ पि॒तेव॑ कित॒वं श॑शा॒स ।
आ॒रे पाशा॑ आ॒रे अ॒घानि॑ देवा॒ मा माधि॑ पु॒त्रे विमि॑व ग्रभीष्ट ॥ ५ ॥

प्र । वः॒ । एकः॑ । मि॒म॒य॒ । भूरि॑ । आगः॑ । यत् । मा॒ । पि॒ताऽइ॑व । कि॒त॒वम् । श॒शा॒स ।
आ॒रे । पाशाः॑ । आ॒रे । अ॒घानि॑ । दे॒वाः॒ । मा । मा॒ । अधि॑ । पु॒त्रे । विम्ऽइ॑व । ग्र॒भी॒ष्ट॒ ॥५॥

वेङ्कट० [2]युष्माकम् एकः वरुणः भूरि पापं हिनस्ति । यस्मात् माम् पितेव कितवपुत्रम् शशास । वरुणभयाद् हि पापं† नानुतिष्ठति । हे देवाः! वरुणपाशाः मत्तो दूरे भवन्तु, एवम् आहन्तॄणि चान्यानि । मा माम् अधि पुत्रे पश्यति पक्षिणम् इव व्याधः ग्रभीष्ट गृह्णीध्वं पाशैः[2] ॥ ५ ॥

अ॒र्वाञ्चो॑ अ॒द्या भ॑वता यजत्रा॒ आ वो॒ हार्दि॒ भय॑मानो व्ययेयम् ।
त्राध्वं॑ नो देवा नि॒जुरो॒ वृक॑स्य॒ त्राध्वं॑ क॒र्तादव॒पदो॑ यजत्राः ॥ ६ ॥

अ॒र्वाञ्चः॑ । अ॒द्य । भ॒व॒त॒ । य॒ज॒त्राः॒ । आ । वः॒ । हार्दि॑ । भय॑मानः । व्य॒ये॒य॒म् ।
त्राध्व॑म् । नः॒ । दे॒वाः॒ । नि॒ऽजुरः॑ । वृक॑स्य । त्राध्व॑म् । क॒र्तात् । अ॒व॒ऽपदः॑ । य॒ज॒त्राः॒ ॥ ६ ॥

वेङ्कट० [3]हे यष्टव्याः देवाः! इतोऽभिमुखाः अद्य भवत । अहं बिभ्यत् युष्माकं हार्दं प्रियम् आ व्ययेयम् । तेनात्मानमावृणोमि । तथा सति रक्षध्वम्† अस्मान् नितरां हिंसातः वृकस्य । रक्षध्वं† चाऽवपातयितुः श्वभ्राद् इति[3] ॥ ६ ॥

माहं म॒घोनो॑ वरुण प्रि॒यस्य॑ भूरि॒दाव्न॒ आ वि॑दं॒ शून॑मा॒पेः ।
मा रा॒यो रा॑जन्त्सु॒यमा॒दव॑ स्थां बृ॒हद् व॑देम वि॒दथे॑ सु॒वीराः॑ ॥ ७ ॥

मा । अ॒हम् । म॒घोनः॑ । व॒रु॒ण॒ । प्रि॒यस्य॑ । भू॒रि॒ऽदाव्नः॑ । आ । वि॒द॒म् । शून॑म् । आ॒पेः ।
मा । रा॒यः । रा॒ज॒न् । सु॒ऽयमा॑त् । अव॑ । स्या॒म् । बृ॒हत् । व॒दे॒म॒ । वि॒दथे॑ । सु॒ऽवीराः॑ ॥ ७ ॥

---

1-1. त्रुटितम् वि[२] अ[१]. २-२. त्रुटितम् वि[२] अ[१]. † चापं मूको. ३-३. त्रुटितम् वि[२] अ[१]; °तुश्वभ्रा° मूको. † रक्षत ल प्रस्तावः.

वेङ्कट० ( ऋ २,२७,१७ द्र. ) ॥ ७ ॥

[1]इति द्वितीयाष्टके सप्तमाध्याये एकादशो वर्गः[1] ॥

[ ३० ]

[1]गृत्समदः भार्गवः शौनकः ( पूर्वम् आङ्गिरसः शौनहोत्रः ) ऋषिः । इन्द्रो देवता, षष्ठ्याः इन्द्रासोमौ, अष्टम्याः पूर्वाऽर्धर्चस्य सरस्वती, नवम्या बृहस्पतिः, एकादश्या मरुतः । त्रिष्टुप् छन्दः, एकादशी जगती[1] ।

ऋतं देवाय कृण्वते सवित्र इन्द्रायाहिघ्ने न रमन्त आपः ।
अहरहर्यात्यक्तुरपां कियात्या प्रथमः सर्ग आसाम् ॥ १ ॥

ऋतम् । देवाय । कृण्वते । सवित्रे । इन्द्राय । अहिऽघ्ने । न । रमन्ते । आपः ।
अहःऽअहः । याति । अक्तुः । अपाम् । कियति । आ । प्रथमः । सर्गः । आसाम् ॥ १ ॥

वेङ्कट० [2]गृत्समदः । यथालिङ्गदेवतं सूक्तम्, एवंपूर्वम् अपि च । आदितः पञ्चैन्द्र्यः । सत्यम् कुर्वते प्रेरयित्रे देवाय इन्द्राय अहिघ्ने न कदाचिदपि आपः विमिश्रं कुर्वन्ति, सर्वदा निर्गच्छन्ति । अन्वहम् अपाम् बिन्दुरागच्छति । एवम् अपाम् अन्तोऽस्माभिर्न दृश्यते । अथ कियति काले स्वित्† आसाम् अपाम् प्रथमः सर्गः । अनादिः अपर्यन्तः इत्युक्तं भवति[2] ॥ १ ॥

यो वृत्राय सिनमत्राभरिष्यत् प्र तं जनित्री विदुष उवाच ।
पथो रदन्तीरनु जोषमस्मै दिवेदिवे धुनयो यन्त्यर्थम् ॥ २ ॥

यः । वृत्राय । सिनम् । अत्र । अभरिष्यत् । प्र । तम् । जनित्री । विदुषे । उवाच ।
पथः । रदन्तीः । अनु । जोषम् । अस्मै । दिवेऽदिवे । धुनयः । यन्ति । अर्थम् ॥ २ ॥

वेङ्कट० [3]यः इन्द्रो वृत्रं हन्तुं बन्धकं वज्रनिमित्तबन्धम्† अत्र अभरत्, तम् इन्द्रम् वृत्रस्य माता विदुषे वृत्राय 'अयं त्वां हन्तुमुद्युक्तः' इत्युवाच, उक्त्वा च तस्योपर्यशेत । तथा मन्त्रः— 'उत्तरा सूरधरः पुत्र आसीत्' ( ऋ १,३२,९ ) इति । अथ वृत्रे हते मार्गान् खनन्त्यः इन्द्रस्य वशम् अन्वहं नद्यः प्रवणं प्रति गच्छन्ति[3] ॥ २ ॥

ऊर्ध्वो ह्यस्थादध्यन्तरिक्षेऽधा वृत्राय प्र वधं जभार ।
मिहं वसान उप हीमदुद्रोत् तिग्मायुधो अजयच्छत्रुमिन्द्रः ॥ ३ ॥

---

१-१. नास्ति मूको. २-२. त्रुटितम् वि[2] अ[1]. † °लेन्वित् मूको; °ले चित् ऌ प्रस्तावः
३-३. त्रुटितम् वि[2] अ[1]. † °मित्तगन्धम् मूको.

ऊर्ध्वः । हि । अस्थात् । अधि । अन्तरिक्षे । अध । वृत्राय । प्र । वधम् । जभार ।
मिहम् । वसानः । उप । हि । ईम् । अदुद्रोत् । तिग्मऽआयुधः । अजयत् । शत्रुम् । इन्द्रः ॥३॥

वेङ्कट० [1]इन्द्रः ऊर्ध्वः अतिष्ठत् अन्तरिक्षे। वृत्रस्याधः स्थितस्य वज्रं प्र जहार। तदानीं स वृत्र एनं वृष्टिमाच्छादयन् उप दुद्राव। तम् शत्रुम् इन्द्रः तीक्ष्णायुधः अजयत् इति[1] ॥ ३ ॥

बृहस्पते तपुषाश्नेव विध्य वृकद्वरसो असुरस्य वीरान् ।
यथा जघन्थ धृषता पुरा चिदेवा जहि शत्रुमस्माकमिन्द्र ॥ ४ ॥

बृहस्पते । तपुषा । अश्नाऽइव । विध्य । वृकऽद्वरसः । असुरस्य । वीरान् ।
यथा । जघन्थ । धृषता । पुरा । चित् । एव । जहि । शत्रुम् । अस्माकम् । इन्द्र ॥ ४ ॥

वेङ्कट० इन्द्रसहाय बृहस्पते! तेजसा अश्ना इव विध्य आदीयमानद्वारान्[2] वृत्रस्य वीरान् । हे इन्द्र! त्वम् यथा पुरा वज्रेण हतवानसि, तथा इदानीमपि अस्माकम् शत्रुम् जहि ॥ ४ ॥

अव क्षिप दिवो अश्मानमुच्चा येन शत्रुं मन्दसानो निजूर्वाः ।
तोकस्य सातौ तनयस्य भूरेरस्माँ अर्धं कृणुतादिन्द्र गोनाम् ॥ ५ ॥

अव । क्षिप । दिवः । अश्मानम् । उच्चा । येन । शत्रुम् । मन्दसानः । निऽजूर्वाः ।
तोकस्य । सातौ । तनयस्य । भूरेः । अस्मान् । अर्धम् । कृणुतात् । इन्द्र । गोनाम् ॥५॥

वेङ्कट० उच्चैः स्थितम् दिवः अव क्षिप वज्रम्, येन पुरा त्वम् हृष्यमाणः शत्रुम् हिंसितवानसि। बहोः पुत्रस्य पौत्रस्य भजननिमित्तम् अस्मान् प्रति त्वदीयानां गवाम् अर्धम् कृणुताद् इति ॥ ५ ॥

[3]इति द्वितीयाष्टके सप्तमाध्याये द्वादशो वर्गः[3] ॥

प्र हि क्रतुं वृहथो यं वनुथो रध्रस्य स्थो यजमानस्य चोदौ ।
इन्द्रासोमा युवमस्माँ अविष्टमस्मिन् भयस्थे कृणुतमु लोकम् ॥ ६ ॥

प्र । हि । क्रतुम् । वृहथः । यम् । वनुथः । रध्रस्य । स्थः । यजमानस्य । चोदौ ।
इन्द्रासोमा । युवम् । अस्मान् । अविष्टम् । अस्मिन् । भयऽस्थे । कृणुतम् । ऊँ इति । लोकम् ॥ ६ ॥

---

१-१. त्रुटितम् वि[2] अ[1]. २. मदीयमानः मदकान् मूको. ३-३. नास्ति मूको.

वेङ्कट० [1]इन्द्रासोमौ! यम् हथः। तस्य कर्म प्र वृहथः विश्लथयथः† राधकस्य। यजमानस्य चोदयितारौ च भवथः। तौ युवम् अस्मान् रक्षतम्। अस्मिन्‡ सङ्ग्रामे कृणुतम् विलोकनम्$ अथवा स्थानम् इति[1] ॥ ६ ॥

न मा तमन्न श्रमन्नोत तन्द्रन्न वोचाम मा सुनोतेति सोमम्।
यो मे पृणाद् यो ददद् यो निबोधाद् यो मा सुन्वन्तमुप गोभिरायत् ॥ ७ ॥

न। मा। तमत्। न। श्रमत्। न। उत। तन्द्रत्। न। वोचाम। मा। सुनोत। इति। सोमम्।
यः। मे। पृणात्। यः। ददत्। यः। निऽबोधात्। यः। मा। सुन्वन्तम्। उप। गोभिः। आ। अयत् ॥ ७ ॥

वेङ्कट० [2]न माम् इन्द्रो ग्लपयतु। स्वयं च न श्राम्यतु, अपि च मा तन्द्रिं करोतु†। वयं प्रमादादपि सोमम् मा सुनोत इति न वोचाम। यः मम कामं पूरयति। यः च धनं प्रयच्छति। उक्तं च शृणोति। यः च माम् सुन्वन्तम् गोभिः सह उप आ‡ गच्छतीति[2] ॥ ७ ॥

सरस्वति त्वमस्माँ अविड्ढि मरुत्वती धृषती जेषि शत्रून्।
त्यं चिच्छर्धन्तं तविषीयमाणमिन्द्रो हन्ति वृषभं शण्डिकानाम् ॥ ८ ॥

सरस्वति। त्वम्। अस्मान्। अविड्ढि। मरुत्वती। धृषती। जेषि। शत्रून्।
त्यम्। चित्। शर्धन्तम्। तविषीऽयमाणम्। इन्द्रः। हन्ति। वृषभम्। शण्डिकानाम् ॥ ८ ॥

वेङ्कट० [3]'सरस्वति त्वमित्यस्मिन्नर्धर्चे मध्यमा तु वाक्' इति शौनकः ( बृदे ४,८५ )। हे सरस्वति! त्वम् अस्मान् रक्ष। मरुद्भिः तद्वती धर्षयन्ती जयसि शत्रून्। त्यम् चित् वेगं कुर्वन्तं बलमिवाचरन्तम् इन्द्रः हन्ति असुराणामीश्वरं वृत्रम् शत्रुमिति†[3] ॥ ८ ॥

यो नः सनुत्य उत वा जिघत्नुरभिख्याय तं तिगितेन विध्य।
बृहस्पत आयुधैर्जेषि शत्रून् द्रुहे रीषन्तं परि धेहि राजन् ॥ ९ ॥

यः। नः। सनुत्यः। उत। वा। जिघत्नुः। अभिऽख्याय। तम्। तिगितेन। विध्य।
बृहस्पते। आयुधैः। जेषि। शत्रून्। द्रुहे। रिषन्तम्। परि। धेहि। राजन् ॥ ९ ॥

वेङ्कट० [4]यः अस्माकमन्तस्तिष्ठति, अपि च अस्मान् जिघांसति, तम् †अभि दृष्ट्वा† तेजितेनायुधेन विध्य। बृहस्पते! त्वम् आयुधैः शत्रून् जेषि। हे राजन्! हिंसन्तं द्रोग्धुं‡ परितो निधेहि[4] ॥ ९ ॥

---

१-१. त्रुटितम् वि[2] अ[1]. † विश्लयथः वि[1] लपं. ‡ तस्मि° लपं. $ विलोभनम् लपं; विलोभनमस्माकम् वि[1]. २-२. त्रुटितम् वि[2] अ[1]. † °तु न वि[1]. ‡ नास्ति लपं. ३-३. नास्ति वि[2] अ[1]. † ऋतुंति मूको. ४-४. नास्ति वि[2] अ[1]. †-† अभिद्रस्व क प्रस्तावः ‡ द्रोग्धम् वि[1] लपं.

अस्माकेभिः सत्वभिः शूर शूरैर्वीर्या कृधि यानि ते कर्त्वानि ।
ज्योगभूवन्ननुधूपितासो हत्वी तेषामा भरा नो वसूनि ॥ १० ॥

अस्माकेभिः । सत्वऽभिः । शूर । शूरैः । वीर्या । कृधि । यानि । ते । कर्त्वानि ।
ज्योक् । अभूवन् । अनुऽधूपितासः । हत्वी । तेषाम् । आ । भर । नः । वसूनि ॥ १० ॥

**वेङ्कट०** [1]'आस्माकीनैः† शूरैः पुरुषैः सह त्वं वीर्याणि कुरु शूर !,‡ यानि तव वीर्याणि$ कर्तव्यानि । चिरम् अभूवन् शत्रवः धूपायमानहृदयाः, तान् हत्वा तेषाम् वसूनि अस्माकम् आ भर'[1] ॥ १० ॥

तं वः शर्धं मारुतं सुम्नयुर्गिरोप ब्रुवे नमसा दैव्यं जनम् ।
यथा रयिं सर्ववीरं नशामहा अपत्यसाचं श्रुत्यं दिवेदिवे ॥ ११ ॥

तम् । वः । शर्धम् । मारुतम् । सुम्नऽयुः । गिरा । उप । ब्रुवे । नमसा । दैव्यम् । जनम् ।
यथा । रयिम् । सर्वऽवीरम् । नशामहै । अपत्यऽसाचम् । श्रुत्यम् । दिवेऽदिवे ॥ ११ ॥

**वेङ्कट०** [2]'शौनकः — 'बृहस्पतिस्तुतिर्यो नस्तं व ऋङ्मरुतां स्तुतिः' ( बृदे ४, ८५ ) इति । हे जनाः ! युष्माकम् तम् मारुतम् बलिनं सुखमिच्छन्† स्तुत्या उप ब्रुवे नमसा च दैव्यम् जनम् , मरुतां प्रसादाद् यथा‡ धनं सर्ववीरम्§ व्याप्नवाम$ पुत्राणां सम्भक्तृ¶ श्रवणीयम् अन्वहमिति'[2] ॥ ११ ॥

[3]इति द्वितीयाष्टके सप्तमाध्याये त्रयोदशो वर्गः[3] ॥

## [ ३१ ]

[4]गृत्समदो भार्गवः शौनकः ( पूर्वम् आङ्गिरसः शौनहोत्रः ) ऋषिः ।
विश्वे देवा देवता । जगती छन्दः, सप्तमी त्रिष्टुप्[4] ॥

अस्माकं मित्रावरुणावतं रथमादित्यै रुद्रैर्वसुभिः सचाभुवा ।
प्र यद् वयो न पप्तन् वस्मनस्परि श्रवस्यवो हृषीवन्तो वनर्षदः ॥ १ ॥

अस्माकम् । मित्रावरुणा । अवतम् । रथम् । आदित्यैः । रुद्रैः । वसुऽभिः । सचाऽभुवा ।
प्र । यत् । वयः । न । पप्तन् । वस्मनः । परि । श्रवस्यवः । हृषीऽवन्तः । वनःऽसदः ॥ १ ॥

**वेङ्कट०** [1]'वैश्वदेवमिदम् । हे मित्रावरुणौ ! अस्माकम् रथम् रक्षतम् आदित्यादिभिः सहभुवौ । यदा† प्र पतन्ति वसतेः स्वावासात् पक्षिणः इव अन्नमिच्छन्तः हृष्टाः वने सीदन्तो युद्धार्थमश्वाः'[4] ॥ १ ॥

---

१-१. त्रुटितम् वि[2] अ[1]. † अस्मा° मूको. ‡ नास्ति मूको. $ वीर्येण मूको. २-२. त्रुटितम् वि[2] अ[1]. † °च्छन्तन् मूको. ‡ नास्ति मूको. § वीरम् मूको. $ व्याप्नुवाम मूको. ¶ सम्भक्ता मूको. ३-३. नास्ति मूको. ४-४. त्रुटितम् वि[2] अ[1]. † यथा मूको.

अध॑ स्मा न॒ उद॑वता सजोषसो॒ रथं॑ देवासो अ॒भि वि॒क्षु वा॑ज॒युम् ।
यदा॒शव॒: पद्या॑भि॒स्तित्र॑तो॒ रज॑: पृथि॒व्याः सानौ॒ जङ्घ॑नन्त पा॒णिभि॑: ॥ २ ॥

अध॑ । स्म॒ । न॒: । उत् । अ॒वत॒ । स॒ऽजो॒ष॒स॒: । रथ॑म् । दे॒वा॒स॒: । अ॒भि । वि॒क्षु । वा॒ज॒ऽयुम् ।
यत् । आ॒शव॑: । पद्या॑भिः । तित्र॑तः । रज॑: । पृ॒थि॒व्याः । सानौ॑ । जङ्घ॑नन्त । पा॒णिऽभि॑: ॥२॥

**वेङ्कट०** [1]अथ अस्माकम् उत् रक्षत सङ्गताः रथम् हे देवाः! अभि विक्षु अन्नमिच्छन्तम् । यदा अश्वाः[1] पद्याभिः गतिभिर्युद्धदेशं तरन्तः[2] पृथिव्याः उच्छ्रिते देशे पुनःपुनर्गच्छन्ति पाणिभिः अग्रपादैः ॥ २ ॥

उ॒त स्य न॒ इन्द्रो॒ वि॒श्वच॑र्षणिर्दि॒वः शर्धे॑न॒ मारु॑तेन सु॒क्रतु॑: ।
अनु॒ नु स्था॑त्यवृ॒काभि॑रू॒तिभी॒ रथं॑ म॒हे स॒नये॒ वाज॑सातये ॥ ३ ॥

उ॒त । स्यः । न॒: । इन्द्र॑: । वि॒श्वऽच॑र्षणिः । दि॒वः । शर्धे॑न । मारु॑तेन । सु॒ऽक्रतु॑: ।
अनु॑ । नु । स्था॒ति॒ । अ॒वृ॒काभि॑: । ऊ॒तिऽभि॑: । रथ॑म् । म॒हे । स॒नये॑ । वाज॑ऽसातये ॥ ३ ॥

**वेङ्कट०** [1]अपि चायम् इन्द्रः सर्वद्रष्टा अस्माकम् रथम् दिवः[1] [3]आगत्य मारुतेन वेगेन† सह सुकर्मा[3] सम्प्रति अनु तिष्ठति अवृकैर्मरुद्भिः सह महते लाभाय युद्धार्थमिति ॥ ३ ॥

उ॒त स्य दे॒वो भुव॑नस्य स॒क्षणि॒स्त्वष्टा॒ ग्नाभि॑: स॒जोषा॒ जूजु॑व॒द् रथ॑म् ।
इ॒ळा भगो॑ बृहद्दि॒वोत रोद॑सी पू॒षा पुरं॑धिर॒श्विना॒वधा॒ पती॑ ॥ ४ ॥

उ॒त । स्यः । दे॒वः । भुव॑नस्य । स॒क्षणि॑: । त्वष्टा॑ । ग्नाभि॑: । स॒ऽजोषा॑: । जू॒जु॑वत् । रथ॑म् ।
इळा॑ । भग॑: । बृ॒ह॒त्ऽदि॒वा । उ॒त । रोद॑सी॒ इति॑ । पू॒षा । पुर॑म्ऽधिः । अ॒श्विनौ॑ । अध॑ । पती॒ इति॑ ॥ ४ ॥

**वेङ्कट०** अपि चायम् देवः भुवनस्य सेवको [4]द्रष्टा च त्वष्टा[4] देवपत्नीभिः सहितः रथम् [4]प्रेरयति । इळा च देवी भगः च तथा बृहद्दिवा[4] च भारती द्यावापृथिवी पूषा सरस्वती अश्विनौ च सर्वस्येश्वराविति ॥ ४ ॥

उ॒त त्ये दे॒वी सु॒भगे॑ मिथू॒दृशो॒षासा॒नक्ता॒ जग॑तामपी॒जुवा॑ ।
स्तु॒षे यद् वां॑ पृथिवि॒ नव्य॑सा॒ वच॑: स्था॒तुश्च॒ वय॒स्त्रिव॑या उप॒स्तिरे॑ ॥ ५ ॥

उ॒त । त्ये इति॑ । दे॒वी इति॑ । सु॒भगे॒ इति॑ सु॒ऽभगे॑ । मि॒थु॒ऽदृशा॑ । उ॒षसा॒नक्ता॑ । जग॑ताम् । अ॒पि॒ऽजुवा॑ ।
स्तु॒षे । यत् । वा॒म् । पृ॒थि॒वि॒ । नव्य॑सा । वच॑: । स्था॒तु॒: । च॒ । वय॑: । त्रिऽव॑याः । उ॒प॒ऽस्तिरे॑ ॥

---

१-१. त्रुटितम् वि[२] अ[१]. २. चर° वि[२] अ[१]. ३-३. °त्य…र्मा वि[२] अ[१]. † देवेन मूको. ४-४. प्रेर…बृह° वि[२] अ[१].

वेङ्कट० अपि चैते देव्यौ शोभनरूपे मिथुनं दृश्यमाने उषासानक्ता [1]लोकानाम् अपिजुवा प्रेरयित्र्यौ स्तौमि[1]। यदा हे विस्तृते! नवतरेण वाम् वचसा सह स्थावरं जङ्गमं च हविस्त्रिविधान्नाः पुरुषा वां प्रदानार्थम्[2] उपशृण्वन्ति, तदानीं स्तौमि इति[3]। 'तं वश्राथा' (ऋ १,६६,९) [4]इति मन्त्रः[4] ॥ ५ ॥

**उत वः शंसमुशिजामिव श्मस्यहिर्बुध्न्योऽज एकपादुत ।**
**त्रित ऋभुक्षाः सविता चनो दधेऽपां नपादाशुहेमा धिया शमि ॥ ६ ॥**

उत । वः । शंसम् । उशिजाम्ऽइव । श्मसि । अहिः । बुध्न्यः । अजः । एकऽपात् । उत ।
त्रितः । ऋभुक्षाः । सविता । चनः । दधे । अपाम् । नपात् । आशुऽहेमा । धिया । शमि ॥६॥

वेङ्कट० अपि च युष्माकं स्तोत्रं कामयमानानामन्येषां यथाऽभ्युदयो भवति, एवं यथाऽभ्युदययुक्ताः (?) [5]अहिः बुध्न्यः बुध्नेऽन्तरिक्षे भवः[5] अजः एकपात् [6]आदित्यः त्रिस्थानः† इन्द्रः सविता च अस्मभ्यमन्नं[6] प्रयच्छतु अपाम् नपात् चाऽऽशुगन्ता गमनकर्मणा कर्मणि ॥ ६ ॥

**एता वो वश्म्युद्यता यजत्रा अतक्षन्नायवो नव्यसे सम् ।**
**श्रवस्यवो वाजं चकानाः सप्तिर्न रथ्यो अह धीतिमश्याः ॥ ७ ॥**

एता । वः । वश्मि । उत्ऽयता । यजत्राः । अतक्षन् । आयवः । नव्यसे । सम् ।
श्रवस्यवः । वाजम् । चकानाः । सप्तिः । न । रथ्यः । अह । धीतिम् । अश्याः ॥ ७ ॥

वेङ्कट० एतानि वः कामये उद्यतानि हे यष्टव्याः!, सम् अतक्षन् मनुष्याः नवतराय [7]यानि स्तोत्राणि। यश इच्छन्तः अन्नम् कामयमानाः[7] यथाऽश्वो रथे युक्तो युद्धं प्राप्नोति एवम् कर्म प्राप्नुवन्तु ॥ ७ ॥

[8]इति द्वितीयाष्टके सप्तमाध्याये चतुर्दशो वर्गः[8]।

## [ ३२ ]

[8]गृत्समदो भार्गवः शौनकः ( पूर्वम् आङ्गिरसः शौनहोत्रः ) ऋषिः ।
प्रथमाया द्यावापृथिवी देवता, द्वितीयातृतीययोः इन्द्रस्त्वष्टा वा, चतुर्थीपञ्चम्यो राका,
षष्ठीसप्तम्योः सिनीवाली, अष्टम्या लिङ्गोक्ताः ।
जगती छन्दः, तिस्रोऽन्त्या अनुष्टुभः[8] ॥

**अस्य मे द्यावापृथिवी ऋतायतो भूतमवित्री वचसः सिषासतः ।**
**ययोरायुः प्रतरं ते इदं पुर उपस्तुते वसूयुर्वां महो दधे ॥ १ ॥**

---

१-१. ले··· स्तौ° वि[२] अ[१]. २. प्रधानास्त्वामुपदिशन्ति अ[१]; प्रदानात्वम् वि[२]. ३. नास्ति वि[२]. ४-४. नास्ति वि[२] अ[१]. ५-५. बुध्नेऽन्तरिक्षे भवः अहि बुध्न्यः मूको. ६-६. °त्यः ··· भ्यम° वि[२] अ[१]. † °नः इन्द्रस्थानः वि[१] ल लपं. ७-७. या ... का° वि[२] अ[१]. ८-८. नास्ति मूको.

अस्य । मे । द्यावापृथिवी इति । ऋतऽयतः । भूतम् । अवित्री इति । वचसः । सिसासतः ।
ययोः । आयुः । प्रऽतरम् । ते इति । इदम् । पुरः । उपस्तुते इत्युपऽस्तुते । वसुऽयुः । वाम् । महः । दधे ॥

**वेङ्कट०** हे द्यावापृथिवी! युवां सम्भक्तुमिच्छतो मम अस्य वचनस्य [1]रक्षिके भवतम्। ययोः द्यावापृथिव्योः[1] प्रकृष्टमन्नमुत्पन्नं भवति, ते मया पुरः वर्तमाने उपस्तुते। तथाऽर्थमिच्छन् वाम् महद् हविः प्रयच्छामि ॥ १ ॥

मा नो गुह्या रिप आयोरहन् दभन् मा न आभ्यो रीरधो दुच्छुनाभ्यः ।
मा नो वि यौः सख्या विद्धि तस्य नः सुम्नायता मनसा तत् त्वेमहे ॥ २ ॥

मा । नः । गुह्याः । रिपः । आयोः । अहन् । दभन् । मा । नः । आभ्यः । रीरधः । दुच्छुनाभ्यः ।
मा । नः । वि । यौः । सख्या । विद्धि । तस्य । नः । सुम्नऽयता । मनसा । तत् । त्वा । ईमहे ॥ २ ॥

**वेङ्कट०** द्वयोरिन्द्रो देवता। [2]मा अस्मान् आयोः गूढाः हिंसकाः[2] हिंसिषुः, मा च दम्भिषुः। मा चास्मान् एभ्यो दुःसुखेभ्यः शत्रुभ्यो वशं नय। मा चास्माकं सख्यानि विश्लथय। तस्य अस्य सर्वस्य अस्मदीयस्य वचनस्य बुध्यस्व। [3]सुखमिच्छता मनसा तत् इदं सर्वं त्वां याचामहे[3] ॥ २ ॥

अहेळता मनसा श्रुष्टिमा वह दुहानां धेनुं पिप्युषीमसश्चतम् ।
पद्याभिराशुं वचसा च वाजिनं त्वां हिनोमि पुरुहूत विश्वहा ॥ ३ ॥

अहेळता । मनसा । श्रुष्टिम् । आ । वह । दुहानाम् । धेनुम् । पिप्युषीम् । असश्चतम् ।
पद्याभिः । आशुम् । वचसा । च । वाजिनम् । त्वाम् । हिनोमि । पुरुऽहूत । विश्वहा ॥ ३ ॥

**वेङ्कट०** अक्रुध्यता मनसा क्षिप्रकारिणीम् आ वह दुहानाम् धेनुम् पयः आप्याययन्तीम्[4] असङ्गाम्। ऋग्भिः स्तोत्रेण च शीघ्रं बलिनम् त्वाम् प्रेरयामि [5]अस्मत्कार्ये हे पुरुभिराहूत! सर्वदेति[5] ॥ ३ ॥

राकामहं सुहवां सुष्टुती हुवे शृणोतु नः सुभगा बोधतु त्मना ।
सीव्यत्वपः सूच्याच्छिद्यमानया ददातु वीरं शतदायमुक्थ्यम् ॥ ४ ॥

राकाम् । अहम् । सुऽहवाम् । सुऽस्तुती । हुवे । शृणोतु । नः । सुऽभगा । बोधतु । त्मना ।
सीव्यतु । अपः । सूच्या । अच्छिद्यमानया । ददातु । वीरम् । शतऽदायम् । उक्थ्यम् ॥ ४ ॥

**वेङ्कट०** राकाम् अहम् शोभनाह्वानां सुष्टुत्या हुवे। शृणोतु अस्मान् सुधना। तथा आत्मनैव च बुध्यताम्। सीव्यतु च[6] वृष्टिलक्षणाः[7] अपः सूच्या अच्छिद्यमानया [5]स्वायुधभूतया। यास्कस्त्वाह— 'सीव्यत्वपः[5] प्रजननकर्म सूच्या' (११,३१) इति। ददातु वीरम् शतप्रदं स्तोतव्यमिति ॥ ४ ॥

---

१-१. रक्षके[a] वि[1] ल लपं; ···पृथिव्योः वि[1] अ[1]. २-२. ··· सका वि[1] अ[1]. ३-३. ··· हुयाचा° वि[1] अ[1]. ४. आप्यायन्तीम् ल; आप्यायन्तिम् लपं. ५-५. त्रुटितम् वि[1] अ[1]. ६. नास्ति वि[1]. ७. वृष्टल° वि[1].

**यास्ते राके सुमतयः सुपेशसो याभिर्ददासि दाशुषे वसूनि ।**
**ताभिर्नो अद्य सुमना उपागहि सहस्रपोषं सुभगे रराणा ॥ ५ ॥**

याः । ते । राके । सुऽमतयः । सुऽपेशसः । याभिः । ददासि । दाशुषे । वसूनि ।
ताभिः । नः । अद्य । सुऽमनाः । उपऽआगहि । सहस्रऽपोषम् । सुऽभगे । रराणा ॥ ५ ॥

**वेङ्कट०** याः ते राके! सुमतयः सुरूपाः। याभिः सुमतिभिः प्रयच्छसि यजमानाय धनानि, ताभिः सह [1]अस्मान् अद्य सुमनाः भूत्वा सुभगे! उपागच्छ†[1] सहस्रधनपोषम् यजमानेषु रममाणेति ॥ ५ ॥

**सिनीवालि पृथुष्टुके या देवानामसि स्वसा ।**
**जुषस्व हव्यमाहुतं प्रजां देवि दिदिड्ढि नः ॥ ६ ॥**

सिनीवालि । पृथुऽस्तुके । या । देवानाम् । असि । स्वसा ।
जुषस्व । हव्यम् । आऽहुतम् । प्रऽजाम् । देवि । दिदिड्ढि । नः ॥ ६ ॥

**वेङ्कट०** यास्कः—'सिनीवालि! पृथुजघने!। स्तुकः स्त्यायतेः सङ्घातः। पृथुकेशस्तुके![2] पृथुष्टुते[3] वा[4]। या त्वं[5] देवानामसि स्वसा। स्वसा सु असा, स्वेषु सीदतीति वा। जुषस्व हव्यम् अदनम्[6]। प्रजां च देवि! दिश नः' ( या ११,३२ ) इति[5] ॥ ६ ॥

**या सुबाहुः स्वङ्गुरिः सुषूमा बहुसूवरी ।**
**तस्यै विश्पत्न्यै हविः सिनीवाल्यै जुहोतन ॥ ७ ॥**

या । सुऽबाहुः । सुऽअङ्गुरिः । सुऽसूमा । बहुऽसूवरी । तस्यै । विश्पत्न्यै । हविः । सिनीवाल्यै । जुहोतन ॥

**वेङ्कट०** या शोभनबाहुः शोभनाङ्गुलिः शोभनप्रजा बहूनां[7] जनयित्री, तस्यै विशां [8]पालयित्र्यै सिनीवाल्यै जुहोतन[8] हविः ॥ ७ ॥

**या गुङ्गूर्या सिनीवाली या राका या सरस्वती । इन्द्राणीमह्व ऊतये वरुणानीं स्वस्तये ॥८॥**

या । गुङ्गूः । या । सिनीवाली । या । राका । या । सरस्वती ।
इन्द्राणीम् । अह्वे । ऊतये । वरुणानीम् । स्वस्तये ॥ ८ ॥

---

१-१. त्रुटितम् वि[2] अ[1]. † उपग° वि[1] लपं. २. °स्तुका मूको. ३. °ष्टुतिः मूको. ४. नास्ति लपं. ५. नास्ति मूको. ६. आहुतम् मूको. ७. बहून् वि[1] लपं. ८-८. ···पुत्र अ[1]; त्रुटितम् वि[2].

वेङ्कट० या गुङ्गूः इति कुहूमाहेति ॥ ८ ॥

[1]इति द्वितीयाष्टके सप्तमाध्याये पञ्चदशो वर्गः[1] ॥

## [ ३३ ]

[1]गृत्समदो भार्गवः शौनकः ( पूर्वम् आङ्गिरसः शौनहोत्रः ) ऋषिः । रुद्रो देवता । त्रिष्टुप् छन्दः[1] ।

आ ते॑ पितर्मरुतां सु॒म्नमे॑तु॒ मा नः॒ सूर्य॑स्य सं॒दृशो॑ युयोथाः ।
अ॒भि नो॑ वी॒रो अर्व॑ति क्षमेत॒ प्र जा॑येमहि रुद्र प्र॒जाभि॑ः ॥ १ ॥

आ । ते॒ । पि॒तः॒ । म॒रु॒ता॒म् । सु॒म्नम् । ए॒तु॒ । मा । नः॒ । सूर्य॑स्य । स॒म्ऽदृशः॑ । यु॒यो॒थाः॒ ।
अ॒भि । नः॒ । वी॒रः । अर्व॑ति । क्ष॒मे॒त॒ । प्र । जा॒ये॒म॒हि॒ । रु॒द्र॒ । प्र॒ऽजाभि॑ः ॥ १ ॥

वेङ्कट० हे मरुताम् पितः! तव सुखमस्मान् आ यातु । मा अस्मान् सूर्यस्य [2]सन्दर्शनात् पृथक् कुरु । तथा अस्माकं पुत्रः अश्वे[2] शक्तो भवतु । हे रुद्र! तव प्रसादात् प्रजाभिः च वयम् प्र जायेमहि ॥ १ ॥

त्वाद॑त्तेभी रुद्र॒ शंत॑मेभिः श॒तं हिमा॑ अशीय भेष॒जेभि॑ः ।
व्य१॒॑स्मद् द्वेषो॑ वित॒रं व्यंहो॒ व्यमी॑वाश्चातयस्वा॒ विषू॑चीः ॥ २ ॥

त्वाऽद॑त्तेभिः । रु॒द्र॒ । शम्ऽत॑मेभिः । श॒तम् । हिमा॑ः । अ॒शी॒य॒ । भे॒ष॒जेभि॑ः ।
वि । अ॒स्मत् । द्वेष॑ः । वि॒ऽत॒रम् । वि । अंह॑ः । वि । अमी॑वाः । चा॒त॒य॒स्व॒ । विषू॑चीः ॥ २ ॥

वेङ्कट० त्वया दत्तैः हे रुद्र! सुखतमैः भेषजैः शतम् [3]संवत्सरान् †व्याप्नुयाम्[3] । अस्मत्तः[3] शत्रून् वि चातय[4] पृथक् कुरु, पापं च दूरतरम्[5], एवं राक्षसांश्च नानादिक्कानिति ॥ २ ॥

श्रेष्ठो॑ जा॒तस्य॑ रुद्र श्रि॒यासि॑ त॒वस्त॑मस्त॒वसां॑ वज्रबाहो ।
पर्षि॑ णः पा॒रमंह॑सः स्व॒स्ति विश्वा॑ अ॒भीती॒ रप॑सो युयोधि ॥ ३ ॥

श्रेष्ठ॑ः । जा॒तस्य॑ । रु॒द्र॒ । श्रि॒या । अ॒सि॒ । त॒वःऽत॑मः । त॒वसा॑म् । व॒ज्र॒बा॒हो॒ इति॑ वज्रऽबाहो ।
पर्षि॑ । नः॒ । पा॒रम् । अंह॑सः । स्व॒स्ति । विश्वा॑ः । अ॒भिऽई॑तीः । रप॑सः । यु॒यो॒धि॒ ॥ ३ ॥

वेङ्कट० हे रुद्र! सर्वस्य भूतजातस्य त्वमेव श्रेष्ठः भवसि श्रिया। [6]वेगवत्तमः वेगवतामपि आयुधयुक्तबाहो![6]।

---

१-१. नास्ति मूको. २-२. °र्शन ···पु° वि[2] अ[1]. ३-३. त्रुटितम् वि[1] अ[1]. † प्राप्नु° वि[1] लपं. ४. शातय अ[1]. ५. दूरम् लपं. ६-६. वेग ··· वि[2] अ[1].

स त्वम् अस्मान्[1] पारय पापस्य पारम् अविनाशेन। रपसः पापस्य सर्वाः अभीतीः अभिगतीः पृथक् कुरु ॥ ३ ॥

मा त्वा रुद्र चुक्रुधामा नमोभिर्मा दुष्टुती वृषभ मा सहूती ।
उन्नो वीराँ अर्पय भेषजेभिर्भिषक्तमं त्वा भिषजां शृणोमि ॥ ४ ॥

मा । त्वा । रुद्र । चुक्रुधाम । नमःऽभिः । मा । दुःऽस्तुती । वृषभ । मा । सऽहूती ।
उत् । नः । वीरान् । अर्पय । भेषजेभिः । भिषक्ऽतमम् । त्वा । भिषजाम् । शृणोमि ॥ ४ ॥

**वेङ्कट०** हे रुद्र! नमस्कारैः मा त्वां [2]क्रोधयाम†। मा च दुस्तोत्रेण[2]। हे वृषभ! मा च अन्यैर्देवैः सहूत्या[3] 'सोमारुद्रा वि वृहतम् (ऋ ६,७४,२) इत्यादिकया। अस्माकम् वीरान् उत्थापय भेषजैः भिषक्तमम् त्वा भिषजाम् शृणोमि वृद्धेभ्य इति ॥ ४ ॥

हवीमभिर्हवते यो हविर्भिरव स्तोमेभी रुद्रं दिषीय ।
ऋदूदरः सुहवो मा नो अस्यै बभ्रुः सुशिप्रो रीरधन्मनायै ॥ ५ ॥

हवीमऽभिः । हवते । यः । हविःऽभिः । अव । स्तोमेभिः । रुद्रम् । दिषीय ।
ऋदूदरः । सुऽहवः । मा । नः । अस्यै । बभ्रुः । सुऽशिप्रः । रीरधत् । मनायै ॥ ५ ॥

**वेङ्कट०** [4]होमयोग्यैः हविर्भिः[4] सह यः आहूयते, तम् रुद्रम् स्तोमैः अव दिषीय पृथक् करोमि अस्मत्[5]। 'ऋदूदरः सोमः[6]। मृदूदरः' इति यास्कः (६, ४)। [7]स्वाह्वानः मा अस्मान् अस्यै[7] पुरुषान्मन्यमानायै 'वशं नयतु। अस्य बुद्धिः सर्वान् अमन्यत[8] इति। बभ्रुवर्णः सुहनुः ॥ ५ ॥

[9]इति द्वितीयाष्टके सप्तमाध्याये षोडशो वर्गः[9] ॥

उन्मा ममन्द वृषभो मरुत्वान् त्वक्षीयसा वयसा नाधमानम् ।
घृणीव च्छायामरपा अशीया विवासेयं रुद्रस्य सुम्नम् ॥ ६ ॥

उत् । मा । ममन्द । वृषभः । मरुत्वान् । त्वक्षीयसा । वयसा । नाधमानम् ।
घृणिऽइव । छायाम् । अरपाः । अशीय । आ । विवासेयम् । रुद्रस्य । सुम्नम् ॥ ६ ॥

**वेङ्कट०** उन्मदितवान् कामानां वर्षिता मरुद्भिः सहितो दीप्तेन हविषा [4]याचमानम् माम्[4]।

---

१. नास्ति लपं. २-२. क्रो ··· वि[2] अ[1]. † क्रोधयेम् वि[1]. ३. संभूत्या अ[1]. ४-४. त्रुटितम् वि[2] अ[1]. ५. अस्मत्त वि[1] लपं. ६. नास्ति वि[2] अ[1] लपं. ७-७. त्रुटितम् अ[1]; नास्ति वि[2]. ८-८. नास्ति वि[2] अ[1]. ९-९. नास्ति मूको.

[1]यथा घर्मगृहीतं भूतम् छायाम्[1] अश्नुते, एवम् अरपाः अहमपि सुखं [2]प्राप्नुयाम्। आ विवासयम् अस्य सुखम्। अधिष्ठानम् आविवासः[2] ॥ ६ ॥

क्व॑१ स्य ते॑ रुद्र मृळ॒याकु॒र्हस्तो॒ यो अस्ति॑ भेष॒जो जला॑षः ।
अ॒प॒भ॒र्ता र॒पसो॒ दैव्य॑स्या॒भी नु मा॑ वृषभ चक्षमीथाः ॥ ७ ॥

क्व॑ । स्यः । ते॒ । रु॒द्र॒ । मृ॒ळ॒याकुः॑ । हस्तः॑ । यः । अस्ति॑ । भे॒ष॒जः । जला॑षः ।
अ॒प॒ऽभ॒र्ता । र॒पसः॑ । दैव्य॑स्य । अ॒भि । नु । मा॒ । वृ॒ष॒भ॒ । च॒क्ष॒मी॒थाः॒ ॥ ७ ॥

**वेङ्कट०** क्व सः ते रुद्र! सुखयिता हस्तः, यः विद्यते भैषज्यकृत् सुखकरोऽपहर्ता पापस्य देवकृतस्य। तादृशः[3] त्वम् माम्[4] वृषभ! अत्यन्तम् अभि क्षमस्वेति ॥ ७ ॥

प्र ब॒भ्रवे॑ वृष॒भाय॑ श्वि॒ती॒चे म॒हो म॒हीं सु॑ष्टु॒तिमी॑रयामि ।
न॒म॒स्या क॑ल्मली॒कि॒नं॒ नमो॑भिर्गृ॒णी॒मसि॑ त्वे॒षं रु॒द्रस्य॒ नाम॑ ॥ ८ ॥

प्र । ब॒भ्रवे॑ । वृ॒ष॒भाय॑ । श्वि॒ती॒चे । म॒हः । म॒हीम् । सु॒ऽस्तु॒तिम् । ई॒र॒या॒मि॒ ।
न॒म॒स्य । क॒ल्म॒ली॒कि॒न॑म् । नमः॑ऽभिः । गृ॒णी॒मसि॑ । त्वे॒षम् । रु॒द्रस्य॑ । नाम॑ ॥ ८ ॥

**वेङ्कट०** प्र ईरयामि [5]बभ्रवे वर्षित्रे श्वेतिमानमञ्चते[5] महतोऽपि महतीम् सुस्तुतिम्। नमस्यत नमस्कारैः दीप्तम्, ज्वलन्नामसु ( निघ १,१७ ) पठितम् कल्मलीकिनम् इति, उज्ज्वलम्। उच्चारयामो [6]दीप्तम् रुद्रस्य[6] नामधेयम् ॥ ८ ॥

स्थि॒रेभि॒रङ्गैः॑ पुरु॒रूप॑ उ॒ग्रो ब॒भ्रुः शु॒क्रेभिः॑ पिपिशे॒ हिर॑ण्यैः ।
ईशा॑नाद॒स्य भुव॑नस्य॒ भूरे॒र्न वा उ॑ योषद्रु॒द्राद॑सु॒र्य॑म् ॥ ९ ॥

स्थि॒रेभिः॑ । अङ्गैः॑ । पु॒रु॒ऽरूपः॑ । उ॒ग्रः । ब॒भ्रुः । शु॒क्रेभिः॑ । पि॒पि॒शे॒ । हिर॑ण्यैः ।
ईशा॑नात् । अ॒स्य । भुव॑नस्य । भूरेः॑ । न । वै । ऊँ॒ इति॑ । यो॒ष॒त् । रु॒द्रात् । अ॒सु॒र्य॑म् ॥ ९ ॥

**वेङ्कट०** दृढैः [7]अङ्गैः युक्तो बहुरूपः[7] उद्‌गूर्णः, 'शुक्रं शोचतेर्ज्वलतिकर्मणः' ( या ८, ११ ), दीप्तैः आभरणैः अङ्गानि संयोजयति हिरण्मयैः। अस्य सर्वस्य बहोः भुवनस्य ईश्वरादस्मात् रुद्रात् न पृथग् [8]भवतु असुराणां हन्तृ रूपम् इति[8] ॥ ९ ॥

---

१-१. …याम् वि[२] अ[१]. २-२. °याम्… पिपास वि[२] अ[१]. ३. °श मूको. ४. मा वि[१]. ५-५. …मानम° वि[२] अ[१]. ६-६. °प्तम् व रुद्र° वि[२] अ[१]; °प्तरुद्र° वि[१] लपं. ७-७. त्रुटितम् वि[२] अ[१]. ८. भव… वि[२] अ[१].

अर्हन् बिभर्षि सायकानि धन्वार्हन् निष्कं यजतं विश्वरूपम् ।
अर्हन्निदं दयसे विश्वमभ्वं न वा ओजीयो रुद्र त्वदस्ति ॥ १० ॥

अर्हन् । बिभर्षि । सायकानि । धन्व । अर्हन् । निष्कम् । यजतम् । विश्वऽरूपम् ।
अर्हन् । इदम् । दयसे । विश्वम् । अभ्वम् । न । वै । ओजीयः । रुद्र । त्वत् । अस्ति ॥ १० ॥

**वेङ्कट०** तत् अर्हन् त्वम् सायकानि धनुश्च बिभर्षि[1] निष्कम् आभरणं शोभनं नानारूपम् । [2]तथा अर्हन् त्वं[2] सर्वं महद्भुवनम् अनुगृह्णासि । न त्वत्तो बलवत्तरम् इह किञ्चित् अस्ति[3] ॥ १० ॥

[4]इति द्वितीयाष्टके सप्तमाध्याये सप्तदशो वर्गः[4] ॥

स्तुहि श्रुतं गर्तसदं युवानं मृगं न भीममुपहत्नुमुग्रम् ।
मृळा जरित्रे रुद्र स्तवानोऽन्यं ते अस्मन्नि वपन्तु सेनाः ॥ ११ ॥

स्तुहि । श्रुतम् । गर्तऽसदम् । युवानम् । मृगम् । न । भीमम् । उपऽहत्नुम् । उग्रम् ।
मृळ । जरित्रे । रुद्र । स्तवानः । अन्यम् । ते । अस्मत् । नि । वपन्तु । सेनाः ॥ ११ ॥

**वेङ्कट०** स्तोतः![5] स्तुहि विश्रुतं रथस्थम् युवानम् मृगम् इव भीमम् उपहन्तारं शत्रूणाम् उद्गूर्णम् । त्वं च रुद्र! स्तूयमानः स्तोत्रे सुखं कुरु । मत्तः अन्यम् तव सेनाः नि वपन्तु छिन्दन्तु ॥ ११ ॥

कुमारश्चित् पितरं वन्दमानं प्रति नानाम रुद्रोपयन्तम् ।
भूरेर्दातारं सत्पतिं गृणीषे स्तुतस्त्वं भेषजा रास्यस्मे ॥ १२ ॥

कुमारः । चित् । पितरम् । वन्दमानम् । प्रति । ननाम । रुद्र । उपऽयन्तम् ।
भूरेः । दातारम् । सत्ऽपतिम् । गृणीषे । स्तुतः । त्वम् । भेषजा । रासि । अस्मे इति ॥ १२ ॥

**वेङ्कट०** [6]बालः इव पितरम् प्रह्वीभवन्तम्[6] उपगच्छन्तम् हे रुद्र! अहं त्वाम्[7] प्रति ननाम प्रणतोऽस्मि । तथा स्तौमि च बहुनः[8] दातारम् सतां पतिम् । स्तुतः च त्वम् अस्मभ्यं भेषजानि प्रयच्छसि ॥ १२ ॥

या वो भेषजा मरुतः शुचीनि या शंतमा वृषणो या मयोभु ।
यानि मनुरवृणीता पिता नस्ता शं च योश्च रुद्रस्य वश्मि ॥ १३ ॥

---

१. °र्षि तथा वि[2] अ[1]. २-२. तदर्हस्तथा त्वम् अ[1]. ३. नास्ति वि[2] अ[1]. ४-४. नास्ति मूको.
५. त्रुटितम् वि[2] अ[1]. ६-६. ···मीभव° वि[2]; ···मीभव° अ[1]. ७. त्वा वि[2] अ[1]. ८. °हुना वि[2] अ[1].

या । वः । भेषजा । मरुतः । शुचीनि । या । शम्ऽतमा । वृषणः । या । मयःऽभु ।
यानि । मनुः । अवृणीत । पिता । नः । ता । शम् । च । योः । च । रुद्रस्य । वश्मि ॥१३॥

वेङ्कट० [1]हे मरुतः! वृषणः! यानि[1] वः भेषजानि शुचीनि, यानि सुखतमानि, यानि च मयोभूनि, यानि च सर्वेषामस्माकमर्थाय भवद्भ्यः मनुः पिता अवृणीत, तानि रुद्रस्य शम् च योः च कामये ॥ १३ ॥

परि णो हेती रुद्रस्य वृज्याः परि त्वेषस्य दुर्मतिर्मही गात् ।
अव स्थिरा मघवद्भ्यस्तनुष्व मीढ्वस्तोकाय तनयाय मृळ ॥ १४ ॥

परि । नः । हेतिः । रुद्रस्य । वृज्याः । परि । त्वेषस्य । दुःऽमतिः । मही । गात् ।
अव । स्थिरा । मघवत्ऽभ्यः । तनुष्व । मीढ्वः । तोकाय । तनयाय । मृळ ॥ १४ ॥

वेङ्कट० [2]रुद्रस्य आयुधम् अस्मान् वर्जयतु । तथा[2] दीप्तस्य दुर्मतिः चास्मान् अपहाय गच्छतु महती । किञ्चाऽऽततज्यानि स्थिराणि धनूंषि हविष्मद्भ्योऽवततज्यानि कुरु । हे वर्षितः! पुत्राय तत्पुत्राय च न क्रुद्धो भव ॥ १४ ॥

एवा बभ्रो वृषभ चेकितान यथा देव न हृणीषे न हंसि ।
हवनश्रुन्नो रुद्रेह बोधि बृहद् वदेम विदथे सुवीराः ॥ १५ ॥

एव । बभ्रो इति । वृषभ । चेकितान । यथा । देव । न । हृणीषे । न । हंसि ।
हवनऽश्रुत् । नः । रुद्र । इह । बोधि । बृहत् । वदेम । विदथे । सुऽवीराः ॥ १५ ॥

वेङ्कट० [1]एवमेव हे बभ्रुवर्ण![2] वृषभ! विद्वन्! देव! यथा न क्रुध्यसि, [3]न तम् हंसि च[3], तथा स्तोत्रस्य श्रोता अस्मान् इह अनुकम्प्यान् हे रुद्र! बुध्यस्वेति ॥ १५ ॥

[4]इति द्वितीयाष्टके सप्तमाध्यायेऽष्टादशो वर्गः[4] ॥

[ ३४ ]

[4]गृत्समदो भार्गवः शौनकः ( पूर्वम् आङ्गिरसः शौनहोत्रः ) ऋषिः ।
मरुतो देवता । जगती छन्दः, पञ्चदशी त्रिष्टुप्[4] ।

धारावरा मरुतो धृष्ण्वोजसो मृगा न भीमास्तविषीभिरर्चिनः ।
अग्नयो न शुशुचाना ऋजीषिणो भृमिं धमन्तो अप गा अवृण्वत ॥ १ ॥

---

१-१. ··· नि वि[२] अ[१]. २-२. त्रुटितम् वि[२] अ[१]. ३-३ नास्ति वि[२] अ[१]. ४-४. नास्ति मूको.

धारावराः। मरुतः। धृष्णुऽओजसः। मृगाः। न। भीमाः। तविषीभिः। अर्चिनः।
अग्नयः। न। शुशुचानाः। ऋजीषिणः। भृमिम्। धमन्तः। अप। गाः। अवृण्वत ॥ १ ॥

**वेङ्कट०** उदकधाराणां सम्भक्तारः [1]मरुतः धृष्टबलाः मृगाः इव भयावहाः बलैः अर्चिष्मन्तः[1] अग्नयः इव दीप्यमानाः पांसुयुक्ताः, सोमस्य वा ऋजीषेण तद्वन्तः। भृमिशब्दो वाणवचनः, तथा मन्त्रः— 'धमन्तो वाणं मरुतः' ( ऋ १,८५,१० ) इति। त इमे वाणवाद्यम् धमन्तः [2]अप वृण्वन्ति[2] उदकानि ॥ १ ॥

द्यावो न स्तृभिश्चितयन्त खादिनो व्य१भ्रिया न द्युतयन्त वृष्टयः।
रुद्रो यद् वो मरुतो रुक्मवक्षसो वृषाजनि पृश्न्याः शुक्र ऊधनि ॥ २ ॥

द्यावः। न। स्तृऽभिः। चितयन्त। खादिनः। वि। अभ्रियाः। न। द्युतयन्त। वृष्टयः।
रुद्रः। यत्। वः। मरुतः। रुक्मऽवक्षसः। वृषा। अजनि। पृश्न्याः। शुक्रे। ऊधनि ॥ २ ॥

**वेङ्कट०** [3]द्यावः इव नक्षत्रैः ज्ञायन्ते†[3] शोभया खादिभिरुज्ज्वलैरायुधैः। विद्योतन्ते चाभ्रेभ्यो विनिर्गताः वृष्टयः इव धाराकाराः पतन्तः। रुद्रः यदाऽजनयद् युष्मान् हे रुक्माभरणवक्षसः! मरुतः! [4]वर्षिता पृश्न्याः ऊधनि पयसि शुक्रवर्णे। 'पृश्नियै[4] वै पयसो मरुतो जाताः' ( तु. तै २,२,११,४ ) इति ब्राह्मणम् ॥ २ ॥

उक्षन्ते अश्वाँ अत्याँ इवाजिषु नदस्य कर्णैस्तुरयन्त आशुभिः।
हिरण्यशिप्रा मरुतो दविध्वतः पृक्षं याथ पृषतीभिः समन्यवः ॥ ३ ॥

उक्षन्ते। अश्वान्। अत्यान्ऽइव। आजिषु। नदस्य। कर्णैः। तुरयन्ते। आशुऽभिः।
हिरण्यऽशिप्राः। मरुतः। दविध्वतः। पृक्षम्। याथ। पृषतीभिः। सऽमन्यवः ॥ ३ ॥

**वेङ्कट०** स्नापयन्ति आत्मीयान् अश्वान् गमनार्थं[5] यथा युद्धार्थमश्वान् योद्धारः। ततः नदस्य सिन्धोः [6]कृत्तप्रदेशाद् निर्गच्छन्ति अश्वैः। हिरण्मयशिरस्त्राणाः[6] हिरण्मयहनुका वा मरुतः! दविध्वतः विधुन्वन्तः[7] हविः प्रति गच्छथ[8] पृषद्वर्णाभिरश्वाभिः हे समानमनस्काः! ॥ ३ ॥

पृक्षे ता विश्वा भुवना ववक्षिरे मित्राय वा सदमा जीरदानवः।
पृषदश्वासो अनवभ्रराधस ऋजिप्यासो न वयुनेषु धूर्षदः ॥ ४ ॥

---

१-१. °तः··· मन्तः वि[2] अ[1]. २-२. च वृण्वन्ति वि[1]; भुवन्ति वि[2] अ[1]. ३-३. त्रुटितम् वि[2] अ[1]. † जायन्ते वि[1] ल लपं. ४-४. वर्षित··· पृ° वि[2] अ[1]. ५. गवार्थं मूको. ६-६. कृत्त··· हि° वि[2] अ[1]. ७. विध्यन्तः मूको. ८. °त वि[2] अ[1].

पृक्षे । ता । विश्वा । भुवना । ववक्षिरे । मित्राय । वा । सदम् । आ । जीरऽदानवः ।
पृषत्ऽअश्वासः । अनवभ्रऽराधसः । ऋजिप्यासः । न । वयुनेषु । धूःऽसदः ॥ ४ ॥

**वेङ्कट०** यानि भूतानि [1]मरुतो यजन्ते, तानि अमी सर्वाणि एव[1] अन्ने वहन्ति मित्रापेक्षया[2]। मित्रं प्रति च सदैव क्षिप्रदानाः पृषद्वर्णाऽश्वाः अनपभ्रष्टधनाः सारथयः इव भूतानि[3] मार्गेषु धुरि सीदन्तः। [4]ऋजु प्रापयन्ति ऋजिप्यासः इति[4] ॥ ४ ॥

इन्धन्वभिर्धेनुभी रप्शदूधभिरध्वस्माभिः पथिभिर्भ्राजदृष्टयः ।
आ हंसासो न स्वसराणि गन्तन मधोर्मदाय मरुतः समन्यवः ॥ ५ ॥

इन्धन्वऽभिः । धेनुऽभिः । रप्शदूधऽभिः । अध्वस्मऽभिः । पथिऽभिः । भ्राजत्ऽऋष्टयः ।
आ । हंसासः । न । स्वसराणि । गन्तन । मधोः । मदाय । मरुतः । सऽमन्यवः ॥ ५ ॥

**वेङ्कट०** उदकप्रधानान् मनुष्यान् दीपयन्तीभिः महोध्नीभिः धेनुभिः सह अध्वंसनैः मार्गैः हे दीप्यमानायुधाः! आ गच्छत हंसा इव श्रेणिशः [5]स्वनिलयानि सोमस्य मदाय हे[5] मरुतः! समानमनस्काः! ॥ ५ ॥

[6]इति द्वितीयाष्टके सप्तमाध्याये एकोनविंशो वर्गः ॥[6]

आ नो ब्रह्माणि मरुतः समन्यवो नरां न शंसः सवनानि गन्तन ।
अश्वामिव पिप्यत धेनुमूधनि कर्ता धियं जरित्रे वाजपेशसम् ॥ ६ ॥

आ । नः । ब्रह्माणि । मरुतः । सऽमन्यवः । नराम् । न । शंसः । सवनानि । गन्तन ।
अश्वाम्ऽइव । पिप्यत । धेनुम् । ऊधनि । कर्त । धियम् । जरित्रे । वाजऽपेशसम् ॥ ६ ॥

**वेङ्कट०** हे मरुतः! समन्यवः! अस्माकं स्तोत्राणि प्रति आ गच्छत, यथा ऋत्विजां स्तुतिः सवनानि अभिगच्छति। तथाऽस्मदीयाम् [7]धेनुम् ऊधनि आप्याययत† पयसा[7], यथाऽश्वान् यवसेन सुहितान् कुर्वन्ति। कुरुत[8] च स्तोत्रे कर्म अन्ने संश्लिष्टम् इति ॥ ६ ॥

तं नो दात मरुतो वाजिनं रथ आपानं ब्रह्म चितयद् दिवेदिवे ।
इषं स्तोतृभ्यो वृजनेषु कारवे सनिं मेधामरिष्टं दुष्टरं सहः ॥ ७ ॥

---

१-१. म ··· ण्येव वि[2]; त्रुटितम् अ[1]. २. °पेक्षायाम् वि[1] लपं. ३. नास्ति लपं. ४-४. त्रुटितम् वि[2] अ[1]. ५-५. स्व ··· वि[2] अ[1]. ६-६. नास्ति मूको. ७-७. धेनु ··· वि[2] अ[1]. † °प्यायत ल लपं. ८. कुरु मूको.

तम् । नः । दात । मरुतः । वाजिनम् । रथे । आपानम् । ब्रह्म । चितयत् । दिवेऽदिवे ।
इषम् । स्तोतृऽभ्यः । वृजनेषु । कारवे । सनिम् । मेधाम् । अरिष्टम् । दुस्तरम् । सहः ॥ ७ ॥

**वेङ्कट०** हे मरुतः![1] तम् अस्माकम् अश्वम् रथे नियोगाय प्रयच्छत व्याप्नुवानम् अन्वहम् अस्मदर्थं [2]शत्रुषु अन्नं चेतयत् । तथाऽन्नम्[2] स्तोतृभ्यः कर्मणः कर्त्रे च शत्रुबलेषु स्थितं प्रयच्छत, तथा धनं प्रज्ञाम् अहिंसितम् दुस्तरम् सहः च ॥ ७ ॥

यद् युञ्जते मरुतो रुक्मवक्षसोऽश्वान् रथेषु भग आ सुदानवः ।
धेनुर्न शिश्वे स्वसरेषु पिन्वते जनाय रातहविषे महीमिषम् ॥ ८ ॥

यत् । युञ्जते । मरुतः । रुक्मऽवक्षसः । अश्वान् । रथेषु । भगे । आ । सुऽदानवः ।
धेनुः । न । शिश्वे । स्वसरेषु । पिन्वते । जनाय । रातऽहविषे । महीम् । इषम् ॥ ८ ॥

**वेङ्कट०** यदि[3] युञ्जते मरुतः रुक्मालङ्कृतवक्षसः [4]अश्वान् आत्मीयेषु रथेषु धनार्थं[4] सुदानाः । तथा धेनुः इव वत्साय अहःसु पिन्वते दत्तहविषे यजमानाय महदन्नमिति ॥ ८ ॥

यो नो मरुतो वृकताति मर्त्यो रिपुर्दधे वसवो रक्षता रिषः ।
वर्तयत तपुषा चक्रियाभि तमव रुद्रा अशसो हन्तना वधः ॥ ९ ॥

यः । नः । मरुतः । वृकऽताति । मर्त्यः । रिपुः । दधे । वसवः । रक्षत । रिषः ।
वर्तयत । तपुषा । चक्रिया । अभि । तम् । अव । रुद्राः । अशसः । हन्तन । वधरिति ॥९॥

**वेङ्कट०** हे मरुतः! यः अस्माकम् वृकतातिः, सोलोपः, आदानपरो मनुष्यो हिंसाकर्मा, हे वासयितारः! तस्मात्[5] हिंसकात् रक्षत अस्मान् । किञ्च तापयित्र्या क्रकचाकारया च भवतां[6] चक्रिया[7] तम् [8]अभि वर्तयत । हे रुद्रपुत्राः![8] अस्तोत्रस्याऽऽत्मीयमायुधम् अव असृजतेति ॥ ९ ॥

चित्रं तद् वो मरुतो याम चेकिते पृश्न्या यदूधरप्यापयो दुहुः ।
यद् वा निदे नवमानस्य रुद्रियास्त्रितं जराय जुरतामदाभ्याः ॥ १० ॥

चित्रम् । तत् । वः । मरुतः । याम । चेकिते । पृश्न्याः । यत् । ऊधः । अपि । आपयः । दुहुः ।
यत् । वा । निदे । नवमानस्य । रुद्रियाः । त्रितम् । जराय । जुरताम् । अदाभ्याः ॥ १० ॥

**वेङ्कट०** [9]हे मरुतः! तद् वः[9] प्रयाणम् चित्रम् प्रज्ञायते । पृश्नीति दिवो नाम (निघ १,४,),

---

१. नास्ति मूको. २-२. त्रुटितम् वि[२] अ[१]. ३. यद् अ[१]. ४-४. अश्व ··· वि[२] अ[१]. ५. अस्मा° वि[१] लपं. ६. भवत ल प्रस्तावः. ७. चक्रियया वि[१] ल. ८-८. ··· पुत्राः वि[२] अ[१]. ९-९. त्रुटितम् वि[२] अ[१].

तस्या मरुतः आपयः तत्पुत्रत्वात्[१], तस्या ऊधः यत् यस्मिन् प्रयाणे वृष्टिं भवन्तो दुहन्ति। अपि-शब्दः समुच्चये। यत्[२] वा प्रयाणं [३]भवतां स्तुतेः कर्तुर्यो[३] निन्दिताऽतः शत्रुस्तस्य[४] हननाय भवति हे रुद्रपुत्रकाः![५] किं तदित्याह—त्रितम् इति। त्रितम् ऋषिं जरयितुमनुधावतां वृकाणां हननाय हे अहिंसिताः! ॥ १० ॥

[६]इति द्वितीयाष्टके सप्तमाध्याये विंशो वर्गः[६] ॥

तान् वो म॒हो म॒रुत॑ एव॒याव्नो॒ विष्णो॑रे॒षस्य॑ प्रभृ॒थे ह॑वामहे ।
हिर॑ण्यवर्णान् ककु॒हान् य॒तस्रु॑चो ब्रह्म॒ण्यन्त॑ः शंस्यं॒ राध॑ ईमहे ॥ ११ ॥

तान् । व॒ः । म॒हः । म॒रुत॑ः । ए॒व॒ऽयाव्न॑ः । विष्णो॑ः । ए॒षस्य॑ । प्र॒ऽभृ॒थे । ह॒वा॒म॒हे॒ ।
हिर॑ण्यऽवर्णान् । क॒कु॒हान् । य॒तऽस्रु॑चः । ब्र॒ह्म॒ण्यन्त॑ः । शंस्य॑म् । राध॑ः । ई॒म॒हे॒ ॥ ११ ॥

**वेङ्कट०** [७]तान् वः महतः[७] मरुतः एवं गच्छतो यज्ञस्याद्वेषयितुर्यजमानस्य हविषः सम्भरणानन्तरम् हवामहे। हिरण्यवर्णान् उच्छ्रितान् उद्यतस्रुचः वयं स्तुतिं [८]चेच्छन्तः शंसनीयं धनं याचामहे[८] ॥ ११ ॥

ते द॒शग्वा॑ः प्रथ॒मा य॒ज्ञमू॑हिरे॒ ते नो॑ हिन्वन्तू॒षसो॒ व्यु॑ष्टिषु ।
उ॒षा न रा॒मीर॑रु॒णैरपो॑र्णुते म॒हो ज्योति॑षा शुच॒ता गोअ॑र्णसा ॥ १२ ॥

ते । दश॑ऽग्वाः । प्र॒थ॒माः । य॒ज्ञम् । ऊ॒हि॒रे॒ । ते । न॒ः । हि॒न्व॒न्तु॒ । उ॒षस॑ः । वि॒ऽउ॑ष्टिषु ।
उ॒षाः । न । रा॒मीः । अ॒रु॒णैः । अप॑ । ऊ॒र्णु॒ते॒ । म॒हः । ज्योति॑षा । शु॒च॒ता । गोऽअ॑र्णसा ॥ १२ ॥

**वेङ्कट०** ते मरुतो दर्शनीयगमनाः(?) प्रथममेव यज्ञम् वहन्ति। ते अस्मान् प्रेरयन्तु कार्येषु उषसः व्युच्छनेषु। उषाः[८] इव रात्रीः अरुणैः [९]महानादित्यः ज्योतिषा[९] दीप्यमानेन गच्छत्स्रोतसा रात्रीः[१०] [११]अप ऊर्णुते[११]। [१२]सम्प्रति रात्रिर्गता[१२] इत्यर्थः ॥ १२ ॥

ते क्षो॒णीभि॑ररु॒णेभि॒र्नाञ्जिभी॑ रु॒द्रा ऋ॒तस्य॒ सद॑नेषु वावृधुः ।
नि॒मेघ॑माना॒ अत्ये॑न॒ पाज॑सा सुश्च॒न्द्रं वर्णं॑ दधिरे सु॒पेश॑सम् ॥ १३ ॥

ते । क्षो॒णीभि॑ः । अ॒रु॒णेभि॑ः । न । अ॒ञ्जिऽभि॑ः । रु॒द्राः । ऋ॒तस्य॑ । सद॑नेषु । व॒वृ॒धुः ।
नि॒ऽमेघ॑मानाः । अत्ये॑न । पाज॑सा । सु॒ऽच॒न्द्रम् । वर्ण॑म् । द॒धि॒रे॒ । सु॒ऽपेश॑सम् ॥ १३ ॥

---

१. °त्वात् तथा मध्ये अ[१]. २. नास्ति वि[१] लपं. ३-३. त्रुटितम् वि[२] अ[१]. ४. तादृशत्रु° लपं. ५. °पुत्राः वि[१]. ६-६. नास्ति मूको. ७-७. नास्ति वि[१] अ[१]. ८. उषा ल. ९-९. त्रुटितम् वि[२]; नास्ति अ[१]. १०. रोऽत्रिः वि[२] अ[१]; रात्रिः वि[१] ल लपं. ११-११. अपोर्णते मूको. १२-१२. नास्ति वि[१].

वेङ्कट० ते मरुतः आरोचमानैः [1]आत्मीयैः †आभरणैरिव वीणाभिः† सह[1] रुद्रपुत्रा उदकस्य स्थानेषु अन्तरिक्षेषु वावृधुः। नितरां सिञ्चन्तः सन्ततगमनेन बलेन सुकान्तम् वर्णम् धारयन्ति [2]शोभन-पुष्टिकमिति[2] ॥ १३ ॥

ताँ इ॒या॒नो महि॒ वरू॑थमू॒तय॒ उप॒ घेदे॒ना नम॑सा गृणीमसि ।
त्रि॒तो न यान् पञ्च॒ होतॄ॑न॒भिष्ट॑य आव॒वर्त॒दव॑राञ्च॒क्रियाव॑से ॥ १४ ॥

तान् । इ॒या॒नः । महि॑ । वरू॑थम् । ऊ॒तये॑ । उप॑ । घ॒ । इत् । ए॒ना । नम॑सा । गृ॒णी॒म॒सि॒ ।
त्रि॒तः । न । यान् । पञ्च॑ । होतॄ॑न् । अ॒भिष्ट॑ये । आ॒ऽव॒वर्त॑त् । अव॑रान् । च॒क्रिया॑ । अव॑से ॥१४॥

वेङ्कट० तान् अभिगच्छन् महद् वारकं लभते रक्षणार्थम्। तथा सति वयं चानेन नमस्कारेण ह तान् उप[3] स्तुमः। यो मनुष्यः त्रितः इव कूपपतितः यान् इमान् [4]पञ्च मरुतोऽभिलषितसिद्ध्यर्थम् † आत्मा-भिमुखान्[4] रक्षणाय चक्रिया आयुधेन सहाऽऽवर्तयति। स तान् इयानः इति सम्बन्धः। पञ्च प्राणाः पुरुषप्रेरणात् होतार उच्यन्त इति। 'मरुतः प्राणैरिन्द्रं [5]बलेन' ( तैआ २,१८,१ ) इति ब्राह्मणमिति†[5] ॥ १४ ॥

यया॑ र॒ध्रं पा॒रय॒थात्यंहो॒ यया॑ नि॒दो मु॒ञ्चथ॑ वन्दि॒तार॑म् ।
अ॒र्वाची॒ सा म॑रुतो॒ या वः॑ ऊ॒तिरो॒ षु वा॒श्रेव॑ सुम॒तिर्जि॑गातु ॥ १५ ॥

यया॑ । र॒ध्रम् । पा॒रय॑थ । अति॑ । अंहः॑ । यया॑ । नि॒दः । मु॒ञ्चथ॑ । व॒न्दि॒तार॑म् ।
अ॒र्वाची॑ । सा । म॒रु॒तः॒ । या । वः॒ । ऊ॒तिः । ओ इति॑ । सु । वा॒श्राऽइ॑व । सु॒ऽम॒तिः । जि॒गा॒तु॒ ॥१५॥

वेङ्कट० यया आराधकम् अंहः अति पारयथ, यया च[6] शत्रोः मुञ्चथ[7] स्तोतारम्, हे मरुतः! सा अस्मदभिमुखी भवतु या युष्माकं स्वभूता ऊतिः। निर्गच्छतु सुष्ठु धेनुरिव सुमतिः[8] ॥ १५ ॥

[8]इति द्वितीयाष्टके सप्तमाध्याये एकविंशो वर्गः[8] ॥

## [ ३५ ]

[8]गृत्समदो भार्गवः शौनकः ( पूर्वम् आङ्गिरसः शौनहोत्रः ) ऋषिः ।
अपांनपाद् देवता । त्रिष्टुप् छन्दः[8] ।

उपे॑मसृक्षि वाज॒युर्व॑च॒स्यां चनो॑ दधीत ना॒द्यो गिरो॑ मे ।
अ॒पां नपा॑दाशु॒हेमा॑ कु॒वित् स सु॒पेश॑सस्करति॒ जोषि॑षद्धि ॥ १ ॥

---

१-१. °त्मी…स° वि[2]. †-† त्रुटितम् अ[1]. २-२ शोभन… वि[1] अ[1]. ३. नास्ति मूको. ४-४. °ञ्च…भिमुखान् वि[1] अ[1]. † °सिध्यर्थन् वि[1] ल. ५-५. नास्ति वि[1] अ[1]. † ब्राह्मणमि° वि[1] ल लपं. ६. नास्ति वि[2] अ[1]. ७. नास्ति वि[2] अ[1] लपं. ८-८. नास्ति मूको.

उप॑ । ईम् । असृक्षि । वाज॒ऽयुः । वचस्याम् । चनः॑ । दधीत । नाद्यः॑ । गिरः॑ । मे ।
अपाम् । नपा॑त् । आशुऽहे॑मा । कुवित् । सः । सुऽपेश॑सः । करति । जोषि॑षत् । हि ॥ १ ॥

वेङ्कट० [1]मध्यमस्थानपठितोऽग्निरपां नपादिति[1]। उप एनां सृजामि[2] अन्नमिच्छन् स्तुतीच्छाम्। मम[3] हविर्धारयतु स्तुतीश्च नादेयः। सः अयम् अपाम् पुत्रो यजमानेषु बहुः शीघ्रं गन्ता भवति, सुरूपांश्च [4]करोति, सेवते हि स्तोतॄन् इति[4] ॥ १ ॥

इ॒मं स्व॑स्मै हृ॒द आ सुत॑ष्टं॒ मन्त्रं॑ वोचेम कु॒विद॑स्य॒ वेद॑त् ।
अ॒पां नपा॑दसु॒र्य॑स्य म॒ह्ना विश्वा॑न्य॒र्यो भुव॑ना जजान ॥ २ ॥

इमम् । सु । अस्मै । हृदः । आ । सुऽत॑ष्टम् । मन्त्र॑म् । वोचेम । कुवित् । अस्य । वेद॑त् ।
अपाम् । नपा॑त् । असुर्य॑स्य । मह्ना । विश्वा॑नि । अर्यः । भुव॑ना । जजान ॥ २ ॥

वेङ्कट० इमम्[2] मन्त्रम् मदीयाद् हृदयात् सुष्ठु तष्टम् सु[2] आ[2] वोचेम अस्मै बहु। इमं मन्त्रम् उच्यमानम् अयं वेत्ति हि। सोऽयमसुरहननिमित्तस्य बलस्य महत्त्वेन विश्वानि भुवनानि [6]जनयितुं स्वामी[6] ॥ २ ॥

सम॒न्या यन्त्युप॑ यन्त्य॒न्याः स॑मा॒नमू॒र्वं न॒द्यः॑ पृणन्ति ।
तमू॒ शुचिं॒ शुच॑यो दीदि॒वांस॑म॒पां नपा॑तं॒ परि॑ तस्थु॒राप॑ः ॥ ३ ॥

सम् । अन्याः । यन्ति॑ । उप॑ । यन्ति । अन्याः । समानम् । ऊर्वम् । नद्यः॑ । पृणन्ति ।
तम् । ऊँ इति॑ । शुचि॑म् । शुच॑यः । दीदिऽवांस॑म् । अपाम् । नपा॑तम् । परि॑ । तस्थुः । आप॑ः ॥

वेङ्कट० काश्चिन्महानद्यः[7] स्वरूपेण सङ्गच्छन्त ऊर्वेण, अथ अन्याः क्षुद्रनद्यो महानदीभिः सङ्गता उपगच्छन्ति। ताः सर्वा नदीनाम् [8]साधारणमिमम् ऊर्वं[8] पूरयन्ति। तम् एव शुचिम् दीप्तं निर्मलाः अपाम् नपातम् परितः तिष्ठन्ति आपः ॥ ३ ॥

तमस्मे॑रा युव॒तयो॒ युवा॑नं मर्मृ॒ज्यमा॑नाः॒ परि॑ य॒न्त्याप॑ः ।
स शु॒क्रेभि॒ः शिक्व॑भी रे॒वद॒स्मे दी॒दाया॑नि॒ध्मो घृ॒तनि॑र्णिग॒प्सु ॥ ४ ॥

तम् । अस्मे॑राः । युवतय॑ः । युवा॑नम् । मर्मृज्यमा॑नाः । परि॑ । यन्ति । आप॑ः ।
सः । शुक्रेभि॑ः । शिक्व॑ऽभिः । रेवत् । अस्मे इति॑ । दीदाय॑ । अनिध्मः । घृतऽनि॑र्णिक् । अप्ऽसु ॥

---

१-१. त्रुटितम् वि[2] अ[1]. २. °जानि वि[1] लपं. ३. नास्ति मूको. ४-४. करो ··· वि[1]; करोति ··· अ[1].
५. त्रुटितम् वि[2] अ[1]. ६-६. जन ··· वि[1] अ[1]. ७. नद्यः वि[1]. ८-८. असाधारणमिममपूर्वं मूको.

वेङ्कट० स्मेरमुखा युवतयो भवन्ति, [१]अतादृशाः काश्चिद्[१] युवतयः युवानम् अत्यन्तं परिचरन्त्यः परितः यन्ति आपः। सः [२]दीप्तैस्तेजोभिः धनयुक्तम् अस्माकम्[२] दीप्यते काष्ठरहितः[३] तेजसाक्षरद्रूपः[४] उदकेषु ॥ ४ ॥

अस्मै तिस्रो अव्यथ्याय नारीर्देवाय देवीर्दिधिषन्त्यन्नम् ।
कृताइवोप हि प्रसर्स्रे अप्सु स पीयूषं धयति पूर्वसूनाम् ॥ ५ ॥

अस्मै । तिस्रः । अव्यथ्याय । नारीः । देवाय । देवीः । दिधिषन्ति । अन्नम् ।
कृताःऽइव । उप । हि । प्रऽसर्स्रे । अप्ऽसु । सः । पीयूषम् । धयति । पूर्वऽसूनाम् ॥ ५ ॥

वेङ्कट० व्यथिर्हिंसाकर्मा। अव्यथनीयाय अस्मै देवाय इळा सरस्वती भारती च [५]तिस्रः देव्यो धारयन्ति अन्नम्[५]। नार्यो जनयित्र्य इव[६] पुत्रे उपससार अप्सु। सः[७] पीयूषम् सारं पिबति पूर्वसूनाम्[७], पूर्वं या एनम् अजनयन्निति ॥ ५ ॥

[८]इति द्वितीयाष्टके सप्तमाध्याये द्वाविंशो वर्गः[८] ॥

अश्वस्यात्र जनिमास्य च स्वर्द्रुहो रिषः संपृचः पाहि सूरीन् ।
आमासु पूर्षु परो अप्रमृष्यं नारातयो वि नशन्नानृतानि ॥ ६ ॥

अश्वस्य । अत्र । जनिम । अस्य । च । स्वः । द्रुहः । रिषः । सम्ऽपृचः । पाहि । सूरीन् ।
आमासु । पूर्षु । परः । अप्रऽमृष्यम् । न । अरातयः । वि । नशन् । न । अनृतानि ॥ ६ ॥

वेङ्कट० 'अप्सुयोनिर्वा अश्वः' (तैब्रा ३, ८, ४, ३) इति ब्राह्मणम्। 'अस्माद् अश्वोऽजायत। 'स्वः' (निघ १, १२) इत्युदकनाम। अस्य उदकस्य[९] च अस्मादेव जन्म। स त्वं द्रोग्धुर्विनाशयितुश्च सम्पर्कात् स्तोतॄन् रक्ष। आर्द्रासु पूरयित्रीषु नदीषु परः [१०]अयमपां नपात् अनभिभवनीयमुग्रं तेजो[१०] विसृजति। न अस्मान् अरातयः व्याप्नुवन्तु, न च रक्षांसि ॥ ६ ॥

स्व आ दमे सुदुघा यस्य धेनुः स्वधां पीपाय सुभ्वन्नमत्ति ।
सो अपां नपादूर्जयन्नप्स्व१न्तर्वसुदेयाय विधते वि भाति ॥ ७ ॥

स्वे । आ । दमे । सुऽदुघा । यस्य । धेनुः । स्वधाम् । पीपाय । सुऽभु । अन्नम् । अत्ति ।
सः । अपाम् । नपात् । ऊर्जयन् । अप्ऽसु । अन्तः । वसुऽदेयाय । विधते । वि । भाति ॥ ७ ॥

---

१-१. नास्ति वि[१] लपं. २-२. त्रुटितम् वि[२] अ[१]. ३. °रहितम् मूको. ४. तेजसाऽक्षर° ल लपं. ५-५. त्रुटितम् वि[२] अ[१]. ६. °नयित्रीरिव मूको. ७. नास्ति मूको. ८-८. नास्ति मूको. ९-९. अस्मा...विसृजत्मोदकस्य वि[२] अ[१]. १०-१०. °पां ··· वि[२] अ[१].

वेङ्कट० स्वे गृहे सुदोहा यस्य धेनुः नदी स्वधाम् आप्याययति[१], स शोभनभवनम् अन्नम् अत्ति[२]। [३]सः अयम् अपाम् नपात् अप्सु अन्तः[३] बलं कुर्वन् वसुदानाय परिचरते दीप्यते ॥ ७ ॥

यो अप्स्वा शुचिना दैव्येन ऋतावाजस्र उर्विया विभाति ।
वया इदन्या भुवनान्यस्य प्र जायन्ते वीरुधश्च प्रजाभिः ॥ ८ ॥

यः । अप्ऽसु । आ । शुचिना । दैव्येन । ऋतऽवा । अजस्रः । उर्विया । विऽभाति ।
वयाः । इत् । अन्या । भुवनानि । अस्य । प्र । जायन्ते । वीरुधः । च । प्रऽजाभिः ॥ ८ ॥

वेङ्कट० यः अप्सु अन्तः निर्मलेन देवार्हेण तेजसा यज्ञवान् नित्यः उरुः विभाति । अस्यापां नप्तुः [४]शाखाः एव अन्यानि भूतानि । किं च[४] अस्य प्रसादात् वीरुधः[५] प्रजायमानैः पुष्पफलैः प्र जायन्ते इति ॥ ८ ॥

अपां नपादा ह्यस्थादुपस्थं जिह्मानामूर्ध्वो विद्युतं वसानः ।
तस्य ज्येष्ठं महिमानं वहन्तीर्हिरण्यवर्णाः परि यन्ति यह्वीः ॥ ९ ॥

अपाम् । नपात् । आ । हि । अस्थात् । उपऽस्थम् । जिह्मानाम् । ऊर्ध्वः । विऽद्युतम् । वसानः ।
तस्य । ज्येष्ठम् । महिमानम् । वहन्तीः । हिरण्यऽवर्णाः । परि । यन्ति । यह्वीः ॥ ९ ॥

वेङ्कट० अपाम् नपात् [६]आ तिष्ठति[६] अपाम् उपस्थम् तिर्यग् गच्छन्तीनां मध्ये स्वयम् ऊर्ध्वः दीप्तिमाच्छादयन् । तस्य प्रशस्यतमं तेजो वहन्त्यः हिरण्यवर्णाः[७] नद्यः परितो गच्छन्ति महत्यः ॥ ९ ॥

हिरण्यरूपः स हिरण्यसंदृगपां नपात् सेदु हिरण्यवर्णः ।
हिरण्ययात् परि योनेर्निषद्या हिरण्यदा ददत्यन्नमस्मै ॥ १० ॥

हिरण्यऽरूपः । सः । हिरण्यऽसंदृक् । अपाम । नपात् । सः । इत् । ऊँ इति । हिरण्यऽवर्णः ।
हिरण्ययात् । परि । योनेः । निऽसद्य । हिरण्यऽदाः । ददति । अन्नम् । अस्मै ॥ १० ॥

वेङ्कट० हिरण्मयाङ्गो हिरण्मयसन्दर्शनः[८] सः[९] अयम् अपाम्[९] नपात्[९]। तथा [३]सः एव[३] हिरण्यवर्णः। तस्य योनिश्च हिरण्मयः, तस्माद् आगत्येह निषद्य हिरण्यस्य दाता अस्मै यजमानाय अन्नम् प्रयच्छति ॥ १० ॥

[९]इति द्वितीयाष्टके सप्तमाध्याये त्रयोविंशो वर्गः[९] ॥

---

१. आप्यायति ल लपं. २. °ति उदकम् वि[१] लपं; अत्युद वि[२] अ[१]. ३-३. त्रुटितम् वि[२] अ[१]. ४-४. °खाः···श्च वि[२]; °खा···च अ[१]. ५. °द्धः वि[२] अ[१]. ६-६. माऽभिति° लपं; अविति° अ[१]. ७. नास्ति मूको. ८. °मयसुदर्शनो° वि[१]. ९-९. नास्ति मूको.

तदस्यानीकमुत चारु नामापीच्यं वर्धते नप्तुरपाम् ।
यमिन्धते युवतयः समित्था हिरण्यवर्णं घृतमन्नमस्य ॥ ११ ॥

तत् । अस्य । अनीकम् । उत । चारु । नाम । अपीच्यम् । वर्धते । नप्तुः । अपाम् ।
यम् । इन्धते । युवतयः । सम् । इत्था । हिरण्यऽवर्णम् । घृतम् । अन्नम् । अस्य ॥११॥

**वेङ्कट०** तत् अस्य तेजः । 'तस्य रश्मयोऽनीकानि' (तैब्रा १,६,६,२) इति ब्राह्मणम् । अपि चास्य शोभनं नामान्तर्हितम् वर्धते अपां नप्तुः । तद् वेदविद्भयोऽवगन्तव्यम् । यम् इत्थं नद्यः सम् इन्धते हिरण्यवर्णम् । अस्य उदकम् अन्नम्[१] भवति ॥ ११ ॥

अस्मै बहूनामवमाय सख्ये यज्ञैर्विधेम नमसा हविर्भिः ।
सं सानु मार्ज्मि दिधिषामि बिल्मैर्दधाम्यन्नैः परि वन्द ऋग्भिः ॥ १२ ॥

अस्मै । बहूनाम् । अवमाय । सख्ये । यज्ञैः । विधेम । नमसा । हविःऽभिः ।
सम् । सानु । मार्ज्मि । दिधिषामि । बिल्मैः । दधामि । अन्नैः । परि । वन्दे । ऋक्ऽभिः ॥ १२ ॥

**वेङ्कट०** अस्मै बहूनाम् 'अपि देवानाम्[२]' अन्तिकतमाय । 'अग्निर्वै देवानामवमः' (ऐब्रा १,१) इति ब्राह्मणम् । सख्ये यज्ञैः परिचरेम नमस्कारेण हविर्भिः च । तस्य निधानार्थं समुच्छ्रितं धिष्ण्यम् सम् मार्ज्मि । बिल्मशब्द उपायवचनः । धारयामि चोपायैः, धारयामि च हविर्भिः । परि स्तौमि च मन्त्रैः ॥१२॥

स ईं वृषाजनयत् तासु गर्भं स ईं शिशुर्धयति तं रिहन्ति ।
सो अपां नपादनभिम्लातवर्णोऽन्यस्येवेह तन्वा विवेष ॥ १३ ॥

सः । ईम् । वृषा । अजनयत् । तासु । गर्भम् । सः । ईम् । शिशुः । धयति । तम् । रिहन्ति ।
सः । अपाम् । नपात् । अनभिम्लातऽवर्णः । अन्यस्यऽइव । इह । तन्वा । विवेष ॥ १३ ॥

**वेङ्कट०** अग्निरेवैनं रेतसः वृषा अजनयत् ओषधीषु गर्भम् । अथौषधिवनस्पतिभ्यो[३] जातः सः एता ओषधीः शिशुः भूत्वा धयति । ताश्चैनं वत्समिव जिह्वया लिहन्ति । सः अयम् अपाम् पौत्रः अग्लानवर्णः[४] अन्यस्य इव शरीरेणास्मिँल्लोके आ विवेष[५] व्याप्तः[६] ॥ १३ ॥

अस्मिन् पदे परमे तस्थिवांसमध्वस्मभिर्विश्वहा दीदिवांसम् ।
आपो नप्त्रे घृतमन्नं वहन्तीः स्वयमत्कैः परि दीयन्ति यह्वीः ॥ १४ ॥

---

१. नास्ति वि[१] लपं. २-२. नास्ति वि[१]. ३. °षधी° वि[१], ४. °श्लान° वि[२] अ[१] लपं. ५. °वेष्ट वि[२] अ[१]. ६. व्याप्त वि[२] अ[१].

अस्मिन् । पदे । परमे । तस्थिऽवांसम् । अध्वस्मऽभिः । विश्वहा । दीदिऽवांसम् ।
आपः । नप्त्रे । घृतम् । अन्नम् । वहन्तीः । स्वयम् । अत्कैः । परि । दीयन्ति । यह्वीः ॥ १४ ॥

**वेङ्कट०** अस्मिन्[1] परमे पदे तस्थिवांसम् अन्तरिक्षे अशुष्यद्भिस्तेजोभिः सदा दीप्यमानम् स्वयम् एवात्कैः आपः परितो यन्ति महत्यस्तस्मा अग्नयेऽन्नभूतम् घृतम् वहन्त्यः ॥ १४ ॥

**अयांसमग्ने सुक्षितिं जनायायांसमु मघवद्भ्यः सुवृक्तिम् ।**
**विश्वं तद् भद्रं यदवन्ति देवा बृहद् वदेम विदथे सुवीराः ॥ १५ ॥**

अयांसम् । अग्ने । सुऽक्षितिम् । जनाय । अयांसम् । ऊँ इति । मघवत्ऽभ्यः । सुऽवृक्तिम् ।
विश्वम् । तत् । भद्रम् । यत् । अवन्ति । देवाः । बृहत् । वदेम । विदथे । सुऽवीराः ॥ १५ ॥

**वेङ्कट०** अग्ने ! त्वामहं शोभननिवासं जनार्थम्[2] अयांसम्, तथा अयांसम् इह हविष्मद्भ्यः शोभनस्तुतिमिति ॥ १५ ॥

[3]इति द्वितीयाष्टके सप्तमाध्याये चतुर्विंशो वर्गः[3] ॥

## [ ३६ ]

[1]गृत्समदो भार्गवः शौनकः ( पूर्वम् आङ्गिरसः शौनहोत्रः ) ऋषिः । ऋतवो देवाश्च देवता ( प्रथमाया इन्द्रो मधुश्च, द्वितीयाया मरुतो माधवश्च, तृतीयायाः त्वष्टा शुक्रश्च, चतुर्थ्या अग्निः शुचिश्च, पञ्चम्या इन्द्रो नभश्च, षष्ठ्या मित्रावरुणौ नभस्यश्च ) ।
जगती छन्दः[1] ।

**तुभ्यं हिन्वानो वसिष्ट गा अपोऽधुक्षन्त्सीमविभिरद्रिभिर्नरः ।**
**पिबेन्द्र स्वाहा प्रहुतं वषट्कृतं होत्रादा सोमं प्रथमो य ईशिषे ॥ १ ॥**

तुभ्यम् । हिन्वानः । वसिष्ट । गाः । अपः । अधुक्षन् । सीम् । अविऽभिः । अद्रिऽभिः । नरः ।
पिब । इन्द्र । स्वाहा । प्रऽहुतम् । वषट्ऽकृतम् । होत्रात् । आ । सोमम् । प्रथमः । यः । ईशिषे ॥ १ ॥

**वेङ्कट०** [4]इन्द्र ! तुभ्यम्[4] प्रेरयामीति गन्त्रीः अपः गृहीत्वा वासयति । अथ प्रातरेव ऋत्विजस्ताः परिगृह्य अविभिः दशापवित्रैः ग्रावभिश्च सोमं दुहन्ति । तं हुतम् वषट्कृतम् सोमम् इन्द्र ! त्वम् पिब, तथा मम स्वा वागाह होतुः सकाशात् सोमम् प्रथमः[5] यः त्वम् ईशिषे सोमपानस्येति ॥ १ ॥

---

१. नास्ति वि॰ लप. २. अया॰ मूको. ३-३. नास्ति मूको. ४-४. तुभ्यम् इन्द्र लप.
५. ॰मेव वि॰ अ॰.

यज्ञैः संमिश्लाः पृषतीभिर्ऋष्टिभिर्यामञ्छुभ्रासो अञ्जिषु प्रिया उत ।
आसद्या बर्हिर्भरतस्य सूनवः पोत्रादा सोमं पिबता दिवो नरः ॥ २ ॥

यज्ञैः । सम्ऽमिश्लाः । पृषतीभिः । ऋष्टिऽभिः । यामन् । शुभ्रासः । अञ्जिषु । प्रियाः । उत ।
आऽसद्य । बर्हिः । भरतस्य । सूनवः । पोत्रात् । आ । सोमम् । पिबत । दिवः । नरः ॥ २ ॥

वेङ्कट० [1]हविर्भिः वडवाभिः आयुधैश्च[1] संयुक्ताः आगमनवेलायां शोभायुक्ताः अपि आऽऽभरणेषु प्रियाः ते यूयम्[2] हे आदित्यस्य सूनवः मरुतः! अस्मिन्[3] बर्हिषि आसद्य पोतुराकृष्य सोमम् [4]पिबत दिवः नेतारः!†[4] ॥ २ ॥

अमेव नः सुहवा आ हि गन्तन नि बर्हिषि सदतना रणिष्टन ।
अथा मन्दस्व जुजुषाणो अन्धसस्त्वष्टर्देवेभिर्जनिभिः सुमद्गणः ॥ ३ ॥

अमाऽइव । नः । सुऽहवाः । आ । हि । गन्तन । नि । बर्हिषि । सदतन । रणिष्टन ।
अथ । मन्दस्व । जुजुषाणः । अन्धसः । त्वष्टः । देवेभिः । जनिऽभिः । सुमत्ऽगणः ॥ ३ ॥

वेङ्कट० [5]हे देवपत्न्यः! यज्ञागताः[5] इव स्वाह्वानाः! अस्मान् आ गच्छत[6]। आगत्य चास्मिन् बर्हिषि निषीदत[7] तत्र[8] रमत च। अथ [9]तासु आगतासु[9] त्वं च हे त्वष्टः! सोमेन तृप्यस्व सम्प्रीयमाणो देवैस्तेषां जायाभिश्च शोभनगणः ॥ ३ ॥

आ वक्षि देवाँ इह विप्र यक्षि चोशन् होतर्नि षदा योनिषु त्रिषु ।
प्रति वीहि प्रस्थितं सोम्यं मधु पिबाग्नीध्रात् तव भागस्य तृप्णुहि ॥ ४ ॥

आ । वक्षि । देवान् । इह । विप्र । यक्षि । च । उशन् । होतः । नि । सद । योनिषु । त्रिषु ।
प्रति । वीहि । प्रऽस्थितम् । सोम्यम् । मधु । पिब । आग्नीध्रात् । तव । भागस्य । तृप्णुहि ॥ ४ ॥

वेङ्कट० [10]अग्ने विप्र[2]! देवान् इह आ वह[10] यक्षि च तान् कामयमानः[11]। होतः! निषीद च गार्हपत्यादिषु स्थानेषु[1]। प्रति कामय प्रस्थितम्[12] सोममयम् मधु, पिब च आग्नीध्रात्। त्वदीयेन भागेन तृप्यस्व ॥ ४ ॥

एष स्य ते तन्वो नृम्णवर्धनः सह ओजः प्रदिवि बाह्वोर्हितः ।
तुभ्यं सुतो मघवन् तुभ्यमाभृतस्त्वमस्य ब्राह्मणादा तृपत् पिब ॥ ५ ॥

एषः । स्यः । ते । तन्वः । नृम्णऽवर्धनः । सहः । ओजः । प्रऽदिवि । बाह्वोः । हितः ।
तुभ्यम् । सुतः । मघऽवन् । तुभ्यम् । आऽभृतः । त्वम् । अस्य । ब्राह्मणात् । आ । तृपत् । पिब ॥ ५ ॥

---

१-१. ···युद्धैश्च वि[2] अ[1]. २. नास्ति मूको. ३. नास्ति वि[1] लपं. ४-४. त्रुटितम् अ[1]. † नास्ति वि[1]. ५-५. त्रुटितम् वि[2] अ[1]. ६. नास्ति अ[1]. ७. °दथ मूको. ८. अथ त° वि[2] अ[1]. ९-९. स्वागतासु वि[1,2] अ[1] लपं. १०-१०. वह अ[1]; आवह वि[2]. ११. कामयन् वि[1]; कामय वि[2] अ[1]. १२. प्रस्थिते प्रस्थितम् वि[2].

वेङ्कट० नृषु 'मनो यस्य नॄन् वा नमयति स नृम्ण इत्युच्यते'। हे इन्द्र! सोऽयं सोमः तव शरीरस्य वर्धनः। तथा पुराणे त्वयि बाह्वोः सहस्करः ओजस्करश्च अभिहितः। सोऽयम् तुभ्यम् सुतः मघवन्! तथा तुभ्यम् एव सम्भृतः। त्वम् इमं ब्राह्मणाच्छंसिनो यागात् तृप्यन् पिब इति ॥ ५ ॥

जुषेथां युज्ञं बोधतं हवस्य मे सुत्तो होता निविदः पूर्व्या अनु ।
अच्छा राजाना नम एत्यावृतं प्रशास्त्रादा पिबतं सोम्यं मधु ॥ ६ ॥

जुषेथाम् । यज्ञम् । बोधतम् । हवस्य । मे । सत्तः । होता । निऽविदः । पूर्व्याः । अनु ।
अच्छ । राजाना । नमः । एति । आऽवृतम् । प्रऽशास्त्रात् । आ । पिबतम् । सोम्यम् । मधु ॥ ६ ॥

वेङ्कट० हे मित्रावरुणौ! सेवेथाम् यज्ञम्, बुध्यतम्[2] च मदीयस्याऽऽह्वानस्य। निषण्णः होता वाचः पूर्व्याः लक्ष्यीकृत्य। यज्ञार्थं युवां सोमाख्यमन्नम् अच्छ एति। भवद्भ्यामाभिमुख्येन वृतं मैत्रावरुणात् आ पिबतम् सोममयम् मधु इति ॥ ६ ॥

[3]इति द्वितीयाष्टके सप्तमाध्याये पञ्चविंशो वर्गः[3] ॥

[1]व्याख्यत् सप्तममध्यायं द्वितीयस्येति माधवः ।
गोविन्दो यस्य तनयो ज्येष्ठः पुत्रश्च वेङ्कटः ॥ १ ॥

इति वेङ्कटमाधवाचार्यविरचिते ऋक्संहिताव्याख्याने द्वितीयाष्टके सप्तमोऽध्यायः ।

—*—

इति ऋग्वेदे सभाष्ये द्वितीयाष्टके सप्तमोऽध्यायः ॥



१-१. त्रुटितम् वि[२] अ[१]. २. बुध्येथाम् ल प्रस्तावः ३-३. नास्ति मूको.

## अथ द्वितीयाष्टकेऽष्टमोऽध्यायः

वेङ्कट०

'मन्दस्व होत्रात्' अध्यायं व्याचिख्यासति माधवः ।
दर्शयन्नात्मनेपदप्रयुक्तं भेदमादितः[१] ॥ १ ॥

किमत्र कारणं ब्रूहि धातवोऽमी व्यवस्थिताः ।
परस्मैपदिनः केचिदात्मनेपदिनोऽपरे ॥ २ ॥

आत्मनेपदमेवैषु दृश्यते भावकर्मणोः[२] ।
उदाहरणमेतेषां बहुत्वान्न प्रदर्श्यते[३] ॥ ३ ॥

वदन्ति तत्र कवयः स्वभावादिह केचन ।
अभिसंयन्ति[४] कर्तारम् 'अग्निमीळे पुरोहितम्'[५] ॥ ४ ॥

फलं स्तुतेः[६] स्वभावेन कर्तारमुपगच्छति ।
अन्यार्थत्वं स्तुतेर्बलात्[७] प्रतिपाद्यमिति स्थितिः ॥ ५ ॥

आत्मनेपदिनस्ते स्युः परस्मैपदिनोऽपरे ।
ईक्षतेः पश्यतेश्चापि भेदः सूक्ष्मोऽस्ति कश्चन ॥ ६ ॥

अभिसन्धाय कार्यार्थं दर्शनं विदुरीक्षणम् ।
'अवेक्षे सुप्रजास्त्वाय'[८] तत्राऽऽहुश्च[९] निदर्शनम् ॥ ७ ॥

नियमः पश्यतेर्नास्ति 'नराशंसं सुधृष्टमम्'[१०] ।
परस्मैपदी[११] पश्यतिरन्यस्तेनात्मनेपदी[१२] ॥ ८ ॥

भवन्ति चोभयविधाः 'प्राता रत्नं प्रातरित्वा'[१३] ।
'अञ्जन्ति त्वामध्वरे'[१४] च 'चित्रैरञ्जिभिर्वपुषे'[१५] ॥ ९ ॥

कर्तृगामिन्यपि फले न भवत्यात्मनेपदम् ।
अविवक्षयोपपदात्[१६] प्रतीतेश्च तथा क्वचित् ॥ १० ॥

आत्मनेपदमित्येषा संज्ञाऽर्थं दर्शयत्यमुम् ।
पदिः[१७] प्रयोगकर्मा स्याद् आत्मने भाष्यत[१८] इति ॥ ११ ॥

---

१. वेद° वि[१] लपं २. तु. पा १,३,१३. ३. °दृश्यते वि[१] लपं. ४. 'संयति अ[१] ल. ५. ऋ १,१,१. ६. कृतेः वि[१] लपं. ७. °तेर्यस्मात् वि[१] अ[१]. ८. तै १,१,१०,३. ९. तदाहुः लपं. १०. ऋ १,१८,९. ११. °पदि वि[१] ल लपं. १२. पश्यन्ति अ° वि[१] अ[१]. १३. ऋ १,१२५,१. १४. ऋ ३,८,१. १५. ऋ १,६४,४. १६. °पपादात् लपं. १७. यदि ल. १८. भाषत अ[१].

अल्पं भेदमनाश्रित्य परोक्षादौ लुङादयः ।
प्रयुज्यन्ते यथा[1] तद्वत् सङ्करश्चापि दृश्यते ॥ १२ ॥

वदन्ति वैयाकरणा इमं भेदमुपग्रहम् ।
स चायं दुर्ग्रहो भेदः स्पष्टं तेभ्योऽवधार्यताम् ॥ १३ ॥ इति

## [ ३७ ]

[2]गृत्समदो भार्गवः शौनकः ( पूर्वम् आङ्गिरसः शौनहोत्रः ) ऋषिः ।
सविता देवता । त्रिष्टुप् छन्दः[2] ।

**मन्दस्व होत्रादनु जोषमन्धसोऽध्वर्यवः स पूर्णां वष्ट्यासिचम् ।**
**तस्मा एतं भरत तद्वशो ददिर्होत्रात् सोमं द्रविणोदः पिब ऋतुभिः ॥ १ ॥**

मन्दस्व । होत्रात् । अनु । जोषम् । अन्धसः । अध्वर्यवः । सः । पूर्णाम् । वष्टि । आऽसिचम् ।
तस्मै । एतम् । भरत । तत्ऽवशः । ददिः । होत्रात् । सोमम् । द्रविणःऽदः । पिब । ऋतुऽभिः ॥

**वेङ्कट०** गृत्समदः । यथाकामम् होत्रात्[3] सोमेन तृप्यस्व । हे अध्वर्यवः ! द्रविणोदाः पूर्णाम् आसिचम् सिच्यतेः,[4] स्रुचम्[5] कामयते । ततः च तस्मै एतम् सोमम् भरत । तत्कामोऽयं दानशीलो द्रविणोदाः । [6]हे द्रविणोदः ![6] होतुः सोमम् ऋतुभिः सह पिब ॥ १ ॥

**यमु पूर्वमहुवे तमिदं हुवे सेदु हव्यो ददिर्यो नाम पत्यते ।**
**अध्वर्युभिः प्रस्थितं सोम्यं मधु पोत्रात् सोमं द्रविणोदः पिब ऋतुभिः ॥ २ ॥**

यम् । ऊँ इति । पूर्वम् । अहुवे । तम् । इदम् । हुवे । सः । इत् । ऊँ इति । हव्यः । ददिः । यः । नाम । पत्यते ।
अध्वर्युऽभिः । प्रऽस्थितम । सोम्यम । मधु । पोत्रात् । सोमम् । द्रविणःऽदः । पिब । ऋतुऽभिः ॥२॥

**वेङ्कट०** यम् एव पूर्वम् आहूतवान् , तम् इदानीमाह्वयामि । सः एव ह्वातव्यः[7] दाता, [8]यः नाम ईश्वरो भवति[8] सर्वस्य । [9]सोम्यम् मधु[9] अध्वर्युभिः सह प्रस्थितम् इति ॥ २ ॥

**मेद्यन्तु ते वह्नयो येभिरीयसेऽरिषण्यन् वीळयस्वा वनस्पते ।**
**आयूया धृष्णो अभिगूर्या त्वं नेष्ट्रात् सोमं द्रविणोदः पिब ऋतुभिः ॥ ३ ॥**

---

१. तथा ल. २-२. नास्ति मूको. ३. होत्रा वि[1] लपं. ४. °ते वि[1,2] लपं. ५. स्रुं वि[1] अ[1]; स्रुत्वं वि[2] लपं. ६-६. नास्ति वि[2] लपं. ७. आह्वा[?] वि[2]. ८-८. पोऽयम् वि[1,2] अ[1] लपं, ९. °सि वि[1,2] अ[1] लपं.

मेर्घन्तु । ते । वह्नयः । येभिः । ईयसे । अरिषण्यन् । वीळयस्व । वनस्पते ।
आऽयूर्य । धृष्णो इति । अभिऽगूर्य । त्वम् । नेष्ट्रात् । सोमम् । द्रविणःऽदः । पिब । ऋतुऽभिः ॥३॥

वेङ्कट० सुहिता मेधन्तु ते वह्नयः वोळ्हारोऽश्वाः यैरश्वैर्गच्छसि । अहिंसन् स्तम्भय, अत्र यास्कः— 'दृढीभव आयूय धृष्णो[1] अभिगूर्य त्वं नेष्ट्रियात्, धिष्ण्यात्' ( ८,३ ) इति, वनानां पते ! आलोड्य[2] हे धृष्णो ! सोमम् पिब अभिगूर्य[3] । अभिगोरणम् आत्माभिमुखं नयनमिति ॥ ३ ॥

अपाद्धोत्रादुत पोत्रादमत्तोत नेष्ट्रादजुषत प्रयो हितम् ।
तुरीयं पात्रममृक्तममर्त्यं द्रविणोदाः पिबतु द्राविणोदसः ॥ ४ ॥

अपात् । होत्रात् । उत । पोत्रात् । अमत्त । उत । नेष्ट्रात् । अजुषत । प्रयः । हितम् ।
तुरीयम् । पात्रम् । अमृक्तम् । अमर्त्यम् । द्रविणःऽदाः । पिबतु । द्राविणःऽदसः ॥ ४ ॥

वेङ्कट० होतुः सोमम् अपात् । अपि च पोतुः सोमेनामाद्यत् । अपि च नेष्टुरन्नं सेवितवान् निहितम् । अधुना चतुर्थम् पात्रम् अमर्त्यम्[4] दशापवित्रेणापरामृष्टं सोमसम्बन्धादयम् द्रविणोदाः पिबतु आत्मीयस्य सोमस्य[4] ॥ ४ ॥

अर्वाञ्चमद्य यय्यं नृवाहणं रथं युञ्जाथामिह वां विमोचनम् ।
पृङ्क्तं हवींषि मधुना हि कं गतमथा सोमं पिबतं वाजिनीवसू ॥ ५ ॥

अर्वाञ्चम् । अद्य । यय्यम् । नृऽवाहनम् । रथम् । युञ्जाथाम् । इह । वाम् । विऽमोचनम् ।
पृङ्क्तम् । हवींषि । मधुना । आ । हि । कम् । गतम् । अथ । सोमम् । पिबतम् । वाजिनीवसू इति वाजिनीऽवसू ॥ ५ ॥

वेङ्कट० अस्मदभिमुखम् अद्य अत्यन्तं यन्तं नेत्रोर्युवयोर्वाहनम् रथम् युञ्जाथाम्, यो रथः वाम् इह विमोचयति । सम्पर्चयतम्[5] हवींषि सेचनेन[6] तदर्थं भवदीयेन मधुना सह आगच्छतम् । कम् इति पूरणम् । अथ सोमम् पिबतम् हे अन्नवसू अश्विनौ ! ॥ ५ ॥

जोष्यग्ने समिधं जोष्याहुतिं जोषि ब्रह्म जन्यं जोषि सुष्टुतिम् ।
विश्वेभिर्विश्वाँ ऋतुना वसो मह उशन् देवाँ उशतः पायया हविः ॥ ६ ॥

जोषि । अग्ने । सम्ऽइधम् । जोषि । आऽहुतिम् । जोषि । ब्रह्म । जन्यम् । जोषि । सुऽस्तुतिम् ।
विश्वेभिः । विश्वान् । ऋतुना । वसो इति । महः । उशन् । देवान् । उशतः । पायय । हविः ॥६॥

---

१. °ष्णो त्वं वि[२] अ[१]. २. °लोप्य दि[२] अ[१]. ३. नास्ति मूको. ४. नास्ति वि[२] लपं. ५. पर्च° लपं. ६. °नेन वि[१] लपं.

**वेङ्कट०** जुषस्व अग्ने! समिदादिकम्, जनभवमुक्थम्। सर्वैर्ऋतुभिः सह सर्वान् हे वासयितः! महतः कामयमानान् देवान् कामयमानः सोमम् पायय ॥ ६ ॥

'इति द्वितीयाष्टके अष्टमाध्याये प्रथमो वर्गः' ॥

## [ ३८ ]

'गृत्समदो भार्गवः शौनकः ( पूर्वम् आङ्गिरसः शौनहोत्रः ) ऋषिः । सविता देवता । त्रिष्टुप् छन्दः' ।

उदु ष्य देवः सविता सवाय शश्वत्तमं तदपा वह्निरस्थात् ।
नूनं देवेभ्यो वि हि धाति रत्नमथाभजद् वीतिहोत्रं स्वस्तौ ॥ १ ॥

उत् । ऊँ इति । स्यः । देवः । सविता । सवाय । शश्वत्ऽतमम् । तत्ऽअपाः । वह्निः । अस्थात् ।
नूनम् । देवेभ्यः । वि । हि । धाति । रत्नम् । अथ । आ । अभजत् । वीतिऽहोत्रम् । स्वस्तौ ॥१॥

**वेङ्कट०** उत् तिष्ठति अयम् देवः[२] सविता सर्वेषां प्रसवाय नित्यं तत्कर्मा वोढा। नूनम् सः[३] देवेभ्यः रमणीयं धनं वि दधाति। तथा प्रिययज्ञं च यजमानम् अविनाशे प्रापयति ॥ १ ॥

विश्वस्य हि श्रुष्टये देव ऊर्ध्वः प्र बाहवा पृथुपाणिः सिसर्ति ।
आपश्चिदस्य व्रत आ निमृग्रा अयं चिद् वातो रमते परिज्मन् ॥ २ ॥

विश्वस्य । हि । श्रुष्टये । देवः । ऊर्ध्वः । प्र । बाहवा । पृथुऽपाणिः । सिसर्ति ।
आपः । चित् । अस्य । व्रते । आ । निऽमृग्राः । अयम् । चित् । वातः । रमते । परिऽज्मन् ॥२॥

**वेङ्कट०** विश्वस्य स्वकार्येषु क्षिप्रत्वाय देवः ऊर्ध्वः[४] प्र सारयति [५]बाहू पृथुपाणिः। आपः चित् अस्य कर्मणि आ †निमर्ज्याः निमृज्यन्ते†[५] वृष्टिलक्षणाः। अयम् वातः च परितो गन्तरि सवितरि रमते ॥ २ ॥

आशुभिश्चिद्यान् वि मुचाति नूनमरीरमदतमानं चिदेतोः ।
अह्यर्षूणां चिन्न्ययाँ अविष्यामनु व्रतं सवितुर्मोक्यागात् ॥ ३ ॥

आशुऽभिः । चित् । यान् । वि । मुचाति । नूनम् । अरीरमत् । अतमानम् । चित् । एतोः ।
अहिऽर्षूणाम् । चित् । नि । अयान् । अविष्याम् । अनु । व्रतम् । सवितुः । मोकी । आ । अगात् ॥३॥

**वेङ्कट०** आशुभिः अश्वैः सम्प्रति अस्तमनवेलायाम् यान् वि मुञ्चति। नूनम्[६] रमयति[७] गच्छन्तं

---

१-१. नास्ति मूको. २. देव्यः मूको. ३-३. नास्ति वि[१] अ[१] ४. ॰र्ध्वम् वि[१] अ[१] ल. ५-५. हू...मृज्य॰ वि[१] अ[१] †-† निमण्यानि मृ॰ वि[१] ल लपं. ६. नास्ति वि[१'२] अ[१] लपं ७. उपरम॰ वि[१'२] लपं.

'चापि पथि गमनात्[1]। अग्र्यूणाम्[2] सर्पाणां तेषाम् नि अयान् निर्गमनानि करोति प्राणिनां रक्षणीयां रात्रिं प्रतीति गम्यते। सवितुः इदमस्तमयकर्म अनु रात्रिरागतेति ॥ ३ ॥

पुनः समव्यद् वितंतं वयन्ती मध्या कर्तोर्न्यधाच्छक्म धीरः ।
उत् संहायांस्थाद् व्यृतूँरदर्धररमतिः सविता देव आगात् ॥ ४ ॥

पुनरिति। सम्। अव्यत्। विऽतंतम। वयन्ती। मध्या। कर्तोः। नि। अधात्। शक्म। धीरः।
उत्। सम्ऽहाय। अस्थात्। वि। ऋतून्। अदर्धः। अरमतिः। सविता। देवः। आ। अगात् ॥४॥

वेङ्कट० [1]'पुनः-शब्दो मध्यमवचनः, 'पुनर्निष्कृतो रथः दक्षिणा' (तै १,५,२,४) इति मध्यकाले[1] प्रागेव जरणात् संस्कृत[3] इत्यर्थः। रथ्यायाम् विततम् वस्त्रम्[4] वयन्ती तन्तुवायस्त्री मध्ये तत् सम् अव्यत् संवेष्टयति आदाय गृहे निधातुम्। तथा करणस्य मध्ये कर्म निधत्ते प्रातः करिष्यामीति धीरः[5]। सोऽयं सविता रात्रिम् संहाय प्रातरुत्तिष्ठति, ऋतून् च विधारयति[7] स्वागमनेन विवेचयति [8]'मासोऽयम् अर्धमासोऽयम्'[8]। अनुपरमणः सविता देवः आ गच्छतु इति ॥ ४ ॥

नानौकांसि दुर्यो विश्वमायुर्वि तिष्ठते प्रभवः शोको अग्नेः ।
ज्येष्ठं माता सूनवे भागमाधादन्वस्य केतमिषितं सवित्रा ॥ ५ ॥

नाना। ओकांसि। दुर्यः। विश्वम्। आयुः। वि। तिष्ठते। प्रऽभवः। शोकः। अग्नेः।
ज्येष्ठम्। माता। सूनवे। भागम्। आ। अधात्। अनु। अस्य। केतम्। इषितम्। सवित्रा ॥५॥

वेङ्कट० नाना वासान् वासरेषु[9] प्रविशन् सर्वम् अन्नं हविर्लक्षणं प्रति [10]'वि तिष्ठते'[10] अग्नेः प्रभावतः शोकः दीप्तिः। सवितुर्दिनान्तेऽग्निमयं प्रविशतीत्यर्थः। अथ प्रशस्यतममग्निहोत्राख्यम् भागम् रात्रिः पुत्रायाग्नये तस्याऽऽगमनज्ञानानन्तरम् आदधाति प्रेषितम् सवित्रा इति ॥ ५ ॥

[11]इति द्वितीयाष्टके अष्टमाध्याये द्वितीयो वर्गः[11]।

समाववर्ति विष्ठितो जिगीषुर्विश्वेषां कामश्चरताममाभूत् ।
शश्वाँ अपो विकृतं हित्व्यागादनु व्रतं सवितुर्दैव्यस्य ॥ ६ ॥

सम्ऽआववर्ति। विऽस्थितः। जिगीषुः। विश्वेषाम्। कामः। चरताम्। अमा। अभूत्।
शश्वान्। अपः। विऽकृतम्। हित्वी। आ। अगात्। अनु। व्रतम्। सवितुः। दैव्यस्य ॥६॥

---

१-१. नास्ति अ. २. पुनः शब्दः वि[1,2] अ[1] ल; पुनः शब्दं अहं वो येषां दर्शनं लपं. ३-३. °पुनर्निष्कृतो दक्षिणेऽन्यकाले वि[1]; ...रथो दक्षिणऽन्यकाले वि[2]; ... दक्षिणेऽन्यकाले अ; °पुनर्निर्गतो दक्षिणेऽन्यकाले क लपं. ४. संस्तुत लपं ५. नास्ति वि[1] लपं. ६. वीरः लपं. ७. विदार° मूको. ८-८. °सोऽतिसायम् वि[1] लपं. ९. वारेषु लपं. १०-१०. तिष्ठते वि[2]. ११-११. नास्ति मूको.

**वेङ्कट०** समावर्तते युद्धार्थं प्रस्थितो योद्धा। तथा सर्वेषाम् एव जङ्गमानाम् अस्तंगच्छति सवितरि गृहं प्रति कामः भवति। 'अमा' ( निघ ३,४ ) इति गृहनाम, तस्मिन्नभूत् काम इति। तथा[1] तनूकरणस्य[2] कर्ता शश्वान्[3] तक्षा सामिकृतं कर्म हित्वा आ गच्छति दैव्यस्य सवितुः अस्तमयं प्रति ॥ ६ ॥

त्वया हितमप्प्यमप्सु भागं धन्वान्वा मृगयसो वि तस्थुः ।
वनानि विभ्यो नकिरस्य तानि व्रता देवस्य सवितुर्मिनन्ति ॥ ७ ॥

त्वया । हितम् । अप्प्यम् । अप्ऽसु । भागम् । धन्व । अनु । आ । मृगयसः । वि । तस्थुः ।
वनानि । विऽभ्यः । नकिः । अस्य । तानि । व्रता । देवस्य । सवितुः । मिनन्ति ॥ ७ ॥

**वेङ्कट०** त्वया हितम् अप्यम् भागम् अन्तरिक्षे निरुदकां भूमिम् अनु मृगयमाणा मनुष्याः आ[4] वि[4] तिष्ठन्ति। तथाऽरण्यानि पक्षिभ्यः आवासाय भवन्ति उदकवर्धितानि। न केचित् अस्य तादृशानि देवस्य सवितुः[4] कर्माणि हिंसन्ति ॥ ७ ॥

याद्राध्यं१ वरुणो योनिमप्यमनिशितं निमिषि जर्भुराणः ।
विश्वो मार्ताण्डो व्रजमा पशुर्गात् स्थशो जन्मानि सविता व्याकः ॥ ८ ॥

यात्ऽराध्यम् । वरुणः । योनिम् । अप्यम् । अनिऽशितम् । निऽमिषि । जर्भुराणः ।
विश्वः । मार्ताण्डः । व्रजम् । आ । पशुः । गात् । स्थऽशः । जन्मानि । सविता । वि । आ । अकरित्यकः ॥

**वेङ्कट०** अन्तर्गच्छतां संराधनीयम् अप्सु भवम् वरुणः स्थानम् अतीक्ष्णं रात्रौ मनुष्याणां निमेषणवेलायाम् जर्भुराणः भवति। गृह्णातीत्यर्थः। तथा सर्वो मार्तण्डः[5] पक्षी[6] पशुः च व्रजम् आ[7] गच्छति। सर्वाणि जातानि सविता स्थाने-स्थाने वि आ करोति स्वं-स्वं निलयं प्रति[7] आगमयति[8] ॥ ८ ॥

न यस्येन्द्रो वरुणो न मित्रो व्रतमर्यमा न मिनन्ति रुद्रः ।
नारातयस्तमिदं स्वस्ति हुवे देवं सवितारं नमोभिः ॥ ९ ॥

न । यस्य । इन्द्रः । वरुणः । न । मित्रः । व्रतम् । अर्यमा । न । मिनन्ति । रुद्रः ।
न । अरातयः । तम् । इदम् । स्वस्ति । हुवे । देवम् । सवितारम् । नमःऽभिः ॥ ९ ॥

**वेङ्कट०** निगदव्याख्याता ॥ ९ ॥

---

१. नास्ति लपं. २. °करस्य वि[२]. ३. शश्वा वि[२]. ४. नास्ति मूको. ५. °र्ता° वि[१] अ[१]. ६. पक्षीव वि[१] अ[१]. ७. प्रत्यथ वि[१] लपं. ८. गम° वि[१] लपं.

भगं धियं वाजयन्तः पुरंधिं नराशंसो ग्नास्पतिर्नो अव्याः ।
आये वामस्य संगथे रयीणां प्रिया देवस्य सवितुः स्याम ॥ १० ॥

भर्गम् । धियम् । वाजयन्तः । पुरम्ऽधिम् । नराशंसः । ग्नाःपतिः । नः । अव्याः ।
आऽअये । वामस्य । सम्ऽगथे । रयीणाम् । प्रियाः । देवस्य । सवितुः । स्याम ॥ १० ॥

**वेङ्कट०** ध्यातारं बहुप्रज्ञम् भगम् देवं बलिनं कुर्वतः[१] अग्निः त्वष्टा च अस्मान् रक्षतु । आभिमुख्येन गन्तव्ये धनानां श्रेष्ठस्य धनस्य सम्भजने स्याम वयम् देवस्य सवितुः प्रियाः इति ॥ १० ॥

अस्मभ्यं तद् दिवो अद्भ्यः पृथिव्यास्त्वया दत्तं काम्यं राध आ गात् ।
शं यत् स्तोतृभ्य आपये भवात्युरुशंसाय सवितर्जरित्रे ॥ ११ ॥

अस्मभ्यम् । तत् । दिवः । अत्ऽभ्यः । पृथिव्याः । त्वया । दत्तम् । काम्यम् । राधः । आ । गात् ।
शम् । यत् । स्तोतृऽभ्यः । आपये । भवाति । उरुऽशंसाय । सवितः । जरित्रे ॥ ११ ॥

**वेङ्कट०** अस्मभ्यम् तत् त्रिभ्यो लोकेभ्यः त्वया दत्तम् कमनीयं धनम् आगच्छतु । किं च तव स्तोतृभ्यः यजमानाय च यत् शम् भवति तद् बहुस्तुतये मह्यम् सवितः ! जरित्रे प्रयच्छ ॥ ११ ॥

[२]इति द्वितीयाष्टके अष्टमाध्याये तृतीयो वर्गः[२] ॥

[ ३९ ]

[३]गृत्समदो भार्गवः शौनकः ( पूर्वम् आङ्गिरसः शौनहोत्रः ) ऋषिः ।
अश्विनौ देवता । त्रिष्टुप् छन्दः[३] ।

ग्रावाणेव तदिदर्थं जरेथे गृध्रेव वृक्षं निधिमन्तमच्छ ।
ब्रह्माणेव विदथ उक्थशासा दूतेव हव्या जन्या पुरुत्रा ॥ १ ॥

ग्रावाणाऽइव । तत् । इत् । अर्थम् । जरेथे इति । गृध्राऽइव । वृक्षम् । निधिऽमन्तम् । अच्छ ।
ब्रह्माणाऽइव । विदथे । उक्थऽशासा । दूताऽइव । हव्या । जन्या । पुरुऽत्रा ॥ १ ॥

**वेङ्कट०** हे अश्विनौ ![३] यथा[४] दृषदुपले बीजं[५] चूर्णीकुरुतः, एवं[६] तदानीमेव शत्रुं जरयेथेः यथेच्छथः इति । यथा गृध्रौ वृक्षम् प्रत्यागच्छतः[७], एवं हविष्मन्तं प्रत्यागच्छथः, ब्राह्मणौ इव यज्ञे शस्त्राणां शंसितारौ शंसनप्रतिगरणयोः[८] कर्तारौ दूतौ इव पुरुत्रा जनपदेषु भवौ यजमानैराह्वातव्यौ इति ॥ १ ॥

---

१. °तो वयं तत्र वि[१२] अ[१] लपं. २-२. नास्ति मूको. ३. नास्ति मूको. ४. नास्ति वि[२] अ[१]. ५. नास्ति अ[१]. ६. एव लपं. ७. गच्छथः ल. ८. शंसेन प्र[२] ल.

प्रातर्यावाणा रथ्येव वीराऽजेव यमा वरमा सचेथे ।
मेने इव तन्वा३ शुम्भमाने दम्पतीव क्रतुविदा जनेषु ॥ २ ॥

प्रातःऽयावाना । रथ्याऽइव । वीरा । अजाऽइव । यमा । वरम् । आ । सचेथे इति ॥
मेने इवेति मेनेऽइव । तन्वा । शुम्भमाने इति । दम्पतीइवेति दम्पतीऽइव । क्रतुऽविदा । जनेषु ॥

वेङ्कट० हे अश्विनौ![1] प्रातरेव गन्तारौ लौकिकौ कौ चिद् रथिनौ इव वीरौ अजौ इव यमजातौ सुसदृशौ[2] पर्याप्तम् आ सचेथे स्त्रियौ इव शरीरेण शोभमाने दम्पती इव च सङ्गतौ लब्धयशौ मनुष्येषु इति ॥२॥

शृङ्गेव नः प्रथमा गन्तमर्वाक्छफाविव जर्भुराणा तरोभिः ।
चक्रवाकेव प्रति वस्तोरुस्राऽर्वाञ्चा यातं रथ्येव शक्रा ॥ ३ ॥

शृङ्गाऽइव । नः । प्रथमा । गन्तम् । अर्वाक् । शफौऽइव । जर्भुराणा । तरःऽभिः ।
चक्रवाकाऽइव । प्रति । वस्तोः । उस्रा । अर्वाञ्चा । यातम् । रथ्याऽइव । शक्रा ॥ ३ ॥

वेङ्कट० हे अश्विनौ![1] पशोः शृङ्गे इव [3]अस्मदभिमुखम् आगच्छतम्[3] प्रथमम् एव शफाविव च तरणैः[4] पृथिवीं हरमाणौ[5] । मिथुनभूतौ चक्रवाकौ इव अहः प्रति हे उत्सरणौ! आगच्छतम् रथिनौ इव हे शक्तौ! ॥३॥

नावेव नः पारयतं युगेव नभ्येव न उपधीव प्रधीव ।
श्वानेव नो अरिषण्या तनूनां खृगलेव विस्रसः पातमस्मान् ॥ ४ ॥

नावाऽइव । नः । पारयतम् । युगाऽइव । नभ्याऽइव । नः । उपधीइवेत्युपधीऽइव प्रधी इवेति प्रधीऽइव ॥ श्वानाऽइव । नः । अरिषण्या । तनूनाम् । खृगलाऽइव । विऽस्रसः । पातम् । अस्मान् ॥४॥

वेङ्कट० हे अश्विनौ![1] नावा नदीम् इव अस्मान् पारयतम् । तथा युगौ इव नभ्यं[6] चक्रमध्यस्थं फलकम्, तस्मिन् फलके दाढर्यार्थं य उपधीयते स उपधिः, पार्श्वस्थे धनुराकारे प्रधी, एभिः सर्वैरिव पारयतम् इति । यथा श्वाऽङ्गानि न[9] हिनस्त्येवम् अस्माकम् तनूनाम् अहिंसकौ[7], खृगलं[8] तनुत्राणम् इत्याहुः, ते इव[9] विस्रंसनात्[10] अस्मान् रक्षतम् इति ॥ ४ ॥

वातेवाजुर्या नद्येव रीतिरक्षी इव चक्षुषा यातमर्वाक् ।
हस्ताविव तन्वे३ शंभविष्ठा पादेव नो नयतं वस्यो अच्छ ॥ ५ ॥

---

१. नास्ति मूको. २. सुदर्शनौ वि[1] लपं. ३-३. °सुखे मा ग° वि[2] अ[1]. ४. चरणैः लपं.
५. °माणाः मूको. ६. नह्यं मूको. ७. अहिंसितौ वि[1] लपं. ८. कुगलं वि[2] अ[1]; खृथलं लपं.
९. उप वि[1] लपं. १०. विसंस्रनात् ल.

वाताऽइव । अजुर्या । नद्याऽइव । रीतिः । अक्षी इवेत्यक्षीऽइव । चक्षुषा । आ । यातम् । अर्वाक् ।
हस्तौऽइव । तन्वे । शम्ऽभविष्ठा । पादाऽइव । नः । नयतम् । वस्यः । अच्छ ॥ ५ ॥

वेङ्कट० हे अश्विनौ![1] वाताविव अजरौ अस्मान्[2] आगच्छतम् । नदीभवा जलरीतिः इव तथा अक्षी इव मध्यस्थेन[3] तेजसा सह अस्मान्[4] आगच्छतम् । हस्ताविव शरीरस्य सुखस्य भावयितारौ पादौ इव अस्मान् नयतम् अभ्युदयं प्रति ॥ ५ ॥

[5]इति द्वितीयाष्टके अष्टमाध्याये चतुर्थो वर्गः[5] ॥

ओष्ठाविव मध्वास्ने वदन्ता स्तनाविव पिप्यतं जीवसे नः ।
नासेव नस्तन्वो रक्षितारा कर्णाविव सुश्रुता भूतमस्मे ॥ ६ ॥

ओष्ठौऽइव । मधु । आस्ने । वदन्ता । स्तनौऽइव । पिप्यतम् । जीवसे । नः ।
नासाऽइव । नः । तन्वः । रक्षितारा । कर्णौऽइव । सुऽश्रुता । भूतम् । अस्मे इति ॥ ६ ॥

वेङ्कट० हे अश्विनौ![1] यथा ओष्ठौ आस्ये[6] मधुपानसाधनावेवमिमौ च भवतः मनुष्याणाम् आस्याय मधुदानं वदन्ताविति अस्मान् स्तनाविव आप्याययतम्[7] जीवितुम् । नासिके इव अस्माकं[4] शरीरस्य रक्षितारौ भवतम्[8] । तथा कर्णाविव सुश्रवणौ भवतम् अस्माकमिति ॥ ६ ॥

हस्तेव शक्तिमभि संददी नः क्षामेव नः समजतं रजांसि ।
इमा गिरो अश्विना युष्मयन्तीः क्ष्णोत्रेणेव स्वधितिं सं शिशीतम् ॥ ७ ॥

हस्ताऽइव । शक्तिम् । अभि । संददी इति सम्ऽददी । नः । क्षामऽइव । नः । सम् । अजतम् । रजांसि ।
इमाः । गिरः । अश्विना । युष्मऽयन्तीः । क्ष्णोत्रेणऽइव । स्वऽधितिम् । सम् । शिशीतम् ॥ ७ ॥

वेङ्कट० यथा हस्तौ[9] शक्तिम्[10] अभि संयच्छतम् । तथा द्यावापृथिवी इव अस्माकम् उदकानि प्रेरयतम्[11] । हे अश्विनौ! वाम् इच्छन्तीः एताः स्तुतीः यथा तेजनसाधनेन शिलादिना स्वधितिम् तीक्ष्णीकरोति एवं संस्कुरुतम्[12] ॥ ७ ॥

एतानि वामश्विना वर्धनानि ब्रह्म स्तोमं गृत्समदासो अक्रन् ।
तानि नरा जुजुषाणोप यातं बृहद् वदेम विदथे सुवीराः ॥ ८ ॥

---

१. नास्ति मूको. २. अस्मात् वि[1,2] अ[1] लपं; अस्मत् ल; अस्मदभिमुखं ल प्रस्तावः. ३. मध्यर्धेन लपं. ४. अस्माकम् वि[2] अ[1]. ५-५. नास्ति मूको. ६. अस्य मूको. ७. °प्यायतम् मूको. ८. °वतः वि[1,2] अ[1] ल; °वन् लपं. ९. नास्ति वि[2]. १०. नास्ति वि[2] अ[1]. ११. नास्ति लपं; °यत वि[1,2] अ[1] ल. १२. नास्ति वि[1]; °तम् इति अ[1].

एतानि । वाम् । अश्विना । वर्धनानि । ब्रह्म । स्तोमम् । गृत्सऽमदासः । अक्रन् ।
तानि । नरा । जुजुषाणा । उप । यातम् । बृहत् । वदेम । विदथे । सुऽवीराः ॥ ८ ॥

वेङ्कट० तानि[1] एतानि वचनानि युवयोः वर्धनानि इति द्वितीयान्तम् । बृहत् स्तोत्रं गृत्समदाः कृतवन्तः । तानि हे नरौ ! सेवमानौ आगच्छतम् इति ॥ ८ ॥

[2]इति द्वितीयाष्टके अष्टमाध्याये पञ्चमो वर्गः[2] ॥

## [ ४० ]

[2]गृत्समदो भार्गवः शौनकः ( पूर्वम् आङ्गिरसः शौनहोत्रः ) ऋषिः । सोमापूषणौ देवता, षष्ठ्या अन्त्यार्धर्चस्य अदितिः । त्रिष्टुप् छन्दः[2] ।

सोमापूषणा जनना रयीणां जनना दिवो जनना पृथिव्याः ।
जातौ विश्वस्य भुवनस्य गोपौ देवा अकृण्वन्नमृतस्य नाभिम् ॥ १ ॥

सोमापूषणा । जनना । रयीणाम् । जनना । दिवः । जनना । पृथिव्याः ।
जातौ । विश्वस्य । भुवनस्य । गोपौ । देवाः । अकृण्वन् । अमृतस्य । नाभिम् ॥ १ ॥

वेङ्कट० हे सोमापूषणौ ! युवाम् एतेषां जनयितारौ जातौ सर्वस्य भुवनस्य[3] च गोपायितारौ कृतवन्तः[4] देवाः अन्नस्य उत्पत्तिस्थानम् ॥ १ ॥

इमौ देवौ जायमानौ जुषन्तेमौ तमांसि गूहतामजुष्टा ।
आभ्यामिन्द्रः पक्वमामास्वन्तः सोमापूषभ्यां जनदुस्रियासु ॥ २ ॥

इमौ । देवौ । जायमानौ । जुषन्त । इमौ । तमांसि । गूहताम् । अजुष्टा ।
आभ्याम् । इन्द्रः । पक्वम् । आमासु । अन्तरिति । सोमापूषऽभ्याम् । जनत् । उस्रियासु ॥२॥

वेङ्कट० इमौ देवौ जायमानौ एव देवाः कार्यार्थमजुषन्त । तथैतौ तमांसि नाशितवन्तौ अपर्याप्तानि स्वतेजसा । आभ्याम् सोमापूषभ्याम्[5] इन्द्रः पक्वम् पयः आमासु गोषु अन्तः जनयति । सोमः ओषधीः जनयति पृथिव्या गोभ्यः इति ॥ २ ॥

सोमापूषणा रजसो विमानं सप्तचक्रं रथमविश्वमिन्वम् ।
विषूवृतं मनसा युज्यमानं तं जिन्वथो वृषणा पञ्चरश्मिम् ॥ ३ ॥

---

१. नास्ति वि[2]. २-२. नास्ति मूको. ३. सर्वभुव० मूको. ४. °वन्तौ मूको. ५. नास्ति मूको.

सोमापूषणा । रजसः । विऽमानम् । सप्तऽचक्रम् । रथम् । अविश्वऽमिन्वम् ।
त्रिषुऽवृतम् । मनसा । युज्यमानम् । तम् । जिन्वथः । वृषणा । पञ्चऽरश्मिम् ॥ ३ ॥

**वेङ्कट०** हे सोमापूषणौ ! लोकस्य परिच्छेत्तारं तं[1] सप्ततुचक्रं संवत्सररथं[2] सर्वैः अपरिच्छिद्यमानं नानावर्तमानम् एताभ्याम्[3] मनसा एव प्रयुज्यमानम् तम् इन्द्रं प्रीणयथः[4] हे वर्षितारौ ! पञ्चर्तुरश्मिमिति ॥३॥

दिव्य१न्यः सदनं चक्र उच्चा पृथिव्यामन्यो अध्यन्तरिक्षे ।
तावस्मभ्यं पुरुवारं पुरुक्षुं रायस्पोषं वि ष्यतां नाभिमस्मे ॥ ४ ॥

दिवि । अन्यः । सदनम् । चक्रे । उच्चा । पृथिव्याम् । अन्यः । अधि । अन्तरिक्षे ।
तौ । अस्मभ्यम् । पुरुऽवारम् । पुरुऽक्षुम् । रायः । पोषम् । वि । स्यताम् । नाभिम् । अस्मे इति ॥

**वेङ्कट०** तयोरेकः पूषा दिवि उच्चैः सदनम् चक्रे । अथ अन्यः सोमः ओषधिरूपेण पृथिव्याम् वर्तते, चन्द्ररूपेण अन्तरिक्षे । तौ इमौ अस्मभ्यम् बहूनां वरणीयं बहूनां कीर्तनीयं धनस्य पोषम् विमुञ्चतां नहनम् अस्माकम् इति ॥ ४ ॥

विश्वान्यन्यो भुवना जजान विश्वमन्यो अभिचक्षाण एति ।
सोमापूषणाववतं धियं मे युवाभ्यां विश्वाः पृतना जयेम ॥ ५ ॥

विश्वानि । अन्यः । भुवना । जजान । विश्वम् । अन्यः । अभिऽचक्षाणः । एति ।
सोमापूषणौ । अवतम् । धियम् । मे । युवाभ्याम् । विश्वाः । पृतनाः । जयेम ॥ ५ ॥

**वेङ्कट०** तयोः पूषा सर्वाण्येव भुवनानि जनयति, अथ अन्यः चन्द्रमाः विश्वम् भुवनम् पश्यन् एति । अथ प्रत्यक्षः। सोमापूषणौ ! रक्षतम् कर्म अस्मदीयम् । युवाभ्याम् सर्वाः एव पृतनाः जयेम इति ॥५॥

धियं पूषा जिन्वतु विश्वमिन्वो रयिं सोमो रयिपतिर्दधातु ।
अवतु देव्यदितिरनर्वा बृहद् वदेम विदथे सुवीराः ॥ ६ ॥

धियम् । पूषा । जिन्वतु । विश्वम्ऽइन्वः । रयिम् । सोमः । रयिऽपतिः । दधातु ।
अवतु । देवी । अदितिः । अनर्वा । बृहत् । वदेम । विदथे । सुऽवीराः ॥ ६ ॥

**वेङ्कट०** कर्म पूषा प्रीणयतु सर्वस्य माता । शिष्टं स्पष्टमिति ॥ ६ ॥

[5]इति द्वितीयाष्टके अष्टमाध्याये षष्ठो वर्गः[5] ॥

---

१. नास्ति वि[1] लपं. २. °त्सरचक्रं रथं वि[2]. ३. एव ताभ्याम् लपं. ४. प्रणयथ वि[2] अ[1].
५-५. नास्ति मूको.

## [ ४१ ]

[1]गृत्समदो भार्गवः शौनकः (पूर्वम् आङ्गिरसः शौनहोत्रः) ऋषिः। प्रथमाद्वितीययोर्वायुर्देवता, तृतीयाया इन्द्रवायू, चतुर्थीपञ्चमीषष्ठीनां मित्रावरुणौ, सप्तम्यष्टमीनवमीनाम् अश्विनौ, दशम्येकादशीद्वादशीनामिन्द्रः, त्रयोदशीचतुर्दशीपञ्चदशीनाम् विश्वे देवाः, षोडशीसप्तदश्यष्टादशीनां सरस्वती, एकोनविंशीविंश्येकविंशीनां द्यावापृथिव्यौ हविर्धाने वा, एकोनविंश्यास्तृतीयपादस्य अग्निर्वा। गायत्री छन्दः, षोडशीसप्तदश्यौ अनुष्टुभौ, अष्टादशी बृहती[1]।

वायो ये ते सहस्रिणो रथासस्तेभिरा गहि। नियुत्वान्त्सोमपीतये ॥ १ ॥

वायो इति। ये। ते। सहस्रिणः। रथासः। तेभिः। आ। गहि॥ नियुत्वान्। सोमऽपीतये ॥१॥

**वेङ्कट०** हे वायो! ये[2] तव सहस्रसंख्याः रथाः तैः आगच्छ[3] नियुद्भिर्युक्तः सोमपानाय ॥ १ ॥

नियुत्वान् वायवा गह्ययं शुक्रो अयामि ते। गन्तासि सुन्वतो गृहम् ॥ २ ॥

नियुत्वान्। वायो इति। आ। गहि। अयम्। शुक्रः। अयामि। ते॥ गन्ता। असि। सुन्वतः। गृहम् ॥ २ ॥

**वेङ्कट०** हे वायो! नियुद्भिर्युक्तः त्वमागच्छ। अयम् सोमः, तं[4] गमयामि तुभ्यम्। त्वं[5] हि यजमानस्य गृहम् गन्ता असि ॥ २ ॥

शुक्रस्याद्य गवाशिर इन्द्रवायू नियुत्वतः। आ यातं पिबतं नरा ॥ ३ ॥

शुक्रस्य। अद्य। गोऽआशिरः। इन्द्रवायू इति। नियुत्वतः॥ आ। यातम्। पिबतम्। नरा ॥३॥

**वेङ्कट०** शुक्रस्य[4] अद्य गोभिः श्रितस्य हे इन्द्रवायू! वायोः सम्बन्धिनः आगच्छतम् पिबतम् च ॥ ३ ॥

अयं वां मित्रावरुणा सुतः सोम ऋतावृधा। ममेदिह श्रुतं हवम् ॥ ४ ॥

अयम्। वाम्। मित्रावरुणा। सुतः। सोमः। ऋतऽवृधा॥ मम। इत्। इह। श्रुतम्। हवम् ॥४

**वेङ्कट०** निगदव्याख्याता ॥ ४ ॥

राजानावनभिद्रुहा ध्रुवे सदस्युत्तमे। सहस्रस्थूण आसाते ॥ ५ ॥

राजानौ। अनभिऽद्रुहा। ध्रुवे। सदसि। उत्ऽतमे॥ सहस्रऽस्थूणे। आसाते इति ॥ ५ ॥

---

१-१. नास्ति मूको. २. नास्ति वि[2] अ[1]. ३. °च्छसि वि[1] अ[1]. ४. त्वं वि[1] लपं; त्वाम् वि[1] अ[1]. ५. नास्ति वि[2].

वेङ्कट० विगदव्याख्याता ॥ ५ ॥

[1]इति द्वितीयाष्टके अष्टमाध्याये सप्तमो वर्गः[1]।

ता सम्राजा घृतासुती आदित्या दानुनस्पती । सचेते अनवह्वरम् ॥ ६ ॥
ता । सम्ऽराजा । घृतासुती इति घृतऽआसुती । आदित्या । दानुनः । पती इति ॥ सचेते इति । अनवऽह्वरम् ॥ ६ ॥

वेङ्कट० तौ सम्राजौ घृतदोहनौ मित्रावरुणौ दानस्य स्वामिनौ सेवेते कर्मणोऽनपभ्रष्टम्[2] ॥ ६ ॥

गोमदू षु नासत्याऽश्वावद् यातमश्विना । वर्ती रुद्रा नृपाय्यम् ॥ ७ ॥
गोऽमत् । ऊँ इति । सु । नासत्या । अश्वऽवत् । यातम् । अश्विना ॥ वर्तिः । रुद्रा । नृऽपाय्यम् ॥

वेङ्कट० हे असत्यरहितौ अश्विनौ! गोमत् अश्ववत् च आयातं[3] मार्गेण युद्धे क्रूरकर्माणौ! नृभिः पातव्यं सोमम् ॥ ७ ॥

न यत् परो नान्तर आदधर्षद् वृषण्वसू । दुःशंसो मर्त्यो रिपुः ॥ ८ ॥
न । यत् । परः । न । अन्तरः । आऽदधर्षत् । वृषण्वसू इति वृषण्ऽवसू ॥ दुःऽशंसः । मर्त्यः । रिपुः ॥८॥

वेङ्कट० [4]अज्ञातिः ज्ञातिर्वा[4] यत् अभिभवितुम् न शक्नोति हे प्रदीयमानधनौ![5] । यच्च दुःशंसनः मर्त्यः रिपुः च न आधर्षति । उत्तरत्र सम्बन्धः ॥ ८ ॥

ता न आ वोळ्हमश्विना रयिं पिशङ्गसंदृशम् । धिष्ण्या वरिवोविदम् ॥ ९ ॥
ता । नः । आ । वोळ्हम् । अश्विना । रयिम् । पिशङ्गऽसन्दृशम् ॥ धिष्ण्या । वरिवःऽविदम् ॥ ९ ॥

वेङ्कट० हे अश्विनौ![6] तादृशम् रयिम् अस्मभ्यम् [7]आ वहतम्[7] पिशङ्गरूपम् हे स्तोत्राहौं! पूजायाः लम्भयितारम् ॥ ९ ॥

इन्द्रो अङ्ग महद् भयमभी षदप चुच्यवत् । स हि स्थिरो विचर्षणिः ॥ १० ॥
इन्द्रः । अङ्ग । महत् । भयम् । अभि । सत् । अप । चुच्यवत् ॥ सः । हि । स्थिरः । विऽचर्षणिः ॥ १० ॥

वेङ्कट० अङ्गेत्यप्रातिलोम्यं[8] द्योतयति क्षिप्रवचनम्[9]। इन्द्रः क्षिप्रम् महत् भयम् अभि भवति। अस्तिम् एके[10] वैयाकरणाः सकारमाचक्षते । तथा सति शत्रून् अपच्यावयतु[11] सः हि स्थिरः विद्रष्टा ॥ १० ॥

इन्द्रश्च मृळयाति नो न नः पश्चादघं नशत् । भद्रं भवाति नः पुरः ॥ ११ ॥

---

१-१. नास्ति मूको. २. °नवभ्र° लपं. ३. यातम् वि[1]. ४-४. नास्ति वि[2] अ[1]. ५. दीयमानसनौ लपं. ६. नास्ति अ[1]. ७-७. °(व)हेतं वि[2] अ[1]. ८. °त्यप्रति° मूको. ९. °वचनः ल. १०. एते मूको. ११. अपिच्या° वि[2] अ[1].

इन्द्रः । च । मृळयाति । नः । न । नः । पश्चात् । अघम् । नशत् ॥ भद्रम् । भवाति । नः । पुरः ॥११॥

**वेङ्कट०** इन्द्रः चेदयम्[1] अस्मान् सुखयति, न ततः पश्चात् अस्मान् अघम्[2] प्राप्नोति, भद्रम् चास्माकम् पुरः भवति[3] ॥ ११ ॥

[4]इति द्वितीयाष्टके अष्टमाध्यायेऽष्टमो वर्गः[4] ॥

**इन्द्र आशाभ्यस्परि सर्वाभ्यो अभयं करत् । जेता शत्रून् विचर्षणिः ॥ १२ ॥**

इन्द्रः । आशाभ्यः । परि । सर्वाभ्यः । अभयम् । करत् ॥ जेता । शत्रून् । विऽचर्षणिः ॥१२॥

**वेङ्कट०** स्पष्टोऽर्थः[5] ॥ १२ ॥

**विश्वे देवास आ गत शृणुता म इमं हवम् । एदं बर्हिर्नि षीदत ॥ १३ ॥**

विश्वे । देवासः । आ । गत । शृणुत । मे । इमम् । हवम् ॥ आ । इदम् । बर्हिः । नि । सीदत ॥१३॥

**वेङ्कट०** स्पष्टोऽर्थः[5] ॥ १३ ॥

**तीव्रो वो मधुमाँ अयं शुनहोत्रेषु मत्सरः । एतं पिबत काम्यम् ॥ १४ ॥**

तीव्रः । वः । मधुऽमान् । अयम् । शुनऽहोत्रेषु । मत्सरः ॥ एतम् । पिबत । काम्यम् ॥१४॥

**वेङ्कट०** स्पष्टोऽर्थः[5] ॥ १४ ॥

**इन्द्रज्येष्ठा मरुद्गणा देवासः पूषरातयः । विश्वे मम श्रुता हवम् ॥ १५ ॥**

इन्द्रऽज्येष्ठाः । मरुत्ऽगणाः । देवासः । पूषऽरातयः ॥ विश्वे । मम । श्रुत । हवम् ॥१५॥

**वेङ्कट०** स्पष्टोऽर्थः[5] ॥ १५ ॥

[4]इति द्वितीयाष्टके अष्टमाध्याये नवमो वर्गः[4] ॥

**अम्बितमे नदीतमे देवितमे सरस्वति । अप्रशस्ता इव स्मसि प्रशस्तिमम्ब नस्कृधि ॥१६॥**

अम्बिऽतमे । नदीऽतमे । देविऽतमे । सरस्वति ।

अप्रशस्ताःऽइव । स्मसि । प्रऽशस्तिम् । अम्ब । नः । कृधि ॥ १६ ॥

---

१. चेदम् मूको. २. अनघम् ल. ३. °ति अवशिष्टो वर्गः स्पष्टार्थः मूको. ४-४. नास्ति मूको. ५. नास्ति मूको.

**वेङ्कट०** शौनकः—'वायव्ये चैन्द्रवायवी पञ्चाथ प्राउगास्तृचाः ।
प्रेत्यृक्[1] स्तौति हविर्धाने अग्निस्तत्र निपातभाक् ।
द्यावापृथिव्यौ द्यावेति[2] हविर्धाने ततः परे' ॥ ( बृदे ४,९२ ) इति ॥

मातृतमे! नदीभ्यो वरिष्ठे! दीप्ततमे! सरस्वति! धनाभावाद् अप्रशस्ताः इव स्मः, तानस्मान् धनप्रदानेन प्रशस्तान् कुरु ॥ १६ ॥

त्वे विश्वा सरस्वति श्रितायूंषि देव्याम् । शुनहोत्रेषु मत्स्व प्रजां देवि दिदिड्ढि नः ॥१७॥

त्वे इति । विश्वा । सरस्वति । श्रिता । आयूंषि । देव्याम् ।
शुनऽहोत्रेषु । मत्स्व । प्रऽजाम् । देवि । दिदिड्ढि । नः ॥ १७ ॥

**वेङ्कट०** त्वयि सर्वाणि सरस्वति! श्रितानि अन्नानि देव्याम्, सा त्वम् शुनहोत्रेषु[3] स्तोत्रेण मदस्व, हे देवि! प्रजाम् च देहि नः ॥ १७ ॥

इमा ब्रह्म सरस्वति जुषस्व वाजिनीवति ।
या ते मन्म गृत्समदा ऋतावरि प्रिया देवेषु जुह्वति ॥ १८ ॥

इमा । ब्रह्म । सरस्वति । जुषस्व । वाजिनीऽवति ।
या । ते । मन्म । गृत्सऽमदाः । ऋतऽवरि । प्रिया । देवेषु । जुह्वति ॥ १८ ॥

**वेङ्कट०** इमानि हवींषि सेवस्व अन्नवति सरस्वति!, आज्यानि प्रियतमानि यानि गृत्समदाः देवमध्ये तुभ्यम् जुह्वति हे ऋतावरि!॥ १८ ॥

प्रेतां यज्ञस्य शंभुवा युवामिदा वृणीमहे । अग्निं च हव्यवाहनम् ॥१९॥

प्र । इताम् । यज्ञस्य । शम्ऽभुवा । युवाम् । इत् । आ । वृणीमहे । अग्निम् । च । हव्यऽवाहनम् ॥ १९ ॥

**वेङ्कट०** प्र गच्छताम् यज्ञस्य सुखस्य भावयितारौ । युवाम् एव हविर्वहनाय आ वृणीमहे, अग्निम् च हविषां वोढारम्[4] ॥ १९ ॥

द्यावा नः पृथिवी इमं सिध्रमद्य दिविस्पृशम् । यज्ञं देवेषु यच्छताम् ॥ २० ॥

द्यावा । नः । पृथिवी इति । इमम् । सिध्रम् । अद्य । दिविऽस्पृशम् । यज्ञम् । देवेषु । यच्छताम् ॥ २० ॥

---

१. ऋ २,४१,१९. २. ऋ २, ४१,२०. ३ °होत्रपुत्रेषु वि[२]; शुनहोत्रपुत्रेषु अ[१]. ४. °रमिति वि[१,२] अ[१]; °ढाराविति लपं.

वेङ्कट० यज्ञे द्यावापृथिवी हविर्धाने भवत इति प्रसङ्गात्[1], तयोः स्तुतिः। द्यावापृथिवी अस्माकं साधकं दिवः स्प्रष्टारम् इमम् यज्ञम् हविर्धाने भूत्वा अद्य[2] देवेषु यच्छताम् ॥ २० ॥

आ वामुपस्थमद्रुहा देवाः सीदन्तु यज्ञियाः । इहाद्य सोमपीतये ॥ २१ ॥

आ । वाम् । उपऽस्थम् । अद्रुहा । देवाः । सीदन्तु । यज्ञियाः । इह । अद्य । सोमऽपीतये ॥२१॥

वेङ्कट० आ सीदन्तु युवयोः उत्सङ्गं [3]हे अद्रुहौ![3] यज्ञियाः देवाः अस्मिन् यज्ञे अद्य सोमपानाय ॥२१॥

[4]इति द्वितीयाष्टके अष्टमाध्याये दशमो वर्गः[4] ।

[ ४२ ]

[4]गृत्समदो भार्गवः शौनकः ( पूर्वम् आङ्गिरसः शौनहोत्रः ) ऋषिः ।
शकुन्तः ( कपिञ्जलरूपीन्द्रः ) देवता । त्रिष्टुप् छन्दः[4] ।

कनिक्रदज्जनुषं प्रब्रुवाण इयर्ति वाचमरितेव नावम् ।
सुमङ्गलश्च शकुने भवासि मा त्वा का चिदभिभा विश्व्या विदत् ॥ १ ॥

कनिक्रदत् । जनुषम । प्रऽब्रुवाणः । इयर्ति । वाचम् । अरिताऽइव । नावम् ।
सुऽमङ्गलः । च । शकुने । भवासि । मा । त्वा । का । चित् । अभिऽभा । विश्व्या । विदत् ॥१॥

वेङ्कट० शौनकः— 'स्तुतिं तु पुनरेवेच्छन् इन्द्रो भूत्वा कपिञ्जलः ।
ऋषेर्जिगमिषोराशां ववाशास्थाय दक्षिणाम् ॥
स तमार्षेण सम्प्रेक्ष्य चक्षुषा पक्षिरूपिणम् ।
पराभ्यामभितुष्टाव सूक्ताभ्यां तु 'कनिक्रदत्' ॥ ( बृदे ४,९३;९४ ) इति ।

'न्यक्रन्दीज्जन्म प्रब्रुवाणः' इति यास्कः ( ९, ४ ) । शब्दं कुर्वन्निति वदत उत्तरत्र स्वरः सिध्यति अस्य । उदयो जन्म, शब्दं कुर्वन्नभ्युदयम् प्रब्रुवाणः[5] प्रेरयति वाचः क्रमेण प्रेरयितेव नावम् अरित्रेण । अथ प्रत्यक्षः । कल्याणमङ्गलः च शकुने! भवसि । विश्वो 'वासयिता व्यासः'[6](?) तेन निहिता का चित् अभिभा वासः(?) मा त्वां[7] विन्दतु । 'मा च[8] त्वा' काचिदभिभूतिः सर्वतो विदत्' इति यास्कः ( ९,४ ) ॥ १ ॥

मा त्वा श्येन उद् वधीन्मा सुपर्णो मा त्वा विददिषुमान् वीरो अस्ता ।
पित्र्यामनु प्रदिशं कनिक्रदत् सुमङ्गलो भद्रवादी वदेह ॥ २ ॥

---

१. °ङ्गाः वि[२] अ[१] ल लपं. २. नास्ति मूको. ३-३. अद्रुहः मूको. ४-४. नास्ति मूको.
५. °णम् मूको. ६. व्याधः लप्रस्तावः ७. त्वा वि[२]. ८. नास्ति वि[१,२] लपं. ९. त्वां वि लपं.

मा । त्वा । श्येनः । उत् । वधीत् । मा । सुऽपर्णः । मा । त्वा । विदत् । इषुऽमान् । वीरः । अस्ता ।
पित्र्याम् । अनु । प्रऽदिशम् । कनिक्रदत् । सुऽमङ्गलः । भद्रऽवादी । वद । इह ॥ २ ॥

**वेङ्कट०** [1]मा त्वा[1] श्येनसुपर्णौ कपिञ्जलम् उत् हताम्[2] । मा च त्वां विन्दतु शरवान् व्याधः प्रेरयिता । पित्र्याम् प्रकृष्टां दक्षिणां महादिशम् अनु स्थित्वा शब्दं कुर्वन् कल्याणमङ्गलः इह भद्रवादी [3]वद इति भद्रं वदेत्यर्थः[3] ॥ २ ॥

**अव॑ क्रन्द दक्षिण॒तो गृ॒हाणां॑ सु॒मङ्ग॒लो भ॑द्रवा॒दी श॑कुन्ते ।**
**मा नः॑ स्ते॒न ई॑शत॒ माघशं॑सो बृ॒हद् व॑देम वि॒दथे॑ सु॒वीराः॑ ॥ ३ ॥**

अव॑ । क्र॒न्द॒ । द॒क्षि॒ण॒तः । गृ॒हाणा॑म् । सु॒ऽमङ्ग॑लः । भ॒द्र॒ऽवा॒दी । श॒कु॒न्ते॒ ।
मा । नः॒ । स्ते॒नः । ई॒शत॒ । मा । अ॒घऽशं॑सः । बृ॒हत् । व॒दे॒म॒ । वि॒दथे॑ । सु॒ऽवीराः॑ ॥ ३ ॥

**वेङ्कट०** [1]गृहाणाम् दक्षिणतः क्रन्दनं कुरु सुमङ्गलः[1] भद्रवादी हे शकुन्ते ! । मा अस्माकं मार्गे स्तेनः ईश्वरो भवतु, मा च पापाभिलाषः ॥ ३ ॥

[1]इति द्वितीयाष्टके अष्टमाध्याये एकादशो वर्गः[1] ॥

## [ ४३ ]

[1]गृत्समदो भार्गवः शौनकः ( पूर्वम् आङ्गिरसः शौनहोत्रः ) ऋषिः । शकुन्तः (कपिञ्जलरूपीन्द्रः) देवता । जगती छन्दः, द्वितीया अतिशक्वरी अष्टिर्वा[1] ।

**प्र॒द॒क्षि॒णिद॒भि गृ॑णन्ति का॒रवो॒ वयो॒ वद॑न्त ऋतु॒था श॒कुन्त॑यः ।**
**उ॒भे वाचौ॑ वदति साम॒गा इ॑व गाय॒त्रं च॒ त्रैष्टु॑भं॒ चानु॑ राजति ॥ १ ॥**

प्र॒ऽद॒क्षि॒णित् । अ॒भि । गृ॒ण॒न्ति॒ । का॒रवः॑ । वयः॑ । वद॑न्तः । ऋ॒तु॒ऽथा । श॒कुन्त॑यः ।
उ॒भे इति॑ । वाचौ॑ । व॒द॒ति॒ । सा॒म॒गाःऽइ॑व । गा॒य॒त्रम् । च॒ । त्रैस्तु॑भम् । च॒ । अनु॑ । रा॒ज॒ति॒ ॥

**वेङ्कट०** प्रदक्षिणं[4] कपिञ्जलं गच्छन्तं स्तुवन्ति स्तोतारः । [5]शकुन्तयः च तेषाम् अन्नम् वदन्तः भवन्ति कालेषु । शकुन्तानाम् आगच्छतां †भविष्यद्† अन्नं वदति । सोऽयम् कपिञ्जलो न स्तेत इत्युभे(?) वाचौ वदति । यथा[5] सामगाः शोभनं स्तुवन्ति, सोऽयमेवं वदन् गायत्रम् च त्रैष्टुभम् चोभे[6] सामनी लक्षीकृत्य राजति । ते उच्चारयन् यथा राजत्येवं राजतीति ॥ १ ॥

---

१-१. नास्ति मूको. २. हतः मूको. ३-३. नास्ति अ[1]. ४. नास्ति वि[1]; °क्षिणिम् लपं.
५-५. नास्ति वि[2] अ[1]. †-† अभ' मूको. ६. नास्ति लपं.

उद्गातेव शकुने साम गायसि ब्रह्मपुत्रइव सवनेषु शंससि ।
वृषेव वाजी शिशुमतीरपीत्या सर्वतो नः शकुने भद्रमा वद ।
विश्वतो नः शकुने पुण्यमा वद ॥ २ ॥

उद्गाताऽइव । शकुने । साम । गायसि । ब्रह्मऽपुत्रःऽइव । सवनेषु । शंससि ।
वृषाऽइव । वाजी । शिशुऽमतीः । अपिऽइत्य । सर्वतः । नः । शकुने । भद्रम् । आ । वद ।
विश्वतः । नः । शकुने । पुण्यम् । आ । वद ॥ २ ॥

**वेङ्कट०** हे शकुने! यथा उद्गाता साम गायति, एवं च गानं करोषि । यज्ञेषु होता इव शंससि । यथा पुमानश्वः शिशुमतीः बडवाः सङ्गम्य शब्दं करोति, एवं वदसि । स त्वम् शकुने! सर्वाभ्यो दिग्भ्यः[1] भद्रम् आ[2] वद, विश्वतः च रक्षःप्रभृतिभ्यः इति ॥ २ ॥

आवदंस्त्वं शकुने भद्रमा वद तूष्णीमासीनः सुमतिं चिकिद्धि नः ।
यदुत्पतन् वदसि कर्करिर्यथा बृहद् वदेम विदथे सुवीराः ॥ ३ ॥

आऽवदन् । त्वम् । शकुने । भद्रम् । आ । वद । तूष्णीम् । आसीनः । सुऽमतिम् । चिकिद्धि । नः ।
यत् । उत्ऽपतन् । वदसि । कर्करिः । यथा । बृहत् । वदेम । विदथे । सुऽवीराः ॥ ३ ॥

**वेकट०** आभिमुख्येन शब्दं कुर्वन् त्वम् शकुने! अस्माकं कल्याणम् आ वद, तूष्णीम् आसीनः च सुमतिम् चिन्तय । यत् त्वम् उत्पतन् कर्करिः इव, महाव्रत उक्तो वाद्यविशेषः शाट्यायनके, भद्रम् वदसि । ततो वयम् बृहद् वदेम गृहे सुपुत्राः ॥ ३ ॥

[3]इति द्वितीयाष्टके अष्टमाध्याये द्वादशो वर्गः[3] ॥

—*—

इति ऋग्वेदे सभाष्ये द्वितीयं मण्डलं समाप्तम् ॥



---

१. नास्ति वि॰ लपं. २. नास्ति लपं. ३-३. नास्ति मूको.

अथ

# ऋग्वेदे सभाष्ये

## तृतीयं मण्डलम्

### [१]

[1]विश्वामित्रो गाथिन ऋषिः । अग्निर्देवता । त्रिष्टुप् छन्दः[1] ।

सोमस्य मा तवसं वक्ष्यग्ने वह्निं चकर्थ विदथे यजध्यै ।
देवाँ अच्छा दीद्यद् युञ्जे अद्रिं शमाये अग्ने तन्वं जुषस्व ॥ १ ॥

सोमस्य । मा । तवसम् । वक्षि । अग्ने । वह्निम् । चकर्थ । विदथे । यजध्यै ।
देवान् । अच्छ । दीद्यत् । युञ्जे । अद्रिम् । शम्ऽआये । अग्ने । तन्वम् । जुषस्व ॥ १ ॥

**वेङ्कट०** "कुशिकस्त्वैषीरथिरिन्द्रतुल्यं पुत्रमिच्छन् ब्रह्मचर्यं चचार । तस्येन्द्र एव गाथी पुत्रो जज्ञे । गाथिनो विश्वामित्रः । स तृतीयं मण्डलमपश्यत् "सोमस्य"" (ऋअ २,३,१) इति । हे अग्ने![2] सोमस्य वेगं प्रति माम् वह च, वोढारं च कुरु यज्ञे देवान् यष्टुम् । देवान् प्रति दीप्यमानोऽहम् ग्रावाणं च युनज्मि, त्वं च सुखप्राप्त्यर्थम् मम तन्वम् सेवस्वेति ॥ १ ॥

प्राञ्चं यज्ञं चकृम वर्धतां गीः समिद्भिरग्निं नमसा दुवस्यन् ।
दिवः शशासुर्विदथा कवीनां गृत्साय चित् तवसे गातुमीषुः ॥ २ ॥

प्राञ्चम् । यज्ञम् । चकृम । वर्धताम् । गीः । समित्ऽभिः । अग्निम् । नमसा । दुवस्यन् ।
दिवः । शशासुः । विदथा । कवीनाम् । गृत्साय । चित् । तवसे । गातुम् । ईषुः ॥ २ ॥

**वेङ्कट०** प्राञ्चम् यज्ञम् कर्मप्रवृद्धं कुर्मः । वर्धताम् स्तुतिः । समिद्भिः अन्नेन च अग्निम् परिचरन्तु । तथाऽग्निम् कवीनाम् प्रज्ञानानि दिवः पृथिव्यामागच्छेति[3] शशासुः । तथा तानि मेधाविने प्रवृद्धायाऽग्नये गमनं[4] यज्ञं प्रति इच्छन्ति[5] । ततोऽनुशासनमिति ॥ २ ॥

मयो दधे मेधिरः पूतदक्षो दिवः सुबन्धुर्जनुषा पृथिव्याः
अविन्दन्नु दर्शतमप्स्व१न्तर्देवासो अग्निमपसि स्वसॄणाम् ॥ ३ ॥

मयः । दधे । मेधिरः । पूतऽदक्षः । दिवः । सुऽबन्धुः । जनुषा । पृथिव्याः ।
अविन्दन् । ऊँ इति । दर्शतम् । अप्ऽसु । अन्तः । देवासः । अग्निम् । अपसि । स्वसॄणाम् ॥

---

१-१ नास्ति मूको. २-२. नास्ति वि[1] लपं ३. °मागच्छ वि[1]; °मागच्छति वि[2] अ[1]; °मागच्छन्ति ल; °मागच्छे लपं. ४. गमने वि[1] अ[1]. ५. इच्छति वि[2] अ[1].

वेङ्कट० शोभनबन्धनोऽग्निः जन्मना द्यावापृथिव्योः सुखं धारयति यज्ञियः शुद्धबलः, तमिमं देवाः अविन्दन् अपां मध्ये दर्शनीयं सरन्तीनां नदीनां वेगेऽवस्थितम् ॥ ३ ॥

अवर्धयन्त्सुभगं सप्त यह्वीः श्वेतं जज्ञानमरुषं महित्वा ।
शिशुं न जातमभ्यारुरश्वा देवासो अग्निं जनिमन् वपुष्यन् ॥ ४ ॥

अवर्धयन् । सुऽभगम् । सप्त । यह्वीः । श्वेतम् । जज्ञानम् । अरुषम् । महिऽत्वा ।
शिशुम् । न । जातम् । अभि । आरुः । अश्वाः । देवासः । अग्निम् । जनिमन् । वपुष्यन् ॥४॥

वेङ्कट० अवर्धयन् सुभगम् सप्त नद्यो महत्यः श्वेतवर्णम् जायमानम् आरोचमानम् महत्तया। तथा जातम् आत्मनः पुत्रम् अग्निम् शिशुम् इव जातम् बडवाः अभि अगच्छन् । तमिमं जातम् अग्निम् देवाः जन्मना आधातुमैच्छन् । वपुः आवपनं भूम्यामिति ॥ ४ ॥

शुक्रेभिरङ्गै रज आततन्वान् क्रतुं पुनानः कविभिः पवित्रैः ।
शोचिर्वसानः पर्यायुरपां श्रियो मिमीते बृहतीरनूनाः ॥ ५ ॥

शुक्रेभिः । अङ्गैः । रजः । आऽततन्वान् । क्रतुम् । पुनानः । कविऽभिः । पवित्रैः ।
शोचिः । वसानः । परि । आयुः । अपाम् । श्रियः । मिमीते । बृहतीः । अनूनाः ॥ ५ ॥

वेङ्कट० शुक्रैः अङ्गैः अन्तरिक्षम् विस्तारयन् कर्म च शोधयन् आत्मनः पवित्रैः कर्मभिः तेजः आच्छादयन् अपाम् गन्ता महतीः कान्तीः अन्यूनाः परितः करोति ॥ ५ ॥

[1]इति द्वितीयाष्टके अष्टमाध्याये त्रयोदशो वर्गः[1] ॥

वव्राजा सीमनदतीरदब्धा दिवो यह्वीरवसाना अनग्नाः ।
सना अत्र युवतयः सयोनीरेकं गर्भं दधिरे सप्त वाणीः ॥ ६ ॥

वव्राज । सीम् । अनदतीः । अदब्धाः । दिवः । यह्वीः । अवसानाः । अनग्नाः ।
सनाः । अत्र । युवतयः । सऽयोनीः । एकम् । गर्भम् । दधिरे । सप्त । वाणीः ॥ ६ ॥

वेङ्कट० 'सीमिति परिग्रहार्थीयः' ( या १,७ )। शब्दमकुर्वतीः[2] अहिंसिताः दिवः सप्त नदीः अग्निर्गर्भो भूत्वा वव्राज अभिजगाम । सर्वतः परिगृह्य वस्त्रमनाच्छादयन्तीरपि जलाच्छादनात् अनग्नाः । पुरातनाः अन्तरिक्षे सप्त नद्यो गच्छन्त्यः समानयोनयः एकम् अग्न्याख्यम् गर्भम् दधिरे सप्त नद्यः ॥ ६ ॥

स्तीर्णा अस्य संहतो विश्वरूपा घृतस्य योनौ स्रवथे मधूनाम् ।
अस्थुरत्र धेनवः पिन्वमाना मही दस्मस्य मातरा समीची ॥ ७ ॥

---

१-१. नास्ति मूको. २. शब्दं कुर्वतीः लपं.

स्तीर्णाः । अस्य । सम्ऽहृतः । विश्वऽरूपाः । घृतस्य । योनौ । स्रवथे । मधूनाम् ।
अस्थुः । अत्र । धेनवः । पिन्वमानाः । मही इति । दस्मस्य । मातरा । समीची इति सम्ऽईची ॥

**वेङ्कट०** इतस्ततो विस्तीर्णाः एनं जनयितुं सङ्गता नद्यः। उदकस्य योनौ अन्तरिक्षे मधूनाम् उदकानाम्[1] स्रवणे अस्मिन् उदकम् पिन्वमानाः नद्यः तिष्ठन्ति। तत्र जातस्याऽग्नेः दर्शनीयस्य महती द्यावापृथिवी च समीची भवतः ॥ ७ ॥

**बभ्राणः सूनो सहसो व्यद्यौद् दधानः शुक्रा रभसा वपूंषि ।**
**श्चोतन्ति धारा मधुनो घृतस्य वृषा यत्र वावृधे काव्येन ॥ ८ ॥**

बभ्राणः । सूनो इति । सहसः । वि । अद्यौत् । दधानः । शुक्रा । रभसा । वपूंषि ।
श्चोतन्ति । धाराः । मधुनः । घृतस्य । वृषा । यत्र । ववृधे । काव्येन ॥ ८ ॥

**वेङ्कट०** उदकैर्धार्यमाणः हे सहसः सूनो! वि द्योतते भवान् अपामुपस्थे दधानः शुक्राणि वेगयुक्तानि अङ्गानि[2]। तत्र मधुसदृशस्य उदकस्य धाराः श्चोतन्ति[3], वर्षिता [4]यत्र वर्धते[4] कर्मणा ॥ ८ ॥

**पितुश्चिदूधर्जनुषा विवेद व्यस्य धारा असृजद् वि धेनाः ।**
**गुहा चरन्तं सखिभिः शिवेभिर्दिवो यह्वीभिर्न गुहा बभूव ॥ ९ ॥**

पितुः । चित् । ऊधः । जनुषा । विवेद । वि । अस्य । धाराः । असृजत् । वि । धेनाः ।
गुहा । चरन्तम् । सखिऽभिः । शिवेभिः । दिवः । यह्वीभिः । न । गुहा । बभूव ॥ ९ ॥

**वेङ्कट०** दिवः ऊधः जायमानः एव[5] जानाति, ज्ञात्वा च अस्य धाराः उदकानि पृथिवीं प्रति विसृजति, प्रीणयित्रीरोषधीश्च। अपां मध्ये गुहायां चरन्तम् सखिभिः अन्यैरग्निभिः कल्याणैः दिवः अपि महद्भिः सा गुहा[6] न सम्बभूव। ततोऽयमपाम् उपस्थानान्निश्चरति तत्राऽसम्भूतः[7] ॥ ९ ॥

**पितुश्च गर्भं जनितुश्च बभ्रे पूर्वीरेको अधयत् पीप्यानाः ।**
**वृष्णे सपत्नी शुचये सबन्धू उभे अस्मै मनुष्ये३ नि पाहि ॥ १० ॥**

पितुः । च । गर्भम् । जनितुः । च । बभ्रे । पूर्वीः । एकः । अधयत् । पीप्यानाः ।
वृष्णे । सऽपत्नी इति सपत्नी । शुचये । सबन्धू इति सऽबन्धू । उभे इति । अस्मै । मनुष्ये३ इति । नि । पाहि ॥

**वेङ्कट०** पितुः दिवः जनयितुः च अस्य लोकस्य उभयोः गर्भम् अग्निर्बिभर्ति, दिवः[8] अपो बिभर्ति

---

१. नास्ति वि[1]. २. °ङ्गान्यङ्गानि वि[1, 2] लपं. ३. श्च्यो° वि[2] अ[1]. ४-४. वर्धते यत्र वि[1] लपं.
५. एवं वि[1] लपं. ६. समा वि[1] लपं. ७. °तः विश्वः वि[1] लपं. ८. दिवि लपं.

पृथिव्या ओषधीः । तथा पूर्वीः अपः एकः एव धयति अग्निमाप्याययन्तीः[१] । अथ प्रत्यक्षः । हविषो वर्धयित्रे समानपतिके शुचये समानबन्धने द्यावापृथिव्यौ उभे अस्मै मनुष्याय नितराम् रक्ष ॥ १० ॥

[२]इति द्वितीयाष्टके अष्टमाध्याये चतुर्दशो वर्गः[२] ॥

उरौ महाँ अनिबाधे ववर्धाऽऽपो अग्निं यशसः सं हि पूर्वीः ।
ऋतस्य योनावशयद् दमूना जामीनामग्निरपसि स्वसॄणाम् ॥ ११ ॥

उरौ । महान् । अनिऽबाधे । ववर्ध । आपः । अग्निम् । यशसः । सम् । हि । पूर्वीः ।
ऋतस्य । योनौ । अशयत् । दमूनाः । जामीनाम् । अग्निः । अपसि । स्वसॄणाम् ॥ ११ ॥

**वेङ्कट०** विस्तीर्णे महान् बाधारहिते ववर्ध अपामवकाशे[३], आपः[४] एनम्[५] अग्निम् यशस्वत्यः पूर्वम् सम् हि दधिरे इति क्रिया । ततश्च ऋतस्य [६]उदकस्य अशयत् योनौ[६] दममनाः । सोऽयम् बन्धूनाम् स्वयं सरन्तीनाम्[७] वेगेऽशयदिति ॥ ११ ॥

अक्रो न बभ्रिः समिथे महीनां दिदृक्षेयः सूनवे भाऋजीकः ।
उदुस्रिया जनिता यो जजानाऽपां गर्भो नृतमो यह्वो अग्निः ॥ १२ ॥

अक्रः । न । बभ्रिः । सम्ऽइथे । महीनाम् । दिदृक्षेयः । सूनवे । भाःऽऋजीकः ।
उत् । उस्रियाः । जनिता । यः । जजान । अपाम् । गर्भः । नृऽतमः । यह्वः । अग्निः ॥१२॥

**वेङ्कट०** अक्रः[८] 'अक्र आक्रमणात्' इति यास्कः ( ६,१७ ), नक्र इव वीर्यवान् भर्ता सङ्ग्रामे महतीनां[८] सेनानाम् दर्शनीयः हविषां प्रेरयित्रे भाऋजीकः[९], 'भाऋजीकः प्रसिद्धभाः' इति यास्कः ( ६,४ ), यः पशूनां जनयिता पशून् जनयति, सोऽयम् अपाम् गर्भः नेतृतमः महान् अग्निः ॥ १२ ॥

अपां गर्भं दर्शतमोषधीनां वना जजान सुभगा विरूपम् ।
देवासश्चिन्मनसा सं हि जग्मुः पनिष्ठं जातं तवसं दुवस्यन् ॥ १३ ॥

अपाम् । गर्भम् । दर्शतम् । ओषधीनाम् । वना । जजान । सुऽभगा । विऽरूपम् ।
देवासः । चित् । मनसा । सम् । हि । जग्मुः । पनिष्ठम् । जातम् । तवसम् । दुवस्यन् ॥१३॥

**वेङ्कट०** अपाम् गर्भम् दर्शयितारम्(?) ओषधीनाम् भजनीया माता जनयामास सुभगा[१०] विविधरूपम् । तज्जातम् देवाः च मनसा सम् जग्मुः । ज्ञात्वा च देवानां स्तोतृतमम्[११] जातम् प्रवृद्धम् पर्यचरन्निति ॥ १३ ॥

---

१. °माप्यायन्तीः वि[१] ल; °प्यायन्तिः लपं. २-२. नास्ति मूको. ३. अपामाकाशे वि[२] अ[१]. ४. नास्ति वि[१] लपं. ५. एवम् मूको. ६-६. योनावुदकस्य मूको. ७. रसन्तिना लपं. ८. महीनां वि[२]. ९. नास्ति मूको. १०. सुभागा वि[१]. ११. ···तमम् वि[२] अ[१]; वि[१] ल प्रस्तावः लपं.

बृहन्त इद्भानवो भाऋजीकमग्निं सचन्त विद्युतो न शुक्राः ।
गुहेव वृद्धं सदसि स्वे अन्तरपार ऊर्वे अमृतं दुहानाः ॥ १४ ॥

बृहन्तः । इत् । भानवः । भाःऽऋजीकम् । अग्निम् । सचन्त । विऽद्युतः । न । शुक्राः ।
गुहाऽइव । वृद्धम् । सदसि । स्वे । अन्तः । अपारे । ऊर्वे । अमृतम् । दुहानाः ॥१४ ॥

वेङ्कट० महान्तः एव भानवः ऋजुदीप्तिम् अग्निम् सेवन्ते विद्युतः इव दीप्यमानाः शुक्रवर्णाः वा। पर्वतगुहायाम् इव अपाम् अन्तः स्वस्मिन् स्थाने प्रवृद्धम् अग्निम् पारवर्जिते ऊर्वाख्ये[1] तस्मिन् उदकम् दुहानाः भानवः ॥ १४ ॥

ईळे च त्वा यजमानो हविर्भिरीळे सखित्वं सुमतिं निकामः ।
देवैरवो मिमीहि सं जरित्रे रक्षा च नो दम्येभिरनीकैः ॥ १५ ॥

ईळे । च । त्वा । यजमानः । हविःऽभिः । ईळे । सखिऽत्वम् । सुऽमतिम् । निऽकामः ।
देवैः । अवः । मिमीहि । सम् । जरित्रे । रक्ष । च । नः । दम्येभिः । अनीकैः ॥ १५ ॥

वेङ्कट० याचे[2] च त्वाम् हविर्भिः यजमानः अहम् । तथा त्वया सख्यम् याचे शोभनमतिं त्वाम् निकामयमानः । स्तोत्रे देवैः सह रक्षणम्[3] कुरु । रक्ष च[4] अस्मान् दमनकुशलैः तव तेजोभिः ॥ १५ ॥

[5]इति द्वितीयाष्टके अष्टमाध्याये पञ्चदशो वर्गः[5] ॥

उपक्षेतारस्तव सुप्रणीतेऽग्ने विश्वानि धन्या दधानाः ।
सुरेतसा श्रवसा तुञ्जमाना अभि ष्याम पृतनायूँरदेवान् ॥ १६ ॥

उपऽक्षेतारः । तव । सुऽप्रनीते । अग्ने । विश्वानि । धन्या । दधानाः ।
सुऽरेतसा । श्रवसा । तुञ्जमानाः । अभि । स्याम । पृतनाऽयून् । अदेवान् ॥ १६ ॥

वेङ्कट० अग्ने! शोभनप्रणयन! तव उपनिवासं कुर्वन्तः विश्वानि धनसमूहनानि धारयन्तः शोभनकर्मणा अन्नेन याचमानेभ्यो दानं कुर्वन्तः अभिभवेम पृतनामिच्छतः अदातॄन् ॥ १६ ॥

आ देवानामभवः केतुरग्ने मन्द्रो विश्वानि काव्यानि विद्वान् ।
प्रति मर्ताँ अवासयो दमूना अनु देवान् रथिरो यासि साधन् ॥ १७ ॥

---

१. समुद्रे सा. २. नास्ति वि॰ अ॰. ३. ॰ह रक्ष वि॰ अ॰. ४. नास्ति लएं. ५-५. नास्ति मूको.

आ । देवानाम् । अभवः । केतुः । अग्ने । मन्द्रः । विश्वानि । काव्यानि । विद्वान् ।
प्रति । मर्तान् । अवासयः । दमूनाः । अनु । देवान् । रथिरः । यासि । साधन् ॥ १७ ॥

वेङ्कट० देवानाम् निमन्त्रयिता त्वम् मनुष्येषु आ भवसि मादयिता सर्वाणि स्तोत्राणि जानन्। तथा मर्त्यांश्च[1] स्वेस्वे स्थाने प्रति वासयसि दममनाः, देवान् च अनु[2] गच्छसि रथवान् हविर्भिः साधयन् इति ॥ १७ ॥

नि दुरोणे अमृतो मर्त्यानां राजा ससाद विदथानि साधन् ।
घृतप्रतीक उर्विया व्यद्यौदग्निर्विश्वानि काव्यानि विद्वान् ॥ १८ ॥

नि । दुरोणे । अमृतः । मर्त्यानाम् । राजा । ससाद । विदथानि । साधन् ।
घृतऽप्रतीकः । उर्विया । वि । अद्यौत् । अग्निः । विश्वानि । काव्यानि । विद्वान् ॥ १८ ॥

वेङ्कट० नि ससाद गृहे देवः स मनुष्याणाम् राजा यज्ञान् साधयन्। आज्येन सन्धुक्षितावयवो विस्तीर्णो वि[3] द्योतते अग्निः विश्वानि कविकर्माणि[4] जानन् ॥ १८ ॥

आ नो गहि सख्येभिः शिवेभिर्महान् महीभिरूतिभिः सरण्यन् ।
अस्मे रयिं बहुलं संतरुत्रं सुवाचं भागं यशसं कृधी नः ॥ १९ ॥

आ । नः । गहि । सख्येभिः । शिवेभिः । महान् । महीभिः । ऊतिऽभिः । सरण्यन् ।
अस्मे इति । रयिम् । बहुलम् । सम्ऽतरुत्रम् । सुऽवाचम् । भागम् । यशसम् । कृधि । नः ॥ १९ ॥

वेङ्कट० अस्मान् आ गच्छ कल्याणैः सख्यैः महद्भिः रक्षणैः सह महान् अभिसरणमिच्छन्। अस्माकम् [5]धनम् महत्[5] सन्तारयितृ शोभनवाचम् भजनीयम् यशस्विनं पुत्रं च कुरु। पुनः नः इति पूरणम्[6] इति ॥ १९ ॥

एता ते अग्ने जनिमा सनानि प्र पूर्व्याय नूतनानि वोचम् ।
महान्ति वृष्णे सवना कृतेमा जन्मञ्जन्मन् निहितो जातवेदाः ॥ २० ॥

एता । ते । अग्ने । जनिम । सनानि । प्र । पूर्व्याय । नूतनानि । वोचम् ।
महान्ति । वृष्णे । सवना । कृता । इमा । जन्मन्ऽजन्मन् । निऽहितः । जातऽवेदाः ॥ २० ॥

---

१. त्रुटितम् अ[1]. २. अभि वि[1] लपं. ३. नास्ति वि[1] लपं. ४. कर्माणि वि[1]. ५-५. महद्धनम् वि[1] लपं. ६. 'ण वि[1] लपं.

**वेङ्कट०** अग्ने! तुभ्यम्[1] पुरातनाय सनातनानि नवतराणि च एतानि जन्मानि प्र अवोचम्, तथा महान्ति सवनानि[2] वृष्णे कृतानि इमानि। सोऽयम् अग्निः अस्माभिः जन्मनिजन्मनि[3] आहितः इति। अस्योत्तरा भूयसे निर्वचनाय ॥ २० ॥

जन्मंन्जन्मन् निहिंतो जातवेंदा विश्वामिंत्रेभिरिध्यते अजंस्रः ।
तस्यं वयं सुमतौ यज्ञियस्याऽपिं भद्रे सौंमनसे स्याम ॥ २१ ॥

जन्मंन्ऽजन्मन् । निऽहिंतः । जातऽवेंदाः । विश्वामिंत्रेभिः । इध्यते । अजंस्रः ।
तस्यं । वयम् । सुऽमतौ । यज्ञियस्य । अपिं । भद्रे । सौमनसे । स्याम ॥ २१ ॥

**वेङ्कट०** सोऽयम् सर्वेषु जन्मसु विश्वामित्रैः आहितः[4] समिध्यते[5] अनवरतम्[6] जातवेदाः[7]। तस्य यज्ञियस्य वयम् सुमतौ स्याम, अपि च भजनीये सौमनसे ॥ २१ ॥

इमं यज्ञं संहसावन् त्वं नों देवत्रा धेहि सुक्रतो ररांणः ।
प्र यंसि होतर्बृहतीरिषो नोऽग्ने महि द्रविंणमा यंजस्व ॥ २२ ॥

इमम् । यज्ञम् । सहसाऽवन् । त्वम् । नः । देवऽत्रा । धेहि । सुक्रतो इतिं सुऽक्रतो । ररांणः ।
प्र । यंसि । होतः । बृहतीः । इषः । नः । अग्ने । महि । द्रविंणम् । आ । यजस्व ॥ २२ ॥

**वेङ्कट०** हे बलवन्! सुक्रतो![8] त्वम् अस्माकम् इमम् यज्ञम् देवेषु निधेहि रममाणः। प्र यच्छ होतः! महान्ति अन्नानि अस्मभ्यम्। तथा महच्च धनम् 'आ यजस्व'[8] अग्ने ॥ २२ ॥

इळांमग्ने पुरुदंसं सनिं गोः शश्वत्तमं हवंमानाय साध ।
स्यान्नः सूनुस्तनंयो विजावाऽग्ने सा तें सुमतिर्भूत्वस्मे ॥ २३ ॥

इळांम् । अग्ने । पुरुऽदंसंम् । सनिम् । गोः । शश्वत्ऽतमम् । हवंमानाय । साध ।
स्यात् । नः । सूनुः । तनंयः । विजाऽवा । अग्ने । सा । ते । सुऽमतिः । भूतु । अस्मे इतिं ॥२३॥

**वेङ्कट०** बहुकर्माणम् गोः प्रदात्रीम् इडाम् देवीम् बहुतममन्नञ्च अग्ने! साधय[9] यजमानाय। भवतु अस्माकम् अग्ने! पुत्रः पुत्राणां जनयिता। अग्ने! सा तव प्रसिद्धा सुमतिः अस्मासु अस्त्विति ॥ २३ ॥

[10]इति द्वितीयाष्टके अष्टमाध्याये षोडशो वर्गः[10] ॥

---

१. नास्ति वि[1] लपं. २. °नानि च वि[1]. ३. जन्मनि मूको. ४. आधाय वि[1,2] अ[1] ल; आधारय लपं. ५. °ध्यसे वि[2] अ[1]. ६. अनवतरम् वि[2] अ[1]. ७. नास्ति मूको. ८-८. नास्ति वि[1,2] अ[1] लपं. ९. शोधय वि[2] अ[1]. १०-१०. नास्ति मूको.

[ २ ]

[1]विश्वामित्रो गाथिन ऋषिः। वैश्वानरोऽग्निर्देवता। जगती छन्दः[1]।

वैश्वानराय धिषणामृतावृधे घृतं न पूतमग्नये जनामसि।
द्विता होतारं मनुषश्च वाघतो धिया रथं न कुलिशः समृण्वति ॥ १ ॥

वैश्वानराय। धिषणाम्। ऋतऽवृधे। घृतम्। न। पूतम्। अग्नये। जनामसि।
द्विता। होतारम्। मनुषः। च। वाघतः। धिया। रथम्। न। कुलिशः। सम्। ऋण्वति ॥ १ ॥

वेङ्कट० वैश्वानराय स्तुतिम् यज्ञस्य वर्धयित्रे घृतम् इव पूतम् अग्नये जनयामः। तमिमम् मनुष्या यजमानाः[2] ऋत्विजः च सहभूताः कर्मणा द्विता[3] क्षिपन्ति गार्हपत्यमाहवनीयं च रथाक्षम् इव चक्रयोः वास्यादिः ॥ १ ॥

स रोचयज्जनुषा रोदसी उभे स मात्रोरभवत् पुत्र ईड्यः।
हव्यवाळग्निरजरश्चनोहितो दूळभो विशामतिथिर्विभावसुः ॥ २ ॥

सः। रोचयत्। जनुषा। रोदसी इति। उभे इति। सः। मात्रोः। अभवत्। पुत्रः। ईड्यः।
हव्यऽवाट्। अग्निः। अजरः। चनःऽहितः। दुःऽदभः। विशाम्। अतिथिः। विभाऽवसुः ॥ २ ॥

वेङ्कट० सः रोचयति जन्मना द्यावापृथिवी उभे अपि। सः द्यावापृथिव्योः भवति पुत्रः स्तुत्यः हविषां वोढा अग्निः जरारहितः अन्नहितः दुर्दम्भः[4] मनुष्याणाम् अतिथिः दीप्तिधनः ॥ २ ॥

क्रत्वा दक्षस्य तरुषो विधर्मणि देवासो अग्निं जनयन्त चित्तिभिः।
रुरुचानं भानुना ज्योतिषा महामत्यं न वाजं सनिष्यन्नुप ब्रुवे ॥ ३ ॥

क्रत्वा। दक्षस्य। तरुषः। विऽधर्मणि। देवासः। अग्निम्। जनयन्त। चित्तिऽभिः।
रुरुचानम्। भानुना। ज्योतिषा। महाम्। अत्यम्। न। वाजम्। सनिष्यन्। उप। ब्रुवे ॥ ३ ॥

वेङ्कट० कर्मणा प्रज्ञानैश्च दक्षस्य मनोस्तारकस्य विधारणार्थम् अग्निम् अजनयन् देवाः। दीप्यमानम् दीप्यमानेन[5] तेजसा महान्तम् अश्वम् इव बलिनं सङ्ग्रामम् भजिष्यन् उप स्तौमि ॥ ३ ॥

आ मन्द्रस्य सनिष्यन्तो वरेण्यं वृणीमहे अह्रयं वाजमृग्मियम्।
रातिं भृगूणामुशिजं कविक्रतुमग्निं राजन्तं दिव्येन शोचिषा ॥ ४ ॥

---

१. नास्ति मूको. २. मनाः लपं. ३. विधा वि[1,2] अ[1]; लपं. ४. दुर्दहः वि[1] लपं. ५. दीप्तेन वि[1].

आ । मन्द्रस्य । सनिष्यन्तः । वरेण्यम् । वृणीमहे । अह्रयम् । वाजम् । ऋग्मियम् ।
रातिम् । भृगूणाम् । उशिजम् । कविऽक्रतुम् । अग्निम् । राजन्तम् । दिव्येन । शोचिषा ॥४॥

**वेङ्कट०** आ वृणीमहे मादयितुः लब्धुमिच्छन्तः वरणीयम् अन्नमग्नेः । तम् अह्रयम् अलज्जमानम् ऋगर्हम् अग्निम् भृगूणाम् रातिम्[1], ते ह्येनमादधिरे, कामिनम् क्रान्तप्रज्ञम्[2] दिव्येन तेजसा दीप्यमानम् इति ॥ ४ ॥

अग्निं सुम्नाय दधिरे पुरो जना वाजश्रवसमिह वृक्तबर्हिषः ।
यतस्रुचः सुरुचं विश्वदेव्यं रुद्रं यज्ञानां साधदिष्टिमपसाम् ॥ ५ ॥

अग्निम् । सुम्नाय । दधिरे । पुरः । जनाः । वाजऽश्रवसम् । इह । वृक्तऽबर्हिषः ।
यतऽस्रुचः । सुऽरुचम् । विश्वऽदेव्यम् । रुद्रम् । यज्ञानाम् । साधत्ऽइष्टिम् । अपसाम् ॥ ५ ॥

**वेङ्कट०** अग्निम् सुखार्थम् आहवनीयं कुर्वन्ति जनाः बलिष्ठान्नम् अस्मिँल्लोके स्तरणाय छिन्नबर्हिषः आत्तस्रुचः सुरोचनम् सर्वदेवहितम् स्तोतारम् यज्ञानाम् तथा कर्मणां च साधदिष्टिम्[3] अभिलषितं येन साध्यते तमिति ॥ ५ ॥

[4]इति द्वितीयाष्टके अष्टमाध्याये सप्तदशो वर्गः[4] ॥

पावकशोचे तव हि क्षयं परि होतर्यज्ञेषु वृक्तबर्हिषो नरः ।
अग्ने दुव इच्छमानास आप्यमुपासते द्रविणं धेहि तेभ्यः ॥ ६ ॥

पावकऽशोचे । तव । हि । क्षयम् । परि । होतः । यज्ञेषु । वृक्तऽबर्हिषः । नरः ।
अग्ने । दुवः । इच्छमानासः । आप्यम् । उप । आसते । द्रविणम् । धेहि । तेभ्यः ॥ ६ ॥

**वेङ्कट०** शोधकदीप्ते ! तव आवासम् परितः होतः ! यज्ञेषु स्तीर्णबर्हिषः मनुष्याः तिष्ठन्ति । अग्ने ! तव परिचरणम् त्वया सख्यं च इच्छन्तः त्वाम् उप आसते ये[5], तेभ्यः धनम् प्रयच्छ ॥ ६ ॥

आ रोदसी अपृणदा स्वर्महज्जातं यदेनमपसो अधारयन् ।
सो अध्वराय परि णीयते कविरत्यो न वाजसातये चनोहितः ॥ ७ ॥

आ । रोदसी इति । अपृणत् । आ । स्वः । महत् । जातम् । यत् । एनम् । अपसः । अधारयन् ।
सः । अध्वराय । परि । नीयते । कविः । अत्यः । न । वाजऽसातये । चनःऽहितः ॥ ७ ॥

---

१. नातिम् वि[1] अ[1]; ज्ञाति वि[1] लपं. २. कान्तप्र॰ मूको. ३. ॰दिष्टम् वि[2]; ॰दिष्ठमिष्टम् अ[1].
४-४. नास्ति मूको. ५ नास्ति वि[1].

वेङ्कट० द्यावापृथिवी आ[1] पूरयति, महत् च अन्तरिक्षम्। जातम् यत्[2] एनम् कर्मवन्तः धारयन्ति[3]। सः अयम् अध्वराय[4] परितः नीयते क्रान्तः[5] अश्वः इव सङ्ग्रामाय अभिहितः[6] ॥ ७ ॥

नमस्यत हव्यदातिं स्वध्वरं दुवस्यत दम्यं जातवेदसम्।
रथीर्ऋतस्य बृहतो विचर्षणिरग्निर्देवानामभवत् पुरोहितः ॥ ८ ॥

नमस्यत। हव्यऽदातिम। सुऽअध्वरम। दुवस्यत। दम्यम्। जातऽवेदसम्।
रथीः। ऋतस्य। बृहतः। विऽचर्षणिः। अग्निः। देवानाम्। अभवत्। पुरःऽहितः ॥ ८ ॥

वेङ्कट० नमस्यत आह्वातव्यदानम्, हविषां वा दातारम् 'यजमानो वै हव्यदातिः' (माश १, ४, १,२४) इति ब्राह्मणम्, शोभनयज्ञम्। परिचरत[7] दमहितम् अग्निम्। यज्ञस्य रथ एव रथीः, 'रथीरध्वराणामिति। रथो ह वा एष भूत्वा[8] देवेभ्यो यज्ञं[9] वहति' (माश १,४,२,११) इति ब्राह्मणम्, महतः विद्रष्टा अग्निः देवानाम् अभवत् अग्रतो हितः ॥ ८ ॥

तिस्रो यह्वस्य समिधः परिज्मनोऽग्नेरपुनन्नुशिजो अमृत्यवः।
तासामेकामदधुर्मर्त्ये भुजमु लोकमु द्वे उप जामिमीयतुः ॥ ९ ॥

तिस्रः। यह्वस्य। सम्ऽइधः। परिऽज्मनः। अग्नेः। अपुनन्। उशिजः। अमृत्यवः।
तासाम्। एकाम्। अदधुः। मर्त्ये। भुजम्। ऊँ इति। लोकम्। ऊँ इति। द्वे इति। उप। जामिम्। ईयतुः।

वेङ्कट० परितः गन्तुः महतः अग्नेः तिस्रः समेधिकाः[1] तनूः मृत्युरहिताः कामयितारो देवाः अपुनन्। तासाम् तनूनाम् एकाम् तनूमन्न्यात्मिकाम् मर्त्ये लोके निदधुः भोगसाधनीम्। अथ अन्ये द्वे वायुः सूर्यश्च जामिम् लोकम् उपगतौ[10] अन्तरिक्षं दिवञ्चेति। 'देवा अकृण्वन्नुशिजो अमर्त्यवे ×× लोकमिद् द्वे उप जामी ईयतुः' (आपश्री १२ ७,१०) इति शाखान्तरे पाठ.[11] ॥ ९ ॥

विशां कविं विश्पतिं मानुषीरिषः सं सीमकृण्वन्त्स्वधितिं न तेजसे।
स उद्वतो निवतो याति वेविषत् स गर्भमेषु भुवनेषु दीधरत् ॥ १० ॥

विशाम्। कविम्। विश्पतिम्। मानुषीः। इषः। सम्। सीम्। अकृण्वन्। स्वऽधितिम्। न। तेजसे।
सः। उत्ऽवतः। निऽवतः। याति। वेविषत्। सः। गर्भम्। एषु। भुवनेषु। दीधरत् ॥ १० ॥

---

१. नास्ति मूको. २. यदा वि[2] अ[1]. ३. धारयन्तः वि[1] लपं. ४. अध्वरम् लपं. ५. कान्तः वि[1,2] अ[1] लपं. ६. अभिहितः वि[1] लपं. ७. °रत तं कप्ररताषः. ८. भूतो वि[1]. ९. नि हव्यं वि[2] अ[1]. १०. उपागताम् वि[1] लपं. ११. पाठात् वि[1] लपं.

वेङ्कट० विशाम् क्रान्तम्[1] विशां पालयितारम् मनुष्यसम्बद्धानि[2] अन्नानि सर्वतः संस्कुर्वन्ति स्वधितिम् इव तेजनाय। सः[3] उच्छ्रितान् निम्नांश्च देशान् गच्छति सर्वं व्याप्नुवन्। सः एव वैश्वानरो भूत्वा एषु सर्वेषु भूतेषु गर्भम् धारयति ॥ १० ॥

[4]इति द्वितीयाष्टके अष्टमाध्याये अष्टादशो वर्गः[4] ॥

स जिन्वते जठरेषु प्रजज्ञिवान् वृषा चित्रेषु नानदन्न सिंहः।
वैश्वानरः पृथुपाजा अमर्त्यो वसु रत्ना दयमानो वि दाशुषे ॥ ११ ॥

सः। जिन्वते। जठरेषु। प्रजज्ञिऽवान्। वृषा। चित्रेषु। नानदत्। न। सिंहः।
वैश्वानरः। पृथुऽपाजाः। अमर्त्यः। वसु। रत्ना। दयमानः। वि। दाशुषे ॥ ११ ॥

वेङ्कट० सः प्रीणयति मनुष्याणामुदरेषु प्रजातः[5] कामानां वर्षिता चित्रेषु अरण्येषु स्थित्वा शब्दं कुर्वन् इव सिंहः। वैश्वानरः पृथुबलः अमर्त्यः वासयितॄणि रत्नानि प्रयच्छते यजमानाय विशेषेण प्रयच्छन् भवति ॥ ११ ॥

वैश्वानरः प्रत्नथा नाकमारुहद् दिवस्पृष्ठं भन्दमानः सुमन्मभिः।
स पूर्ववज्जनयञ्जन्तवे धनं समानमज्मं पर्येति जागृविः ॥ १२ ॥

वैश्वानरः। प्रत्नऽथा। नाकम्। आ। अरुहत्। दिवः। पृष्ठम्। भन्दमानः। सुमन्मऽभिः।
सः। पूर्वऽवत्। जनयन्। जन्तवे। धनम्। समानम्। अज्मम्। परि। एति। जागृविः ॥१२॥

वेङ्कट० प्रातरादित्यात्मना जातः[6] वैश्वानरः तदानीमेव पुराणः दिवम् आ रोहति[7] दिवः धर्ता स्तूयमानः स्तोत्रैः। सः पुराण इव जनयन् यजमानाय धनम् एकमेव मार्गम् अन्वहं परि गच्छति जागरणशीलः ॥ १२ ॥

ऋतावानं यज्ञियं विप्रमुक्थ्य१मा यं दधे मातरिश्वा दिवि क्षयम्।
तं चित्रयामं हरिकेशमीमहे सुदीतिमग्निं सुविताय नव्यसे ॥ १३ ॥

ऋतऽवानम्। यज्ञियम्। विप्रम्। उक्थ्यम्। आ। यम्। दधे। मातरिश्वा। दिवि। क्षयम्।
तम्। चित्रऽयामम्। हरिऽकेशम्। ईमहे। सुऽदीतिम्। अग्निम्। सुवितायं। नव्यसे ॥१३॥

वेङ्कट० सत्यवन्तम् यज्ञार्हम् मेधाविनम् स्तुत्यम् अन्तरिक्षे दीप्ते आत्मन आवासम्[8] यम् मातरिश्वा आ दधे, तम् अधिष्ठाय वसतीत्यर्थः। तम् चित्रगमनम्[9] हरितकेशम् याचामहे शोभनदीप्तिम् अग्निम् अभ्युदयाय नवतरायेति ॥ १३ ॥

---

१. कान्तं वि[1] लपं. २. °म्बन्धानि वि[1,2] क लपं; °म्बन्धीनि ल प्रस्तावः. ३. नास्ति अ[1]. ४-४. नास्ति मूको. ५. प्रज्ञाताः वि[2] अ[1]. ६. नास्ति वि[1] लपं. ७. रोहयति मूको. ८. आवासे लपं. ९. चित्रवर्णम् वि[2] अ[1].

शुचिं न यामन्निषिरं स्वर्दृशं केतुं दिवो रोचनस्थामुषर्बुधम् ।
अग्निं मूर्धानं दिवो अप्रतिष्कुतं तमीमहे नमसा वाजिनं बृहत् ॥ १४ ॥

शुचिम् । न । यामन् । इषिरम् । स्वःऽदृशम् । केतुम् । दिवः । रोचनऽस्थाम् । उषःऽबुधम् ।
अग्निम् । मूर्धानम् । दिवः । अप्रतिऽस्कुतम् । तम् । ईमहे । नमसा । वाजिनम् । बृहत् ॥१४॥

**वेङ्कट०** [1]आदित्यम् इव गमने क्षिप्रम् सर्वस्य द्रष्टारम् प्रज्ञानम् दिवः रोचमानेषु तिष्ठन्तम् प्रातः प्रबुध्यमानम् अग्निम् दिवः† उच्छ्रितम् अप्रस्खलितम् अप्रतिशब्दितम्‡ वा तम् अभिगच्छामः अन्नेन बलिनम् महान्तम्[1] ॥ १४ ॥

मन्द्रं होतारं शुचिमद्वयाविनं दमूनसमुक्थ्यं विश्वचर्षणिम् ।
रथं न चित्रं वपुषाय दर्शतं मनुर्हितं सदमिद् राय ईमहे ॥ १५ ॥

मन्द्रम् । होतारम् । शुचिम् । अद्वयाविनम् । दमूनसम् । उक्थ्यम् । विश्वऽचर्षणिम् ।
रथम् । न । चित्रम् । वपुषाय । दर्शतम् । मनुःऽहितम् । सदम् । इत् । रायः । ईमहे ॥ १५ ॥

**वेङ्कट०** मादकम् ह्वातारम् शुचिम् सत्यानृताभ्यामयुक्तं केवलसत्ययुक्तम् दममनसम् स्तोतव्यम् सर्वस्य द्रष्टारम् रथम् इव चित्रम् रूपस्य प्रदर्शकम्[2] मनुष्याणां हितम् सदा एव धनानि याचामहे ॥ १५ ॥

[3]इति द्वितीयाष्टके अष्टमाध्याये एकोनविंशो वर्गः[3] ॥

## [ ३ ]

[1]विश्वामित्रो गाथिन ऋषिः । वैश्वानरोऽग्निर्देवता । जगती छन्दः[1] ।

वैश्वानराय पृथुपाजसे विपो रत्ना विधन्त धरुणेषु गातवे ।
अग्निर्हि देवाँ अमृतो दुवस्यत्यथा धर्माणि सनता न दूदुषत् ॥ १ ॥

वैश्वानराय । पृथुऽपाजसे । विपः । रत्ना । विधन्त । धरुणेषु । गातवे ।
अग्निः । हि । देवान् । अमृतः । दुवस्यति । अथ । धर्माणि । सनता । न । दूदुषत् ॥ १ ॥

**वेङ्कट०** वैश्वानराय पृथुतेजसे मेधाविनो विप्राः रमणीयानि हवींषि ददति धारकेषु देवेषु गन्तुम् । अग्निः हि देवान् अमृतः[4] परिचरति, तथा चिरन्तनानि धर्माणि च न[5] दूषयति परिपालयति ॥ १ ॥

---

१-१. नास्ति लर्प. † दिवम् मूको. ‡ नास्ति वि[2] अ[1] ल. २. दर्शकम् वि[1]; प्रदर्शनकम् वि[2] अ[1]. ३-३. नास्ति मूको. ४. अमृतं वि[2] अ[1]. ५. नास्ति वि[2] अ[1].

अन्तर्दूतो रोदसी दस्म ईयते होता निषत्तो मनुषः पुरोहितः ।
क्षयं बृहन्तं परि भूषति द्युभिर्देवेभिरग्निरिषितो धियावसुः ॥ २ ॥

अन्तः । दूतः । रोदसी इति । दस्मः । ईयते । होता । निऽसत्तः । मनुषः । पुरःऽहितः ।
क्षयम् । बृहन्तम् । परि । भूषति । द्युऽभिः । देवेभिः । अग्निः । इषितः । धियाऽवसुः ॥ २ ॥

**वेङ्कट०** दर्शनीयोऽग्निः द्यावापृथिवी अन्तः दूतः भूत्वा गच्छति । होता सन् होतृषदने निषण्णः मनुष्यस्य पुरो निहितः निवासं महान्तम् अलङ्करोति उत्तरवेदिं दीप्तिभिः देवैः अग्निः प्रेरितः[1] प्रज्ञावसुः ॥ २ ॥

केतुं यज्ञानां विदथस्य साधनं विप्रासो अग्निं महयन्त चित्तिभिः ।
अपांसि यस्मिन्नधि संदधुर्गिरस्तस्मिन्त्सुम्नानि यजमान आ चके ॥ ३ ॥

केतुम् । यज्ञानाम् । विदथस्य । साधनम् । विप्रासः । अग्निम् । महयन्त । चित्तिऽभिः ।
अपांसि । यस्मिन् । अधि । सम्ऽदधुः । गिरः । तस्मिन् । सुम्नानि । यजमानः । आ । चके ॥ ३ ॥

**वेङ्कट०** [2]पताकास्थानीयम् यज्ञानाम्[2] गृहस्य साधयितारम् विप्राः अग्निम् पूजयन्ति कर्मभिः । यस्मिन्[3] कर्माणि स्तुतीश्च संदधुः, तस्मिन् सुखानि यजमानः मनुष्यः कामयते ॥ ३ ॥

पिता यज्ञानामसुरो विपश्चितां विमानमग्निर्वयुनं च वाघताम् ।
आ विवेश रोदसी भूरिवर्पसा पुरुप्रियो भन्दते धामभिः कविः ॥ ४ ॥

पिता । यज्ञानाम् । असुरः । विपःऽचिताम् । विऽमानम् । अग्निः । वयुनम् । च । वाघताम् ।
आ । विवेश । रोदसी इति । भूरिऽवर्पसा । पुरुऽप्रियः । भन्दते । धामऽभिः । कविः ॥ ४ ॥

**वेङ्कट०** पालयिता यज्ञानाम् विपश्चिताम् अपि प्रज्ञावान् सोऽयम् अग्निः[4] ऋत्विजां विमानसाधनं[5] भवति, वेद्याः[6] प्रज्ञासाधनं च । सोऽयम् आ विशति द्यावापृथिवी बहुरूपेण[7] तेजसा, बहूनां प्रियः स्तौति शरीरैः स्वैर्बहुभिः कविः ॥ ४ ॥

चन्द्रमग्निं चन्द्ररथं हरिव्रतं वैश्वानरमप्सुषदं स्वर्विदम् ।
विगाहं तूर्णिं तविषीभिरावृतं भूर्णिं देवास इह सुश्रियं दधुः ॥ ५ ॥

चन्द्रम् । अग्निम् । चन्द्रऽरथम् । हरिऽव्रतम् । वैश्वानरम् । अप्सुऽसदम् । स्वःऽविदम् ।
विऽगाहम् । तूर्णिम् । तविषीभिः । आऽवृतम् । भूर्णिम् । देवासः । इह । सुऽश्रियम् । दधुः ॥ ५ ॥

---

१. प्रेरितं वि[2] अ[1]. २-२. नास्ति लपं. ३. यस्मात् लपं. ४. नास्ति मूको. ५. अभिमान° वि[2] अ[1]. ६. वेद्यां वि[2] लपं. ७. ब्रह्मरूपेण वि[2] अ[1] ल लपं; बहुं रूपेण वि[1].

**वेङ्कट०** कान्तम् अग्निम् कान्तरथम्, व्रतमिति रूपमाह हरितत्वचम् वैश्वानरम् अप्सु सीदन्तं सर्वज्ञं युद्धेषु विगाहमानं क्षिप्रं बलैः[1] आवृतम् भर्तारम् इह लोके देवाः सुश्रियम् निदधुरिति॥ ५ ॥

[2]इति द्वितीयाष्टके अष्टमाध्याये विंशो वर्गः[2] ॥

अ॒ग्निर्दे॒वेभि॒र्मनु॑षश्च ज॒न्तुभि॑स्तन्वा॒नो य॒ज्ञं पु॑रु॒पेश॑सं धि॒या ।
र॒थीर॒न्तरी॑यते॒ साध॑दिष्टिभिर्जी॒रो दमू॑ना अभिश॒स्ति॒चात॑नः ॥ ६ ॥

अ॒ग्निः । दे॒वेभिः॑ । मनु॑षः । च॒ । ज॒न्तुऽभिः॑ । त॒न्वा॒नः । य॒ज्ञम् । पु॒रु॒ऽपेश॑सम् । धि॒या ।
र॒थीः । अ॒न्तः । ई॒य॒ते॒ । साध॑दिष्टिऽभिः । जी॒रः । दमू॑नाः । अ॒भि॒श॒स्ति॒ऽचात॑नः ॥ ६ ॥

**वेङ्कट०** अग्निः देवानुद्दिश्य मनोः च जन्तुभिः अपत्यैः एताभिर्मानवीभिः प्रजाभिः तन्वानः यज्ञम् बहुरूपम् प्रज्ञया रथभूतः द्यावापृथिव्योः अन्तः गच्छति साधयज्ञेभ्यः[3] मनुष्येभ्यः क्षिप्रः दममनाः रक्षसां चातयिता ॥ ६ ॥

अग्ने॒ जर॑स्व स्वप॒त्य आयु॑न्यू॒र्जा पि॑न्वस्व॒ समिषो॑ दिदीहि नः ।
वयां॑सि जिन्व बृह॒तश्च॑ जागृव उ॒शिग्दे॒वाना॒मसि॑ सु॒क्रतु॑र्वि॒पाम् ॥ ७ ॥

अग्ने॑ । जर॑स्व । सु॒ऽअ॒प॒त्ये । आयु॑नि । ऊ॒र्जा । पि॒न्व॒स्व॒ । सम् । इषः॑ । दि॒दी॒हि॒ । नः॒ ।
वयां॑सि । जि॒न्व॒ । बृ॒ह॒तः । च॒ । जा॒गृ॒वे॒ । उ॒शिक् । दे॒वाना॑म् । असि॑ । सु॒ऽक्रतुः॑ । वि॒पाम् ॥७॥

**वेङ्कट०** अग्ने! जरस्व अस्मान् शोभनापत्ययुक्ते जीविते, हविषा अस्माकं कामान् पिन्वस्व, अन्नानि च अस्मभ्यं प्रयच्छ, तथा महान्ति वयांसि अश्वान् अस्मभ्यं प्रयच्छ जागरणशील रक्षक![4] । कामयिता देवानाम् भवसि, अपि[5] च सुप्रज्ञः विपश्चिताम् ॥ ७ ॥

वि॒श्पतिं॑ य॒ह्वमति॑थिं॒ नरः॒ सदा॑ य॒न्तारं॑ धी॒नामु॒शिजं॑ च वा॒घता॑म् ।
अ॒ध्व॒राणां॒ चेत॑नं जा॒तवे॑दसं॒ प्र शं॑सन्ति॒ नम॑सा जू॒तिभि॑र्वृ॒धे ॥ ८ ॥

वि॒श्पति॑म् । य॒ह्वम् । अति॑थिम् । नरः॑ । सदा॑ । य॒न्तार॑म् । धी॒नाम् । उ॒शिज॑म् । च॒ । वा॒घता॑म् ।
अ॒ध्व॒राणा॑म् । चेत॑नम् । जा॒तऽवे॑दसम् । प्र । शं॒स॒न्ति॒ । नम॑सा । जू॒तिऽभिः॑ । वृ॒धे ॥ ८ ॥

**वेङ्कट०** विशां पतिं महान्तम् अतिथिम् मनुष्याः सदा कर्मणां नियन्तारं कामयितारं च ऋत्विजां यज्ञानां चेतयितारं जातप्रज्ञम् प्र शंसन्ति नमस्कारैः स्तुतिभिश्च वर्धनाय। जूतिः जरतेः स्तुतिकर्मणः ॥ ८ ॥

---

१. बलेन लपं. २-२. नास्ति मूको. ३. साधन्यज्ञेभ्यः वि[2] अ[1]. ४. नास्ति वि[2] अ[1]. ५. असि वि[2] अ[1] ल.

विभावा देवः सुरणः परि क्षितीरग्निर्बभूव शवसा सुमद्रथः ।
तस्य व्रतानि भूरिपोषिणो वयमुप भूषेम दम आ सुवृक्तिभिः ॥ ९ ॥

विभाऽवा । देवः । सुऽरणः । परि । क्षितीः । अग्निः । बभूव । शवसा । सुमत्ऽरथः ।
तस्य । व्रतानि । भूरिऽपोषिणः । वयम् । उप । भूषेम । दमे । आ । सुवृक्तिऽभिः ॥ ९ ॥

**वेङ्कट०** प्रभावान् देवः सुरमणः[1] प्रजाः सर्वाः पर्यभवत् अग्निः बलेन शोभनरथः। तस्य कर्माणि बहूनां पोषयितुः वयम् अलङ्कुर्मः[2] स्वगृहे शोभनस्तोत्रैः ॥ ९ ॥

वैश्वानर तव धामान्या चके येभिः स्वर्विदभवो विचक्षण ।
जात आपृणो भुवनानि रोदसी अग्ने ता विश्वा परिभूरसि त्मना ॥ १० ॥

वैश्वानर । तव । धामानि । आ । चके । येभिः । स्वःऽवित् । अभवः । विऽचक्षण ।
जातः । आ । अपृणः । भुवनानि । रोदसी इति । अग्ने । ता । विश्वा । परिऽभूः । असि । त्मना ॥

**वेङ्कट०** हे वैश्वानर! तव शरीराणि आभिमुख्येन[3] कामये। यैस्त्वम् स्वर्गस्य लम्भयिता भवसि[4] प्राज्ञ!। जातः आ पूरयसि भूतानि द्यावापृथिवी च[5]। अग्ने! सर्वाणि तानि आत्मनैव परिभवसि अरानिव नेमिः ॥ १० ॥

वैश्वानरस्य दंसनाभ्यो बृहदरिणादेकः स्वपस्यया कविः ।
उभा पितरा महयन्नजायताग्निर्द्यावापृथिवी भूरिरेतसा ॥ ११ ॥

वैश्वानरस्य । दंसनाभ्यः । बृहत् । अरिणात् । एकः । सुऽअपस्यया । कविः ।
उभा । पितरा । महयन् । अजायत । अग्निः । द्यावापृथिवी इति । भूरिऽरेतसा ॥ ११ ॥

**वेङ्कट०** वैश्वानरस्य[6] कर्मभ्यः महत्त्वमिह एकः[7] प्राप्नोति शोभनकर्मेच्छया कविः। सोऽयम् उभौ पितरौ द्यां च पृथिवीं च[8] बहुरेतस्के [9]पूजयन् अजायत[9]। पृथिव्याः[10] ओषध्यादयो रेतः, उदकं दिव इति ॥ ११ ॥

[11]इति द्वितीयाष्टके अष्टमाध्याये एकविंशो वर्गः[11]।

---

१. सुरमणं वि[2] अ[1]. २. कुर्मः वि[1] लपं. ३. °मुख्यानि वि[1,2] अ[1]; °मुख्ये ल लपं. ४. प्रभव° लपं. ५. वा वि[2] अ[1]. ६. नास्ति वि[2] लपं. ७. एकं वि[2] अ[1]. ८. नास्ति वि[2]. ९-९. पूजय ··· वि[2] अ[1]. १०. पृथिव्याम् वि[2] अ[1]. ११-११. नास्ति मूको.

## [ ४ ]

[1]विश्वामित्रो गाथिन ऋषिः। आप्रीसूक्तम्। प्रथमाया इध्मः समिद्धोऽग्निर्वा देवता, द्वितीयायाः तनूनपात्, तृतीयाया इळः, चतुर्थ्यां बर्हिः, पञ्चम्या देवीर्द्वारः, षष्ठ्या उषासानक्ता, सप्तम्या दैव्यौ होतारौ प्रचेतसौ, अष्टम्याः तिस्रो देव्यः सरस्वतीळाभारत्यः, नवम्याः त्वष्टा, दशम्या वनस्पतिः, एकादश्याः स्वाहाकृतयः। त्रिष्टुप् छन्दः[1]।

समित्संमित् सुमना बोध्यस्मे शुचाशुचा सुमतिं रासि वस्वः।
आ देव देवान् यजथाय वक्षि सखा सखीन्त्सुमना यक्ष्यग्ने॥ १॥

संमित्ऽसंमित्। सुऽमनाः। बोधि। अस्मे इति। शुचाऽशुचा। सुऽमतिम्। रासि। वस्वः।
आ। देव। देवान्। यजथाय। वक्षि। सखा। सखीन्। सुऽमनाः। यक्षि। अग्ने॥ १॥

**वेङ्कट०** समिधंसमिधम् सुमनाः बुध्यस्व। अग्ने![2] तेजसातेजसा भवदीयां धनस्य सुमतिम् अस्मभ्यं[3] देहि। आ वह च देव![3] देवान् यज्ञाय। अथ तान् समानख्यानान् त्वम् सखा[4] सन् शोभनमनाः यज च अग्ने!॥ १॥

यं देवासस्त्रिरहन्नायजन्ते दिवेदिवे वरुणो मित्रो अग्निः।
सेमं यज्ञं मधुमन्तं कृधी नस्तनूनपाद् घृतयोनिं विधन्तम्॥ २॥

यम्। देवासः। त्रिः। अहन्। आऽयजन्ते। दिवेऽदिवे। वरुणः। मित्रः। अग्निः।
सः। इमम्। यज्ञम्। मधुऽमन्तम्। कृधि। नः। तनूऽनपात्। घृतऽयोनिम्। विधन्तम्॥२॥

**वेङ्कट०** यम् वरुणादयोऽपि देवाः अन्वहम् अहनि[2] त्रिः आयजन्ते[5] अग्निं त्रिषु सवनेषु। सः[6] त्वम् इमम् यज्ञम् मधुमन्तम् कुरु नः हे तनूनपात्! घृतोत्पत्तिस्थानम् देवान् परिचरन्तं यज्ञम्॥ २॥

प्र दीधितिर्विश्ववारा जिगाति होतारमिळः प्रथमं यजध्यै।
अच्छा नमोभिर्वृषभं वन्दध्यै स देवान् यक्षदिषितो यजीयान्॥ ३॥

प्र। दीधितिः। विश्वऽवारा। जिगाति। होतारम्। इळः। प्रथमम्। यजध्यै।
अच्छ। नमःऽभिः। वृषभम्। वन्दध्यै। सः। देवान्। यक्षत्। इषितः। यजीयान्॥ ३॥

---

१-१. नास्ति मूको. २. अस्मे ल प्रस्तावः. ३. नास्ति मूको. ४. नास्ति वि[2] अ[1]. ५. आयजन्तः वि[2] अ[1]. ६. नास्ति वि[2] लपं.

**वेङ्कट०** प्र गच्छति दीप्तिः सर्वस्य वरणीया अग्निम् । स्तुतयश्च प्रथमम्[1] यष्टुम् अन्नैः सह वर्षितारम् अग्निम् वन्दितुम् अभिगच्छन्ति[2] । सः[3] देवान् यजतु प्रेषितः यष्टृतमः ॥ ३ ॥

ऊर्ध्वो वां गातुरध्वरे अकार्यूर्ध्वा शोचींषि प्रस्थिता रजांसि ।
दिवो वा नाभा न्यसादि होता स्तृणीमहि देवव्यचा वि बर्हिः ॥ ४ ॥

ऊर्ध्वः । वाम् । गातुः । अध्वरे । अकारि । ऊर्ध्वा । शोचींषि । प्रऽस्थिता । रजांसि ।
दिवः । वा । नाभा । नि । असादि । होता । स्तृणीमहि । देवऽव्यचाः । वि । बर्हिः ॥ ४ ॥

**वेङ्कट०** हे अग्नीषोमौ! युवयोः गमनम् अध्वरे[4] ऊर्ध्वम् कृतम् इति । एतदेवोक्तम्—ऊर्ध्वानि शोचकानि तेजांसि प्रस्थितानि । भवतोरेकः दिवः नाभौ इवोत्तरवेद्या नाभौ निषीदति होताऽग्निः । ततो विविधं स्तृणीमहि [5]देवैर्व्याप्तम् बर्हिः[5] ॥ ४ ॥

सप्त होत्राणि मनसा वृणाना इन्वन्तो विश्वं प्रति यन्नृतेन ।
नृपेशसो विदथेषु प्र जाता अभीमं यज्ञं वि चरन्त पूर्वीः ॥ ५ ॥

सप्त । होत्राणि । मनसा । वृणानाः । इन्वन्तः । विश्वम् । प्रति । यन् । ऋतेन ।
नृऽपेशसः । विदथेषु । प्र । जाताः । अभि । इमम् । यज्ञम् । वि । चरन्त । पूर्वीः ॥ ५ ॥

**वेङ्कट०** सप्त वषट्कर्तारः होतृकर्माणि मनसा कामयमानाः सर्वं जगत् प्रीणयन्तः [6]प्रति गच्छन्ति[6] सत्येन मार्गेण । प्रविशद्भिर्मनुष्यैराश्लिष्टाः यज्ञेषु प्रादुर्भूताः इमम् यज्ञम्[7] अभि चरन्त[8] पुरातन्यः[9] द्वारो देव्यः[10] ॥ ५ ॥

[11]इति द्वितीयाष्टके अष्टमाध्याये द्वाविंशो वर्गः[11] ॥

आ भन्दमाने उषसा उपाके उत स्मयेते तन्वा विरूपे ।
यथा नो मित्रो वरुणो जुजोषदिन्द्रो मरुत्वाँ उत वा महोभिः ॥ ६ ॥

आ । भन्दमाने इति । उषसौ । उपाके इति । उत । स्मयेते इति । तन्वा । विरूपे इति विऽरूपे ।
यथा । नः । मित्रः । वरुणः । जुजोषत् । इन्द्रः । मरुत्वान् । उत । वा । महःऽभिः ॥ ६ ॥

**वेङ्कट०** स्तूयमाने अहोरात्रे परस्परान्तिके[12], अपि च आ[1] स्मयेते[13] सूर्येण नक्षत्रैश्च शरीरेण विरूपे । यथा अस्मान् मित्रावरुणौ जुषेताम्[14], इन्द्रः च मरुत्वान् महद्भिर्देवैस्तथाऽहोरात्रौ कुरुताम् ॥ ६ ॥

---

१. नास्ति मूको. २. नास्ति लपं. ३. नास्ति वि[1]. ४. नास्ति अ[1]. ५-५. °र्व्याप्तबर्हिः वि[2] अ[1]. ६-६. प्रति यच्छन्ति वि[2] अ[1] ल लपं; प्रयच्छन्ति वि[1]. ७ इति मूको. ८. °न्तः वि[1,2] ल लपं. ९. °तनाः मूको. १०. देव्याः वि[1] ल लपं. ११-११. नास्ति मूको. १२. °रान्विते ल प्रस्तावः. १३. स्तूयते वि[1]; स्तूयेते अ[1] ल. १४. जुषेथाम् वि[2] अ[1] ल लपं.

दैव्या होतारा प्रथमा न्यृञ्जे सप्त पृक्षासः स्वधया मदन्ति ।
ऋतं शंसन्त ऋतमित् त आहुरनु व्रतं व्रतपा दीध्यानाः ॥ ७ ॥

दैव्या । होतारा । प्रथमा । नि । ऋञ्जे । सप्त । पृक्षासः । स्वधया । मदन्ति ।
ऋतम् । शंसन्तः । ऋतम् । इत् । ते । आहुः । अनु । व्रतम् । व्रतऽपाः । दीध्यानाः ॥ ७ ॥

**वेङ्कट०** दैव्यौ होतारौ प्रथमौ हविर्भिः साधयामि । सप्त होतारः तौ च स्वधया मदन्ति । सत्यमनयोः स्तोत्रम् शंसन्तः सत्यम् एव[1] ते वदन्ति व्रतस्य रक्षितारः यज्ञे दीप्यमानाः ॥ ७ ॥

आ भारती भारतीभिः सजोषा इळा देवैर्मनुष्येभिरग्निः ।
सरस्वती सारस्वतेभिरर्वाक् तिस्रो देवीर्बर्हिरेदं सदन्तु ॥ ८ ॥

आ । भारती । भारतीभिः । सऽजोषाः । इळा । देवैः । मनुष्येभिः । अग्निः ।
सरस्वती । सारस्वतेभिः । अर्वाक् । तिस्रः । देवीः । बर्हिः । आ । इदम् । सदन्तु ॥ ८ ॥

**वेङ्कट०** भारती स्वानुचरीभिः भारतीभिः सहिता इळा च देवैः सहिता तथा तत्सहचरः अग्निः च मनुष्यैः सरस्वती च स्वानुचरैर्देवगणैः इत्थम् तिस्रः देव्यः इदम् बर्हिः आ सीदन्तु ॥ ८ ॥

तन्नस्तुरीपमध पोषयित्नु देव त्वष्टर्वि रराणः स्यस्व ।
यतो वीरः कर्मण्यः सुदक्षो युक्तग्रावा जायते देवकामः ॥ ९ ॥

तत् । नः । तुरीपम् । अध । पोषयित्नु । देव । त्वष्टः । वि । रराणः । स्यस्वेति स्यस्व ।
यतः । वीरः । कर्मण्यः । सुऽदक्षः । युक्तऽग्रावा । जायते । देवऽकामः ॥ ९ ॥

**वेङ्कट०** तत् रेतः अस्माकम् तारकम् अथ च पोषकम् देव! त्वष्टः! विस्यस्व रममाणः । यतः रेतसः वीरः कर्मसु साधुः सुबलः यज्ञे प्रयुक्तग्रावा जायते देवान् कामयमानः ॥ ९ ॥

वनस्पतेऽव सृजोप देवानग्निर्हविः शमिता सूदयाति ।
सेदु होता सत्यतरो यजाति यथा देवानां जनिमानि वेद ॥ १० ॥

वनस्पते । अव । सृज । उप । देवान् । अग्निः । हविः । शमिता । सूदयाति ।
सः । इत् । ऊँ इति । होता । सत्यऽतरः । यजाति । यथा । देवानाम् । जनिमानि । वेद ॥१०॥

**वेङ्कट०** वनस्पते! हविः[2] देवान् प्रति उप अव सृज । अग्निः हविः संस्कर्ता संस्करोति । सः एव होता सत्यतरः देवान् यजति, यथायथा देवानाम् जन्मानि वेद इति ॥ १० ॥

---

१. °व च वि लपं. २. हविर्भिः वि[1] ल लपं.

आ या॑ह्यग्ने समि॒धा॒नो अ॒र्वाङिन्द्रे॑ण दे॒वैः स॒रथं॑ तु॒रेभिः॑ ।
ब॒र्हिर्न॑ आस्ता॒मदि॑तिः सुपु॒त्रा स्वाहा॑ दे॒वा अ॒मृता॑ मादयन्ताम् ॥ ११ ॥

आ । या॒हि॒ । अ॒ग्ने॒ । स॒म्ऽइ॒धा॒नः । अ॒र्वाङ् । इन्द्रे॑ण । दे॒वैः । स॒ऽरथ॑म् । तु॒रेभिः॑ ।
ब॒र्हिः । नः॒ । आ॒स्ता॒म् । अदि॑तिः । सु॒ऽपु॒त्रा । स्वाहा॑ । दे॒वाः । अ॒मृताः॑ । मा॒द॒य॒न्ता॒म् ॥११॥

**वेङ्कट०** आ याहि अग्ने! दीप्यमानः अभिमुखः इन्द्रेण देवैः च समानरथम् त्वरमाणैः । अस्माकम् इदम् बर्हिः शोभनपुत्रा अदितिः च आस्ताम् । स्वाहाकारेण देवाः च अमृताः मादयन्ताम्[1] ॥ ११ ॥

[2]इति द्वितीयाष्टकेऽष्टमाध्याये त्रयोविंशो वर्गः[2] ॥

[ ५ ]

[2]विश्वामित्रो गाथिन ऋषिः । अग्निर्देवता । त्रिष्टुप् छन्दः[2] ।

प्रत्य॒ग्निरु॒षस॒श्चेकि॑ता॒नोऽबो॑धि॒ विप्रः॑ पद॒वीः क॑वी॒नाम् ।
पृ॒थुपा॑जा देव॒यद्भिः॒ समि॑द्धो॒ऽप॒ द्वारा॒ तम॑सो॒ वह्नि॑रावः ॥ १ ॥

प्रति॑ । अ॒ग्निः । उ॒षसः॑ । चेकि॑तानः । अबो॑धि । विप्रः॑ । प॒द॒ऽवीः । क॒वी॒नाम् ।
पृ॒थु॒ऽपाजाः॑ । दे॒व॒यत्ऽभिः॑ । सम्ऽइ॑द्धः । अप॑ । द्वारा॑ । तम॑सः । वह्निः॑ । आ॒व॒रित्या॑वः ॥ १ ॥

**वेङ्कट०** उषःसु[3] ज्ञायमानः अग्निः प्रबुद्ध आसीत् मेधावी कवीनाम् [4]पदानि धाता[4] पृथुबलः देवानिच्छद्भिः समिद्धः । सः तमसः द्वाराणि यैस्तमांसि प्रविशन्ति, तानि अपावृतवान् वह्निः ॥ १ ॥

प्रेद्व॒ग्निर्वा॑वृधे॒ स्तोमे॑भिर्गी॒र्भिः स्तो॑तॄ॒णां न॑म॒स्य॑ उ॒क्थैः ।
पू॒र्वीर्ऋ॒तस्य॑ सं॒दृश॑श्चका॒नः सं दू॒तो अ॑द्यौदु॒षसो॑ विरो॒के ॥ २ ॥

प्र । इत् । ऊँ इति॑ । अ॒ग्निः । व॒वृ॒धे॒ । स्तोमे॑भिः । गीः॒ऽभिः । स्तो॒तॄ॒णाम् । न॒म॒स्यः॑ । उ॒क्थैः ।
पू॒र्वीः । ऋ॒तस्य॑ । स॒म्ऽदृशः॑ । च॒का॒नः । सम् । दू॒तः । अ॒द्यौ॒त् । उ॒षसः॑ । वि॒ऽरो॒के ॥ २ ॥

**वेङ्कट०** प्र एव अग्निः ववृधे स्तोमैः ऋग्भिः उक्थैः च स्तोतॄणाम् नमस्कार्यः । दीप्यमानः अहर्मुखस्थाः सत्यस्य सन्दृष्टीः उषसः दूतः[5] स[6] विद्योतयति[7] उषसाम् प्रादुर्भावे ॥ २ ॥

अधा॑य्य॒ग्निर्मानु॑षीषु वि॒क्ष्व१॒॑पां गर्भो॑ मि॒त्र ऋ॒तेन॒ साध॑न् ।
आ ह॑र्य॒तो य॑ज॒तः सान्व॑स्था॒दभू॑दु॒ विप्रो॒ हव्यो॑ मती॒नाम् ॥ ३ ॥

---

१. मादयन्तः वि[1] लपं. २-२. नास्ति मूको. ३. उषसस्तु वि[1] लपं. ४-४. पदानि धाताः वि[1] लपं; पदनिधाता अ[1]. ५. नास्ति वि[1,2] अ[1]. ६. सत् वि[2] अ[1]. ७. द्योतयति वि[1] लपं.

अधायि । अग्निः । मानुषीषु । विक्षु । अपाम् । गर्भः । मित्रः । ऋतेन । साधन् ।
आ । हर्यतः । यजतः । सानु । अस्थात् । अभूत् । ऊँ इति । विप्रः । हव्यः । मतीनाम् ॥३॥

**वेङ्कट०** निहितः अग्निः मानुषीषु[1] प्रजासु अपाम् पुत्रः मित्रभूतः सत्येन अभिलषितं साधयन् । आ तिष्ठति स्पृहणीयः यष्टव्यः समुच्छ्रितामुत्तरवेदिम् । अभवत् च मेधावी स्तुतीनाम् आह्वातव्यः ॥ ३ ॥

**मित्रो अग्निर्भवति यत् समिद्धो मित्रो होता वरुणो जातवेदाः ।**
**मित्रो अध्वर्युरिषिरो दमूना मित्रः सिन्धूनामुत पर्वतानाम् ॥ ४ ॥**

मित्रः । अग्निः । भवति । यत् । सम्ऽइद्धः । मित्रः । होता । वरुणः । जातऽवेदाः ।
मित्रः । अध्वर्युः । इषिरः । दमूनाः । मित्रः । सिन्धूनाम् । उत । पर्वतानाम् ॥ ४ ॥

**वेङ्कट०** सखा भवति अग्निः, यदा समिद्धः भवति । [2]तथा† मित्रः भवति[2] होता वारकः जातप्रज्ञः । तथा मित्रः भवति अध्वरमिच्छन् एषणशीलः दममनाः । सोऽयम् वर्षणान्नदीनाम् शिलोच्चयानाम् अपि मित्रः एव भवति ॥ ४ ॥

**पाति प्रियं रिपो अग्रं पदं वेः पाति यह्वश्चरणं सूर्यस्य ।**
**पाति नाभा सप्तशीर्षाणमग्निः पाति देवानामुपमादमृष्वः ॥ ५ ॥**

पाति । प्रियम् । रिपः । अग्रम् । पदम् । वेः । पाति । यह्वः । चरणम् । सूर्यस्य ।
पाति । नाभा । सप्तऽशीर्षाणम । अग्निः । पाति । देवानाम् । उपऽमादम् । ऋष्वः ॥ ५ ॥

**वेङ्कट०** रक्षति शब्दयतः पक्षिणः अभिमुखम् प्रियम् पदम् अन्तरिक्षम् । रक्षति च महान्[3] सूर्यस्य स्थानम् दिवम् । रक्षति च उत्तरवेद्यां वर्तमानः सप्तधिष्ण्यशिरस्कं यज्ञम् अग्निः[3] । रक्षति च देवानाम् उपमादयितारं यज्ञम् दर्शनीयः ॥ ५ ॥

[4]इति द्वितीयाष्टके अष्टमाध्याये चतुर्विंशो वर्गः[4] ॥

**ऋभुश्चक्र ईड्यं चारु नाम विश्वानि देवो वयुनानि विद्वान् ।**
**ससस्य चर्म घृतवत् पदं वेस्तदिदग्नी रक्षत्यप्रयुच्छन् ॥ ६ ॥**

ऋभुः । चक्रे । ईड्यम् । चारु । नाम । विश्वानि । देवः । वयुनानि । विद्वान् ।
ससस्य । चर्म । घृतऽवत् । पदम् । वेः । तत् । इत् । अग्निः । रक्षति । अप्रऽयुच्छन् ॥ ६ ॥

---

१. मारुतीषु वि[1] लपं. २-२. नास्ति वि[1]. † तदा मूको. ३. नास्ति मूको.
४-४. नास्ति मूको.

वेङ्कट० दीप्तः[1] करोति स्तोतव्यं कल्याणम् उदकम् विश्वानि देवः[2] प्रज्ञानानि विद्वान् स्वपतः स्थावरस्य वेः गच्छतो जङ्गमस्य चरणसाधनम् उदकवत् अन्तरिक्षाख्यं स्थानम्। तत् एव रक्षति अप्रमाद्यन् अग्निः ॥ ६ ॥

आ योनि॑म॒ग्निर्घृ॒तव॑न्तमस्थात् पृ॒थुप्र॑गाणमु॒शन्त॑मुशा॒नः ।
दीद्या॑नः॒ शुचि॑र्ऋ॒ष्वः पा॑व॒कः पुनः॑पुनर्मा॒तरा॒ नव्य॑सी कः ॥ ७ ॥

आ । योनि॑म् । अ॒ग्निः । घृ॒तऽव॑न्तम । अ॒स्था॒त् । पृ॒थुऽप्र॑गानम् । उ॒शन्त॑म् । उ॒शा॒नः ।
दीद्या॑नः । शुचिः॑ । ऋ॒ष्वः । पा॒व॒कः । पुनः॑ऽपुनः । मा॒तरा॑ । नव्य॑सी इति॑ । क॒रिति॑ कः ॥ ७ ॥

वेङ्कट० आ तिष्ठति स्थानम् अग्निः उदकवन्तम् पृथुप्रगमनं विस्तीर्णावकाशम् कामयमानम् कामयमानः दीप्यमानः शोचमानः दर्शनीयः शोधकः। पुनःपुनः द्यावापृथिवी नवतरे करोति वृष्ट्योषधिभिश्च[3] ॥ ७ ॥

स॒द्यो जा॒त ओष॑धीभिर्ववक्षे॒ यदी॒ वर्ध॑न्ति प्र॒स्वो॑ घृ॒तेन॑ ।
आप॑ इव प्र॒वता॒ शुम्भ॑माना उरु॒ष्यद॒ग्निः पि॒त्रोरु॒पस्थे॑ ॥ ८ ॥

स॒द्यः । जा॒तः । ओष॑धीभिः । व॒व॒क्षे॒ । यदि॑ । वर्ध॑न्ति । प्र॒ऽस्वः॑ । घृ॒तेन॑ ।
आपः॑ऽइव । प्र॒ऽवता॑ । शुम्भ॑मानाः । उ॒रु॒ष्यत् । अ॒ग्निः । पि॒त्रोः । उ॒पऽस्थे॑ ॥ ८ ॥

वेङ्कट० सद्यः एव जातः अग्निः ओषधीभिः उह्यते, यदि वृद्धा भवन्ति ओषधयः उदकेन आपः इव प्रवणवता मार्गेण शोभमानाः। निम्ने ओषधयो वर्धन्ते। रक्षति अग्निः द्यावापृथिव्योः उत्सङ्गे ॥ ८ ॥

उदु॑ ष्टु॒तः स॒मिधा॑ य॒ह्वो अ॑द्यौ॒द् वर्ष्म॑न् दि॒वो अधि॑ नाभा॑ पृथि॒व्याः ।
मि॒त्रो अ॒ग्निरीड्यो॑ मात॒रिश्वा दू॒तो व॑क्षद् य॒जथा॑य दे॒वान् ॥ ९ ॥

उत् । ऊँ इति॑ । स्तु॒तः । स॒म्ऽइधा॑ । य॒ह्वः । अ॒द्यौ॒त् । वर्ष्म॑न् । दि॒वः । अधि॑ । नाभा॑ । पृ॒थि॒व्याः ।
मि॒त्रः । अ॒ग्निः । ईड्यः॑ । मा॒त॒रिश्वा॑ । आ । दू॒तः । व॒क्ष॒त् । य॒जथा॑य । दे॒वान् ॥ ९ ॥

वेङ्कट० [4]उत् द्योतते[4] स्तुतः समिधा महान् दिवः वर्ष्मन् अन्तरिक्षे पृथिव्याः च नाभावुत्तरवेद्याम्। सखा अग्निः स्तोतव्यः अन्तरिक्षे वर्तमानः [5]दूतः आ[5] वहति यज्ञाय देवान् ॥ ९ ॥

---

१. दीप्तम् वि[2] अ[1] ल लपं. २. देव वि[2] ल लपं. ३. वृष्ट्यौषधी' वि[1,2] अ[1] लपं, ˚ष्ट्यौषधि˚ ल. ४-४. उद्यो˚ मूको. ५-५. नास्ति मूको.

उदस्तम्भीत् समिधा नाकमृष्वोऽग्निर्भवन्नुत्तमो रोचनानाम् ।
यदी भृगुभ्यः परि मातरिश्वा गुहा सन्तं हव्यवाहं समीधे ॥ १० ॥

उत् । अस्तम्भीत् । सम्ऽइधा । नाकम् । ऋष्वः । अग्निः । भवन् । उत्ऽतमः । रोचनानाम् ।
यदि । भृगुऽभ्यः । परि । मातरिश्वा । गुहा । सन्तम् । हव्यऽवाहम् । सम्ऽईधे ॥ १० ॥

**वेङ्कट०** उत् अस्तभ्नात् समिन्धनेन द्युलोकम् दर्शनीयः अग्निः दीप्यमानानाम् उत्तमः भवन्, यदि भृगुभ्यः अभ्युदयार्थं वायुः गुहायाम् सन्तम् हव्यवाहम् आहृत्य परि समीधे । 'रातिं भरद् भृगवे मातरिश्वा' ( ऋ १,६०,१ ) इति मन्त्रः ॥ १० ॥

इळामग्ने पुरुदंसं सनिं गोः शश्वत्तमं हवमानाय साध ।
स्यान्नः सूनुस्तनयो विजावाऽग्ने सा ते सुमतिर्भूत्वस्मे ॥ ११ ॥

इळाम् । अग्ने । पुरुऽदंसम् । सनिम् । गोः । शश्वत्ऽतमम । हवमानाय । साध ।
स्यात् । नः । सूनुः । तनयः । विजाऽवा । अग्ने । सा । ते । सुऽमतिः । भूतु । अस्मे इति ॥ ११ ॥

**वेङ्कट०** पूर्वम् ( ऋ ३,१,२३ ) व्याख्याता ।

[1]इति द्वितीयाष्टके अष्टमाध्याये पञ्चविंशो वर्गः[1] ॥

[ ६ ]

[1]विश्वामित्रो गाथिन ऋषिः । अग्निर्देवता । त्रिष्टुप् छन्दः[1] ॥

प्र कारवो मनना वच्यमाना देवद्रीचीं नयत देवयन्तः ।
दक्षिणावाड् वाजिनी प्राच्येति हविर्भरन्त्यग्नये घृताची ॥ १ ॥

प्र । कारवः । मनना । वच्यमानाः । देवद्रीचीम् । नयत । देवऽयन्तः ।
दक्षिणाऽवाट् । वाजिनी । प्राची । एति । हविः । भरन्ती । अग्नये । घृताची ॥ १ ॥

**वेङ्कट०** प्र नयत हे स्तोतारः! प्रज्ञानेन उच्यमानाः देवानञ्चन्तीं[2] स्रुचम् देवान् कामयमानाः[3] यूयम् अपरेण आहवनीयं दक्षिणोह्यमाना स्रुक् अध्वर्युभिर्ह्रियमाणा प्राची गच्छति हविः भरन्ती अग्नये घृतमञ्चन्ती[4], यूयमपि तथा नयतेति ॥ १ ॥

---

१-१. नास्ति मूको. २. °ञ्चतीम् वि[2] अ[1] लपं. ३-३. कामयमानाः देवान् लपं. ४. °मञ्चती मूको.

आ रोदसी अपृणा जायमान उत प्र रिक्था अध नु प्रयज्यो ।
दिवश्चिदग्ने महिना पृथिव्या वच्यन्तां ते वह्नयः सप्तजिह्वाः ॥ २ ॥

आ । रोदसी इति । अपृणाः । जायमानः । उत । प्र । रिक्थाः । अध । नु । प्रयज्यो इति प्रऽयज्यो ।
दिवः । चित् । अग्ने । महिना । पृथिव्याः । वच्यन्ताम् । ते । वह्नयः । सप्तऽजिह्वाः ॥ २ ॥

**वेङ्कट०** प्रादुर्भवन्[1] द्यावापृथिव्यौ आ पूरितवानसि, अपि च प्र रिक्तवानसि अनन्तरम् एव प्रकर्षेण यष्टव्य! । द्यावापृथिव्योरुभयोः अपि स्तूयन्ताम् महत्त्वेन अग्ने![2] ते स्वभूताः वोढारोऽग्नयः सप्तभिर्जिह्वाभिः कालीकरालीत्यादिभिर्युक्ताः ॥ २ ॥

द्यौश्च त्वा पृथिवी यज्ञियासो नि होतारं सादयन्ते दमाय ।
यदी विशो मानुषीर्देवयन्तीः प्रयस्वतीरीळते शुक्रमर्चिः ॥ ३ ॥

द्यौः । च । त्वा । पृथिवी । यज्ञियासः । नि । होतारम् । सादयन्ते । दमाय ।
यदि । विशः । मानुषीः । देवऽयन्तीः । प्रयस्वतीः । ईळते । शुक्रम् । अर्चिः ॥ ३ ॥

**वेङ्कट०** द्यावापृथिव्यौ देवाः च होतारम् त्वा नि सादयन्ते यज्ञाय । यदि मानुष्यः प्रजाः[3] देवानिच्छन्त्यः हविष्मत्यः स्तुवन्ति तव दीप्यमानम् तेजः,[4] तदानीं निषादयन्ति ॥ ३ ॥

महान्त्सधस्थे ध्रुव आ निषत्तोऽन्तर्द्यावा माहिने हर्यमाणः ।
आस्क्रे सपत्नी अजरे अमृक्ते सबर्दुघे उरुगायस्य धेनू ॥ ४ ॥

महान् । सधऽस्थे । ध्रुवः । आ । निऽसत्तः । अन्तः । द्यावा । माहिने इति । हर्यमाणः ।
आस्क्रे इति । सपत्नी इति सऽपत्नी । अजरे इति । अमृक्ते इति । सबर्दुघे इति सबःऽदुघे ।
उरुऽगायस्य । धेनू इति ॥ ४ ॥

**वेङ्कट०** महान् अस्मिन् लोके निश्चलः आ निषण्णः अन्तः द्यावापृथिवी महत्यौ गच्छन् भवति । आस्कन्दनशीले[5] समानपतिके जरावर्जिते शत्रुभिरपरिमृष्टे द्यावापृथिव्यौ विस्तीर्णगमनस्याग्नेः अमृतस्य दोग्ध्र्यौ भवतः ॥ ४ ॥

---

१. °वन् प्रादुर्भवन् लपं. २. नास्ति मूको ३. प्रजाम् वि[1,2] अ[2] ल; प्रभा लपं. ४. तेजसः ल लपं. ५. द्यावापृथिव्यावास्कन्दन[2] मूको.

व्रता ते अग्ने महतो महानि तव क्रत्वा रोदसी आ ततन्थ ।
त्वं दूतो अभवो जायमानस्त्वं नेता वृषभ चर्षणीनाम् ॥ ५ ॥

व्रता । ते । अग्ने । महतः । महानि । तव । क्रत्वा । रोदसी इति । आ । ततन्थ ।
त्वम् । दूतः । अभवः । जायमानः । त्वम् । नेता । वृषभ । चर्षणीनाम् ॥ ५ ॥

**वेङ्कट०** व्रतानि ते [1]अग्ने! महतः[1] महान्ति । तव प्रज्ञानेन त्वम् द्यावापृथिव्यौ आ ततन्थ । त्वम् दूतः भवसि जायमानः प्रणेता च वृषभ! मनुष्याणाम् ॥ ५ ॥

[2]इति द्वितीयाष्टकेऽष्टमाध्याये षड्विंशो वर्गः[2] ॥

ऋतस्य वा केशिना योग्याभिर्घृतस्नुवा रोहिता धुरि धिष्व ।
अथा वह देवान् देव विश्वान्त्स्वध्वरा कृणुहि जातवेदः ॥ ६ ॥

ऋतस्य । वा । केशिना । योग्याभिः । घृतऽस्नुवा । रोहिता । धुरि । धिष्व ।
अथ । आ । वह । देवान् । देव । विश्वान् । सुऽअध्वरा । कृणुहि । जातऽवेदः ॥ ६ ॥

**वेङ्कट०** समुच्चयार्थीयो[3] वा-शब्दः । यज्ञं प्रत्यागमनार्थम् प्रशस्तकेशौ रोहितवर्णौ घृतस्नाविणावश्वौ[4] योक्त्ररज्जुभिः[5] स्वरथस्य धुरि नियोजय च । अथ आ वह च देवान्[6] देव! सर्वान्, सुयज्ञांश्च कुरु जातवेदः! ॥ ६ ॥

दिवश्चिदा ते रुचयन्त रोका उषो विभातीरनु भासि पूर्वीः ।
अपो यदग्न उशधग्वनेषु होतुर्मन्द्रस्य पनयन्त देवाः ॥ ७ ॥

दिवः । चित् । आ । ते । रुचयन्त । रोकाः । उषः । विऽभातीः । अनु । भासि । पूर्वीः ।
अपः । यत् । अग्ने । उशधक् । वनेषु । होतुः । मन्द्रस्य । पनयन्त । देवाः ॥ ७ ॥

**वेङ्कट०** दीप्तस्य तव आभिमुख्येन दीप्यन्ते रश्मयः । उषसश्च व्युच्छन्तीः [7]अनु दीप्यसे[7] । अहर्मुखस्थाः यथोषसो विभान्ति तथा दीप्यसे । हे अग्ने![8] यदा त्वम् प्रियदाहः सन् अरण्येषु आप्नोषि । यदा वा होतुः मन्द्रस्य स्तोत्रं कुर्वन्ति देवाः ॥ ७ ॥

उरौ वा ये अन्तरिक्षे मदन्ति दिवो वा ये रोचने सन्ति देवाः ।
ऊमा वा ये सुहवासो यजत्रा आयेमिरे रथ्यो अग्ने अश्वाः ॥ ८ ॥

---

१-१. महतोऽग्ने अ[1]. २-२. नास्ति मूको. ३. समुच्चार्थी° वि[2] अ[1] ल लपं. ४. °वश्विनौ मूको. ५. योक्तृर° वि[1] अ[1] ल; °क्तृरज्जु लपं. ६. नास्ति वि[1] लपं. ७-७. नास्ति ल. ८. नास्ति मूको.

उरौ । वा । ये । अन्तरिक्षे । मदन्ति । दिवः । वा । ये । रोचने । सन्ति । देवाः ।
ऊमाः । वा । ये । सुऽहवासः । यजत्राः । आऽयेमिरे । रथ्यः । अग्ने । अश्वाः ॥ ८ ॥

वेङ्कट० विस्तीर्णे वा अन्तरिक्षे ये देवाः मदन्ति वायुप्रभृतयः, दिवः आदित्यस्य रोचने दिवि वा ये भवन्ति अश्विप्रभृतयः । रक्षकाः, ये स्वाह्वानाः पार्थिवा देवाः वा आनियच्छन्ति रथिनः अग्ने! बडवाः । [1]उत्तरत्र सम्बन्धः[1] ॥ ८ ॥

[2]इति द्वितीयाष्टके अष्टमाध्याये षड्विंशो वर्गः[2] ॥

ऐभिरग्ने सरथं याह्यर्वाङ् नानारथं वा विभवो ह्यश्वाः ।
पत्नीवतस्त्रिंशतं त्रींश्च देवाननुष्वधमा वह मादयस्व ॥ ९ ॥

आ । एभिः । अग्ने । सऽरथम् । याहि । अर्वाङ् । नानाऽरथम् । वा । विऽभवः । हि । अश्वाः ।
पत्नीऽवतः । त्रिंशतम् । त्रीन् । च । देवान् । अनुऽस्वधम् । आ । वह । मादयस्व ॥ ९ ॥

वेङ्कट० एभिः सर्वैर्देवैः समानरथम् आ याहि अभिमुखः अग्ने! नानारथम् वा । विभवः हि तव अश्वाः भवन्ति । तथा तान्[3] त्रयस्त्रिंशत् देवान्, पत्नीसंयुक्तान् इदं हविः आवह, मादयस्व च ॥ ९ ॥

स होता यस्य रोदसी चिदुर्वी यज्ञंयज्ञमभि वृधे गृणीतः ।
प्राची अध्वरेव तस्थतुः सुमेके ऋतावरी ऋतजातस्य सत्ये ॥ १० ॥

सः । होता । यस्य । रोदसी इति । चित् । उर्वी इति । यज्ञम्ऽयज्ञम् । अभि । वृधे । गृणीतः ।
प्राची इति । अध्वराऽइव । तस्थतुः । सुमेके इति सुऽमेके । ऋतऽवरी इत्यृतवरी ।
ऋतऽजातस्य । सत्ये इति ॥ १० ॥

वेङ्कट० सः त्वम् होता यस्य तव शक्तम् उर्वी द्यावापृथिव्यौ अपि अभि गृणीतः यज्ञेयज्ञे प्रोत्साहार्थम् । ते द्यावापृथिव्यौ त्वयि शंसत्यभिमुखौ अध्वर्यू इव[4] तिष्ठतः शोभनपरिमाणे यज्ञवत्यौ यज्ञजातस्य सत्यभूते ॥ १० ॥

इळामग्ने पुरुदंसं सनिं गोः शश्वत्तमं हवमानाय साध ।
स्यान्नः सूनुस्तनयो विजावाऽग्ने सा ते सुमतिर्भूत्वस्मे ॥ ११ ॥

---

१-१. नास्ति वि[1]; उत्त ··· न्धः लप. २-२. नास्ति मूको. ३. नास्ति वि[2] अ[1] लः.
४. नास्ति लप.

इळाम् । अग्ने । पुरुऽदंसम् । सनिम् । गोः । शश्वत्ऽतमम् । हवमानाय । साध ।
स्यात् । नः । सूनुः । तनयः । विजाऽवा । अग्ने । सा । ते । सुऽमतिः । भूतु । अस्मे इति ॥११॥

**वेङ्कट०** ऋ ३, १, २३ द्र.

[1]इति द्वितीयाष्टके अष्टमाध्याये सप्तविंशो वर्गः[1] ॥

ऋगर्थदीपिका सेयं[2] द्वितीयश्चायमष्टकः ।
चक्रे श्रीवेङ्कटार्यस्य तनयो माधवाह्वयः ॥ १ ॥

[3]शाकल्यदृष्टे† ऋग्वेदे द्वितीयस्याऽष्टकस्य यत् ।
भाष्यं तन्माधवीयाख्यं लिखितं देवशर्मणा‡[3] ॥ २ ॥

[4]इति वेङ्कटमाधवाचार्यविरचिते ऋक्संहिताव्याख्याने द्वितीयाष्टके अष्टमोऽध्यायः[4] ॥

— ❀ —

इति ऋग्वेदे सभाष्ये द्वितीयाष्टके अष्टमोऽध्यायः ॥

द्वितीयाष्टकः समाप्तः ॥



१-१. नास्ति मूको. २. चेयं वि[1] लपं. ३-३. नास्ति वि[1] अ[1]. † °ल्यवष्ट मूको.
‡ दैवशर्मणा वि[1]. ४-४. नास्ति वि[1] ल.

## अथ तृतीयाष्टके प्रथमोऽध्यायः

तृतीयोऽथाऽष्टकस्तस्मिन्नध्यायादिषु वक्ष्यते ।
यद्वक्तव्यं निपातेषु ब्राह्मणैश्छान्दसैरिह ॥ १ ॥

इयन्त इति सङ्ख्यानं निपातानां न शक्यते ।
उपसर्गास्तु[1] विज्ञेयाः क्रियायोगेषु विंशतिः ॥ २ ॥

निपाताः खलु कामं वै पृथङ् नाच्छा सचा पुनः ।
शश्वन्नक्तं दिवा माकिर्यथेदिति सदं[2] मुहुः ॥ ३ ॥

आदथाध मिथू[3] शीभं वृथा [4]सं ज्योगृधग् वृथक्[4] ।
[5]हिरुक् श्रौषडरं† बट् सु[5] किल हन्त नकिर्न्वहः[6] ॥ ४ ॥

अथो यदि नमस्तेऽमी चत्वारिंशदुदाहृताः ।
आद्युदात्ताश्च सर्वेऽमी सन्त्यन्येऽपि च तादृशाः ॥ ५ ॥

नामेदाइवो(?)[7] वषट् स्वाहा नाना जोषं स्मदन्ति कम्[8] ।
शनैस्सामि हि मा [9]बस्ति माकीमाकीं सनेमि† तात्‡[9] ॥ ६ ॥

भूयस्तूयं मृषा द्युः अन्नकीं वस्तोः षड्विंशतिः ।
अन्तोदात्ता निपातेषु ननु नूनं स्वयं पुरा ॥ ७ ॥

उतापिरेव(?) मक्षिवत्था पश्चादेवममा तिरः ।
प्रातरुच्चाङ्ग सुष्ठुवद्धा कुवित्सद्य इह[10] मिथः ॥ ८ ॥

साकमारात्सह[11] चिरमन्तराशु सनादृते ।
अन्तरा सनुतः स्वस्ति चनाऽऽरेऽद्याऽऽनुषक् पुनः ॥ ९ ॥

दोषा सायं चत्वारिंशत् सन्ति चाऽन्ये च तादृशाः ।
हिरुक्[12] सत्रा हुरुक्[12] पराचैः[13] शनकैर्मिथुया तृषु[14] ॥ १० ॥

---

१. तु. पा १,४,५९. २. सदा वि[1] लपं. ३. मिथु लपं. ४-४. सञ्जोगृधग्वषट् वेंऋअ; सं ज्योगृथक् पृथक् वि[1] ल; सं ज्योगृहवत् लपं; शज्योगृवक् पृथक् वि[2]; शज्योवृक् पृथक् अ. ५-५. त्रुटितम् वेंऋअ. † श्रोषदरं वि[1,2] अ[1] ल लपं. ६. नहिन्र्वहः वि[2] अ[1] ल; नहीन्र्विंहः वि[1] लपं. ७. नामेदाशु ल लपं. ८. स्वदन्ति वि[1] लपं. ९-९. नास्ति वेंऋअ. † सनाऽति ल. ‡ तत वि[1,2] अ[1] लपं. १०. उपे लपं; इव वि[2]. ११-११. °रादह वि[1] ल. १२. हिरुक् ल लपं; विरुक् अ[1]. १३. प्राचैः वि[1,2] अ[1] लपं. १४. तथा ल वेंऋअ.

सस्वरोषंसमा(?)[१] तेऽमी वृश सन्ति तथाऽपरे ।
स्वःक्वेति स्वरितौ विद्याद् द्रष्टव्याश्च तथाऽपरे ॥ ११ ॥

सीमुदुःस्वित्स्मवाहेवा[२] द्वादशैते चिर्दीघचैः ।
अमी च सर्वानुदात्ता द्रष्टव्याश्च तथाऽपरे ॥ १२ ॥

ऋचां निरीक्षणादेते निपाताः शतमुद्धृताः ।
त्रिंशच्च सूक्ष्मेक्षिकया समुद्धार्यास्तथाऽपरे ॥ १३ ॥

वाक्यार्थेष्वप्रवृत्तेषु[३] निपाताश्चेदनन्विताः ।
ऋक्पादपूरणास्ते स्युरिति यास्कस्य दर्शनम्[४] ॥ १४ ॥

न वै किल नु नामाथ खल्विदादध सीमु कम् ।
उतनूनमिवेङ्गस्मचिद्धचाः स्युरनर्थकाः ॥ १५ ॥

अन्येषां तु निपातानां पूरणत्वं न दृश्यते ।
नादयः पूरणाश्च स्युर्यदा वाक्येष्वनन्विताः[५] ॥ १६ ॥

अप्रवृत्तेऽपि[६] वाक्यार्थे ब्राह्मणेष्वपि नन्वमी ।
दृश्यन्ते यत्र नाऽपेक्षा विद्यते पादपूरणैः ॥ १७ ॥

माधवस्तत्र वदति स्फुटस्वोद्ग्रहणादिकम् ।
वाक्यार्थं[७] जनयन्त्येते मन्त्रब्राह्मणयोरिति ॥ १८ ॥

स्फुटस्वोद्ग्रहणादिश्च क्वचित् सूक्ष्मः क्वचित् स्फुटः ।
यत्र[८] स्फुटस्तदा[९] सार्थाः सूक्ष्मे स्युः पूरणा इति ॥ १९ ॥

'मधु ह स्म वा ऋषिभ्यः' त्रिभिः स्फुटतरोऽभवत्[१०] ।
तथैव 'उ॒त वा॑ घा स्या॒लात्'[११] बहवः सन्ति तादृशाः ॥ २० ॥

उकारो विनिग्रहार्थस्तथाऽनेकत्र दर्शनात् ।
'तमु॑ ष्टवा॒म॒ यं गिर॑ः'[१२], 'तमु॑ त्वा॒ गोत॑मो गि॒रा'[१३] ॥ २१ ॥

---

१. सस्वरीषादना ल. २. त्रुटितम् वि[२] अ[१]. ३. °र्थेष्वपवृत्तेषु वि[१] लपं. ४. तु. या १, ९. ५. °ष्वनिन्दिताः वि[१] लपं. ६. अपवृत्ते° वि[१,२] अ[१] लपं; अप्रवृत्ते तु वेंकअ ७. वाक्येर्थे वि[१] लपं. ८. यतः वि[१] लपं. ९. स्फुटास्तदा वि[२] अ[१]. १०. °तरो भवेत् वि[१] लपं वेंकअ. ११. तै १,१,१४,१. १२. ऋ ८,९५,६. १३. ऋ १,७८,२.

'अयमु ते समतसि'[1] न विनिग्रहसम्भवः ।
'उदु ष्य देवः सविता'[2] पूरणस्तादृशेषु सः ॥ २२ ॥

एवकारेण सदृश उकारोऽन्यत्र दृश्यते ।
मन्त्रेष्वेषु तु तस्याऽर्थः स्फुटत्वोद्ग्रहणादिकः ॥ २३ ॥

एतावता पूरणत्वं नानर्थक्यादिति स्थितिः ।
आदानन्तर्यवचनो यथा 'आदह स्वधामनु'[3] ॥ २४ ॥

'आत्सूर्यं जनयन् द्यामुषासम्'[4], 'आदित् ते हर्यता'[5] ।
'आदिद्धोतारं वृणत'[6] पूरणश्चाऽपि विद्यते ॥ २५ ॥

इदेवकारसदृशः 'स इद् भोजो यो गृहवे'[7] ।
'स इद् देवेषु गच्छति'[8] दृश्यते[9] वाऽपि पूरणः ॥ २६ ॥

ईमिदंशब्दसदृश 'एमाशुमाशवे भर'[10] ।
'स ईं पाहि य ऋजीषी'[11] विद्यते चाऽपि पूरणः ॥ २७ ॥

उच्चावचेषु निपततामर्थेष्वेषां[12] यथायथम् ।
हानोपादानविद्विप्रो न मन्त्रार्थेषु मुह्यति ॥ २८ ॥

## [ ७ ]

[13]विश्वामित्रो गाथिन ऋषिः । अग्निर्देवता । त्रिष्टुप् छन्दः[13] ।

प्र य आरुः शितिपृष्ठस्य धासेरा मातरा विविशुः सप्त वाणीः ।
परिक्षिता पितरा सं चरेते प्र सर्स्राते दीर्घमायुः प्रयक्षे ॥ १ ॥

प्र । ये । आरुः । शितिऽपृष्ठस्य । धासेः । आ । मातरा । विविशुः । सप्त । वाणीः ।
परिऽक्षिता । पितरा । सम् । चरेते इति । प्र । सर्स्राते इति । दीर्घम् । आयुः । प्रऽयक्षे ॥१॥

**वेङ्कट०** विश्वामित्रः । प्र गच्छन्ति ये नीलपृष्ठस्योदकस्य[14] पातुरग्नेः रश्मयः, ते [15]द्यां च पृथिवीं[15] च आ विशन्ति सप्त च गमनस्वभावा नदीः । 'एकं गर्भं दधिरे सप्त वाणीः' ( ऋ ३,१,६ ) इति मन्त्रः । तेनाऽनेनाऽग्निना[16] द्यावापृथिवी परितो वर्तमाने सम् चरेते । 'मही दस्मस्य मातरा समीची' ( ऋ ३,१,७ ) इति मन्त्रः । तथाऽग्नेः प्रकर्षेण यागाय दीर्घम् अन्नं च प्र सर्स्राते विसृजतः ॥ १ ॥

---

१. ऋ १,३०,४. २. ऋ २,३८,१. ३. ऋ १,६,४. ४ ऋ १,३२,४. ५. ऋ ८,१२, २५-२७. ६. ऋ १,१४१,६. ७. ऋ १०,११७,३. ८. ऋ १,१,४. ९. गृह्यते वेंऋज. १०. ऋ १,४,७. ११ ऋ ६,०७,२. १२. °र्थेष्वेषु वेंऋथ. १३-१३. नास्ति मूको. १४. °कस्य ऋजीषा वि[२]. १५-१५. द्यावापृथिवी वि[१] लपं. १६. °ग्निनाऽपि वि[१] लपं.

दिवक्षसो धेनवो वृष्णो अश्वा देवीरा तस्थौ मधुमद् वहन्तीः ।
ऋतस्य त्वा सदसि क्षेमयन्तं पर्येका चरति वर्तनिं गौः ॥ २ ॥

दिवक्षसः । धेनवः । वृष्णः । अश्वाः । देवीः । आ । तस्थौ । मधुऽमत् । वहन्तीः ।
ऋतस्य । त्वा । सदसि । क्षेमऽयन्तम् । परि । एका । चरति । वर्तनिम् । गौः ॥ २ ॥

वेङ्कट० दिवं व्याप्नुवानाः प्रीणयित्र्यः वर्षितुरग्नेः अश्वाः । सोऽयं[1] मधुमत् उदकम् वहन्तीः देवीः नदीः आ तिष्ठति । तं त्वाम् उदकस्य स्थाने क्षेमं कुर्वन्तम् एका गौः परि चरति इति माध्यमिकां वाचमाह, ज्वालाः प्रवर्तयन्तम् ॥ २ ॥

आ सीमरोहत् सुयमा भवन्तीः पतिश्चिकित्वान् रयिविद् रयीणाम् ।
प्र नीलपृष्ठो अतसस्य धासेस्ता अवासयत् पुरुधप्रतीकः ॥ ३ ॥

आ । सीम् । अरोहत् । सुऽयमाः । भवन्तीः । पतिः । चिकित्वान् । रयिऽवित् । रयीणाम् ।
प्र । नीलऽपृष्ठः । अतसस्य । धासेः । ताः । अवासयत् । पुरुधऽप्रतीकः ॥ ३ ॥

वेङ्कट० आ रोहति सर्वतः सुयमाः भवन्तीः अश्वाः[2] तासाम् पतिः प्राज्ञो धनानां लम्भयिता । प्रकर्षेण वासयति च आत्मनः सततगमनस्य[3] पातुः पानाय ताः[4] नदीः[5] नीलपृष्ठः बहुप्रकाराङ्गः ॥ ३ ॥

महि त्वाष्ट्रमूर्जयन्तीरजुर्यं स्तभूयमानं वहतो वहन्ति ।
व्यङ्गेभिर्दिद्युतानः सधस्थ एकामिव रोदसी आ विवेश ॥ ४ ॥

महि । त्वाष्ट्रम् । ऊर्जयन्तीः । अजुर्यम् । स्तभुऽयमानम् । वहतः । वहन्ति ।
वि । अङ्गेभिः । दिद्युतानः । सधऽस्थे । एकाम्ऽइव । रोदसी इति । आ । विवेश ॥ ४ ॥

वेङ्कट० अत्यन्तं त्वष्टुर्जायमानं जरयितुमशक्यम् बलयन्त्यः स्तम्भनं लोकानामिच्छन्तम् अग्निम्[2] नद्यः धारयन्ति । दीप्यमानः अपाम् सधस्थे अवस्थितः एकामिव स्त्रियमनायासेन[6] अङ्गैः [7]द्यां च पृथिवीं[7] चोभे अपि विविधम् आ विवेश इति ॥ ४ ॥

जानन्ति वृष्णो अरुषस्य शेवमुत ब्रध्नस्य शासने रणन्ति ।
दिवोरुचः सुरुचो रोचमाना इळा येषां गण्या माहिना गीः ॥ ५ ॥

---

१ सोमं मूको. २. नास्ति मूको. ३. सततगमस्य वि[1] लपं. ४. तां वि[2] अ[1]. ५. नदीं वि[1,2] अ[1]. ६. श्रिय[1] अ[1]. ७-७. द्यावापृथिवी वि[1] लपं.

जानन्ति । वृष्णः । अरुषस्य । शेवम् । उत । ब्रध्नस्य । शासने । रणन्ति ।
दिवःऽरुचः । सुऽरुचः । रोचमानाः । इळा । येषाम् । गण्या । माहिना । गीः ॥ ५ ॥

**वेङ्कट०** जानन्ति वर्षितुः आरोचमानस्य आश्रितविषयं सुखम् । अपि च जानन्तः महतोऽग्नेः शासने रमन्ते । 'अस्य शासुरुभयासः' ( ऋ १, ६०, २ ) इति मन्त्रः । द्युलोकस्य रोचकाः शोभनदीप्तयः रोचमानाः ते भवन्ति, येषाम् मनुष्याणाम् इज्या मही स्तुतिः अग्नेर्गणनीया । येऽग्निं स्तुवन्तीत्यर्थः ॥ ५ ॥

[1]इति तृतीयाष्टके प्रथमाध्याये प्रथमो वर्गः[1] ॥

उतो पितृभ्यां प्रविदाऽनु घोषं महो महद्भ्यामनयन्त शूषम् ।
उक्षा ह यत्र परि धानमक्तोरनु स्वं धाम जरितुर्ववक्ष ॥ ६ ॥

उतो इति । पितृऽभ्याम् । प्रऽविदा । अनु । घोषम् । महः । महत्ऽभ्याम् । अनयन्त । शूषम् ।
उक्षा । ह । यत्र । परि । धानम् । अक्तोः । अनु । स्वम् । धाम । जरितुः । ववक्ष ॥ ६ ॥

**वेङ्कट०** अपि च द्यावापृथिवीभ्याम् प्रवेदनेन घुष्यमाणम् सुखम् महतोऽपि महद्भ्याम् अनु अनयन्त यजमानाः । वृष्ट्युत्पादनेन येषु यजमानेषु उदकस्य सेक्ता रात्रेः धारकम् आत्मीयम् तेजः होतुः स्तुतिश्रवणाय हि अनु वहति, सन्निधानं करोतीत्यर्थः ॥ ६ ॥

अध्वर्युभिः पञ्चभिः सप्त विप्राः प्रियं रक्षन्ते निहितं पदं वेः ।
प्राञ्चो मदन्त्युक्षणो अजुर्या देवा देवानामनु हि व्रता गुः ॥ ७ ॥

अध्वर्युऽभिः । पञ्चऽभिः । सप्त । विप्राः । प्रियम् । रक्षन्ते । निऽहितम् । पदम् । वेरिति वेः ।
प्राञ्चः । मदन्ति । उक्षणः । अजुर्याः । देवाः । देवानाम् । अनु । हि । व्रता । गुरिति गुः ॥

**वेङ्कट०** उद्गातृव्यतिरिक्ता द्वादश भवन्त्यृत्विजः, तेषु सप्त वषट्काराः, पञ्चान्येऽध्वरं नयन्ति । पञ्चभिः सह[2] सप्त मेधाविनः गमनस्वभावस्य प्रियम् आहवनीयाख्यम् निहितम् पदम् रक्षन्ति । प्राङ्मुखाः सोमाः जरयितुमशक्यान्[3] देवान् मादयन्ति सेक्तारः । देवाः देवानाम् इति प्राणानाह । 'देवा देवेष्वधि देवत्वमायन्' ( मा १७, १४ ) इति मन्त्रः । ते हि सोमपानार्थं कर्माणि प्रधानानि अनु अगच्छन्निति ॥ ७ ॥

दैव्या होतारा प्रथमा न्यृञ्जे सप्त पृक्षासः स्वधया मदन्ति ।
ऋतं शंसन्त ऋतमित् त आहुरनु व्रतं व्रतपा दीध्यानाः ॥ ८ ॥

दैव्या । होतारा । प्रथमा । नि । ऋञ्जे । सप्त । पृक्षासः । स्वधया । मदन्ति ।
ऋतम् । शंसन्तः । ऋतम् । इत् । ते । आहुः । अनु । व्रतम् । व्रतऽपाः । दीध्यानाः ॥ ८ ॥

**वेङ्कट०** ( ऋ ३,४,७ द्र. ) ॥ ८ ॥

---

१-१. नास्ति मूको. २. नास्ति वि[2] अ[2]. ३. °मशक्यम् मूको.

वृ॒षाय॑न्ते म॒हे अत्या॑य पू॒र्वीर्वृष्णे॑ चि॒त्राय॑ र॒श्मय॑ः सुया॒माः ।
दे॑व होतर्म॒न्द्रत॑रश्चिकि॒त्वान् म॒हो दे॒वान् रोद॑सी एह व॑क्षि ॥ ९ ॥

वृ॒ष॒ऽयन्ते॑ । म॒हे । अत्या॑य । पू॒र्वीः । वृष्णे॑ । चि॒त्राय॑ । र॒श्मय॑ः । सु॒ऽया॒माः ।
दे॑व । हो॒त॒रिति॑ । म॒न्द्रऽत॑रः । चि॒कि॒त्वान् । म॒हः । दे॒वान् । रोद॑सी इति॑ । आ । इ॒ह । व॒क्षि ॥९॥

वेङ्कट० वृषेवाऽऽचरन्ति ज्वालाः महते अश्वाय बह्वय इति। एतदेवाह—वृष्णे चित्रवर्णायाऽग्नये रश्मयः [1]सुयामाः भवन्ति[1]। अथ[2] प्रत्यक्षः। इत्थं समिद्धस्त्वम्[3] देव! होतः! मादयितृतरः जानन् महतः देवान् रोदसी च इह [4]आ वह[4] ॥ ९ ॥

पृ॒क्षप्र॑यजो द्रविणः सु॒वाच॑ः सुके॒तव॑ उ॒षसो॑ रे॒वदू॑षुः ।
उ॒तो चि॑दग्ने महि॒ना पृ॑थि॒व्याः कृ॒तं चि॒देन॒ः सं म॒हे द॑शस्य ॥ १० ॥

पृ॒क्षऽप्र॑यजः । द्र॒वि॒णः । सु॒ऽवाच॑ः । सु॒ऽके॒तव॑ः । उ॒षस॑ः । रे॒वत् । ऊ॒षुः ।
उ॒तो इति॑ । चि॒त् । अ॒ग्ने॒ । म॒हि॒ना । पृ॒थि॒व्याः । कृ॒तम् । चि॒त् । एन॑ः । सम् । म॒हे । द॒श॒स्य ॥१०॥

वेङ्कट० द्रविणः द्रवतेः। हे अग्ने! गमनस्वभाव! हविर्लक्षणान्यन्नानि यासु[5] होतुं प्रक्रम्यन्ते[6], ताः शोभनवाचो वयसां मनुष्याणां च शब्दैः सुप्रज्ञानाः उषसः धनयुक्तमस्माकम् व्युच्छन्तु। अपि च अग्ने! विस्तीर्णाया ज्वालायाः महत्त्वेन कृतम् अपि पापं महते यजमानाय सम् क्षपय ॥१०॥

इळा॑मग्ने पुरु॒दंस॑ं स॒निं गोः श॑श्वत्त॒मं हव॑मानाय साध ।
स्यान्न॑ः सू॒नुस्तन॑यो वि॒जावाऽग्ने॒ सा ते॑ सुम॒तिर्भू॑त्व॒स्मे ॥ ११ ॥

इळा॑म् । अ॒ग्ने॒ । पु॒रु॒ऽदंस॑म् । स॒निम् । गोः । श॒श्व॒त्ऽत॒मम् । हव॑मानाय । सा॒ध॒ ।
स्यात् । नः॒ । सू॒नुः । तन॑यः । वि॒जाऽवा॑ । अग्ने॑ । सा । ते॒ । सु॒ऽम॒तिः । भू॒तु॒ । अ॒स्मे इति॑ ॥

वेङ्कट० पूर्वं ( ऋ ३,१,२३ ) व्याख्याता।

[7]इति तृतीयाष्टके प्रथमाध्याये द्वितीयो वर्गः[7] ॥

## [ ८ ]

[7]विश्वामित्रो गाथिन ऋषिः। यूपो देवता, षष्ठीसप्तम्यष्टमीनवमीदशमीनाम् यूपाः, अष्टम्या विश्वेदेवा वा, एकादश्या व्रश्चनः। त्रिष्टुप् छन्दः, तृतीयासप्तम्यौ अनुष्टुभौ[7]।

अ॒ञ्जन्ति॒ त्वाम॑ध्व॒रे दे॑व॒यन्तो॒ वन॑स्पते॒ मधु॑ना॒ दैव्ये॑न ।
यदू॒र्ध्वस्तिष्ठा॒ द्रवि॑णे॒ह ध॑त्ता॒द् यद् वा॒ क्षयो॑ मा॒तुर॒स्या उ॒पस्थे॑ ॥ १ ॥

---

१-१. नास्ति वि[1] अ[1]. २. ···थ वि[2]. ३. समिधस्त्वम् वि[1,2] अ[1] लपं. ४-४. आवहन् वि[2] अ[1]. ५. नास्ति वि[1]. ६. प्रक्रम्यते वि[1] लपं. ७-७. नास्ति मूको.

अञ्जन्ति । त्वाम् । अध्वरे । देवऽयन्तः । वनस्पते । मधुना । दैव्येन ।
यत् । ऊर्ध्वः । तिष्ठाः । द्रविणा । इह । धत्तात् । यत् । वा । क्षयः । मातुः । अस्याः । उपऽस्थे ॥

**वेङ्कट०** वनस्पते! यूपभूत![1] त्वाम् यज्ञे देवान् कामयमानाः 'एतद्वै [2]मधु दैव्यं[2] यदाज्यम्' (तु. ऐब्रा २,२) इति[3] तेन [4]दैव्येन मधुना[4] अञ्जन्ति। तथा सति यदि च ऊर्ध्वः तिष्ठसि[5] यदि च शेषे[6] द्रविणमेव अस्मासु धेहि[7] अस्याः मातुः पृथिव्याः उत्सङ्गे इति ॥ १ ॥

समिद्धस्य श्रयमाणः पुरस्ताद् ब्रह्म वन्वानो अजरं सुवीरम् ।
आरे अस्मदमतिं बाधमान उच्छ्रयस्व महते सौभगाय ॥ २ ॥

सम्ऽइद्धस्य । श्रयमाणः । पुरस्तात् । ब्रह्म । वन्वानः । अजरम् । सुऽवीरम् ।
आरे । अस्मत् । अमतिम् । बाधमानः । उत् । श्रयस्व । महते । सौभगाय ॥ २ ॥

**वेङ्कट०** आहवनीयस्य पुरस्तात् श्रयणं कुर्वन् अन्नं च जरावर्जितं शोभनपुत्रं प्रयच्छन् दूर एव अस्मत्तः [8]अमतिम् बाधमानः[8], 'अमतिं बाधमानः इत्यशनाया वै पाप्माऽमतिस्तामेव तदारान्नुदते' (ऐब्रा २,२) इत्युक्तम्, उत् श्रयस्व महते सुधनत्वाय ॥ २ ॥

उच्छ्रयस्व वनस्पते वर्ष्मन् पृथिव्या अधि ।
सुमिती मीयमानो वर्चो धा यज्ञवाहसे ॥ ३ ॥

उत् । श्रयस्व । वनस्पते । वर्ष्मन् । पृथिव्याः । अधि ।
सुऽमिती । मीयमानः । वर्चः । धाः । यज्ञऽवाहसे ॥ ३ ॥

**वेङ्कट०** उत् तिष्ठ वनस्पते! पृथिव्याः वर्ष्मन् अधि सारभूते देशे देवयजने। शोभनेन मानेन मीयमानः यजमानाय वर्चः धेहि ॥ ३ ॥

युवा सुवासाः परिवीत आगात् स उ श्रेयान् भवति जायमानः ।
तं धीरासः कवय उन्नयन्ति स्वाध्यो३ मनसा देवयन्तः ॥ ४ ॥

युवा । सुऽवासाः । परिऽवीतः । आ । अगात् । सः । ऊँ इति । श्रेयान् । भवति । जायमानः ।
तम् । धीरासः । कवयः । उत् । नयन्ति । सुऽआध्यः । मनसा । देवऽयन्तः ॥ ४ ॥

---

१. °भूतं वि[२] अ[१]. २-२. दैव्यं मधु मूको. ३. नास्ति मूको. ४-४. नास्ति मूको. ५. तिष्ठासि वि[१,२] ल; तिष्ठस्य अ[१]. ६. शयासै अ[१] ल; नास्ति वि[१]. ७. देहि वि[२] अ[१]; धेहीति ल. ८. निमीयमानः वि[२] अ[१].

वेङ्कट० युवा शोभनेन वाससा रशनया युक्तः[1] तया परिवीतः आगतः । सः एव अन्येभ्यो वनस्पतिभ्यः श्रेयान् भवति जायमानः जायमानेभ्यः । तम् च धीरासः कवयः उत् नयन्ति शोभनकर्माणः मनसा देवान् कामयमानाः ॥ ४ ॥

जातो जायते सुदिनत्वे अह्नां समर्य आ विदथे वर्धमानः ।
पुनन्ति धीरा अपसो मनीषा देवया विप्र उदियर्ति वाचम् ॥ ५ ॥

जातः । जायते । सुदिनऽत्वे । अह्नाम् । सऽमर्ये । आ । विदथे । वर्धमानः ।
पुनन्ति । धीराः । अपसः । मनीषा । देवऽयाः । विप्रः । उत् । इयर्ति । वाचम् ॥ ५ ॥

वेङ्कट० पृथिव्याम् जातः सम्प्रति अह्नाम् सुदिनत्वे जायते सुदिनान्यहानि करोति यज्ञनयनेन समनुष्ये यज्ञे वर्धमानः । आ-कारः सप्तम्यर्थं स्फुटीकरोति । तं प्रक्षालनादिभिः शोधयन्ति धीराः कर्मणः बुद्ध्या । देवानां यष्टा मेधावी च[2] होता स्तुतिलक्षणाम् वाचम् यूपं[3] प्रति प्रेरयति ॥ ५ ॥

[4]इति तृतीयाष्टके प्रथमाध्याये तृतीयो वर्गः[4] ॥

यान् वो नरो देवयन्तो निमिम्युर्वनस्पते स्वधितिर्वा ततक्ष ।
ते देवासः स्वरवस्तस्थिवांसः प्रजावदस्मे दिधिषन्तु रत्नम् ॥ ६ ॥

यान् । वः । नरः । देवऽयन्तः । निऽमिम्युः । वनस्पते । स्वऽधितिः । वा । ततक्ष ।
ते । देवासः । स्वरवः । तस्थिऽवांसः । प्रजाऽवत् । अस्मे इति । दिधिषन्तु । रत्नम् ॥ ६ ॥

वेङ्कट० नरः बहवो यूपाः! यान् युष्मान् देवान् कामयमानाः यागार्थमवटेषु[5] प्रक्षिप्तवन्तः । वनस्पते! वा इमान् युष्मदीयान् परशुः चिच्छेद । ते दीप्ताः स्वरुमन्तः तिष्ठन्तः प्रजायुक्तम् रत्नम् अस्मभ्यम् धारयन्तु ॥ ६ ॥

ये वृक्णासो अधि क्षमि निमितासो यतस्रुचः ।
ते नो व्यन्तु वार्यं देवत्रा क्षेत्रसाधसः ॥ ७ ॥

ये । वृक्णासः । अधि । क्षमि । निऽमितासः । यतऽस्रुचः ।
ते । नः । व्यन्तु । वार्यम् । देवऽत्रा । क्षेत्रऽसाधसः ॥ ७ ॥

वेङ्कट० ये परशुना छिन्नाः क्षमायाम् अवटेषु प्रक्षिप्ताः यज्ञाय यतस्रुचः[6] ते गमयन्तु देवेषु अस्मदीयम् हविः क्षेत्राणां साधयितारो यजमानानामिति ॥ ७ ॥

---

१. नास्ति वि[1] लपं. २. यः अ[1]. ३. युष्मान् ल; यूयं वि[1,2] अ[1] लपं. ४-४. नास्ति मूको. ५. यज्ञार्थम° वि[1] लपं. ६. यतस्रुचेः वि[1]; स्रुचेः लपं.

आदित्या रुद्रा वसवः सुनीथा द्यावाक्षामा पृथिवी अन्तरिक्षम् ।
सजोषसो यज्ञमवन्तु देवा ऊर्ध्वं कृण्वन्त्वध्वरस्य केतुम् ॥ ८ ॥

आदित्याः । रुद्राः । वसवः । सुऽनीथाः । द्यावाक्षामा । पृथिवी । अन्तरिक्षम् ।
सऽजोषसः । यज्ञम् । अवन्तु । देवाः । ऊर्ध्वम् । कृण्वन्तु । अध्वरस्य । केतुम ॥ ८ ॥

**वेङ्कट०** आदित्यादयः शोभननयनाः द्यावाभूमी च विस्तीर्णे अन्तरिक्षम् च सङ्गताः यज्ञम् इमम् रक्षन्तु, यज्ञस्य च चिह्नभूतं यूपसङ्घम्[1] उच्छ्रयन्तु[2] ॥ ८ ॥

हंसा इव श्रेणिशो यतानाः शुक्रा वसानाः स्वरवो न आगुः ।
उन्नीयमानाः कविभिः पुरस्ताद् देवा देवानामपि यन्ति पाथः ॥ ९ ॥

हंसाःऽइव । श्रेणिऽशः । यतानाः । शुक्रा । वसानाः । स्वरवः । नः । आ । अगुः ।
उत्ऽनीयमानाः । कविऽभिः । पुरस्तात् । देवाः । देवानाम् । अपि । यन्ति । पाथः ॥ ९ ॥

**वेङ्कट०** हंसाः इव[3] पङ्क्तिशः यतमानाः[4] शुक्राणि वासांसि आच्छादयन्तः यूपाः अस्मान् आगताः । यज्ञस्य पुरस्तात् उच्छ्रीयमाणाः देवाः देवानाम् प्राप्नुवन्ति स्थानम् ॥ ९ ॥

शृङ्गाणीवेच्छृङ्गिणां सं ददृश्रे चषालवन्तः स्वरवः पृथिव्याम् ।
वाघद्भिर्वा विहवे श्रोषमाणा अस्माँ अवन्तु पृतनाज्येषु ॥ १० ॥

शृङ्गाणिऽइव । इत् । शृङ्गिणाम् । सम् । ददृश्रे । चषालऽवन्तः । स्वरवः । पृथिव्याम् ।
वाघत्ऽभिः । वा । विऽहवे । श्रोषमाणाः । अस्मान् । अवन्तु । पृतनाज्येषु ॥ १० ॥

**वेङ्कट०** शृङ्गाणीव शृङ्गिणाम्[5] महिषादीनाम्[3] सम् दृश्यन्ते चषालवन्तः यूपाः अस्याः पृथिव्याः । ऋत्विग्भिः इव[6] अस्माभिः विहवे क्रियमाणे सति स्तुतिम्[7] श्रोषमाणाः अस्मान् रक्षन्तु सेनासङ्गमनेषु ॥ १० ॥

वनस्पते शतवल्शो वि रोह सहस्रवल्शा वि वयं रुहेम ।
यं त्वामयं स्वधितिस्तेजमानः प्रणिनाय महते सौभगाय ॥ ११ ॥

---

१. यूपसंगं च वि[१] लपं. २. °न्तु च वि[१,२] अ[१]. ३. नास्ति लपं. ४. पत° वि[१,२] अ[१] लपं.
५. नास्ति वि[२] अ[१] ल. ६. एव वि[१] लपं. ७. स्तुति मूको.

वनस्पते । शतऽवल्शः । वि । रोह । सहस्रऽवल्शाः । वि । वयम् । रुहेम ।
यम् । त्वाम् । अयम् । स्वऽधितिः । तेजमानः । प्रऽनिनाय । महते । सौभगाय ॥ ११ ॥

**वेङ्कट०** वनस्पते! त्वम् शतशाखः वि रोह, वयम् च सहस्रशाखाः वि रुहेम। यम् त्वाम् अयम् परशुः निशितधारः[1] प्रणिनाय यज्ञे महते सौभाग्यायेति ॥ ११ ॥

[2]इति तृतीयाष्टके प्रथमाध्याये चतुर्थो वर्गः[2] ॥

## [ ९ ]

[3]विश्वामित्रो गाथिन ऋषिः । अग्निर्देवता । बृहती छन्दः, नवमी त्रिष्टुप्[3] ।

सखायस्त्वा ववृमहे देवं मर्तास ऊतये ।
अपां नपातं सुभगं सुदीदितिं सुप्रतूर्तिमनेहसम् ॥ १ ॥

सखायः । त्वा । ववृमहे । देवम् । मर्तासः । ऊतये ।
अपाम् । नपातम् । सुऽभगम् । सुऽदीदितिम् । सुऽप्रतूर्तिम् । अनेहसम् ॥ १ ॥

**वेङ्कट०** अग्ने! सखायः त्वां वृणीमहे देवम् मनुष्याः रक्षणाय अपाम् पौत्रम् सुधनम्[3] शोभनदीप्तिम् शोभनप्रतरणम् अनुपद्रवम् ॥ १ ॥

कायमानो वना त्वं यन्मातॄरजगन्नपः ।
न तत् ते अग्ने प्रमृषे निवर्तनं यद् दूरे सन्निहाभवः ॥ २ ॥

कायमानः । वना । त्वम् । यत् । मातॄः । अजगन् । अपः ।
न । तत् । ते । अग्ने । प्रऽमृषे । निऽवर्तनम् । यत् । दूरे । सन् । इह । अभवः ॥ २ ॥

**वेङ्कट०** अरण्यानि रक्षितुम्[4] कामयमानः यदा त्वम् मातॄः अपः गच्छसि, न[5] तदानीं तव अग्ने! प्रमर्षणाय भवति आत्माभिमुखं गमनम्, यदा त्वम् दूरे[6] जायमानः क्षणेन समीपे भवसि ॥ २ ॥

अति तृष्टं ववक्षिथाथैव सुमना असि ।
प्रप्रान्ये यन्ति पर्यन्य आसते येषां सख्ये असि श्रितः ॥ ३ ॥

---

१. नास्ति वि[1] लपं. २-२. नास्ति मूको. ३ नास्ति वि[1]. ४. भक्षिता वि[2] अ[1]. ५. नास्ति लपं. ६. दूरः वि[1]; दूरेग अ[1].

अति । तृष्टम् । ववक्षिथ । अथ । एव । सुऽमनाः । असि ।
प्रऽप्र । अन्ये । यन्ति । परि । अन्ये । आसते । येषाम् । सख्ये । असि । श्रितः ॥ ३ ॥

वेङ्कट० स्तोतुस्तृष्णाम् अति वहसि । सुमनाः च भवसि तदनन्तरम् एव तस्मै । तं त्वां केचित् अग्ने! स्तुतिभिः प्र गच्छन्ति, परितः आसते अन्ये[1], येषाम् त्वम् सख्ये श्रितः भवसि । सख्यमुपगच्छसीत्यर्थः ॥ ३ ॥

ईयिवांसमति स्रिधः शश्वतीरति सश्चतः ।
अन्वीमविन्दन् निचिरासो अद्रुहोऽप्सु सिंहमिव श्रितम् ॥ ४ ॥

ईयिऽवांसम् । अति । स्रिधः । शश्वतीः । अति । सश्चतः ।
अनु । ईम् । अविन्दन् । निऽचिरासः । अद्रुहः । अप्ऽसु । सिंहम्ऽइव । श्रितम् ॥ ४ ॥

वेङ्कट० अति गच्छन्तम् उपक्षपयितॄन् शत्रून् एवं बह्वीश्च सेनाः सङ्गकारिणीः अतिगच्छन्तम् एनम् अग्निं तिरोहितम् अप्सु प्रविष्टम् सिंहमिव भीमम् अनु अविन्दन् नितरां चिरासो[1] विश्वे देवाः अद्रोग्धारः । 'पश्वा न तायुम्' ( ऋ १,६५,१ ) इति मन्त्रः[2] ॥ ४ ॥

ससृवांसमिव त्मनाऽग्निमित्था तिरोहितम् ।
ऐनं नयन्मातरिश्वा परावतो देवेभ्यो मथितं परि ॥ ५ ॥

ससृवांसम्ऽइव । त्मना । अग्निम् । इत्था । तिरःऽहितम् ।
आ । एनम् । नयत् । मातरिश्वा । पराऽवतः । देवेभ्यः । मथितम् । परि ॥ ५ ॥

वेङ्कट० यथा कश्चित् स्वयमेव सरति एवम् अग्निम् तिरोहितम् देवेभ्यः परि बलाद् आहृतम् एनम् भृगवः! मातरिश्वा आ नयत्[3] दूरात् इति ॥ ५ ॥

[4]इति तृतीयाष्टके प्रथमाध्याये पञ्चमो वर्गः[4] ॥

तं त्वा मर्ता अगृभ्णत देवेभ्यो हव्यवाहन ।
विश्वान् यद् यज्ञाँ अभिपासि मानुष तव क्रत्वा यविष्ठ्य ॥ ६ ॥

तम् । त्वा । मर्ताः । अगृभ्णत । देवेभ्यः । हव्यऽवाहन ।
विश्वान् । यत् । यज्ञान् । अभिऽपासि । मानुष । तव । क्रत्वा । यविष्ठ्य ॥ ६ ॥

वेङ्कट० अग्ने! तम् त्वां[5] मनुष्याः देवेभ्यः पर्यगृह्णत हविषां वोढः! । यस्मात् त्वं सर्वान् एव यज्ञान् अभिरक्षसि मनुष्यहित! तव [6]कर्मणा युवतम! इति[6] ॥ ६ ॥

---

१. °सोपि वि[1] लपं. २. नास्ति वि[1] लपं. ३. °यदिति वि[1] लपं. ४-४. नास्ति मूको. ५. त्वा वि[1 2] अ[1]. ६-६. नास्ति वि[2] अ[1].

तद्भद्रं तव दंसना पाकाय चिच्छदयति ।
त्वां यदग्ने पशवः समासते समिद्धमपिशर्वरे ॥ ७ ॥

तत् । भद्रम् । तव । दंसना । पाकाय । चित् । छदयति ।
त्वाम् । यत् । अग्ने । पशवः । समऽआसते । समऽइद्धम् । अपिऽशर्वरे ॥ ७ ॥

**वेङ्कट०** [1]तत् इदम् भद्रम् तव कर्म क्षुद्राय अपि मनुष्याय कामप्रदानेनोपच्छादनं करोति† । त्वाम् यस्मात् अग्ने![1] पशवः सङ्गच्छन्ते[2] अग्निहोत्रेषु समिद्धम् शर्वरीमुखे । प्रयच्छसि पशूनित्यर्थः ॥७॥

आ जुहोता स्वध्वरं शीरं पावकशोचिषम् ।
आशुं दूतमजिरं प्रत्नमीड्यं श्रुष्टी देवं सपर्यत ॥ ८ ॥

आ । जुहोत । सुऽअध्वरम् । शीरम् । पावकऽशोचिषम् ।
आशुम् । दूतम् । अजिरम् । प्रत्नम् । ईड्यम् । श्रुष्टी । देवम् । सपर्यत ॥ ८ ॥

**वेङ्कट०** आहुतिभिः 'तर्पयत सुयज्ञं' शासितारं शोधकदीप्तिम्[3] । शीघ्रगन्तारं देवानाम् दूतम् गमनशीलं पुराणं स्तोतव्यं क्षिप्रम् देवम् इमम् सपर्यत ॥ ८ ॥

त्रीणि शता त्री सहस्राण्यग्निं त्रिंशच्च देवा नव चासपर्यन् ।
औक्षन्घृतैरस्तृणन्बर्हिरस्मा आदिद्धोतारं न्यसादयन्त ॥ ९ ॥

त्रीणि । शता । त्री । सहस्राणि । अग्निम् । त्रिंशत् । च । देवाः । नव । च । असपर्यन्
औक्षन् । घृतैः । अस्तृणन् । बर्हिः । अस्मै । आत् । इत् । होतारम् । नि । असादयन्त ॥९॥

**वेङ्कट०** त्रीणि सहस्राणि [4]त्रीणि च[4] शतानि[5] त्रिंशत्[6] च नव च[7] देवाः अग्निम् अपूजयन् । घृतैः च[8] अग्निमनक्षन्त । बर्हिः च अस्मै अस्तृणन् । अनन्तरम् एव तस्मिन्[9] बर्हिषि होतारम् अग्निम् नि असादयन्त इति । अत्र ब्राह्मणम्—"महिमान एवैषामेते त्रयस्त्रिंशत्त्वेव देवा इति । कतमे[9] ते त्रयस्त्रिंशदिति, अष्टौ वसव एकादश रुद्रा द्वादशादित्यास्त एकत्रिंशदिन्द्रश्चैव प्रजापतिश्च त्रयस्त्रिंशा-विति । कतमे[10] वसव इति, अग्निश्च पृथिवी च वायुश्चान्तरिक्षं च" ( माश १४,६,९,३;४ ) इत्यादिकं वाजसनेयिभ्यः श्रोतव्यमिति ॥ ९ ॥

[11]इति तृतीयाष्टके प्रथमाध्याये षष्ठो वर्गः[11] ॥

---

१-१. त्रुटितम् वि[2] अ[1]. † नास्ति ल. २. °च्छन्तः अ[1]. ३. शोधदीप्तिम् वि[1] लपं. ४-४. नास्ति वि[2] अ[1]. ५. तानि लपं. ६. नास्ति वि[2] अ[1]. ७. नास्ति वि[1] ल लपं. ८. च तथा वि[1] लपं. ९. अस्मिन् वि[1] लपं १०. क मे त्र वि[1,2] लपं. ११-११. नास्ति मूको.

## [ १० ]

[१]विश्वामित्रो गाथिन ऋषिः। अग्निर्देवता। उष्णिक् छन्दः[१]।

त्वाम॑ग्ने मनी॒षिण॑ः स॒म्राजं॑ चर्षणी॒नाम्। दे॒वं मर्ता॑स इन्धते॒ सम॑ध्व॒रे ॥ १ ॥

त्वाम्। अ॒ग्ने॒। म॒नी॒षिण॑ः। स॒म्ऽराज॑म्। च॒र्ष॒णी॒नाम्। दे॒वम्। मर्ता॑सः। इ॒न्ध॒ते॒। सम्। अ॒ध्व॒रे ॥ १ ॥

**वेङ्कट०** त्वाम् अग्ने! मनस ईश्वराः प्रजानाम् अधिपतिम् देवम् मनुष्याः यज्ञे सम् इन्धते ॥ १ ॥

त्वां य॒ज्ञेष्वृ॒त्विज॒मग्ने॒ होता॑रमीळते। गो॒पा ऋ॒तस्य॑ दीदिहि॒ स्वे दमे॑ ॥ २ ॥

त्वाम्। य॒ज्ञेषु॑। ऋ॒त्विज॑म्। अग्ने॑। होता॑रम्। ई॒ळ॒ते॒। गो॒पाः। ऋ॒तस्य॑। दी॒दि॒हि॒। स्वे। दमे॑ ॥ २ ॥

**वेङ्कट०** निगदव्याख्याता ॥ २ ॥

स घा॒ यस्ते॒ ददा॑शति स॒मिधा॑ जा॒तवे॑दसे। सो अ॑ग्ने धत्ते सु॒वीर्यं॒ स पु॑ष्यति ॥ ३ ॥

सः। घ॒। यः। ते॒। ददा॑शति। स॒म्ऽइधा॑। जा॒तऽवे॑दसे। सः। अ॒ग्ने॒। ध॒त्ते॒। सु॒ऽवीर्य॑म्। सः। पु॒ष्य॒ति॒ ॥ ३ ॥

**वेङ्कट०** अग्ने! यः तुभ्यं समिदाधानं करोति जातप्रज्ञाय, सः खलु शोभनवीर्यं पुत्रं धारयति, पुष्यति च प्रजया पशुभिः ॥ ३ ॥

स के॒तुर॑ध्व॒राणा॑म॒ग्निर्दे॒वेभि॒रा ग॑मत्। अ॒ञ्जा॒नः स॒प्त होतृ॑भिर्ह॒विष्म॑ते ॥ ४ ॥

सः। के॒तुः। अ॒ध्व॒राणा॑म्। अ॒ग्निः। दे॒वेभि॑ः। आ। ग॒म॒त्। अ॒ञ्जा॒नः। स॒प्त। होतृ॑ऽभिः। ह॒विष्म॑ते ॥ ४ ॥

**वेङ्कट०** सः अग्निः यज्ञानां चिह्नभूतो देवः देवैः सह आ गच्छतु सप्तभिः वषट्कर्तृभिः सोमेन यजमानार्थम् अज्यमानः[२] ॥ ४ ॥

प्र होत्रे॑ पू॒र्व्यं वचो॒ऽग्नये॑ भरता बृ॒हत्। वि॒पां ज्योतीं॑षि॒ बिभ्र॑ते॒ न वे॒धसे॑ ॥ ५ ॥

प्र। होत्रे॑। पू॒र्व्यम्। वच॑ः। अ॒ग्नये॑। भ॒र॒त॒। बृ॒हत्। वि॒पाम्। ज्योतीं॑षि। बिभ्र॑ते। न। वे॒धसे॑ ॥ ५ ॥

**वेङ्कट०** पुराणं[३] स्तुतिलक्षणं महत् वचः [४]प्र भरत[४] अग्नये होत्रे मेधाविनां तेजांसि बिभ्रते विधात्रे। न इति पूरण[५] इति ॥ ५ ॥

[१]इति तृतीयाष्टके प्रथमाध्याये सप्तमो वर्गः[१] ॥

---

१-१. नास्ति मूको. २. अयज्यमानः ल; इज्यमानः ल प्रस्तावः. ३. पूर्वं वि[१] लपं. ४-४. प्रहरत वि[१] लपं. ५. पूरणेन वि[१] लपं.

अ॒ग्निं व॑र्धन्तु नो॒ गिरो॒ यतो॒ जाय॑त उ॒क्थ्यः॑ । म॒हे वाजा॑य॒ द्रवि॑णाय द॒र्श॒तः ॥६॥

अ॒ग्निम् । व॒र्धन्तु॒ । नः॒ । गिरः॑ । यतः॑ । जाय॑ते । उ॒क्थ्यः॑ । म॒हे । वाजा॑य । द्रवि॑णाय । द॒र्श॒तः ॥ ६ ॥

**वेङ्कट०** अग्निम् वर्धन्तु नः स्तुतयः । यस्मात् अयं भवति स्तोतव्यः अस्माकम्, महते अन्नाय[1] धनाय च दर्शनीयः ॥ ६ ॥

अग्ने॒ यजि॑ष्ठो अध्व॒रे दे॒वान् दे॑वय॒ते य॑ज । होता॑ म॒न्द्रो वि रा॑ज॒स्यति॒ स्रिधः॑ ॥७॥

अग्ने॑ । यजि॑ष्ठः । अ॒ध्व॒रे । दे॒वान् । दे॒व॒ऽय॒ते । य॒ज॒ । होता॑ । म॒न्द्रः । वि । रा॒ज॒सि॒ । अति॑ । स्रिधः॑ ॥७॥

**वेङ्कट०** बाधकान् अति वि राजसि । अवशिष्टं स्पष्टमिति ॥ ७ ॥

स नः॑ पावक दीदिहि द्यु॒मद॒स्मे सु॒वीर्य॑म् । भवा॑ स्तो॒तृभ्यो॒ अन्त॑मः स्व॒स्तये॑ ॥८॥

सः । नः॒ । पा॒व॒क॒ । दी॒दि॒हि॒ । द्यु॒ऽमत् । अ॒स्मे इति॑ । सु॒ऽवीर्य॑म् । भव॑ । स्तो॒तृऽभ्यः॑ । अन्त॑मः । स्व॒स्तये॑ ॥

**वेङ्कट०** सः त्वम् पावक! अस्मदर्थं दीप्यस्व दीप्तियुक्तम् शोभनवीर्ययुक्तं[2] च । अस्मे इति पूरणम् । भव च स्तोतृभ्यः अन्तिकतमः अविनाशार्थम् ॥ ८ ॥

तं त्वा॒ विप्रा॑ विप॒न्यवो॑ जागृ॒वांसः॒ समि॑न्धते । ह॒व्य॒वाह॒मम॑र्त्यं स॒हो॒वृध॑म् ॥ ९ ॥

तम् । त्वा॒ । विप्राः॑ । वि॒प॒न्यवः॑ । जा॒गृ॒ऽवांसः॑ । सम् । इ॒न्ध॒ते॒ । ह॒व्य॒ऽवाह॑म् । अम॑र्त्यम् । स॒हः॒ऽवृध॑म् ॥९॥

**वेङ्कट०** तम् त्वां[3] मेधाविनः स्तोतारः प्रबुद्धाः सम् इन्धते हव्यवाहम्[4] अमर्त्यम् बलेन वर्धमानम् ॥ ९ ॥

[5]इति तृतीयाष्टके प्रथमाध्याये अष्टमो वर्गः[5] ॥

[ ११ ]

[5]विश्वामित्रो गाथिन ऋषिः । अग्निर्देवता । गायत्री छन्दः[5] ।

अ॒ग्निर्होता॑ पु॒रोहि॑तोऽध्व॒रस्य॒ विच॑र्षणिः । स वे॑द य॒ज्ञमा॑नु॒षक् ॥ १ ॥

अ॒ग्निः । होता॑ । पु॒रःऽहि॑तः । अ॒ध्व॒रस्य॑ । वि॒ऽच॑र्षणिः । सः । वे॒द॒ । य॒ज्ञम् । आ॒नु॒षक् ॥ १ ॥

**वेङ्कट०** अग्निः ह्वाता[6] पुरोहितः यज्ञस्य विद्रष्टा । सः वेत्ति यज्ञम् आनुपूर्व्येण ॥ १ ॥

---

१. धनाय वि[२] अ[१]. २. नास्ति वि[१] कपं. ३. त्वा वि[१ २ ३] ल. ४. हव्यवाहनम् वि[१] कपं.
५-५. नास्ति मूको. ६. धाता वि[२] अ[१].

स ह॒व्य॒वाळम॑र्त्य उ॒शिग्दू॒तश्च॑नोहितः । अ॒ग्निर्धि॒या समृ॑ण्वति ॥ २ ॥

सः । ह॒व्य॒ऽवाट् । अम॑र्त्यः । उ॒शिक् । दू॒तः । चनः॑ऽहितः । अ॒ग्निः । धि॒या । सम् । ऋ॒ण्व॒ति॒ ॥ २ ॥

वेङ्कट० सः हविषां वोढा अमरणधर्मा हविः कामयमानः देवानाम् दूतः निहितान्नोऽनेन[1] वा निहितः अग्निः प्रज्ञया सम् गच्छते ॥ २ ॥

अ॒ग्निर्धि॒या स चे॑तति के॒तुर्य॒ज्ञस्य॑ पू॒र्व्यः । अर्थं॒ ह्य॑स्य त॒रणि॑ ॥ ३ ॥

अ॒ग्निः । धि॒या । सः । चे॒त॒ति॒ । के॒तुः । य॒ज्ञस्य॑ । पू॒र्व्यः । अर्थ॑म् । हि । अ॒स्य॒ । त॒रणि॑ ॥ ३ ॥

वेङ्कट० सः अग्निः प्रज्ञया सर्वं जानीते यज्ञस्य केतुः पूर्वकालभवः गमनस्वभावम्[2] हि[3] अस्य तमसः तारकं तेजः ॥ ३ ॥

अ॒ग्निं सू॒नुं सन॑श्रुतं॒ सह॑सो जा॒तवे॑दसम् । वह्निं॑ दे॒वा अ॑कृण्वत ॥ ४ ॥

अ॒ग्निम् । सू॒नुम् । सन॑ऽश्रुतम् । सह॑सः । जा॒तऽवे॑दसम् । वह्नि॑म् । दे॒वाः । अ॒कृ॒ण्व॒त॒ ॥ ४ ॥

वेङ्कट० सहसः सूनुम् अग्निम् सनातनश्रवणं जातप्रज्ञं वोढारं मह्यमभ्युदयार्थम् देवाः कृण्वन्तु ॥ ४ ॥

अदा॑भ्यः पुरए॒ता वि॒शाम॒ग्निर्मानु॑षीणाम् । तू॒र्णी रथः॒ सदा॒ नवः॑ ॥ ५ ॥

अदा॑भ्यः । पु॒रः॒ऽए॒ता । वि॒शाम् । अ॒ग्निः । मानु॑षीणाम् । तू॒र्णिः । रथः॑ । सदा॑ । नवः॑ ॥ ५ ॥

वेङ्कट० अहिंस्यः अग्निः मानुषीणाम् विशाम् पुरतो गन्ता तरणशीलः रथः हव्यवहनात् सदा एव नवः ॥ ५ ॥

[4]इति तृतीयाष्टके प्रथमाध्याये नवमो वर्गः[4] ॥

सा॒ह्वान् विश्वा॑ अ॒भि॒युजः॒ क्रतु॑र्दे॒वाना॒मम॑क्तः । अ॒ग्निस्तु॒विश्र॑वस्तमः ॥ ६ ॥

स॒ह्वान् । विश्वाः॑ । अ॒भि॒ऽयुजः॑ । क्रतुः॑ । दे॒वाना॑म् । अमृ॑क्तः । अ॒ग्निः । तु॒विश्र॑वःऽतमः ॥ ६ ॥

वेङ्कट० सहमानः विश्वाः अभियोक्त्रीः सेनाः कर्ता देवानाम् शत्रुभिरपरिमृष्टः[5] अग्निः अतिशयेन बहुश्रुतः[6] ॥ ६ ॥

---

१. °हितान्नोऽनेन वि॰ लपं. २. °स्वभावक वि॰; °स्वभावस्य ल. ३. नास्ति वि॰ अ॰ ल लपं. ४-४. नास्ति मूको. ५. शत्रुभिः परि° वि॰. ६. °शत्रुः वि॰ अ॰ ल; शत्रुभिः वि॰ लपं.

अभि प्रयांसि वाहसा दाश्वाँ अश्नोति मर्त्यः । क्षयं पावकशोचिषः ॥ ७ ॥

अभि । प्रयांसि । वाहसा । दाश्वान् । अश्नोति । मर्त्यः । क्षयम् । पावकऽशोचिषः ॥ ७ ॥

**वेङ्कट०** वाहकेनाऽग्निना अन्नानि[1] अभि अश्नोति दाश्वान् मनुष्यः निवासं च शोधकदीप्तेरग्नेः अभ्यश्नुते ॥ ७ ॥

परि विश्वानि सुधिताऽग्नेरश्याम मन्मभिः । विप्रासो जातवेदसः ॥ ८ ॥

परि । विश्वानि । सुऽधिता । अग्नेः । अश्याम । मन्मऽभिः । विप्रासः । जातऽवेदसः ॥ ८ ॥

**वेङ्कट०** परि अश्याम विश्वानि एव सौहित्यानि अग्नेः स्तोत्रैः मेधाविनः जातप्रज्ञात्[2] ॥ ८ ॥

अग्ने विश्वानि वार्या वाजेषु सनिषामहे । त्वे देवास एरिरे ॥ ९ ॥

अग्ने । विश्वानि । वार्या । वाजेषु । सनिषामहे । त्वे इति । देवासः । आ । ईरिरे ॥ ९ ॥

**वेङ्कट०** [3]अग्ने! विश्वानि[3] धनानि[4] युद्धेषु सम्भजेमहि । तानि त्वयि देवाः अस्माकं प्रदानायागमयन्निति । 'तदग्निर्देवो देवेभ्यो वनते [5]वयमग्नेर्मानुषाः' ( तै २,६,९,८ ) इति मन्त्रः[5] ॥ ९ ॥

[6]इति तृतीयाष्टके प्रथमाध्याये दशमो वर्गः[6] ॥

## [ १२ ]

[7]विश्वामित्रो गाथिन ऋषिः । इन्द्राग्नी देवता । गायत्री छन्दः[7] ।

इन्द्राग्नी आ गतं सुतं गीर्भिर्नभो वरेण्यम् । अस्य पातं धियेषिता ॥ १ ॥

इन्द्राग्नी इति । आ । गतम् । सुतम् । गीःऽभिः । नभः । वरेण्यम् । अस्य । पातम् । धिया । इषिता ॥

**वेङ्कट०** [8]इन्द्राग्नी! आ गच्छतम् सुतम् सोमं प्रति अस्मदीयाभिः स्तुतिभिः† नभसः स्वर्गस्थानात्‡ वरणीयम् । आगत्य च अस्य पिबतम् कर्मणा प्रेरितौ[8] ॥ १ ॥

इन्द्राग्नी जरितुः सचा यज्ञो जिगाति चेतनः । अया पातमिमं सुतम् ॥ २ ॥

इन्द्राग्नी इति । जरितुः । सचा । यज्ञः । जिगाति । चेतनः । अया । पातम् । इमम् । सुतम् ॥२॥

---

१. अन्नादि वि[२] अ[१]. २. नास्ति वि[२] अ[१]; 'ज्ञान् ल. ३-३. वयमग्नेर्मानुषा इति मन्त्रः । अग्ने विश्वानि इन्द्राग्नी वि[२] अ[१]. ४. इन्द्राग्नानि अ[१]; ··· नानि अ[२]. ५-५. नास्ति वि[२] अ[१]. ६-६. नास्ति मूको. ७-७. नास्ति वि[२] अ[१] † नास्ति मूको. ‡ स्वस्थानात् वि[२] लपं.

**वेङ्कट०** हे इन्द्राग्नी! स्तोतुः हकारी सोमो युवामभि गच्छति चेतयितेन्द्रियाणाम्। अनया स्तुत्या[1] च[2] पिबतम् इमम् सुतम् ॥ ॥

इन्द्रम॒ग्निं क॑वि॒च्छदा॑ य॒ज्ञस्य॑ जू॒त्या वृ॑णे । ता सोम॑स्ये॒ह तृ॑म्पताम् ॥ ३ ॥

इन्द्र॑म् । अ॒ग्निम् । क॒वि॒ऽछदा॑ । य॒ज्ञस्य॑ । जू॒त्या । वृ॒णे । ता । सोम॑स्य । इ॒ह । तृ॒म्प॒ताम् ॥ ३ ॥

**वेङ्कट०** स्तोतॄणां कामैश्छन्दयितारौ[3] इन्द्राग्नी हविषः जवेन वृणे। तौ सोमेन अस्मिन् कर्मणि तृप्यताम् ॥ ३ ॥

तो॒शा वृ॑त्र॒हणा॑ हुवे स॒जित्वा॒नाप॑राजिता । इ॒न्द्रा॒ग्नी वा॑ज॒सात॑मा ॥ ४ ॥

तो॒शा । वृ॒त्र॒ऽहना॑ । हु॒वे । स॒ऽजित्वा॑ना । अप॑राऽजिता । इ॒न्द्रा॒ग्नी इति॑ । वा॒ज॒ऽसात॑मा ॥ ४ ॥

**वेङ्कट०** शत्रूणां हन्तारौ उपद्रवाणां च[4] हन्तारौ अहम् हुवे समानजेतारौ[5] अपराजितौ इन्द्राग्नी अतिशयेन सङ्ग्रामाणां सम्भक्तारौ ॥ ४ ॥

प्र वा॑मर्चन्त्यु॒क्थिनो॑ नीथा॒विदो॑ जरि॒तारः॑ । इन्द्रा॑ग्नी॒ इष॒ आ वृ॑णे ॥ ५ ॥

प्र । वा॒म् । अ॒र्च॒न्ति॒ । उ॒क्थिनः॑ । नी॒थ॒ऽविदः॑ । ज॒रि॒तारः॑ । इन्द्रा॑ग्नी॒ इति॑ । इषः॑ । आ । वृ॒णे ॥ ५ ॥

**वेङ्कट०** हे इन्द्राग्नी! प्र अर्चन्ति वाम् शस्त्रिणः स्तोत्रविदश्च स्तोतारः[6]। तथाऽहं चार्वन्नानि[7] आ वृणे ॥ ५ ॥

[8]इति तृतीयाष्टके प्रथमाध्याये एकादशो वर्गः[8] ॥

इन्द्रा॑ग्नी नव॒तिं पुरो॑ दा॒सप॑त्नीरधूनुतम् । सा॒कमेके॑न॒ कर्म॑णा ॥ ६ ॥

इन्द्रा॑ग्नी॒ इति॑ । न॒व॒तिम् । पुरः॑ । दा॒सऽप॑त्नीः । अ॒धू॒नु॒त॒म् । सा॒कम् । एके॑न । कर्म॑णा ॥ ६ ॥

**वेङ्कट०** हे इन्द्राग्नी! दासाः पतयो यासां ताः नवतिसंख्याः पुरः सह युवाम् एकेन एव उद्योगेन अकम्पयतम् ॥ ६ ॥

इन्द्रा॑ग्नी॒ अप॑स॒स्पर्युप॒ प्र य॑न्ति धी॒तयः॑ । ऋ॒तस्य॑ प॒थ्या॒३॒॑ अनु॑ ॥ ७ ॥

इन्द्रा॑ग्नी॒ इति॑ । अप॑सः । परि॑ । उप॑ । प्र । य॒न्ति॒ । धी॒तयः॑ । ऋ॒तस्य॑ । प॒थ्याः॑ । अनु॑ ॥ ७ ॥

**वेङ्कट०** हे इन्द्राग्नी! कर्मणः[9] [10]उप प्र गच्छन्ति[10] स्तुतयः यज्ञस्य मार्गान् लक्षीकृत्य ॥ ७ ॥

---

१. नास्ति लपं. २. नास्ति वि[1]. ३. कामैश्शाद° लपं. ४. नास्ति वि[2] अ[2] ल. ५. समानं जे° लपं. ६. स्तोतारश्च वि[1]. ७. चार्वन्नानि वि[2] अ[1]; चान्नानि वि[1] ल लपं. ८-८. नास्ति मूको. ९. कर्मणा वि[1] लपं. १०-१०. प्रयच्छन्ति वि[1] लपं.

इन्द्राग्नी तविषाणि वां सधस्थानि प्रयांसि च । युवोरप्तूर्यं हितम् ॥ ८ ॥

इन्द्राग्नी इति । तविषाणि । वाम् । सधऽस्थानि । प्रयांसि । च । युवोः । अप्ऽतूर्यम् । हितम् ॥८॥

**वेङ्कट०** हे इन्द्राग्नी! युवयोः सह स्थितानि [1]बलानि अन्नानि[1] च[2] । तथा युवयोरेव अपां प्रेरणम् निहितम्[3] ॥ ८ ॥

इन्द्राग्नी रोचना दिवः परि वाजेषु भूषथः । तद् वां चेति प्र वीर्यम् ॥ ९ ॥

इन्द्राग्नी इति । रोचना । दिवः । परि । वाजेषु । भूषथः । तत् । वाम् । चेति । प्र । वीर्यम् ॥ ९ ॥

**वेङ्कट०** दिवः [4]प्रकाशकौ हे इन्द्राग्नी[4] । सङ्ग्रामेषु युवां परितः भवथः[5] । तत् युवयोः वीर्यम् प्रज्ञापयति ॥ ९ ॥

[6]इति तृतीयाष्टके प्रथमाध्याये द्वादशो वर्गः[6] ॥

[ १३ ]

[6]ऋषभो वैश्वामित्र ऋषिः । अग्निर्देवता । अनुष्टुप् छन्दः[6] ।

प्र वो देवायाग्नये बर्हिष्ठमर्चास्मै ।
गमद् देवेभिरा स नो यजिष्ठो बर्हिरा सदत् ॥ १ ॥

प्र । वः । देवाय । अग्नये । बर्हिष्ठम् । अर्च । अस्मै ।
गमत् । देवेभिः । आ । सः । नः । यजिष्ठः । बर्हिः । आ । सदत् ॥ १ ॥

**वेङ्कट०** ऋषभो वैश्वामित्रः । अस्मै देवाय अग्नये यूयम् वृद्धतमं[7] स्तोत्रम् प्र अर्चयत उच्चारयत । आ गच्छतु सः अस्मान् देवैः सह यष्टृतमः बर्हिः[8] च आ सीदतु ॥ १ ॥

ऋतावा यस्य रोदसी दक्षं सचन्त ऊतयः ।
हविष्मन्तस्तमीळते तं सनिष्यन्तोऽवसे ॥ २ ॥

ऋतऽवा । यस्य । रोदसी इति । दक्षम् । सचन्ते । ऊतयः ।
हविष्मन्तः । तम् । ईळते । तम् । सनिष्यन्तः । अवसे ॥ २ ॥

---

१-१. अन्नानि बलानि वि[1] लपं. २. च यथा वि[2] अ[1]. ३. हितम् अ[1] क. ४-४. प्रकाशकारीन्द्रा° वि[2] अ[1]. ५. भवतः वि[1] लपं. ६-६. नास्ति मूको. ७. वृद्धमर्न वि[1,2] अ[1] ख; वृद्धमे लपं. ८. नास्ति वि[1] अ[1].

**वेङ्कट०** सत्यकर्मणः[1] यस्य इमे द्यावापृथिवी वशे भवतः, तम् दक्षम् सेवन्ते मरुतः, सम्भृतहविष्काः तम् स्तुवन्ति हविर्वहनार्थम्, तम्[2] एव लाभं सम्भक्तुमिच्छन्तः रक्षणाय आश्रयन्ते ॥ २ ॥

स यन्ता विप्र एषां स यज्ञानामथा हि षः ।
अग्निं तं वो दुवस्यत दाता यो वनिता मघम् ॥ ३ ॥

सः । यन्ता । विप्रः । एषाम् । सः । यज्ञानाम् । अर्थ । हि । सः ।
अग्निम् । तम् । वः । दुवस्यत । दाता । यः । वनिता । मघम् ॥ ३ ॥

**वेङ्कट०** एषाम्[3] हविष्मताम् सः[4] मेधावी नियन्ता। [5]सः एव यज्ञानाम् अपि नियन्ता[5]। पुनः सः इति पूरणम्। तम् अग्निम् यूयं परिचरत, दाता यः अग्निः धनं प्रयच्छति महनीयम् ॥ ३ ॥

स नः शर्माणि वीतयेऽग्निर्यच्छतु शंतमा ।
यतो नः प्रुष्णवद् वसु दिवि क्षितिभ्यो अप्स्वा ॥ ४ ॥

सः । नः । शर्माणि । वीतये । अग्निः । यच्छतु । शम्ऽतमा ।
यतः । नः । प्रुष्णवत् । वसु । दिवि । क्षितिऽभ्यः । अप्ऽसु । आ ॥ ४ ॥

**वेङ्कट०** सः अस्मभ्यं सुखतमान् गृहान् कामाय प्रयच्छतु, यस्मादग्नेः अस्माकं पोषणयुक्तं[6] धनम् दिवि उत्पन्नं भवति। एवं [6]पृथिवीभ्यः अन्तरिक्षे चेति। यस्य प्रसादात् त्रिभ्योऽपि लोकेभ्यो धनम् अस्माकम् भवनमतीत्यर्थः। शत्रूणां वा शोषं कुर्वत् प्रुष्णवदिति[6] ॥ ४ ॥

दीदिवांसमपूर्व्यं वस्वीभिरस्य धीतिभिः ।
ऋक्वाणो अग्निमिन्धते होतारं विश्पतिं विशाम् ॥ ५ ॥

दीदिऽवांसम् । अपूर्व्यम् । वस्वीभिः । अस्य । धीतिऽभिः ।
ऋक्वाणः । अग्निम् । इन्धते । होतारम् । विश्पतिम् । विशाम् ॥ ५ ॥

**वेङ्कट०** [6]सन्दीप्यमानम् अभूतपूर्वम्[6] वसुमद्भिः[7] अस्य अग्नेः कर्मभिर्हेतुभूतैः होतारम् विशाम् पतिं मन्त्रवन्तः अग्निम्[8] सन्दीपयन्ति ॥ ५ ॥

---

१. सत्यकर्मा वि[2] ल लपं. २. नास्ति वि[2] अ[1]. ३. येषां वि[1]. ४. नास्ति वि[1] लपं. ५-५. नास्ति वि[2] अ[1]. ६-६. पोषणयुक्तान् लपं; पोषयुक्तान् वि[1]. ७. वसुभिः वि[1]. ८. नास्ति मूको.

उत नो ब्रह्मन्नविष उक्थेषु देवहूतमः ।
शं नः शोचा मरुद्वृधोऽग्ने सहस्रसातमः ॥ ६ ॥

उत । नः । ब्रह्मन् । अविषः । उक्थेषु । देवऽहूतमः ।
शम् । नः । शोच । मरुत्ऽवृधः । अग्ने । सहस्रऽसातमः ॥ ६ ॥

**वेङ्कट०** अपि च अस्मान् रक्ष शस्त्रेषु स्तोत्रे च देवानामाह्वातृतमः। सुखं च अस्माकं दीपय मरुद्भिर्वर्धमानः अग्ने! सहस्राणां दातृतमः ॥ ६ ॥

नू नो रास्व सहस्रवत् तोकवत् पुष्टिमद् वसु ।
द्युमदग्ने सुवीर्यं वर्षिष्ठमनुपक्षितम् ॥ ७ ॥

नु । नः । रास्व । सहस्रऽवत् । तोकऽवत् । पुष्टिऽमत् । वसु ।
द्युऽमत् । अग्ने । सुऽवीर्यम् । वर्षिष्ठम् । अनुपऽक्षितम् ॥ ७ ॥

**वेङ्कट०** अग्ने! क्षिप्रम् अस्मभ्यं देहि[1] सहस्रसंख्यं सपुत्रं पोषणवत् धनं दीप्तिमत् शोभनवीर्यम् अतिशयेन वृद्धम् अनुपक्षीणमिति ॥ ७ ॥

[2]इति तृतीयाष्टके प्रथमाध्याये त्रयोदशो वर्गः[2] ॥

## [ १४ ]

[2]ऋषभो वैश्वामित्र ऋषिः । अग्निर्देवता । त्रिष्टुप् छन्दः[2] ॥

आ होता मन्द्रो विदथान्यस्थात् सत्यो यज्वा कवितमः स वेधाः ।
विद्युद्रथः सहसस्पुत्रो अग्निः शोचिष्केशः पृथिव्यां पाजो अश्रेत् ॥ १ ॥

आ । होता । मन्द्रः । विदथानि । अस्थात् । सत्यः । यज्वा । कविऽतमः । सः । वेधाः ।
विद्युत्ऽरथः । सहसः । पुत्रः । अग्निः । शोचिःऽकेशः । पृथिव्याम् । पाजः । अश्रेत् ॥ १ ॥

**वेङ्कट०** आ ह्वाता मोदनः यज्ञानां तिष्ठति सत्यकर्मा देवानां यष्टा अतिशयेन कविः सर्वस्य विधाता । विद्योतमानरथः सहसः सूनुः अग्निः ज्वालाकेशः पृथिव्याम् वर्तमानः बलं सेवते ॥ १ ॥

---

१. धेहि लर्प. २-२. नास्ति मूको.

अयामि ते नमउक्तिं जुषस्व ऋतावस्तुभ्यं चेतते सहस्वः ।
विद्वाँ आ वक्षि विदुषो नि षत्सि मध्य आ बर्हिरूतये यजत्र ॥ २ ॥

अयामि । ते । नमःऽउक्तिम् । जुषस्व । ऋतऽवः । तुभ्यम् । चेतते । सहस्वः ।
विद्वान् । आ । वक्षि । विदुषः । नि । सत्सि । मध्ये । आ । बर्हिः । ऊतये । यजत्र ॥ २ ॥

**वेङ्कट०** प्रेरयामि तुभ्यम्[1] नमउक्तिम्। त्वं सेवस्व यज्ञवन्!। तुभ्यम् एव चेतते नमउक्तिः क्रियते बलवन्!। विद्वान् त्वम् आ वह देवान् विदुषः। नि सीद च बर्हिः मध्ये रक्षितुमस्मान् यजनीय![2] ॥ २ ॥

द्रवतां त उषसा वाजयन्ती अग्ने वातस्य पथ्याभिरच्छ ।
यत् सीमञ्जन्ति पूर्व्यं हविर्भिरा वन्धुरेव तस्थतुर्दुरोणे ॥ ३ ॥

द्रवताम् । ते । उषसा । वाजयन्ती इति । अग्ने । वातस्य । पथ्याभिः । अच्छ ।
यत् । सीम् । अञ्जन्ति । पूर्व्यम् । हविःऽभिः । आ । वन्धुराऽइव । तस्थतुः । दुरोणे ॥ ३ ॥

**वेङ्कट०** हे अग्ने! अभिगच्छताम्[3] उषासानक्ते तव अन्नं कुर्वाणे। वातस्य मार्गैः शीघ्रं गच्छ[4]। यदा सर्वतः हविर्भिः पूर्व्यम् अग्निम् ऋत्विजः अञ्जन्ति, तदानीं त्वामुषासानक्ते आवृत्य तिष्ठतः, अहोरात्रयोर्हि यज्ञकरणम्, दुरवने। यथा वन्धुरावभिमुखौ[5] भवतः फलकासंघाटौ[6] ॥ ३ ॥

मित्रश्च तुभ्यं वरुणः सहस्वोऽग्ने विश्वे मरुतः सुम्नमर्चन् ।
यच्छोचिषा सहसस्पुत्र तिष्ठा अभि क्षितीः प्रथयन्त्सूर्यो नॄन् ॥ ४ ॥

मित्रः । च । तुभ्यम् । वरुणः । सहस्वः । अग्ने । विश्वे । मरुतः । सुम्नम् । अर्चन् ।
यत् । शोचिषा । सहसः । पुत्र । तिष्ठाः । अभि । क्षितीः । प्रथयन् । सूर्यः । नॄन् ॥ ४ ॥

**वेङ्कट०** बलवन् अग्ने! तुभ्यम् मित्रावरुणौ विश्वे च मरुतः सुखम् अर्चन्ति कुर्वन्ति। यदा त्वं दीप्त्या हे सहसः पुत्र! दीप्यमानः[7] तिष्ठसि मनुष्यान् अभि नेतॄन् आत्मनो रश्मीन् प्रथयन् शोभनवीर्यः ॥४॥

वयं ते अद्य ररिमा हि काममुत्तानहस्ता नमसोपसद्य ।
यजिष्ठेन मनसा यक्षि देवानस्रेधता मन्मना विप्रो अग्ने ॥ ५ ॥

---

१. तुभ्यं तुभ्यं त्वा वि[१] अ[१]; °भ्यं त्वाम् वि[१] ल लप. २. यजनीयः वि[१,२] अ[१]. ३. °गच्छेतां वि[१,२] अ[१] लपं. ४. अच्छ वि[१,२] लपं. ५. बन्धु° वि[२] अ[१]. ६. फलकाष्ठसंघाटौ ल प्रस्तावः. ७. नास्ति वि[१] अ[१].

वयम् । ते । अद्य । ररिम । हि । कामम् । उत्तानऽहस्ताः । नमसा । उपऽसद्य ।
यजिष्ठेन । मनसा । यक्षि । देवान् । अस्रेधता । मन्मना । विप्रः । अग्ने ॥ ५ ॥

**वेङ्कट०** वयम् तुभ्यम् अग्ने ! अद्य कामम् हविः प्रयच्छामः हि हविष आदानार्थम् उत्तानहस्ताः नमस्कारेण सह उपसद्य । तथा सति यष्टृतमेन मनसा यज देवान् अक्षीयमाणेन स्तोत्रेण मेधावी त्वम् अग्ने ! ॥५॥

त्वद्धि पुत्र सहसो वि पूर्वीर्देवस्य यन्त्यूतयो वि वाजाः ।
त्वं देहि सहस्रिणं रयिं नोऽद्रोघेण वचसा सत्यमग्ने ॥ ६ ॥

त्वत् । हि । पुत्र । सहसः । वि । पूर्वीः । देवस्य । यन्ति । ऊतयः । वि । वाजाः ।
त्वम् । देहि । सहस्रिणम् । रयिम् । नः । अद्रोघेण । वचसा । सत्यम् । अग्ने ॥ ६ ॥

**वेङ्कट०** सहसः पुत्र अग्ने ! त्वत्तः हि देवनशीलस्य यजमानस्य ऊतयः विविधं गच्छन्ति बह्व्यः । एवमन्नानि च वि गच्छन्ति । त्वम् सहस्रसङ्ख्यं धनम् अस्मभ्यम् देहि पराभिद्रोहरहितेन[1] वाक्येन सह सत्यभूतं परिगृहाण धनमिति ॥ ६ ॥

तुभ्यं दक्ष कविक्रतो यानीमा देव मर्तासो अध्वरे अकर्म ।
त्वं विश्वस्य सुरथस्य बोधि सर्वं तदग्ने अमृत स्वदेह ॥ ७ ॥

तुभ्यम् । दक्ष । कविक्रतो इति कविऽक्रतो । यानि । इमा । देव । मर्तासः । अध्वरे । अकर्म ।
त्वम् । विश्वस्य । सुऽरथस्य । बोधि । सर्वम् । तत् । अग्ने । अमृत । स्वद । इह ॥ ७ ॥

**वेङ्कट०** तुभ्यम् प्रवृद्ध ! क्रान्तप्रज्ञ ! यानि इमानि हवींषि देव ! मनुष्याः यज्ञे अकर्म । त्वम्[2] विश्वं शोभनरथं यजमानं बुध्यस्व । सर्वम् च तत् अग्ने ! अमृत ! हविः अस्मिन् कर्मणि स्वद इति ॥ ७ ॥

[3]इति तृतीयाष्टके प्रथमाध्याये चतुर्दशो वर्गः[3] ॥

## [ १५ ]

[3]उत्कीलः कात्य ऋषिः । अग्निर्देवता । त्रिष्टुप् छन्दः[3] ।

वि पाजसा पृथुना शोशुचानो बाधस्व द्विषो रक्षसो अमीवाः ।
सुशर्मणो बृहतः शर्मणि स्यामग्नेरहं सुहवस्य प्रणीतौ ॥ १ ॥

---

१. °द्रोहरहित वि[२] अ[२]. २. त्वं यज्ञं वि[१] लपं. ३-३. नास्ति मूको.

वि । पाजसा । पृथुना । शोशुचानः । बाधस्व । द्विषः । रक्षसः । अमीवाः ।
सुऽशर्मणः । बृहतः । शर्मणि । स्याम् । अग्नेः । अहम् । सुऽहवस्य । प्रऽनीतौ ॥ १ ॥

**वेङ्कट०** उत्कीलः[1] कात्यः । विस्तीर्णेन तेजसा दीप्यमानः वि बाधस्व शत्रून् राक्षसान् अभ्यमनदराः पिशाचिकाश्च । शोभनसुखहेतोः[2] महतस्तव सुखे स्याम् अग्नेः अहम् स्वाह्वानस्य प्रणयने ॥ १ ॥

**त्वं नो अस्या उषसो व्युष्टौ त्वं सूर उदिते बोधि गोपाः ।**
**जन्मेव नित्यं तनयं जुषस्व स्तोमं मे अग्ने तन्वा सुजात ॥ २ ॥**

त्वम् । नः । अस्याः । उषसः । विऽउष्टौ । त्वम् । सूरे । उत्ऽइते । बोधि । गोपाः ।
जन्मऽइव । नित्यम् । तनयम् । जुषस्व । स्तोमम् । मे । अग्ने । तन्वा । सुऽजात ॥ २ ॥

**वेङ्कट०** त्वम्[3] अस्माकम्[4] अस्याः उषसः व्युच्छने,[5] तथा त्वम् सूर्ये च उदिते बुध्यस्व गोपायिता भवामीति । पिता इव औरसम् तनयम् अङ्गैः सेवस्व मदीयम् स्तोमम् अग्ने! शोभनजनन! ॥ २ ॥

**त्वं नृचक्षा वृषभानु पूर्वीः कृष्णास्वग्ने अरुषो वि भाहि ।**
**वसो नेषि च पर्षि चात्यंहः कृधी नो राय उशिजो यविष्ठ ॥ ३ ॥**

त्वम् । नृऽचक्षाः । वृषभ । अनु । पूर्वीः । कृष्णासु । अग्ने । अरुषः । वि । भाहि ।
वसो इति । नेषि । च । पर्षि । च । अति । अंहः । कृधि । नः । राये । उशिजः । यविष्ठ ॥ ३ ॥

**वेङ्कट०** त्वम् मनुष्याणां[6] द्रष्टा वर्षितः! कामानाम् अनुक्रमेण प्रकाशय ज्वालाः रात्रिषु अग्ने! आरोचमानः । वासयितः! अस्मान् प्रणय, दारिद्र्यम् च अति पारय कुरु च[7] अस्मान् कामयमानान् धनाय युवतम![8] ॥ ३ ॥

**अषाळ्हो अग्ने वृषभो दिदीहि पुरो विश्वाः सौभगा संजिगीवान् ।**
**यज्ञस्य नेता प्रथमस्य पायोर्जातवेदो बृहतः सुप्रणीते ॥ ४ ॥**

अषाळ्हः । अग्ने । वृषभः । दिदीहि । पुरः । विश्वाः । सौभगा । सम्ऽजिगीवान् ।
यज्ञस्य । नेता । प्रथमस्य । पायोः । जातऽवेदः । बृहतः । सुऽप्रनीते ॥ ४ ॥

**वेङ्कट०** शत्रुभिरनभिभूतः त्वम् अग्ने! वृषभः दीप्यस्व शत्रुपुराणि सौभाग्यानि च विश्वानि सम्यग्जयन्[9] यज्ञस्य प्रणेता पुरातनस्य रक्षकस्य हे जातप्रज्ञ! महतः शोभनप्रणयन![10] ॥ ४ ॥

---

१. उत्किलः मूको. २. शोभ्रु० वि[1] लपं. ३. नास्ति लपं. ४. नास्ति वि[1]. ५. व्युच्छन्ने वि[2] अ[1]. ६. मनुष्याम् वि[1] लपं. ७. वा वि[2] अ[1]. ८. तमः वि[2] अ[1]. ९. समजयन् वि[2] अ[1] लपं. १०. °यनम् मूको.

अच्छिद्रा शर्म जरितः पुरूणि देवाँ अच्छा दीद्यानः सुमेधाः ।
रथो न सस्निरभि वक्षि वाजमग्ने त्वं रोदसी नः सुमेके ॥ ५ ॥

अच्छिद्रा । शर्म । जरितरिति । पुरूणि । देवान् । अच्छ । दीद्यानः । सुऽमेधाः ।
रथः । न । सस्निः । अभि । वक्षि । वाजम् । अग्ने । त्वम् । रोदसी इति । नः । सुमेके इति सुऽमेके ॥

वेङ्कट० अच्छिद्राणि सुखानि देवानां स्तोतः! अग्ने! त्वयि बहूनि सन्ति। तथा त्वम् देवान् प्रति दीप्यमानो भवसि सुप्रज्ञः। रथः इव [1]शुद्धः अभि प्रापय[1] अन्नम् अस्मान् अग्ने! त्वम् द्यावापृथिवी च अत्यन्तमेकचरे शोभमाने वेति। शिरोवाह्यमशुद्धं[2] भवति नैवं रथवाह्यमिति रथः सस्निः उच्यते ॥ ५ ॥

प्र पीपय वृषभ जिन्व वाजानग्ने त्वं रोदसी नः सुदोघे ।
देवेभिर्देव सुरुचा रुचानो मा नो मर्तस्य दुर्मतिः परि ष्ठात् ॥ ६ ॥

प्र । पीपय । वृषभ । जिन्व । वाजान् । अग्ने । त्वम् । रोदसी इति । नः । सुदोघे इति सुऽदोघे ।
देवेभिः । देव । सुऽरुचा । रुचानः । मा । नः । मर्तस्य । दुःऽमतिः । परि । स्थात् ॥ ६ ॥

वेङ्कट० [3]प्र प्यायय[3] अस्मान् कामानां वर्षितः!, पूरय च अन्नानि, द्यावापृथिवी च सुदोहे कुरु देवेभिः[4] सह अग्ने! त्वम् यज्ञे शोभनरुचा[5] तेजसा रोचमानः। मा अस्मान् शत्रोर्मनुष्यस्य दुर्मतिः परितः तिष्ठतु[6] ॥ ६ ॥

इळामग्ने पुरुदंसं सनिं गोः शश्वत्तमं हवमानाय साध ।
स्यान्नः सूनुस्तनयो विजावाऽग्ने सा ते सुमतिर्भूत्वस्मे ॥ ७ ॥

इळाम् । अग्ने । पुरुऽदंसम् । सनिम् । गोः । शश्वत्ऽतमम् । हवमानाय । साध ।
स्यात् । नः । सूनुः । तनयः । विजाऽवा । अग्ने । सा । ते । सुऽमतिः । भूतु । अस्मे इति ॥७॥

वेङ्कट० ( ऋ ३,१,२३ द्र. ) ॥ ७ ॥

[7]इति तृतीयाष्टके प्रथमाध्याये पञ्चदशो वर्गः[7] ॥

[ १६ ]

[7]उत्कीलः कात्य ऋषिः। अग्निर्देवता। प्रगाथः छन्दः, प्रथमातृतीयापञ्चम्यो बृहत्यः, द्वितीयाचतुर्थीषष्ठ्यः सतोबृहत्यः[7] ।

अयमग्निः सुवीर्यस्येशे महः सौभगस्य ।
राय ईशे स्वपत्यस्य गोमत ईशे वृत्रहथानाम् ॥ १ ॥

---

१-१. शुद्धोऽपि प्रापय वि[2] अ[1] लपं. २. °वाप्यम° लपं. ३-३. प्राप्यायय वि[2] अ[1]; प्राप्यय वि[1] लपं; प्र पायय ल. ४. देवैः ल प्रस्तावः. ५. शोभनरूपः लपं. ६. तिष्ठत वि[1] लपं. ७-७. नास्ति मूको.

अयम् । अग्निः । सुऽवीर्यस्य । ईशे । महः । सौभगस्य ।
रायः । ईशे । सुऽअपत्यस्य । गोऽमतः । ईशे । वृत्रऽहथानाम् ॥ १ ॥

**वेङ्कट॰** [1]'अयम् अग्निः[1] शोभनवीर्यस्य महतः सौभाग्यस्य[2] ईश्वरो भवति, तथा धनस्य च शोभनपुत्रस्य गोयुक्तस्य। तथा वृत्रहननानां च ईष्ट इति ॥ १ ॥

**इमं नरो मरुतः सश्चता वृधं यस्मिन् रायः शेवृधासः ।**
**अभि ये सन्ति पृतनासु दूढ्यो विश्वाहा शत्रुमादभुः ॥ २ ॥**

इमम् । नरः । मरुतः । सश्चत । वृधम् । यस्मिन् । रायः । शेऽवृधासः ।
अभि । ये । सन्ति । पृतनासु । दुःऽध्यः । विश्वाहा । शत्रुम् । आऽदभुः ॥ २ ॥

**वेङ्कट॰** हे नेतारः मरुतः! इमम् अग्निं वर्धमानं सेवत[3] यस्मिन् धनानि सुखस्य वर्धयितॄणि सन्ति, ये पृतनासु अभि भवन्ति दुर्बुद्धीन्, रायः ये च सर्वदा आदभ्नुवन्ति शत्रुम् ॥ २ ॥

**स त्वं नो रायः शिशीहि मीढ्वो अग्ने सुवीर्यस्य ।**
**तुविद्युम्न वर्षिष्ठस्य प्रजावतोऽनमीवस्य शुष्मिणः ॥ ३ ॥**

सः । त्वम् । नः । रायः । शिशीहि । मीढ्वः । अग्ने । सुऽवीर्यस्य ।
तुविऽद्युम्न । वर्षिष्ठस्य । प्रजाऽवतः । अनमीवस्य । शुष्मिणः ॥ ३ ॥

**वेङ्कट॰** सः त्वम् अग्ने! अस्मान् धनेन तीक्ष्णीकुरु सेक्तः[4] अग्ने! शोभनवीर्येण बहुन्न! वृद्धतमेन प्रजावता अभिभवितृवर्जितेन बलवता ॥ ३ ॥

**चक्रिर्यो विश्वा भुवनाभि सासहिश्चक्रिर्देवेष्वा दुवः ।**
**आ देवेषु यतत आ सुवीर्य आ शंस उत नृणाम् ॥ ४ ॥**

चक्रिः । यः । विश्वा । भुवना । अभि । ससहिः । चक्रिः । देवेषु । आ । दुवः ।
आ । देवेषु । यतते । आ । सुऽवीर्ये । आ । शंसे । उत । नृणाम् ॥ ४ ॥

**वेङ्कट॰** शत्रूणां सहनशीलः यः अग्निः विश्वानि भूतानि करोति, यश्च देवेषु परिचर्यां करोति, सोऽयं देवानुद्दिश्य आ यतते प्रयत्नं करोति, एवम् सुवीर्ये, तथा शंसने च[5] सर्वस्मिन् मनुष्याणाम् इति ॥ ४ ॥

---

१-१. नास्ति मूको. २. सोम भाग्यस्य वि[1]. ३. सेवध्वम् ल प्रस्तावः. ४. तेक्तः वि[1] लपं; सेकुः वि[3]; सेक्तुः अ[1] ल. ५. नास्ति वि[1].

मा नो॑ अग्नेऽम॑तये मावीर॑तायै रीरधः ।
मागोता॑यै सहसस्पुत्र मा नि॒देऽप॒ द्वेषां॑स्या कृधि ।

मा । नः॒ । अग्ने॑ । अम॑तये । मा । अ॒वीर॑तायै । री॒र॒धः॒ ।
मा । अ॒गोता॑यै । स॒ह॒सः॒ । पु॒त्र॒ । मा । नि॒दे । अप॑ । द्वेषां॑सि । आ । कृ॒धि॒ ॥ ५ ॥

**वेङ्कट०** अर्थाऽभावाद् या[1] दुर्गतिर्भवति तस्यै[2] मा अस्मान् अग्ने! वशं नैषीः, मा च अनपत्यतायै, मा च अपशुतायै, हे सहसः पुत्र! मा च निन्दित्रे। तदर्थम् सर्वान् द्वेष्टॄन् अस्मत्तः अप आ कृधि ॥ ५ ॥

श॒ग्धि वाज॑स्य सुभग प्र॒जाव॒तोऽग्ने॑ बृह॒तो अ॑ध्व॒रे ।
सं रा॒या भूय॑सा सृज मयो॒भुना॑ तुवि॑द्युम्न॒ यश॑स्वता ॥ ६ ॥

श॒ग्धि । वाज॑स्य । सु॒ऽभ॒ग॒ । प्र॒जाऽव॑तः । अग्ने॑ । बृ॒ह॒तः । अ॒ध्व॒रे ।
सम् । रा॒या । भूय॑सा । सृ॒ज॒ । म॒यः॒ऽभुना॑ । तुवि॑ऽद्युम्न । यश॑स्वता ॥ ६ ॥

**वेङ्कट०** देहि अन्नम् सुधन! प्रजायुक्तम् अग्ने! महत् यज्ञे[3]। [4]सम् सृज च[4] भूयसा धनेन सुखस्य भावयित्रा[5] तुविद्युम्न! यशोयुक्तेन ॥ ६ ॥

[6]इति तृतीयाष्टके प्रथमाध्याये षोडशो वर्गः[6] ॥

[ १७ ]

[6]कतो वैश्वामित्र ऋषिः । अग्निर्देवता । त्रिष्टुप् छन्दः[6] ।

स॒मि॒ध्यमा॑नः प्रथ॒माऽनु॒ धर्मा॒ सम॒क्तुभि॑रज्यते वि॒श्ववा॑रः ।
शो॒चिष्के॑शो घृ॒तनि॑र्णिक् पाव॒कः सु॑य॒ज्ञो अ॒ग्निर्य॒जथा॑य दे॒वान् ॥ १ ॥

स॒म्ऽइ॒ध्यमा॑नः । प्र॒थ॒मा । अनु॑ । धर्म॑ । सम् । अ॒क्तुऽभिः॑ । अ॒ज्य॒ते॒ । वि॒श्वऽवा॑रः ।
शो॒चिः॒ऽके॑शः । घृ॒तऽनि॑र्निक् । पा॒व॒कः । सु॒ऽय॒ज्ञः । अ॒ग्निः । य॒जथा॑य । दे॒वान् ॥ १ ॥

**वेङ्कट०** कतो वैश्वामित्रः। प्रथमानि[7] कर्माणि प्रति समिध्यमानः सम् अज्यते अञ्जनसाधनैर्हविर्भिः विश्वैर्वरणीयः ज्वालाकेशः घृतरूपः शोधकः शोभनयज्ञः अग्निः देवान् यष्टुम् ॥ १ ॥

---

१. य वि[1] लपं. २. तस्मै लपं. ३. नास्ति लपं. ४. च संसृज वि[1,2] ल लपं; संसृज अ[1].
५. मापयित्रा वि[2] अ[1]. ६-६. नास्ति मूको. ७. व्रतानि लपं.

यथायंजो होत्रमंग्ने पृथिव्या यथा दिवो जांतवेदश्चिकित्वान् ।
एवानेनं हविषां यक्षि देवान् मंनुष्वद् यज्ञं प्र तिरेममद्य ॥ २ ॥

यथां । अयंजः । होत्रम् । अग्ने । पृथिव्याः । यथां । दिवः । जातऽवेदः । चिकित्वान् ।
एव । अनेनं । हविषां । यक्षि । देवान् । मनुष्वत् । यज्ञम् । प्र । तिर । इमम् । अद्य ॥ २ ॥

**वेङ्कट०** हे अग्ने![1] यथा यजमानाया अस्याः पृथिव्याः[2] पुरा त्वम् होत्रम् अयजः[1] कृतवानसि, यथा वा दिवः जातधन! प्राज्ञः[2], एवम् अनेन हविषा यज देवान्। मनोरिव[3] अस्माकम् इमम् यज्ञम् अद्य समर्धय[4] ॥ २ ॥

त्रीण्यायूंषि तवं जातवेदस्तिस्र आजानीरुषसंस्ते अग्ने ।
ताभिर्देवानामवों यक्षि विद्वानथां भव यजमानाय शं योः ॥ ३ ॥

त्रीणि । आयूंषि । तवं । जातऽवेदः । तिस्रः । आऽजानीः । उषसः । ते । अग्ने ।
ताभिः । देवानाम् । अवः । यक्षि । विद्वान् । अथं । भव । यजमानाय । शम् । योः ॥ ३ ॥

**वेङ्कट०** हे जातधन अग्ने!' तव त्रीणि अन्नानि आज्यौषधिसोमात्मकानि[5], 'अभि द्विजन्मा त्रिवृदन्नम्' (ऋ १,१४०,२) इति मन्त्रः। तथा ते एव उषसः सकाशात् त्रीणि आजानानि[6] भवन्ति अनुसवनम्[7]। ताभिः त्वम् देवानाम् अन्नं यज, जानन् अथ भव यजमानाय शम् च योः च ॥३॥

अग्निं सुदीतिं सुदृशं गृणन्तों नमस्यामस्त्वेड्यं जातवेदः ।
त्वां दूतमंरतिं हंव्यवाहं देवा अंकृण्वन्नमृतंस्य नाभिम् ॥ ४ ॥

अग्निम् । सुऽदीतिम् । सुऽदृशम् । गृणन्तः । नमस्यामः । त्वा । ईड्यम् । जातऽवेदः ।
त्वाम् । दूतम् । अरतिम् । हव्यऽवाहम् । देवाः । अकृण्वन् । अमृतस्य । नाभिम् ॥ ४ ॥

**वेङ्कट०** अग्निम् शोभनदीप्तिम् शोभनदर्शनम् स्तुवन्तः नमस्यामः त्वां स्तुत्यम् हे जातवेदः!। त्वाम् देवानाम् दूतम् गन्तारम् हविषां वोढारम् देवाः कृतवन्तः अन्नस्य धारकम्[8] ॥ ४ ॥

यस्त्वद्धोता पूर्वो अग्ने यजीयान् द्विता च सत्तां स्वधया च शंभुः ।
तस्यानु धर्म प्र यंजा चिकित्वोऽथां नो धा अध्वरं देववीतौ ॥ ५ ॥

यः । त्वत् । होतां । पूर्वः । अग्ने । यजीयान् । द्विता । च । सत्तां । स्वधयां । च । शम्ऽभुः ।
तस्यं । अनुं । धर्म । प्र । यज । चिकित्वः । अथं । नः । धाः । अध्वरम् । देवऽवीतौ ॥५॥

---

१. नास्ति मूको. २. प्रज्ञः वि[1] लपं. ३. नास्ति वि[1] लपं. ४. °मर्धयः वि[1] अ[1] क; आनर्धयः वि लपं; वर्धय ल प्रस्तावः. ५. °षधसोमा° वि[1] लपं. ६. °जना° वि[1] ल लपं; आनानानि वि[2] अ[1]. ७. °नुसवं वि[1,2] अ[1]. ८. आधारम् वि[2] अ[1].

वेङ्कट० यः त्वत्तः प्रादुर्भूतः होता पुरातनः अग्ने! यष्टृतरः देवानां द्वैधम् तिष्ठन् यष्टृत्वेन च इज्यत्वेन[1] च अन्नेन देवानां सुखं भावयति, तस्य कर्मणा देवान् प्रकर्षेण यज हे चिकित्वः!। अथ अस्माकं धारय यज्ञं देवानां प्रीताविति ॥ ५ ॥

[2]इति तृतीयाष्टके प्रथमाध्याये सप्तदशो वर्गः[2] ॥

## [ १८ ]

[2]कतो वैश्वामित्र ऋषिः । अग्निर्देवता । त्रिष्टुप् छन्दः[2] ।

भवा नो अग्ने सुमना उपेतौ सखेव सख्ये पितरेव साधुः ।
पुरुद्रुहो हि क्षितयो जनानां प्रति प्रतीचीर्दहतादरातीः ॥ १ ॥

भव । नः । अग्ने । सुऽमनाः । उपऽइतौ । सखाऽइव । सख्ये । पितराऽइव । साधुः ।
पुरुऽद्रुहः । हि । क्षितयः । जनानाम् । प्रति । प्रतीचीः । दहतात् । अरातीः ॥ १ ॥

वेङ्कट० भव अस्माकम् अग्ने! शोभनमनस्कः उपगमने। यथा सखा सख्ये साधुः[3] भवति पुत्राय वा पितरौ, एवम् साधुः भव। बहुद्रोहाः[4] हि भवन्ति मनुष्याः जनानाम्। तथा सति प्रति दहतात् प्रतिमुखमागच्छन्तीः शत्रुसेनाः ॥ १ ॥

तपो ष्वग्ने अन्तराँ अमित्रान् तपा शंसमररुषः परस्य ।
तपो वसो चिकितानो अचित्तान् वि ते तिष्ठन्तामजरा अयासः ॥ २ ॥

तपो इति । सु । अग्ने । अन्तरान् । अमित्रान् । तप । शंसम् । अररुषः । परस्य ।
तपो इति । वसो इति । चिकितानः । अचित्तान् । वि । ते । तिष्ठन्ताम् । अजराः । अयासः ॥२॥

वेङ्कट० तपैव अग्ने! सुष्ठु छिद्रप्रवेशनपरान् अमित्रान्, एवमस्मभ्यम् अप्रयच्छतः शत्रोः शंसनं तप च। तपैव वासयितः! प्राज्ञस्त्वम् अस्मास्त्वपरकचित्तान्। तदर्थं तव जरावर्जिताः गमनशीला रश्मयः वि तिष्ठन्ताम् इति ॥ २ ॥

इध्मेनाग्न इच्छमानो घृतेन जुहोमि हव्यं तरसे बलाय ।
यावदीशे ब्रह्मणा वन्दमान इमां धियं शतसेयाय देवीम् ॥ ३ ॥

इध्मेन । अग्ने । इच्छमानः । घृतेन । जुहोमि । हव्यम् । तरसे । बलाय ।
यावत् । ईशे । ब्रह्मणा । वन्दमानः । इमाम् । धियम् । शतऽसेयाय । देवीम् ॥ ३ ॥

---

१. यज्यत्वेन वि[2] अ[2]; यज्यचेन वि[3] लपं; याज्यत्वेन लप्रस्तावः. २-२. नास्ति मूको. ३. साधु वि[1,3,2] लपं. ४. °द्रोहाणि वि[2] ल.

**वेङ्कट०** इध्मेन घृतेन च सह हव्यम् तुभ्यम् अग्ने! जुहोमि त्वत्तः कामान् इच्छमानः[1] तारकं बलं तवास्त्विति। यावता कालेन ईश्वरो भवामि मन्त्रेण स्तुवन्[2] एतत् [3]कर्म देवनशीलम्[3] शतलाभाय कर्तुं, तावज्जुहोमि ॥ ३ ॥

उच्छोचिषा सहसस्पुत्र स्तुतो बृहद् वयः शशमानेषु धेहि ।
रेवदग्ने विश्वामित्रेषु शं योर्मर्मृज्मा ते तन्वं१ भूरि कृत्वः ॥ ४ ॥

उत् । शोचिषा । सहसः । पुत्र । स्तुतः । बृहत् । वयः । शशमानेषु । धेहि ।
रेवत् । अग्ने । विश्वामित्रेषु । शम् । योः । मर्मृज्म । ते । तन्वम् । भूरि । कृत्वः ॥ ४ ॥

**वेङ्कट०** हे सहसः पुत्र! स्तुतः सन् महत्[4] अन्नं परिचरत्सु तेजसा [5]उत् धेहि[5] उच्छ्रितं कुरु धनवत्[6]। अग्ने! विश्वामित्रेषु अस्मासु शम् च योः च कुरु। [7]कृत्वः शब्दः[7] कृत्वसुजन्तपर्यायः। तव[8] शरीरं हविर्वहनार्थम्[9] अत्यन्तम् बहुकृत्वः वयं हव्येन मर्मृज्म[10] इति ॥ ४ ॥

कृधि रत्नं सुसनितर्धनानां स घेदग्ने भवसि यत् समिद्धः ।
स्तोतुर्दुरोणे सुभगस्य रेवत् सृप्रा करस्ना दधिषे वपूंषि ॥ ५ ॥

कृधि । रत्नम् । सुऽसनितः । धनानाम् । सः । घ । इत् । अग्ने । भवसि । यत् । सम्ऽइद्धः ।
स्तोतुः । दुरोणे । सुऽभगस्य । रेवत् । सृप्रा । करस्ना । दधिषे । वपूंषि ॥ ५ ॥

**वेङ्कट०** धनानाम् सुष्ठु दातः! अस्मभ्यम् रत्नम्[11] प्रयच्छ। सः त्वम् अग्ने! भवसि यदा समिद्धः तदा [12]स्तोतुः गृहे[12] सुहविष्कस्य[13], यथा[14] पशुमान् स्यादित्येवमर्थं हविरादाय देवान् प्रति सर्पणशीलौ[15] आत्मीयौ करौ करोषि ज्वालाश्च ॥ ५ ॥

[16]इति तृतीयाष्टके प्रथमाध्याये अष्टादशो वर्गः[16] ॥

## [ १९ ]

[16]गाथी कौशिक ऋषिः। अग्निर्देवता। त्रिष्टुप् छन्दः[16]।

अग्निं होतारं प्र वृणे मियेधे गृत्सं कविं विश्वविदममूरम् ।
स नो यक्षद् देवताता यजीयान् राये वाजाय वनते मघानि ॥ १ ॥

---

१. इच्छन् ल प्रस्तावः. २. स्तुन्वन् वि[2] अ[1] ल. ३-३. कर्मनशीलं वि[2] अ[1]; अदेवनशीलं वि[1] लपं. ४. नास्ति वि[1] लपं. ५-५. उधेहि वि[2]. ६. धनवन् वि[1] लपं. ७-७. कृत्वः वि[2] अ[1] ल. ८. ते वि[2] अ. ९. °वहार्थं मूको. १०. ममृज्म वि[2] अ[1] ल; मर्मृज वि[1]. ११. धनं वि[1] लपं. १२-१२. स्तोतृगृहे वि[2] अ[1]. १३. सहवि° अ[1]. १४. यदा वि[2] अ[1]. १५. समर्पण° वि[1] अ[1] लपं. १६-१६. नास्ति मूको.

अ॒ग्निम् । होता॑रम् । प्र । वृ॒णे॒ । मि॒येधे॑ । गृत्स॑म् । क॒विम् । वि॒श्व॒ऽविद॑म् । अमू॑रम् ।
सः । नः॒ । य॒क्ष॒त् । दे॒वऽता॑ता । यजी॑यान् । रा॒ये । वाजा॑य । व॒न॒ते॒ । म॒घानि॑ ॥ १ ॥

**वेङ्कट०** गाधी[थी] कौशिकः । अग्निम् अहं यज्ञे होतारम् प्र वृणोमि मेधाविनम् क्रान्तकर्माणम्[1] सर्वज्ञम् अमूढम् । सः नः यजतु यज्ञे[2] देवान् यष्टृतरः । स धनार्थम् अन्नार्थं च भजते हवींषि ॥ १ ॥

प्र ते॑ अग्ने ह॒विष्म॑तीमि॒यर्म्यच्छा॑ सुद्यु॒म्नां रा॒तिनीं॑ घृ॒ताचीं॑म् ।
प्र॒द॒क्षि॒णिद्दे॒वता॑तिमुरा॒णः सं रा॒तिभि॒र्वसु॑भिर्य॒ज्ञम॑श्रेत् ॥ २ ॥

प्र । ते॒ । अ॒ग्ने॒ । ह॒विष्म॑तीम् । इ॒यर्मि॑ । अच्छ॑ । सु॒ऽद्यु॒म्नाम् । रा॒तिनी॑म् । घृ॒ताची॑म् ।
प्र॒ऽद॒क्षि॒णित् । दे॒वऽता॑तिम् । उ॒रा॒णः । सम् । रा॒तिऽभिः॑ । वसु॑ऽभिः । य॒ज्ञम् । अ॒श्रे॒त् ॥२॥

**वेङ्कट०** प्र ईरयामि तुभ्यम् अग्ने ! हविष्मतीम् जुहूं तव सुयशसं दानवतीं घृतमञ्चन्तीं[3] ज्वालां प्रति । देवाः तता[4] यस्मिन् तम् यज्ञम् प्रदक्षिणम् दीयमानैः वसुभिः अग्निः सम् योजयति उराणः,[5] 'उराण उरु कुर्वाणः' इति यास्कः ( ६,१७ ) । यज्ञं परितः पशून् समानयतीत्यर्थः ॥ २ ॥

स तेजी॑यसा मन॑सा त्वोत॑ उ॒त शि॑क्ष स्वप॒त्यस्य॑ शि॒क्षोः ।
अग्ने॑ रा॒यो नृत॑मस्य॒ प्रभू॑तौ भू॒याम॑ ते सुष्टु॒तय॑श्च॒ वस्वः॑ ॥ ३ ॥

सः । तेजी॑यसा । मन॑सा । त्वाऽऊ॑तः । उ॒त । शि॒क्ष॒ । सु॒ऽअ॒प॒त्यस्य॑ । शि॒क्षोः ।
अग्ने॑ । रा॒यः । नृऽत॑मस्य । प्रऽभू॑तौ । भू॒याम॑ । ते॒ । सु॒ऽस्तु॒तयः॑ । च॒ । वस्वः॑ ॥ ३ ॥

**वेङ्कट०** सः तेजिष्ठेन मनसा संयुक्तो भवति त्वया रक्षितः[6] । [7]अपि च[7] देहि शोभनापत्यं धनम् । '[8]शिक्षोः इति[8] धनमाह, शिक्षतेर्दानकर्मणः । हे अग्ने ! धनस्य नेतृतमस्य महत्त्वे सति[9] तव सुष्टु स्तोतारः वासयितारः च वयं भवेमेति ॥ ३ ॥

भूरी॑णि॒ हि त्वे द॑धि॒रे अनी॒काऽग्ने॑ दे॒वस्य॒ यज्य॑वो॒ जना॑सः ।
स आ व॑ह दे॒वता॑तिं यविष्ठ॒ शर्धो॒ यद॒द्य दि॒व्यं यजा॑सि ॥ ४ ॥

भूरी॑णि । हि । त्वे इति॑ । द॒धि॒रे । अनी॑का । अग्ने॑ । दे॒वस्य॑ । यज्य॑वः । जना॑सः ।
सः । आ । व॒ह॒ । दे॒वऽता॑तिम् । य॒वि॒ष्ठ॒ । शर्धः॑ । यत् । अ॒द्य । दि॒व्यम् । यजा॑सि ॥ ४ ॥

---

१. क्रान्तकर्माणं वि[1] लपं. २. नास्ति वि[1] ल लपं. ३. घृतं मुञ्चतीं वि[1] अ[1]. ४. तदा वि[1,2]; स्तुता अ[1] लपं. ५. नास्ति मूको. ६. °तो भवति लपं. ७-७. नास्ति वि[1] लपं. ८-८. शिशुरिति वि लपं. ९. हि वि[1] लपं.

**वेङ्कट०** बहूनि तेजांसि त्वयि स्थापयन्ति हि[१] अग्ने! देवसङ्घस्य यष्टारः जनाः। तथा सति सः त्वम् इमं यज्ञं प्रति प्रापय युवतम![२] दिवि भवम्, यत् शर्धः अद्य[३] त्वं यजसि इति देवाभिप्रायमिति ॥४॥

यत् त्वा होतारमनजन् मियेधे निषादयन्तो यजथाय देवाः।
स त्वं नो अग्नेऽवितेह बोध्यधि श्रवांसि धेहि नस्तनूषु ॥ ५ ॥

यत्। त्वा। होतारम्। अनजन्। मियेधे। निऽसादयन्तः। यजथाय। देवाः।
सः। त्वम्। नः। अग्ने। अविता। इह। बोधि। अधि। श्रवांसि। धेहि। नः। तनूषु ॥५॥

**वेङ्कट०** यदा त्वा[३] होतारम् [४]आज्येनाऽञ्जन्ति यज्ञे यागार्थम् स्थापयन्तः देवाः, तदानीम्† सः त्वम् अस्मान् अग्ने! अस्मिन् यज्ञे सति रक्षिता बुध्यस्व। तथाऽस्माकम् अङ्गेषु हस्तयोः शिरसि च विविधान्यन्नानि अधि निधेहि[४] ॥ ५ ॥

[५]इति तृतीयाष्टके प्रथमाध्याये एकोनविंशो वर्गः[५] ॥

## [ २० ]

[५]गाथी कौशिक ऋषिः। अग्निर्देवता, प्रथमापञ्चम्योः विश्वे देवाः। त्रिष्टुप् छन्दः[५]।

अग्निमुषसमश्विना दधिक्रां व्युष्टिषु हवते वह्निरुक्थैः।
सुज्योतिषो नः शृण्वन्तु देवाः सजोषसो अध्वरं वावशानाः ॥ १ ॥

अग्निम्। उषसम्। अश्विना। दधिऽक्राम्। विऽउष्टिषु। हवते। वह्निः। उक्थैः।
सुऽज्योतिषः। नः। शृण्वन्तु। देवाः। सऽजोषसः। अध्वरम्। वावशानाः ॥ १ ॥

**वेङ्कट०** [६]अग्निप्रभृतीन् उषसः व्युष्टिषु होता आह्वयते स्तोत्रैः। शोभनदीप्तिकाः देवाः अस्मानाधातॄन् शृण्वन्तु सङ्गताः यज्ञं कामयमानाः। †सेयं वैश्वदेवी†[६] ॥ १ ॥

अग्ने त्री ते वाजिना त्री षधस्था तिस्रस्ते जिह्वा ऋतजात पूर्वीः।
तिस्र उ ते तन्वो देववातास्ताभिर्नः पाहि गिरो अप्रयुच्छन् ॥ २ ॥

अग्ने। त्री। ते। वाजिना। त्री। सधऽस्था। तिस्रः। ते। जिह्वाः। ऋतऽजात। पूर्वीः।
तिस्रः। ऊँ इति। ते। तन्वः। देवऽवाताः। ताभिः। नः। पाहि। गिरः। अप्रऽयुच्छन् ॥२॥

---

१. नास्ति वि[१] लपं. २. नास्ति मूको. ३. त्वां वि[१२]. ४-४. नास्ति वि[१] ल.प. † नास्ति वि[१] ल लपं. ५-५ नास्ति मूको. ६-६. नास्ति वि[१] लपं. †-† नास्ति ल.

वेङ्कट० [1]हे अग्ने! त्रीणि तव[1] अन्नान्याज्यौषधिसोमात्मकानि[2]। त्रीणि च तव[3] स्थानानि पृथिव्यादीनि। तथा तिस्रः तव जिह्वाः सन्ति गार्हपत्यादिकाः सत्यजनन! यज्ञाद्वा[4] जात! पुरातन्यः। तिस्रः एव ते तनवः देवैः समाश्रिताः पवमानः पावकः शुचिरिति। ताभिः अस्माकं स्तुतिवाचः रक्ष अप्रमाद्यन् ॥ २ ॥

अग्ने॒ भूरी॑णि॒ तव॑ जातवेदो॒ देव॑ स्वधावो॒ऽमृत॑स्य॒ नाम॑ ।
याश्च॑ मा॒या मा॒यिनां॑ विश्वमिन्व॒ त्वे पू॒र्वीः सं॑द॒धुः पृ॑ष्टबन्धो ॥ ३ ॥

अग्ने॑। भूरी॑णि। तव॑। जात॒ऽवे॒दः॒। देव॑। स्व॒धा॒ऽव॒ः। अ॒मृत॑स्य। नाम॑। याः। च॒। मा॒याः। मा॒यिना॑म्। वि॒श्व॒म्ऽइ॒न्व॒। त्वे इति॑। पू॒र्वीः। स॒म्ऽद॒धुः। पृ॒ष्ट॒ब॒न्धो॒ इति॑ पृष्ट॒ऽब॒न्धो॒ ॥ ३ ॥

वेङ्कट० अग्ने! बहूनि तव जातवेदः! देव![5] अन्नवन्! अमृतस्य नामानि अग्निः जातवेदाः पावक इत्यादीनि। मायावतां[6] देवानाम् याः च प्रज्ञाः सर्वव्यापिन्! त्वयि पुरातनीः देवाः संहितवन्तः, ताश्च बह्वयः पृष्टबन्धो! इति। संसृष्टबन्धुः[7] पृष्टबन्धुः इति ॥ ३ ॥

अ॒ग्निर्ने॒ता भग॑ इव क्षि॒तीनां॒ दैवी॑नां दे॒व ऋ॑तु॒पा ऋ॒तावा॑ ।
स वृ॑त्र॒हा स॒नयो॑ वि॒श्ववे॑दाः॒ पर्ष॑द्वि॒श्वाति॑ दुरि॒ता गृ॒णन्त॑म् ॥ ४ ॥

अ॒ग्निः। ने॒ता। भगः॑ऽइव। क्षि॒तीना॑म्। दैवी॑नाम्। दे॒वः। ऋ॒तु॒ऽपाः। ऋ॒त॒ऽवा॑। सः। वृ॒त्र॒ऽहा। स॒नयः॑। वि॒श्वऽवे॑दाः। पर्ष॑त्। विश्वा॑। अति॑। दुः॒ऽइ॒ता। गृ॒णन्त॑म् ॥ ४ ॥

वेङ्कट० अग्निः दैवीनाम्[8] प्रजानाम् प्रणेता भवति[9], यथा भगस्ताः प्रणयति, एवम् देवः ऋतूनां पालयिता सत्यकर्मा[10]। सः उपद्रवाणां हन्ता सम्भजनीयः सर्वज्ञः[11] अति नयतु विश्वानि दुरितानि स्तुवन्तम् ॥ ४ ॥

द॒धि॒क्राम॒ग्निमु॒षसं॑ च दे॒वीं बृह॒स्पतिं॑ सवि॒तारं॑ च दे॒वम् ।
अ॒श्विना॑ मि॒त्रावरु॑णा॒ भगं॑ च॒ वसू॑न्रु॒द्राँ आ॑दि॒त्याँ इ॒ह हु॑वे ॥ ५ ॥

द॒धि॒ऽक्राम्। अ॒ग्निम्। उ॒षस॑म्। च॒। दे॒वीम्। बृह॒स्पति॑म्। स॒वि॒तार॑म्। च॒। दे॒वम्। अ॒श्विना॑। मि॒त्रावरु॑णा। भग॑म्। च॒। वसू॑न्। रु॒द्रान्। आ॒दि॒त्यान्। इ॒ह। हु॒वे॒ ॥ ५ ॥

वेङ्कट० निगदव्याख्याता ॥ ५ ॥

[12]इति तृतीयाष्टके प्रथमाध्याये विंशो वर्गः[12] ॥

---

१-१. नास्ति वि[1] लपं. २. °आज्यौषधसोमात्म° लपं. ३. त··· वि[1]; नास्ति लपं. ४. ज्ञानाद्वा वि[1] लपं. ५. नास्ति वि[1] लपं. ६. मायाविनाम् ल प्रस्तावः. ७. संसृष्टबन्धु वि[1] लपं. ८. देवानाम् वि[2] अ[1]; देवीनाम् वि[1] लपं. ९. नास्ति वि[1]. १०. सत्यसत्य° वि[2] अ[1]. ११. सर्वज्ञ वि[2] अ[1]. १२-१२. नास्ति मूको.

[ २१ ]

[1]गाथी कौशिक ऋषिः । अग्निर्देवता । त्रिष्टुप् छन्दः, द्वितीयातृतीये अनुष्टुभौ, चतुर्थी विराड्रूपा, पञ्चमी सतोबृहती[1] ।

इमं नो यज्ञममृतेषु धेहीमा हव्या जातवेदो जुषस्व ।
स्तोकानामग्ने मेदसो घृतस्य होतः प्राशान प्रथमो निषद्य ॥ १ ॥

इमम् । नः । यज्ञम् । अमृतेषु । धेहि । इमा । हव्या । जातऽवेदः । जुषस्व ।
स्तोकानाम् । अग्ने । मेदसः । घृतस्य । होतः । प्र । अशान । प्रथमः । निऽसद्य ॥ १ ॥

**वेङ्कट०** अग्ने! अस्माकम् इदं हविः देवेषु धेहि । इमानि हवींषि जातधन! सेवस्व । हे अग्ने! वपायाः घृतस्य च स्तोकान् प्रधानयागात् पूर्वमेव निषद्य आसित्वा प्राशान भक्षय ॥ १ ॥

घृतवन्तः पावक ते स्तोकाः श्चोतन्ति मेदसः ।
स्वधर्मन् देववीतये श्रेष्ठं नो धेहि वार्यम् ॥ २ ॥

घृतऽवन्तः । पावक । ते । स्तोकाः । श्चोतन्ति । मेदसः ।
स्वऽधर्मन् । देवऽवीतये । श्रेष्ठम् । नः । धेहि । वार्यम् ॥ २ ॥

**वेङ्कट०** हे पावक! घृतयुक्ताः मेदसः स्तोकाः तुभ्यम् श्चोतन्ति । स्वभूतकर्मन्![2] यज्ञार्थम् अस्मभ्यं प्रशस्यतमं[3] धनं प्रयच्छ ॥ २ ॥

तुभ्यं स्तोका घृतश्चुतोऽग्ने विप्राय सन्त्य ।
ऋषिः श्रेष्ठः समिध्यसे यज्ञस्य प्राविता भव ॥ ३ ॥

तुभ्यम् । स्तोकाः । घृतऽश्चुतः । अग्ने । विप्राय । सन्त्य ।
ऋषिः । श्रेष्ठः । सम् । इध्यसे । यज्ञस्य । प्रऽअविता । भव ॥ ३ ॥

**वेङ्कट०** अग्ने! भजनीय! तुभ्यम् मेधाविने घृतश्चुतः मेदसः स्तोकाः भवन्ति । तैस्त्वं द्रष्टा श्रेष्ठः सम् इध्यसे । स त्वं प्रकर्षेण रक्षिता भव यज्ञस्य ॥ ३ ॥

तुभ्यं श्चोतन्त्यध्रिगो शचीवः स्तोकासो अग्ने मेदसो घृतस्य ।
कविशस्तो बृहता भानुनागा हव्या जुषस्व मेधिर ॥ ४ ॥

---

१-१. नास्ति मूको. २. स्वभूतसर्वकर्मान् वि॰ लपं. ३. प्रशस्यं वि॰ लपं

तुभ्यम् । श्चोतन्ति । अध्रिगो इत्यध्रिऽगो । शचीऽवः । स्तोकासः । अग्ने । मेदसः । घृतस्य ।
कविऽशस्तः । बृहता । भानुना । आ । अगाः । हव्या । जुषस्व । मेधिर ॥ ४ ॥

**वेङ्कट०** "अध्रिगुः ··· अधृतगमन! कर्मवन्!" इति यास्कः[1] (५, ११)। तुभ्यम् मेदसः घृतस्य च स्तोकाः श्चोतन्ति[2]। कविभिः स्तुतः त्वम्[3] अग्ने![4] महता तेजसा आ गच्छ, हव्यानि च सेवस्व यज्ञिय![5] ॥ ४ ॥

ओजिष्ठं ते मध्यतो मेद उद्भृतं प्र ते वयं ददामहे ।
श्चोतन्ति ते वसो स्तोका अधि त्वचि प्रति तान् देवशो विहि ॥ ५ ॥

ओजिष्ठम् । ते । मध्यतः । मेदः । उत्ऽभृतम् । प्र । ते । वयम् । ददामहे ।
श्चोतन्ति । ते । वसो इति । स्तोकाः । अधि । त्वचि । प्रति । तान् । देवऽशः । विहि ॥ ५ ॥

**वेङ्कट०** वपाख्यमोजस्वितमम् मेदः पशोः मध्यतः त्वदर्थम् उद्धृतम् तुभ्यमेव च वयम् प्रयच्छामः। श्चोतन्ति[6] क्षरन्ति तव त्वचः उपरि मेदसः स्तोकाः[6] हे वासयितः!, तान् देवंदेवम् प्रति गमय ॥ ५ ॥

[7]इति तृतीयाष्टके प्रथमाध्याये एकविंशो वर्गः[7] ॥

## [ २२ ]

[8]गाथी कौशिक ऋषिः। अग्निर्देवता, चतुर्थ्याः पुरीष्या अग्नयः। त्रिष्टुप् छन्दः, चतुर्थी अनुष्टुप्[8]।

अयं सो अग्निर्यस्मिन्त्सोममिन्द्रः सुतं दधे जठरे वावशानः ।
सहस्रिणं वाजमत्यं न सप्तिं ससवान्त्सन्त्स्तूयसे जातवेदः ॥ १ ॥

अयम् । सः । अग्निः । यस्मिन् । सोमम् । इन्द्रः । सुतम् । दधे । जठरे । वावशानः ।
सहस्रिणम् । वाजम् । अत्यम् । न । सप्तिम् । ससऽवान् । सन् । स्तूयसे । जातऽवेदः ॥ १ ॥

**वेङ्कट०** अयम् सः अग्निः, यस्मिन् अग्नौ हुतम् 'सुतम् सोमम्' इन्द्रः स्वजठरे स्थापयति कामयमानः। अथ प्रत्यक्षः। स त्वं सहस्रसङ्ख्याकम् अन्नम् अतनशीलम् अश्वम् इव सम्भजन् अधितिष्ठन् अस्माभिः स्तूयसे जातवेदः![1] ॥ १ ॥

अग्ने यत् ते दिवि वर्चः पृथिव्यां यदोषधीष्वप्स्वा यजत्र ।
येनान्तरिक्षमुर्वाततन्थ त्वेषः स भानुरर्णवो नृचक्षाः ॥ २ ॥

---

१-१. अध्रिगुरधृतगमन इति (°नः वि[1]) यास्कः हे कर्मवन् मूको. २. श्च्योतन्ति अ[1]. ३. नास्ति मूको. ४. अग्निः मूको. ५. यज्ञियः वि[1,2] अ[1] लपं. ६. °काः श्चोतन्ति मूको. ७-७. नास्ति मूको. ८-८. सोमं सुतम् वि[1]; सोमं ततः सुतम् वि[1] अ[1] ल लपं.

अग्ने । यत् । ते । दिवि । वर्चः । पृथिव्याम् । यत् । ओषधीषु । अप्ऽसु । आ । यजत्र ।
येन । अन्तरिक्षम् । उरु । आऽततन्थ । त्वेषः । सः । भानुः । अर्णवः । नृऽचक्षाः ॥ २ ॥

**वेङ्कट०** हे यष्टव्य अग्ने! यत् तव पृथिव्यादिषु स्थितम् वर्चः, येन वर्चसा विस्तीर्णम् अन्तरिक्षम् आ तनोषि, दीप्तः सः रश्मिः उदकवान् मनुष्याणां द्रष्टा ॥ २ ॥

अग्ने दिवो अर्णमच्छा जिगास्यच्छा देवाँ ऊचिषे धिष्ण्या ये ।
या रोचने परस्तात् सूर्यस्य याश्चावस्तादुपतिष्ठन्त आपः ॥ ३ ॥

अग्ने । दिवः । अर्णम् । अच्छ । जिगासि । अच्छ । देवान् । ऊचिषे । धिष्ण्याः । ये ।
याः । रोचने । परस्तात् । सूर्यस्य । याः । च । अवस्तात् । उपऽतिष्ठन्ते । आपः ॥ ३ ॥

**वेङ्कट०** अग्ने! द्युलोकस्य उदकम् आभिमुख्येन गच्छसि। तथा स्तुत्यर्हाः ये देवाः तान् अच्छ स्तुतीर्ब्रवीषि। याः आपः सूर्यमण्डले परस्तात् उपतिष्ठन्ते, याः च अवस्तात्[1], ताः उभयीः च आपः पातयसि अभिगच्छसि वेति[2] ॥ ३ ॥

पुरीष्यासो अग्नयः प्रावणेभिः सजोषसः । जुषन्तां यज्ञमद्रुहोऽनमीवा इषो महीः ॥४॥

पुरीष्यासः । अग्नयः । प्रवणेभिः । सऽजोषसः । जुषन्ताम् । यज्ञम् । अद्रुहः । अनमीवाः । इषः । महीः ॥४॥

**वेङ्कट०** पुरीषभवाः अग्नयः प्रवणैः अग्निचित्यायां खन्यमानैः सङ्गताः सेवन्ताम् यज्ञम् अद्रोग्धारः, अमीवारहितानि महान्ति अन्नानि चेति ॥ ४ ॥

इळामग्ने पुरुदंसं सनिं गोः शश्वत्तमं हवमानाय साध ।
स्यान्नः सूनुस्तनयो विजावाऽग्ने सा ते सुमतिर्भूत्वस्मे ॥ ५ ॥

इळाम् । अग्ने । पुरुऽदंसम् । सनिम् । गोः । शश्वत्ऽतमम् । हवमानाय । साध ।
स्यात् । नः । सूनुः । तनयः । विजाऽवा । अग्ने । सा । ते । सुऽमतिः । भूतु । अस्मे इति ॥५॥

**वेङ्कट०** ऋ ३,१,२३ द्र. ॥ ५ ॥

[3]इति तृतीयाष्टके प्रथमाध्याये द्वाविंशो वर्गः[3] ॥

## [ २३ ]

[3]देवश्रवा देववातश्च भारतौ ऋषिः । अग्निर्देवता । त्रिष्टुप् छन्दः, तृतीया सतोबृहती[3] ।

निर्मथितः सुधित आ सधस्थे युवा कविरध्वरस्य प्रणेता ।
जूर्यत्स्वग्निरजरो वनेष्वत्रा दधे अमृतं जातवेदाः ॥ १ ॥

---

१. धस्तात् लपं. २. नास्ति वि१,२ ल लपं. ३-३. नास्ति मूको.

निःऽमथितः । सुऽधितः । आ । सधऽस्थे । युवा । कविः । अध्वरस्य । प्रऽनेता ।
जूर्यत्ऽसु । अग्निः । अजरः । वनेषु । अत्र । दधे । अमृतम् । जातऽवेदाः ॥ १ ॥

**वेङ्कट०** देवश्रवा देववात इति द्वावृषी भारतौ। अरणीभ्याम् निर्मथितः सुष्ठु निहितश्च स्वस्थाने[1] युवा कविः यज्ञस्य प्रणेता जरत्सु काष्ठेष्वरण्यस्थेषु जरावर्जितः अग्निः जातधनः अस्मिन् वने अन्नम् स्थापयति। दग्धे ह्यरण्य ओषधयः प्रादुर्भवन्ति ॥ १ ॥

अमन्थिष्टां भारता रेवदग्निं देवश्रवा देववातः सुदक्षम् ।
अग्ने वि पश्य बृहताभि रायेषां नो नेता भवतादनु द्यून् ॥ २ ॥

अमन्थिष्टाम् । भारता । रेवत् । अग्निम् । देवऽश्रवाः । देवऽवातः । सुऽदक्षम् ।
अग्ने । वि । पश्य । बृहता । अभि । राया । इषाम् । नः । नेता । भवतात् । अनु । द्यून् ॥२॥

**वेङ्कट०** मथितवन्तावरणीभ्याम् भरतपुत्रौ धनयुक्तम् अग्निम् देवश्रवाः देववातः च शोभनबलम्। अग्ने! त्वम् महता धनेन अस्मान् आभिमुख्येन विविधम् पश्य, अन्नानाम् अस्माकं च[2] नेता भव दिवसेषु ॥ २ ॥

दश क्षिपः पूर्व्यं सीमजीजनन्त्सुजातं मातृषु प्रियम् ।
अग्निं स्तुहि दैववातं देवश्रवो यो जनानामसद् वशी ॥ ३ ॥

दश । क्षिपः । पूर्व्यम् । सीम् । अजीजनन् । सुऽजातम् । मातृषु । प्रियम् ।
अग्निम् । स्तुहि । दैवऽवातम् । देवऽश्रवः । यः । जनानाम् । असत् । वशी ॥ ३ ॥

**वेङ्कट०** दश अङ्गुलयः पूर्वकालभवम्[3] अग्निं सर्वतः परिगृह्य अजनयन् शोभनजननम् अरणीषु सर्वेषाम् प्रियम्[4]। तमिमं देववातपुत्रम् अग्निम् हे देवश्रवः! त्वम् स्तुहि, यः अग्निः जनानाम् भवति नेता ॥ ३ ॥

नि त्वा दधे वर आ पृथिव्या इळायास्पदे सुदिनत्वे अह्नाम् ।
दृषद्वत्यां मानुष आपयायां सरस्वत्यां रेवदग्ने दिदीहि ॥ ४ ॥

नि । त्वा । दधे । वरे । आ । पृथिव्याः । इळायाः । पदे । सुदिनऽत्वे । अह्नाम् ।
दृषत्ऽवत्याम् । मानुषे । आपयायाम् । सरस्वत्याम् । रेवत् । अग्ने । दिदीहि ॥ ४ ॥

---

१. स्थाने वि[2] अ[1] ल. २. नास्ति वि[2] अ[1] लपं. ३. °काले म° वि लपं. ४. प्रीणयन् वि[2] लपं.

**वेङ्कट०** त्वाम् नि दधे स्थापयामि पृथिव्याः उत्कृष्टे देशे देवयजने इळायाः पदे उत्तरवेद्याम् अह्नाम् सुदिनत्वे । अनभ्रत्वादह्नां[1] सुदिनत्वम् । स त्वम् अग्ने! दृषद्वत्याम् सरस्वत्याम् च धनयुक्तम् यजमानार्थम् दीप्यस्व । आपयेत्यापगाम् आह[2] परोक्षम् । देवश्रवसः स्थानं दृषद्वतीतीरे, देववातस्य सरस्वत्यामिति । अथवा तयोः कूलेषु[3] सत्रकरणमिति तत्र दीपनमिति ॥ ४ ॥

इळा॑मग्ने पुरु॒दंसं॑ स॒निं गोः श॑श्वत्त॒मं हव॑मानाय साध ।
स्यान्नः॑ सू॒नुस्तन॑यो वि॒जावाऽग्ने॒ सा ते॑ सुम॒तिर्भू॑त्व॒स्मे ॥ ५ ॥

इळा॑म् । अ॒ग्ने॒ । पु॒रु॒ऽदंस॑म् । स॒निम् । गोः । श॒श्व॒त्ऽत॒मम् । हव॑मानाय । सा॒ध॒ ।
स्यात् । नः॒ । सू॒नुः । तन॑यः । वि॒जाऽवा॑ । अग्ने॑ । सा । ते॒ । सु॒ऽम॒तिः । भू॒तु॒ । अ॒स्मे इति॑ ॥५॥

**वेङ्कट०** ऋ ३,१,२३ द्र. ॥ ५ ॥

[4]इति तृतीयाष्टके प्रथमाध्याये त्रयोविंशो वर्गः[4] ॥

## [ २४ ]

[4]विश्वामित्रो गाथिन ऋषिः । अग्निर्देवता । गायत्री छन्दः, प्रथमा अनुष्टुप्[4] ।

अग्ने॒ सह॑स्व॒ पृत॑ना अ॒भिमा॑ती॒रपा॑स्य । दु॒ष्टर॒स्तर॒न्नरा॑ती॒र्वर्चो॑ धा य॒ज्ञवा॑हसे ॥ १ ॥

अग्ने॑ । सह॑स्व । पृत॑नाः । अ॒भिऽमा॑तीः । अप॑ । अ॒स्य॒ ।
दु॒स्तरः॑ । तर॑न् । अरा॑तीः । वर्चः॑ । धाः॒ । य॒ज्ञऽवा॑हसे ॥ १ ॥

**वेङ्कट०** विश्वामित्रः । [5]अग्ने! अभिभव सेनाः†[5] शत्रूणाम्, अभिमातीः च निरस्य पृथक्कुरु । केनचिदपि तरितुमशक्यः स्वयमेव तरन् शत्रून् बलम् धेहि [6]यज्ञस्य †वोढ्रे यजमानायेति†[6] ॥ १ ॥

अग्न॑ इ॒ळा समि॑ध्यसे वी॒तिहो॑त्रो॒ अम॑र्त्यः । जु॒षस्व॒ सू नो॑ अध्व॒रम् ॥ २ ॥

अग्ने॑ । इ॒ळा । सम् । इ॒ध्य॒से॒ । वी॒तिऽहो॑त्रः । अम॑र्त्यः । जु॒षस्व॑ । सु । नः॒ । अ॒ध्व॒रम् ॥ २ ॥

**वेङ्कट०** अग्ने! त्वम् पृथिव्या सम् इध्यसे प्रिययज्ञः अमर्त्यः । सेवस्व सुष्ठु अस्माकम् यज्ञम् ॥ २ ॥

अग्ने॑ द्यु॒म्नेन॑ जागृवे॒ सह॑सः सूनवाहुत । एदं ब॒र्हिः स॑दो॒ मम॑ ॥ ३ ॥

अग्ने॑ । द्यु॒म्नेन॑ । जा॒गृ॒वे॒ । सह॑सः । सू॒नो॒ इति॑ । आ॒ऽहु॒त॒ । आ । इ॒दम् । ब॒र्हिः । स॒दः॒ । मम॑ ॥३॥

**वेङ्कट०** अग्ने! जागरणशील! सहसः पुत्र! अन्नेन आहुत! मम इदम् बर्हिः आ सीदेति ॥ ३ ॥

अग्ने॒ विश्वे॑भिर॒ग्निभि॑र्दे॒वेभि॑र्महया॒ गिरः॑ । य॒ज्ञेषु॒ य उ॑ चा॒यवः॑ ॥ ४ ॥

---

१. अनभ्रत्वा° वि[2] ल लपं; अनभृत्वा° वि[2] अ[1]. २. नास्ति लपं. ३. कुलेषु मूको. ४-४. नास्ति मूको. ५-५. नास्ति वि[1]. † नास्ति लपं. ६-६. यज्ञवोढ्यज° वि लपं. †-† वोढ्यज° अ[1].

अग्ने । विश्वेभिः । अग्निऽभिः । देवेभिः । महय । गिरः । यज्ञेषु । ये । ऊँ इति । चायवः ॥४॥

**वेङ्कट०** अग्ने! सर्वैः अग्निभिः सर्वैः [1]च† देवैः[1] सह मदीयाः स्तुतीः पूजय, ये[2] चाऽन्ये यज्ञेषु मनुष्यैश्चायनीयाः पूजनीयाः तैश्च सहेति ॥ ४ ॥

अग्ने दा दाशुषे रयिं वीरवन्तं परीणसम् । शिशीहि नः सूनुमतः ॥ ५ ॥

अग्ने । दाः । दाशुषे । रयिम् । वीरऽवन्तम् । परीणसम् । शिशीहि । नः । सूनुऽमतः ॥ ५ ॥

**वेङ्कट०** अग्ने! प्रयच्छ यजमानाय धनम् पुत्रवत् बहु । तीक्ष्णीकुरु च अस्मान् पुत्रयुक्तानिति[3] ॥ ५ ॥

[4]इति तृतीयाष्टके प्रथमाध्याये चतुर्विंशो वर्गः[4] ॥

[ २५ ]

[4]विश्वामित्रो गाथिन ऋषिः । अग्निर्देवता, चतुर्थ्या अग्नीन्द्रौ । विराट् छन्दः[4] ।

अग्ने दिवः सूनुरसि प्रचेतास्तना पृथिव्या उत विश्ववेदाः ।
ऋधग्देवाँ इह यजा चिकित्वः ॥ १ ॥

अग्ने । दिवः । सूनुः । असि । प्रऽचेताः । तना । पृथिव्याः । उत । विश्वऽवेदाः ।
ऋधक् । देवान् । इह । यज । चिकित्वः ॥ १ ॥

**वेङ्कट०** 'दिवस्परि प्रथमं जज्ञे अग्निः' (ऋ १०,४५,१) इति मन्त्रः । अग्ने! त्वम् दिवः पुत्रः असि प्रवृद्धज्ञानः, तनयः पृथिव्याः, अपि च विश्वधनः । स त्वं पृथक् देवान् अस्मिन् यज्ञे यज हे ज्ञातः! ॥ १ ॥

अग्निः सनोति वीर्याणि विद्वान्त्सनोति वाजममृताय भूषन् ।
स नो देवाँ एह वहा पुरुक्षो ॥ २ ॥

अग्निः । सनोति । वीर्याणि । विद्वान् । सनोति । वाजम् । अमृताय । भूषन् ।
सः । नः । देवान् । आ । इह । वह । पुरुक्षो इति पुरुऽक्षो ॥ २ ॥

**वेङ्कट०** अग्निः प्रयच्छति वीर्याणि जानन् प्रयच्छति च अन्नम् अमृतत्वाय भवन् । सः त्वम् अस्माकम् देवान् इह आ वह हे बहुस्तुते![5] ॥ २ ॥

अग्निर्द्यावापृथिवी विश्वजन्ये आ भाति देवी अमृते अमूरः ।
क्षयन् वाजैः पुरुश्चन्द्रो नमोभिः ॥ ३ ॥

---

१-१. नास्ति वि[1]. † नास्ति लपं. २. नास्ति वि[2] अ[1]. ३. °युक्तमिति वि[2] अ[1].
४-४. नास्ति मूको. ५. बहुहुते वि[1] लपं.

अग्निः । द्यावापृथिवी इति । विश्वजन्ये इति विश्वऽजन्ये । आ । भाति । देवी इति । अमृते इति । अमूरः । क्षयन् । वाजैः । पुरुऽचन्द्रः । नमःऽभिः ॥ ३ ॥

**वेङ्कट०** अग्निः द्यावापृथिवी विश्वजनहिते आ[1] भासयति देवी अमर्त्ये अमूढः निवसन् अन्नैः[2] नमस्कारैश्च बह्वाह्लादः ॥ ३ ॥

**अग्न इन्द्रश्च दाशुषो दुरोणे सुतावतो यज्ञमिहोप यातम् ।**
**अमर्धन्ता सोमपेयाय देवा ॥ ४ ॥**

अग्ने । इन्द्रः । च । दाशुषः । दुरोणे । सुतऽवतः । यज्ञम् । इह । उप । यातम् ।
अमर्धन्ता । सोमऽपेयाय । देवा ॥ ४ ॥

**वेङ्कट०** अग्ने ! त्वम् इन्द्रः च सुतवतः प्रयच्छतो यजमानस्य गृहे यज्ञम् प्रति इह उप आगच्छतम् अक्रुध्यन्तौ सोमपानार्थम् हे देवौ ! ॥ ४ ॥

**अग्ने अपां समिध्यसे दुरोणे नित्यः सूनो सहसो जातवेदः ।**
**सधस्थानि महयमान ऊती ॥ ५ ॥**

अग्ने । अपाम् । सम् । इध्यसे । दुरोणे । नित्यः । सूनो इति । सहसः । जातऽवेदः ।
सधऽस्थानि । महयमानः । ऊती ॥ ५ ॥

**वेङ्कट०** अग्ने ! अपाम् स्थानेऽन्तरिक्षे सम् इध्यसे अनवरतः हे सहसः पुत्र जातवेदः ! पूजयन् त्रीँल्लोकान् रक्षणेन ॥ ५ ॥

[3]इति तृतीयाष्टके प्रथमाध्याये पञ्चविंशो वर्गः[3] ॥

## [ २६ ]

[3]विश्वामित्रो गाथिन ऋषिः, सप्तम्या आत्मा । आद्यानां तिसृणां वैश्वानरोऽग्निर्देवता, चतुर्थीपञ्चमीषष्ठीनां मरुतः, सप्तम्यष्टम्योः आत्मा अग्निर्वा, नवम्या विश्वामित्रोपाध्यायः । जगती छन्दः, अन्त्यास्तिस्रः त्रिष्टुभः[3] ।

**वैश्वानरं मनसाग्निं निचाय्या हविष्मन्तो अनुषत्यं स्वर्विदम् ।**
**सुदानुं देवं रथिरं वसूयवो गीर्भी रण्वं कुशिकासो हवामहे ॥ १ ॥**

वैश्वानरम् । मनसा । अग्निम् । निऽचाय्य । हविष्मन्तः । अनुऽसत्यम् । स्वःऽविदम् ।
सुऽदानुम् । देवम् । रथिरम् । वसुऽयवः । गीःऽभिः । रण्वम् । कुशिकासः । हवामहे ॥ १ ॥

---

१. नास्ति मूको. २. नास्ति वि''[2] अ' लपं. ३-३. नास्ति मूको.

**वेङ्कट०** वैश्वानरम् मनसा अग्निम् पूजयित्वा हविष्मन्तः सत्यानुगतम्[1] सर्वविदम् शोभनदानम् देवम् रथवन्तम् धनकामाः स्तुतिभिः रमणीयम् कुशिकवंशजाता वयम् ह्वामहे ॥ १ ॥

तं शुभ्रमग्निमवसे हवामहे वैश्वानरं मातरिश्वानमुक्थ्यम् ।
बृहस्पतिं मनुषो देवतातये विप्रं श्रोतारमतिथिं रघुष्यदम् ॥ २ ॥

तम् । शुभ्रम् । अग्निम् । अवसे । हवामहे । वैश्वानरम् । मातरिश्वानम् । उक्थ्यम् ।
बृहस्पतिम् । मनुषः । देवऽतातये । विप्रम् । श्रोतारम् । अतिथिम् । रघुऽस्यदम् ॥ २ ॥

**वेङ्कट०** तम्[2] शोभमानम् अग्निम् रक्षणाय आह्वयामः वैश्वानरम् अन्तरिक्षे श्वसन्तमादित्यरूपम् स्तुत्यम् बृहतः[3] पतिम् मनुष्यस्य यज्ञाय मेधाविनम् स्तुतीनाम् श्रोतारम् यजमानानाम् अतिथिम् शीघ्रं स्यन्दमानं लघुजवं वा ॥ २ ॥

अश्वो न क्रन्दञ्जनिभिः समिध्यते वैश्वानरः कुशिकेभिर्युगेयुगे ।
स नो अग्निः सुवीर्यं स्वश्व्यं दधातु रत्नममृतेषु जागृविः ॥ ३ ॥

अश्वः । न । क्रन्दन् । जनिऽभिः । सम् । इध्यते । वैश्वानरः । कुशिकेभिः । युगेऽयुगे ।
सः । नः । अग्निः । सुऽवीर्यम् । सुऽअश्व्यम् । दधातु । रत्नम् । अमृतेषु । जागृविः ॥ ३ ॥

**वेङ्कट०** अश्वः इव शब्दायमानो घासैः अग्निः अन्नैः सम् इध्यते जातैः कुशिकैः वैश्वानरः युगे-युगे[4] पुत्रः पिता तत्पिता च सर्वे एव यजमाना एनं प्रज्वलयन्ति । सः अस्मभ्यम् शोभनवीर्यम् शोभनाश्वयुक्तम् च रत्नम् प्रयच्छतु देवेषु जागरणशीलः ॥ ३ ॥

प्र यन्तु वाजास्तविषीभिरग्नयः शुभे संमिश्लाः पृषतीरयुक्षत ।
बृहदुक्षो मरुतो विश्ववेदसः प्र वेपयन्ति पर्वताँ अदाभ्याः ॥ ४ ॥

प्र । यन्तु । वाजाः । तविषीभिः । अग्नयः । शुभे । सम्ऽमिश्लाः । पृषतीः । अयुक्षत ।
बृहत्ऽउक्षः । मरुतः । विश्वऽवेदसः । प्र । वेपयन्ति । पर्वतान् । अदाभ्याः ॥ ४ ॥

**वेङ्कट०** मारुतस्तृचः । प्र गच्छन्तु[5] बलिनः वैद्युताः अग्नयः, मरुद्भिः उदकार्थम् सङ्गताः आत्मीया अश्वाः योजयन्तु । प्रभूतं सिञ्चन्तः मरुतः[6] सर्वस्य वेदितारः केनचिदप्यहिंसिताः प्र कम्पयन्ति मेघान् ॥ ४ ॥

---

१. सत्यागतं वि[1] लपं. २. नास्ति वि[1] लपं. ३. बृहता वि[1] लपं. ४. °गे पोष्यते वि[1] अ[1] ल. ५. यच्छन्तु वि[1] लपं. ६. नास्ति मूको.

अग्निश्रियो मरुतो विश्वकृष्टय आ त्वेषमुग्रमव ईमहे वयम् ।
ते स्वानिनो रुद्रिया वर्षनिर्णिजः सिंहा न हेषक्रतवः सुदानवः ॥ ५ ॥

अग्निऽश्रियः । मरुतः । विश्वऽकृष्टयः । आ । त्वेषम् । उग्रम् । अवः । ईमहे । वयम् ।
ते । स्वानिनः । रुद्रियाः । वर्षऽनिर्निजः । सिंहाः । न । हेषऽक्रतवः । सुऽदानवः ॥ ५ ॥

**वेङ्कट०** वैद्युतमग्निं श्रयन्तः विश्वस्य कर्तारः मरुतः । तेषां दीप्तम् उद्गूर्णं गमनम् वयम् आ याचामहे । ते शब्दवन्तः रुद्रपुत्राः वर्षरूपाः सिंहाः इव शब्दायमाना गमनकर्माणः(?)[१] शोभनदानाः ॥ ५ ॥

[२]इति तृतीयाष्टके प्रथमाध्याये षड्विंशो वर्गः[२] ॥

व्रातंव्रातं गणंगणं सुशस्तिभिरग्नेर्भामं मरुतामोज ईमहे ।
पृषदश्वासो अनवभ्रराधसो गन्तारो यज्ञं विदथेषु धीराः ॥ ६ ॥

व्रातम्ऽव्रातम् । गणम्ऽगणम् । सुशस्तिऽभिः । अग्नेः । भामम् । मरुताम् । ओजः । ईमहे ।
पृषत्ऽअश्वासः । अनवभ्रऽराधसः । गन्तारः । यज्ञम् । विदथेषु । धीराः ॥ ६ ॥

**वेङ्कट०** नानाजातीयानां जनानां संघातो व्रातः, समानजातीयानां गणः । अग्नेः भानहेतुम् मरुताम् ओजः वयं स्तुतिभिः धनानि व्रातंव्रातम्[३] गणंगणं च याचामहे । ते मरुतः पृषद्वर्णाश्वाः अनपभ्रंशितधनाः गन्तारः यज्ञम् यजमानगृहेषु धृष्टाः ॥ ६ ॥

अग्निरस्मि जन्मना जातवेदा घृतं मे चक्षुरमृतं म आसन् ।
अर्कस्त्रिधातू रजसो विमानोऽजस्रो घर्मो हविरस्मि नाम ॥ ७ ॥

अग्निः । अस्मि । जन्मना । जातऽवेदाः । घृतम् । मे । चक्षुः । अमृतम् । मे । आसन् ।
अर्कः । त्रिऽधातुः । रजसः । विऽमानः । अजस्रः । घर्मः । हविः । अस्मि । नाम ॥ ७ ॥

**वेङ्कट०** आत्मानं ब्रह्मावगच्छन्[४] वदति । अग्निः जातवेदाः[५] अहम् अस्मि जन्मना एव तत्त्वतः । तस्य मम चक्षुः घृतम् भवति, यच्चक्षुषा पश्यामि तेनाऽऽज्येनाग्निरिव प्रीतो भवामि । हविःस्थानीयमन्नम् मम आस्येऽन्वहं प्रक्षिप्यते । तथा स्तोतव्यः त्रिगुणः प्राणापानव्यानात्मकः अन्तरिक्षलोकस्य निर्माता वायुश्चाऽस्मि । तथाऽनवरतः[६] क्षरद्दीप्तिः[७] आदित्यश्चाऽहमस्मि[८] । तिस्र एवेह देवताः, ता अहमिति । तथाऽग्न्यादिनामकम्[९] हविः च अहमेव अस्मि ॥ ७ ॥

---

१. गमनकर्क° वि[१]. २-२. नास्ति मूको. ३. व्रातं ··· वि[२]; प्रातं ··· अ[१]. ४. नास्ति वि[२] अ[१] ल. ५. नास्ति मूको. ६. तदानुपदस्ताऽनवरतः वि[२] अ[१]. ७. क्षरदीप्तिः वि[२] अ[१]; अक्षरदीप्तिः ल. ८. °मस्मीति वि[२] अ[१]. ९. °ग्न्यादीनां नामकम् वि[२] अ[१].

त्रिभिः पवित्रैरपुपोद्ध्य१र्कं हृदा मतिं ज्योतिरनु प्रजानन् ।
वर्षिष्ठं रत्नमकृत स्वधाभिरादिद् द्यावापृथिवी पर्यपश्यत् ॥ ८ ॥

त्रिऽभिः । पवित्रैः । अपुपोत् । हि । अर्कम् । हृदा । मतिम् । ज्योतिः । अनु । प्रऽजानन् ।
वर्षिष्ठम् । रत्नम् । अकृत । स्वधाभिः । आत् । इत् । द्यावापृथिवी इति । परि । अपश्यत् ॥८॥

**वेङ्कट०** हृदयेन पूज्यम् आत्माख्यं ज्योतिः अनु प्रजानन् मनुष्यः त्रिभिः पवित्रैः अग्निवायुसूर्यैः दशापवित्रेण सोममिवार्चनीयमात्माख्यम् ज्योतिः शोधयति हि । त्रिभिरेतैः परिवृतः[1] परमात्मेत्यवगच्छति । एक एव महानात्मा भवत्यग्निवायुसूर्यशरीर इति । तथा च[2] जानन् वृद्धतरम् गवादिकम् रत्नम् अन्नैः सह आत्मनि करोति । तथैकत्रैवाऽवस्थितोऽनन्तरम् एव द्यावापृथिवी परितः पश्यति ॥ ८ ॥

शतधारमुत्समक्षीयमाणं विपश्चितं पितरं वक्त्वानाम् ।
मेळिं मदन्तं पित्रोरुपस्थे तं रोदसी पिपृतं सत्यवाचम् ॥ ९ ॥

शतऽधारम् । उत्सम् । अक्षीयमाणम् । विपःऽचितम् । पितरम् । वक्त्वानाम् ।
मेळिम् । मदन्तम् । पित्रोः । उपऽस्थे । तम् । रोदसी इति । पिपृतम् । सत्यऽवाचम् ॥ ९ ॥

**वेङ्कट०** इयं ब्रह्मविद्याप्रदातुरुपाध्यायस्य स्तुतिः । बहूनामर्थानामुपदेशेऽप्यक्षीयमाणः अनेकज्ञानोदकधारः उत्स इव भवत्युपाध्यायः, तम् प्राज्ञम् वक्तव्यानाम् पितरम् उत्पत्तिस्थानम्[3] वाचो मिश्रयितारं शिष्यस्य [4]द्यावापृथिव्योरुभयोरपि उत्सङ्गे मादयन्तम् तम् इमम् पारयतम्† हे द्यावापृथिवी![4], यः सत्यमेव वक्तीति ॥ ९ ॥

[5]इति तृतीयाष्टके प्रथमाध्याये सप्तविंशो वर्गः[5] ॥

## [ २७ ]

[5]विश्वामित्रो गाथिन ऋषिः । अग्निः ऋतवो वा देवता । गायत्री छन्दः[5] ।

प्र वो वाजा अभिद्यवो हविष्मन्तो घृताच्या । देवाञ्जिगाति सुम्नयुः ॥ १ ॥

प्र । वः । वाजाः । अभिऽद्यवः । हविष्मन्तः । घृताच्या । देवान् । जिगाति । सुम्नऽयुः ॥ १ ॥

**वेङ्कट०** 'सैषा ××× आग्नेयी सत्यनिरुक्ता' ( माश १,४,१,२६) इति वाजसनेयकम् । 'आद्या ऋतुदेवता वा' (तु० ऋअ २,३,२७) इत्युक्तमिति । 'मासा वै वाजा अर्धमासा अभिद्यवो देवा हविष्मन्तो गौर्घृताची' (तै २,५,७,४) इति[6] ब्राह्मणम् । घृताच्या सह युष्माकम् एते यज्ञकारणभूता वाजादयः

---

१. परिविवृतं लपं. २. नास्ति लपं. ३. ··· नम् वि[2]; नास्ति अ[1]. ४-४. द्यावापृथि अ[1].
† °यतं नयतम् मूको. ५-५. नास्ति मूको. ६. नास्ति वि लपं.

प्र भवन्ति देवाश्च । यज्ञेन सुम्नमिच्छन् यजमानः गच्छति । 'यजमानो वै सुम्नयुः [1]स हि देवान् जिगीषति, स हि देवान् जिघांसति[1] ( माश१,४,१,२१ [ तु. तै २,५,७,४]) इति ब्राह्मणम् । 'पशवो हविष्मन्तः स्रुग्घृताची' ( तु. माश १,४,१,९ ) इति वाजसनेयकमित्युत्तरत्र सम्बन्धः ॥ १ ॥

ईळे॑ अ॒ग्निं वि॑प॒श्चितं॑ गि॒रा य॒ज्ञस्य॒ साध॑नम् । श्रु॒ष्टी॒वानं॑ धि॒ताव॑नम् ॥ २ ॥

ईळे॑ । अ॒ग्निम् । वि॒पः॒ऽचित॑म् । गि॒रा । य॒ज्ञस्य॑ । साध॑नम् । श्रु॒ष्टी॒ऽवान॑म् । धि॒त॒ऽवान॑म् ॥२॥

वेङ्कट० स्तौमि अग्निम् प्राज्ञं स्तोत्रेण यज्ञस्य साधयितारं क्षिप्रकर्मयुक्तं निहितहविष्कं यजमानैः ॥ २ ॥

अग्ने॑ श॒केम॑ ते व॒यं यमं॑ दे॒वस्य॑ वा॒जिनः॑ । अति॒ द्वेषां॑सि तरेम ॥ ३ ॥

अग्ने॑ । श॒केम॑ । ते॒ । व॒यम् । यम॑म् । दे॒वस्य॑ । वा॒जिनः॑ । अति॑ । द्वेषां॑सि । त॒रे॒म॒ ॥ ३ ॥

वेङ्कट० अग्ने ! वयम् कर्तुं समर्था भवाम सद्ग्रहणं तव देवस्य बलवतः । अति शत्रून् तरेम तव प्रसादात् ॥ ३ ॥

स॒मि॒ध्यमा॑नो अध्व॒रे॒३॒॑ग्निः पा॑व॒क ईड्यः॑ । शो॒चिष्के॑श॒स्तमी॑महे ॥ ४ ॥

स॒म्ऽइ॒ध्यमा॑नः । अ॒ध्व॒रे । अ॒ग्निः । पा॒व॒कः । ईड्यः॑ । शो॒चिःऽके॑शः । तम् । ई॒म॒हे॒ ॥ ४ ॥

वेङ्कट० निगदव्याख्याता ॥ ४ ॥

पृ॒थुपा॑जा॒ अम॑र्त्यो घृ॒तनि॑र्णि॒क् स्वा॑हुतः । अ॒ग्निर्य॒ज्ञस्य॑ हव्य॒वाट् ॥ ५ ॥

पृ॒थु॒ऽपाजाः॑ । अम॑र्त्यः । घृ॒तऽनि॑र्निक् । सुऽआ॑हुतः । अ॒ग्निः । य॒ज्ञस्य॑ । ह॒व्य॒ऽवाट् ॥ ५ ॥

वेङ्कट० पृथुतेजाः अमर्त्यः क्षरद्रूपः सुष्ठु आहुतः अग्निः यज्ञस्य हविषो वोढा । [2]उत्तरत्र सम्बन्धः[2] ॥ ५ ॥

[3]इति तृतीयाष्टके प्रथमाध्याये अष्टाविंशो वर्गः[3] ॥

तं स॒बाधो॑ य॒तस्रु॑च इ॒त्था धि॒या य॒ज्ञव॑न्तः । आ च॑क्रुर॒ग्निमू॒तये॑ ॥ ६ ॥

तम् । स॒ऽबाधः॑ । य॒तऽस्रु॑चः । इ॒त्था । धि॒या । य॒ज्ञऽव॑न्तः । आ । च॒क्रुः॒ । अ॒ग्निम् । ऊ॒तये॑ ॥६॥

वेङ्कट० तम् अग्निं बाधासहिताः शत्रुभिः पीड्यमानाः गृहीतस्रुचः इत्थं कर्मणा यज्ञवन्तः आभिमुख्येन चक्रुः रक्षणाय ॥ ६ ॥

---

१-१. स देवान् जिजीषति स देवान् जिगांसति मूको. २-२. उत्तरस्व° लपं. ३-३. नास्ति मूको.

होता देवो अमर्त्यः पुरस्तादेति मायया । विदथानि प्रचोदयन् ॥ ७ ॥

होता । देवः । अमर्त्यः । पुरस्तात् । एति । मायया । विदथानि । प्रऽचोदयन् ॥ ७ ॥

**वेङ्कट०** होता देवः अमर्त्यः **अस्य प्रणीयमानस्य** पुरस्तात् **गच्छति** मायया **अपि, असुरराक्षसानां वधार्थं मायायोगः, प्रज्ञानानि ऋत्विजाम्** प्रचोदयन् ॥ ७ ॥

वाजी वाजेषु धीयतेऽध्वरेषु प्र णीयते । विप्रो यज्ञस्य साधनः ॥ ८ ॥

वाजी । वाजेषु । धीयते । अध्वरेषु । प्र । नीयते । विप्रः । यज्ञस्य । साधनः ॥ ८ ॥

**वेङ्कट०** **बलवान् सङ्ग्रामेषु पुरः** धीयते, **यज्ञेषु च**[1] **प्राच्यां दिशि** नीयते[2] **मेधावी** यज्ञस्य **साधयिता** ॥ ८ ॥

धिया चक्रे वरेण्यो भूतानां गर्भमा दधे । दक्षस्य पितरं तना ॥ ९ ॥

धिया । चक्रे । वरेण्यः । भूतानाम् । गर्भम् । आ । दधे । दक्षस्य । पितरम् । तना ॥ ९ ॥

**वेङ्कट०** **प्रज्ञया कृतः वरणीयोऽग्निः इत्येतद्विशदमाह —** भूतानाम् **इति ।** दक्षस्य **मनोः तनया इळा नाम अग्निं सर्वेषाम्** भूतानाम् गर्भम् **पातारम् यज्ञे** आ दधे **इति । अस्योत्तरा भूयसे निर्वचनाय** ॥ ९ ॥

नि त्वा दधे वरेण्यं दक्षस्येळा सहस्कृत । अग्ने सुदीतिमुशिजम् ॥ १० ॥

नि । त्वा । दधे । वरेण्यम् । दक्षस्य । इळा । सहःऽकृत । अग्ने । सुऽदीतिम् । उशिजम् ॥ १० ॥

**वेङ्कट०** नि दधे **त्वाम्** वरणीयम् दक्षस्य **मनोः** इळा **नाम दुहिता हे बलेनोत्पादित** अग्ने! **शोभन-दीप्तिम् कामयमानं हवींषि** ॥ १० ॥

**[3]इति तृतीयाष्टके प्रथमाध्याये एकोनत्रिंशो वर्गः[3]** ॥

अग्निं यन्तुरमप्तुरमृतस्य योगे वनुषः । विप्रा वाजैः समिन्धते ॥ ११ ॥

अग्निम् । यन्तुरम् । अप्ऽतुरम् । ऋतस्य । योगे । वनुषः । विप्राः । वाजैः । सम् । इन्धते ॥ ११ ॥

**वेङ्कट०** अग्निम् **यन्तारं व्यापनशीलं यज्ञस्य प्रारम्भे वननीयस्य मेधाविनः अन्नैः** सम् इन्धते ॥ ११ ॥

ऊर्जो नपातमध्वरे दीदिवांसमुप द्यवि । अग्निमीळे कविक्रतुम् ॥ १२ ॥

ऊर्जः । नपातम् । अध्वरे । दीदिऽवांसम् । उप । द्यवि । अग्निम् । ईळे । कविऽक्रतुम् ॥ १२ ॥

---

१. नास्ति लपं. २. निधीयते वि° लपं. ३-३. नास्ति मूको.

**वेङ्कट०** ऊर्जः पुत्रम् यज्ञे दीप्यमानम् स्वस्थाने उत्तरवेद्याः समीपे अग्निम् स्तौमि क्रान्तप्रज्ञम् ॥ १२ ॥

ई॒ळेन्यो॑ नम॒स्य॑स्ति॒रस्तमां॑सि द॒र्श॒तः । सम॒ग्निरि॑ध्यते॒ वृषा॑ ॥ १३ ॥

ई॒ळेन्यः॑ । न॒म॒स्यः॑ । ति॒रः । तमां॑सि । द॒र्श॒तः । सम् । अ॒ग्निः । इ॒ध्य॒ते॒ । वृषा॑ ॥ १३ ॥

**वेङ्कट०** **ईडयश्च नमस्कार्यश्च** तमांसि[1] तिरः **दर्शयिता** । [2]"तिर इव ह्येष तमांसि समिद्धो ददृशे"[2] ( माश १, ४, १, २९ ) **इति वाजसनेयकम्** । **सोऽयम्** अग्निः सम् इध्यते **यज्ञे कामानां वर्षिता** ॥ १३ ॥

वृषो॑ अ॒ग्निः समि॑ध्यते॒ऽश्वो॒ न दे॑व॒वाह॑नः । तं ह॒विष्म॑न्त ईळते ॥ १४ ॥

वृषो॒ इति॑ । अ॒ग्निः । सम् । इ॒ध्य॒ते॒ । अश्वः॑ । न । दे॒व॒ऽवाह॑नः । तम् । ह॒विष्म॑न्तः । ई॒ळ॒ते॒ ॥ १४ ॥

**वेङ्कट०** [3]अश्वो ह वा एष भूत्वा देवेभ्यो यज्ञं वहति[3] ( माश १,४,१,३० ) **इति वाजसनेयकम्** । **वृषा अयम्** अग्निः सम् इध्यते अश्वः इव **हविषां वोढा**, तम् **इमम्** हविष्मन्तः **मनुष्याः स्तुवन्ति** ॥ १४ ॥

वृष॑णं त्वा व॒यं वृ॑षन् वृष॑णः॒ समि॑धीमहि । अग्ने॒ दीद्य॑तं बृ॒हत् ॥ १५ ॥

वृष॑णम् । त्वा॒ । व॒यम् । वृ॒ष॒न् । वृष॑णः । सम् । इ॒धी॒म॒हि॒ । अग्ने॑ । दीद्य॑तम् । बृ॒हत् ॥ १५ ॥

**वेङ्कट०** **कामानां वर्षितारम् त्वाम्**[4] वयम् वृषन्![5] **हविषां वर्षितारः** सम् इधीमहि अग्ने! **दीप्यमानम् बृहन्तम्** ॥ १५ ॥

[6]इति तृतीयाष्टके प्रथमाध्याये त्रिंशो वर्गः[6] ।

## [ २८ ]

[6]विश्वामित्रो गाथिन ऋषिः । अग्निर्देवता । गायत्री छन्दः, तृतीया उष्णिक्, चतुर्थी त्रिष्टुप्, पञ्चमी जगती[6] ।

अग्ने॒ जु॒षस्व॑ नो ह॒विः पु॒रो॒ळाशं॑ जातवेदः । प्रा॒तः॒सा॒वे धि॑यावसो ॥ १ ॥

अग्ने॑ । जु॒षस्व॑ । नः॒ । ह॒विः । पु॒रो॒ळाश॑म् । जा॒त॒ऽवे॒दः॒ । प्रा॒तः॒ऽसा॒वे । धि॒या॒व॒सो॒ इति॑ धियाऽवसो ॥

**वेङ्कट०** अग्ने! **सेवस्व** नः हविः **पुरोडाशाख्यम्** जातवेदः! **प्रातः सोमस्याऽभिषवे प्रातः-सवने कर्मवसो!** ॥ १ ॥

---

१. तमांसीति **वि**[२] **अ**[१]. २-२. निरो ह्येष तमांसि ददृशे समिद्धः ( समिध्यते **वि**[१] लपं ) **मूको.** ३-३. °ष भूतो देवेभ्यो हव्यं व° **मूको.** † हव्यं **मूको.** ४. त्वा **वि**[१]. ५. **नास्ति मूको.** ६-६. **नास्ति मूको.**

पुरोळा अग्ने पचतस्तुभ्यं वा घा परिष्कृतः । तं जुषस्व यविष्ठ्य ॥ २ ॥

पुरोळाः । अग्ने । पचतः । तुभ्यम् । वा । घ । परिऽकृतः । तम् । जुषस्व । यविष्ठ्य ॥ २ ॥

**वेङ्कट०** पुरोडाशः [1]अग्ने! यः[1] पक्वः तुभ्यम् एव आज्येन संस्कृतः । तम् सेवस्व युवतम! । आश्विनशस्त्रान्ते सपुरोडाशेन ग्रहेण[2] चरन्ति । तत्र सूत्रम्—"'पुरोळा अग्ने पचतः' ( ऋ ३,२८,२ ) 'अग्ने! वृधान आहुतिम्'[3] ( ऋ ३,२८,६ ) इति संयाज्ये" ( आश्रौ ६,५,२५ ) इति ॥ २ ॥

अग्ने वीहि पुरोळाशमाहुतं तिरोअह्न्यम् । सहसः सूनुरस्यध्वरे हितः ॥ ३ ॥

अग्ने । वीहि । पुरोळाशम् । आऽहुतम् । तिरःऽअह्न्यम् । सहसः । सूनुः । असि । अध्वरे । हितः ॥ ३ ॥

**वेङ्कट०** इयं तत्र वैकल्पिकी भवति । अग्ने! भक्षय पुरोडाशम् आहुतम् प्राप्तेऽहनि भवम् । सहसः पुत्रः त्वं निहितः [4]असि यज्ञे[4] ॥ ३ ॥

माध्यंदिने सवने जातवेदः पुरोळाशमिह कवे जुषस्व ।
अग्ने यह्वस्य तव भागधेयं न प्र मिनन्ति विदथेषु धीराः ॥ ४ ॥

माध्यन्दिने । सवने । जातऽवेदः । पुरोळाशम् । इह । कवे । जुषस्व ।
अग्ने । यह्वस्य । तव । भागऽधेयम् । न । प्र । मिनन्ति । विदथेषु । धीराः ॥ ४ ॥

**वेङ्कट०** माध्यन्दिने सवने जातवेदः! कवे! पुरोडाशम् अस्मिन् यज्ञे सेवस्व[5] । अग्ने! महतः तव भागधेयम् न प्र हिंसन्ति यज्ञेषु प्राज्ञाः ॥ ४ ॥

अग्ने तृतीये सवने हि कानिषः पुरोळाशं सहसः सूनवाहुतम् ।
अथा देवेष्वध्वरं विपन्यया धा रत्नवन्तममृतेषु जागृविम् ॥ ५ ॥

अग्ने । तृतीये । सवने । हि । कानिषः । पुरोळाशम् । सहसः । सूनो इति । आऽहुतम् ।
अथ । देवेषु । अध्वरम् । विपन्यया । धाः । रत्नऽवन्तम् । अमृतेषु । जागृविम् ॥ ५ ॥

**वेङ्कट०** अग्ने! तृतीये हि सवने कामयसे पुरोडाशम् हे सहसः पुत्र! आहुतम् । अथ[6] देवेषु यज्ञम् त्वदीयया स्तुत्या धेहि रत्नयुक्तम् देवेषु रक्षणाय जागरणशीलमिति ॥ ५ ॥

अग्ने वृधान आहुतिं पुरोळाशं जातवेदः । जुषस्व तिरोअह्न्यम् ॥ ६ ॥

---

१-१. अग्ने ये वि[1] लपं; अग्नये वि[2] अ[1] ल. २. ग्रहणेन वि[1] लपं. ३. आहुतम् वि[2] अ[1] ल. ४-४. अयम् अग्ने वि[1] लपं. ५. असेवस्वा सेवस्व वि[1,2] अ[1] लपं. ६. आथ वि[1] लपं.

अग्ने॑ । वृ॒धा॒नः । आऽहु॑तिम् । पु॒रो॒ळाश॑म् । जा॒त॒ऽवे॒दः॒ । जु॒षस्व॑ । ति॒रःऽअ॑ह्न्यम् ॥ ६ ॥

**वेङ्कट०** अग्ने ![1] **वर्धयन्** आहुतिम् पुरोडाशम् जातवेदः ! **सेवस्व** तिरोअह्न्यम् **सोममिति** ॥ ६ ॥

[2]**इति तृतीयाष्टके प्रथमाध्याये एकत्रिंशो वर्गः**[2] ॥

## [ २९ ]

[2]**विश्वामित्रो गाथिन ऋषिः । अग्निर्देवता, पञ्चम्या ऋत्विजो वा । त्रिष्टुप् छन्दः, प्रथमाचतुर्थीदशमीद्वादश्योऽनुष्टुभः, षष्ठ्येकादशीचतुर्दशीपञ्चदश्यः जगत्यः**[2] ।

**अस्ती॒दम॑धि॒मन्थ॑न॒मस्ति॑ प्र॒जन॑नं कृ॒तम् ।**
**ए॒तां वि॒श्पत्नी॒मा भ॑रा॒ग्निं म॑न्थाम पू॒र्वथा॑ ॥ १ ॥**

अस्ति॑ । इ॒दम् । अ॒धि॒ऽमन्थ॑नम् । अस्ति॑ । प्र॒ऽजन॑नम् । कृ॒तम् ।
ए॒ताम् । वि॒श्पत्नी॑म् । आ । भ॒र॒ । अ॒ग्निम् । म॒न्था॒म॒ । पू॒र्वऽथा॑ ॥ १ ॥

**वेङ्कट०** अस्ति इदम् **अधिमन्थनम्**[3] **शकलम्**, अस्ति **च** प्रजननम् **मथनसाधनम्** कृतम् । एताम् **विशां पालयित्रीमरणिम्**[4] आ[5] हर, अग्निम् मन्थाम, **यथा पूर्वेऽमथ्नन्निति** ॥ १ ॥

**अ॒रण्यो॒र्निहि॑तो जा॒तवे॑दा॒ गर्भ॑ इव॒ सुधि॑तो ग॒र्भिणी॑षु ।**
**दि॒वेदि॑व॒ ईड्यो॑ जागृ॒वद्भि॑र्ह॒विष्म॑द्भिर्मनु॒ष्ये॑भिर॒ग्निः ॥ २ ॥**

अ॒रण्योः॑ । नि॒ऽहि॑तः । जा॒त॒ऽवे॑दाः । गर्भः॑ऽइव । सु॒ऽधि॑तः । ग॒र्भिणी॑षु ।
दि॒वेऽदि॑वे । ईड्यः॑ । जा॒गृ॒वत्ऽभिः॑ । ह॒विष्म॑त्ऽभिः । म॒नु॒ष्ये॑भिः । अ॒ग्निः ॥ २ ॥

**वेङ्कट०** अरण्योः **अन्तः** निहितः **अग्निः** गर्भः इव निहितः गर्भिणीषु **दिवसेदिवसे स्तुत्यः अप्रमाद्यद्भिः**[6] हविष्मद्भिः **मनुष्यैः**[7] अग्निः ॥ २ ॥

**उ॒त्ता॒नाया॒मव॑ भरा चिकि॒त्वान्त्स॒द्यः प्रवी॑ता॒ वृष॑णं जजान ।**
**अ॒रु॒षस्तू॑पो॒ रुश॑दस्य॒ पाज॒ इळा॑यास्पु॒त्रो व॒युने॑ऽजनिष्ट ॥ ३ ॥**

उ॒त्ता॒नाया॑म् । अव॑ । भ॒र॒ । चि॒कि॒त्वान् । स॒द्यः । प्रऽवी॑ता । वृष॑णम् । ज॒जा॒न॒ ।
अ॒रु॒षऽस्तू॑पः । रुश॑त् । अ॒स्य॒ । पाजः॑ । इळा॑याः । पु॒त्रः । व॒युने॑ । अ॒ज॒नि॒ष्ट॒ ॥ ३ ॥

**वेङ्कट०** **अधरारण्याम् उत्तरारणिम्** अव भर **जानन्** । **निहितगर्भारणिः तदानीमेव अग्निम् जनयति** । 'तस्मात्पराचीः प्रजाः प्रवीयन्ते[8] प्रतीचीर्जायन्ते' ( तै ६,३,१.४;५ ) **इति**[9] **ब्राह्मणम्** । **आरोच-**

---

१. **नास्ति लपं.**　२-२. **नास्ति मूको.**　३. अग्निमन्थनं **वि**[1] **अ**[1].　४. °रणीम् **लपं**; °त्रीरमणीम् **अ**[1].
५. **नास्ति वि**[1].　६. प्रमा° **ल लपं.**　७. मनुष्येभिः **वि**[1].　८. प्रवीयते **वि**[1]; प्रचीयन्ते **लपं.**　९. इनि हि **लपं.**

मानतेजःसङ्घातः, रुशत् अस्य[1] तेजः[2], सोऽयम् इळायाः पुत्रः ऊर्जः पुत्रः मार्गे प्रादुर्भवतु। यज्ञे जायत इत्येकमिति ॥ ३ ॥

इळा॑यास्त्वा प॒दे व॒यं नाभा॑ पृथि॒व्या अधि॑ ।
जात॑वेदो॒ नि धी॑म॒ह्यग्ने॑ ह॒व्याय॒ वोळ्ह॑वे ॥ ४ ॥

इळा॑याः । त्वा॒ । प॒दे । व॒यम् । नाभा॑ । पृ॒थि॒व्याः । अधि॑ ।
जात॑ऽवेदः । नि । धी॒म॒हि॒ । अग्ने॑ । ह॒व्याय॑ । वोळ्ह॑वे ॥ ४ ॥

**वेङ्कट०** [3]मनोर्दुहितुः इळायाः[3] पदे वयम् पृथिव्याः च नाभाभौ उत्तरवेद्या[4] नाभौ हे जातवेदः! त्वा नि धीमहि अग्ने! हविषः वहनायेति। 'एतद्वा इळायास्पदं यदुत्तरवेदीनाभिः' (ऐब्रा १,२८) इत्यादि ब्राह्मणमिति ॥ ४ ॥

मन्थ॑ता नरः क॒विमद्व॑यन्तं॒ प्रचे॑तसम॒मृतं॑ सु॒प्रती॑कम् ।
य॒ज्ञस्य॑ के॒तुं प्र॑थ॒मं पु॒रस्ता॑द॒ग्निं नरो॑ जनयता सु॒शेव॑म् ॥ ५ ॥

मन्थ॑त । न॒रः॒ । क॒विम् । अद्व॑यन्तम् । प्रऽचे॑तसम् । अ॒मृत॑म् । सु॒ऽप्रती॑कम् ।
य॒ज्ञस्य॑ । के॒तुम् । प्र॒थ॒मम् । पु॒रस्ता॑त् । अ॒ग्निम् । न॒रः॒ । ज॒न॒य॒त॒ । सु॒ऽशेव॑म् ॥ ५ ॥

**वेङ्कट०** मन्थत हे नरः! कविम् अद्वयन्तम् सत्यमनृतं[5] चोभयम् अकुर्वन्तं सत्यं प्रकृष्टज्ञानम् [6]अमृतम् शोभनावयवम्[6] यज्ञस्य चिह्नम् पुरातनम् प्रथमम् जनयत[7] अग्निम् हे नरः![8] सुसुखम्[9] ॥ ५ ॥

[10]इति तृतीयाष्टके प्रथमाध्याये द्वात्रिंशो वर्गः[10]

यदी॒ मन्थ॑न्ति बा॒हुभि॒र्वि रो॑च॒तेऽश्वो॒ न वा॒ज्य॑रु॒षो वने॒ष्वा ।
चि॒त्रो न याम॑न्न॒श्विनो॒रनि॑वृतः॒ परि॑ वृण॒क्त्यश्म॑न॒स्तृणा॒ दह॑न् ॥ ६ ॥

यदि॑ । मन्थ॑न्ति । बा॒हुऽभिः॑ । वि । रो॒च॒ते॒ । अश्वः॑ । न । वा॒जी । अ॒रु॒षः । वने॑षु । आ ।
चि॒त्रः । न । याम॑न् । अ॒श्विनोः॑ । अनि॑ऽवृतः । परि॑ । वृ॒ण॒क्ति॒ । अश्म॑नः । तृणा॑ । दह॑न् ॥ ६ ॥

**वेङ्कट०** यदि अग्निं मथ्नन्ति[11] बाहुभिः, अथायम् वि रोचते अश्वः इव वेगवान् आरोचमानः काष्ठेषु। चित्रः इव गमने अश्विनोः अप्रतिहतगतिः, 'अथो अग्निरप्रतिहतगतिर्भवति'[12], सोऽयम् अश्मनः वर्जयति तृणानि भस्मीकुर्वन्निति ॥ ६ ॥

---

१. नास्ति वि[2] अ[1]. २. तेजसा लपं. ३-३. नास्ति वि[2] लपं ४. °त्तरवेदिं वि[1] लपं. ५. सत्यमकृतं वि[2] अ[1]. ६-६. अमृतशोभना° वि[2] अ[1]. ७. जनय लपं. ८. नः! वि[1] लपं. ९. सुखं लपं. १०-१०. नास्ति मूको. ११. मन्थन्ति ल लपं. १२. °प्रति ··· र्भवति वि[2] अ[1].

जातो अग्नी रोचते चेकितानो वाजी विप्रः कविशस्तः सुदानुः ।
यं देवास ईड्यं विश्वविदं हव्यवाहमदधुरध्वरेषु ॥ ७ ॥

जातः । अग्निः । रोचते । चेकितानः । वाजी । विप्रः । कविऽशस्तः । सुऽदानुः ।
यम् । देवासः । ईड्यम् । विश्वऽविदम् । हव्यऽवाहम् । अदधुः । अध्वरेषु ॥ ७ ॥

**वेङ्कट०** अरण्योर्जातमात्रः अग्निः दीप्यते अत्यन्तं जानन् बलवान् मेधावी कविभिः स्तुतः शोभनदानः । यम् अग्निम् देवाः स्तुत्यम् सर्वस्य वेदितारम् हविषां वोढारम् यज्ञेषु स्थापितवन्तः ॥ ७ ॥

सीद होतः स्व उ लोके चिकित्वान्त्सादया यज्ञं सुकृतस्य योनौ ।
देवावीर्देवान् हविषा यजास्यग्ने बृहद् यजमाने वयो धाः ॥ ८ ॥

सीद । होतः । स्वे । ऊँ इति । लोके । चिकित्वान् । सादय । यज्ञम् । सुऽकृतस्य । योनौ ।
देवऽअवीः । देवान् । हविषा । यजासि । अग्ने । बृहत् । यजमाने । वयः । धाः ॥ ८ ॥

**वेङ्कट०** सीद हे होतः! स्वस्मिन् स्थाने उत्तरवेदिनाभौ[1] जानन् । सादय च यज्ञम् शोभनस्य कर्मणः स्थाने उत्तरवेद्याम् । 'यजमानो वै यज्ञः' (ऐब्रा १,२८) इति ब्राह्मणम् । देवान् 'प्रति गन्ता त्वम्'[2] देवान् हविषा यज, अग्ने! बृहत् च अन्नम् यजमाने स्थापय । 'प्राणो वै वयः[3]' (ऐब्रा १,२८) इति ब्राह्मणमिति ॥ ८ ॥

कृणोत धूमं वृषणं सखायोऽस्रेधन्त इतन वाजमच्छ ।
अयमग्निः पृतनाषाट् सुवीरो येन देवासो असहन्त दस्यून् ॥ ९ ॥

कृणोत । धूमम् । वृषणम् । सखायः । अस्रेधन्तः । इतन । वाजम् । अच्छ ।
अयम् । अग्निः । पृतनाषाट् । सुऽवीरः । येन । देवासः । असहन्त । दस्यून् ॥ ९ ॥

**वेङ्कट०** कुरुत अग्नेः धूमम् अग्निं च वर्षितारम् हे सखायः!, अनुपक्षीणा भवन्तो यूयम् हविः प्रति गच्छत[4] । सः अयम् अग्निः सेनानामभिभविता सुवीरः, येन देवाः शत्रून् असहन्त ॥ ९ ॥

अयं ते योनिर्ऋत्वियो यतो जातो अरोचथाः ।
तं जानन्नग्न आ सीदाथा नो वर्धया गिरः ॥ १० ॥

---

१. °वेदानाभौ वि°. २-२. नास्ति वि° लपं. ३. पयः मूको. ४. गच्छ मूको.

अयम् । ते । योनिः । ऋत्वियः । यतः । जातः । अरोचथाः ।
तम् । जानन् । अग्ने । आ । सीद । अथ । नः । वर्धय । गिरः ॥ १० ॥

वेङ्कट० ऋतौ जातः तव अयम् योनिः उत्पत्तिस्थानम्, यतो योनेः जातः त्वम् अरोचथाः[1]। तम्[2] इदानीं मम[3] योनिरिति जानन् कर्मणः संस्थाने आ सीद। अथ अस्माकम् गिरः च कामप्रदानेन वर्धय इति ॥ १० ॥

[4]इति तृतीयाष्टके प्रथमाध्याये त्रयस्त्रिंशो वर्गः[4]।

तनूनपादुच्यते गर्भ आसुरो नराशंसो भवति यद् विजायते ।
मातरिश्वा यदमिमीत मातरि वातस्य सर्गो अभवत् सरीमणि ॥ ११ ॥

तनूऽनपात् । उच्यते । गर्भः । आसुरः । नराशंसः । भवति । यत् । विऽजायते ।
मातरिश्वा । यत् । अमिमीत । मातरि । वातस्य । सर्गः । अभवत् । सरीमणि ॥ ११ ॥

वेङ्कट० असुरशब्दः काष्ठवचनः अग्नेरसनात्। आसुरः[5] गर्भः अयम् तनूनपात् उच्यते। अथ नराशंसः भवति यदा अरण्योः विजायते, यस्मादेनं जातं नराः शंसन्ति। यदा अन्तरिक्षे स्वं तेजः करोति, तदानीम् मातरिश्वा उच्यते, 'मातर्यन्तरिक्षे[6] श्वसिति' ( या ७, २६ ) इति। वातस्य सरणे सति सर्गः नाम भवतीति ॥ ११ ॥

सुनिर्मथा निर्मथितः सुनिधा निहितः कविः ।
अग्ने स्वध्वरा कृणु देवान् देवयते यज ॥ १२ ॥

सुनिःऽमथा । निःऽमथितः । सुऽनिधा । निऽहितः । कविः ।
अग्ने । सुऽअध्वरा । कृणु । देवान् । देवऽयते । यज ॥ १२ ॥

वेङ्कट० सुनिर्मथनेन निर्मथितः सुनिधानेन निहितः क्रान्तदर्शनः स[7] त्वम् अग्ने! सुयज्ञान् कुरु देवान्। तथा यज च देवान् इच्छते यजमानाय तानिति ॥ १२ ॥

अजीजनन्नमृतं मर्त्यासोऽस्रेमाणं तरणिं वीळुजम्भम् ।
दश स्वसारो अग्रुवः समीचीः पुमांसं जातमभि सं रभन्ते ॥ १३ ॥

अजीजनन् । अमृतम् । मर्त्यासः । अस्रेमाणम् । तरणिम् । वीळुऽजम्भम् ।
दश । स्वसारः । अग्रुवः । सम्ऽईचीः । पुमांसम् । जातम् । अभि । सम् । रभन्ते ॥ १३ ॥

---

१. °चयथा मूको. २. तव वि[2] अ[1]. ३. नास्ति वि[1,2] ल लपं. ४-४. नास्ति मूको. ५. असुरः वि[1] लपं. ६. अन्त° मूको. ७. सन् वि[2] अ[1].

वेङ्कट० जनयन्ति स्म अमरणधर्माणम् मर्त्याः अपापम् क्षिप्रम् दृढदंष्ट्रम्। तम् दश पाणेरेकस्मा-दुत्पत्तेः स्वसारः दशाऽङ्गुलयः समञ्चनाः[1] संश्लिष्टाः पुमांसम् जातम् अभिमुखाः सम्भूय गृह्णन्ति समिन्धनायेति ॥ १३ ॥

प्र सप्तहोता सनकादरोचत मातुरुपस्थे यदशोचदूधनि ।
न नि मिषति सुरणो दिवेदिवे यदसुरस्य जठरादजायत ॥ १४ ॥

प्र । सप्तऽहोता । सनकात् । अरोचत । मातुः । उपऽस्थे । यत् । अशोचत् । ऊधनि ।
न । नि । मिषति । सुऽरणः । दिवेऽदिवे । यत् । असुरस्य । जठरात् । अजायत ॥ १४ ॥

वेङ्कट० चिरादेवारभ्य प्र रोचते, यस्याऽग्नेः सप्त वषट्कर्तारो भवन्ति, यदा पृथिव्याः उत्सङ्गे उत्तरवेद्याम् दीप्यते। न नि मिषति सर्वदा ज्वलति दिवेदिवे शोभनरमणः[2]। यदा काष्ठस्य जठरात् जायते ॥ १४ ॥

अमित्रायुधो मरुतामिव प्रयाः प्रथमजा ब्रह्मणो विश्वमिद् विदुः ।
द्युम्नवद् ब्रह्म कुशिकास एरिर एकएको दमे अग्निं समीधिरे ॥ १५ ॥

अमित्रऽयुधः । मरुताम्ऽइव । प्रऽयाः । प्रथमऽजाः । ब्रह्मणः । विश्वम् । इत् । विदुः ।
द्युम्नऽवत् । ब्रह्म । कुशिकासः । आ । ईरिरे । एकःऽएकः । दमे । अग्निम् । सम् । ईधिरे ॥१५॥

वेङ्कट० अमित्राणां योद्धारः, मरुतामिव वेगः यथा मारुतं शर्धो[3] वृक्षादीनुत्क्षिपति, प्रजापतेः प्रथममेव जाताः सर्वम् एवाऽग्निगणम् जानन्ति। तथा हविष्मत् स्तोत्रम् कुशिकपुत्राः अग्नये प्रेरयन्ति, तथा एकएकः सर्व एव स्वगृहे अग्निम् सम् एधितवन्तः ॥ १५ ॥

यदद्य त्वा प्रयति यज्ञे अस्मिन् होतश्चिकित्वोऽवृणीमहीह ।
ध्रुवमया ध्रुवमुताशमिष्ठाः प्रजानन् विद्वाँ उप याहि सोमम् ॥ १६ ॥

यत् । अद्य । त्वा । प्रऽयति । यज्ञे । अस्मिन् । होतः । चिकित्वः । अवृणीमहि । इह ।
ध्रुवम् । अयाः । ध्रुवम् । उत । अशमिष्ठाः । प्रऽजानन् । विद्वान् । उप । याहि । सोमम् ॥१६॥

वेङ्कट० यत् अद्य त्वा वर्तमाने यज्ञे अस्मिन् अग्ने! होतः! प्रज्ञावन्! होतारम् अवृणीमहि इह[4]। ततस्त्वम्

१. समञ्जनाः मूको. २. °भरणः मूको ३. शर्द्ध लपं. ४. नास्ति मूको.

ध्रुवम् अयाक्षीः देवान् । ध्रुवम् एव अशमिष्ठाः । शमनं संस्कारः पशोरध्रिगुप्रैषेण । अरण्योः प्रजायमानः त्वम् विद्वान् उप गच्छ अस्मदीयमिमम् सोमम् इति॥ १६ ॥

[1]इति तृतीयाष्टके प्रथमाध्याये चतुस्त्रिंशो वर्गः[1] ।

तृतीयस्याऽष्टकस्याऽऽद्यमध्यायं व्याकरोदिति ।
जाता वसिष्ठस्य कुले सुन्दरी यमजीजनत् ॥

इति वेङ्कटमाधवाचार्यविरचिते ऋक्संहिताव्याख्याने तृतीयाष्टके प्रथमोऽध्यायः ।

— ❀ —

इति ऋग्वेदे सभाष्ये तृतीयाष्टके प्रथमोऽध्यायः ॥



१-१. नास्ति मूको.

## अथ तृतीयाऽष्टके द्वितीयोऽध्यायः

वेङ्कट०

अथे (-थ 'इ)च्छन्ति त्वा सोम्यासः'[1] व्याचिख्यासति माधवः ।
सङ्गतेषु निपातेषु वक्तव्यं सम्प्रदर्शयन् ॥ १ ॥

पृथगर्थान् निपातेषु सङ्गतेषु प्रदर्शयेत् ।
'आदह स्वधामन्वि(-नु इ)ति' तत्राऽऽहुश्च निदर्शनम् ॥ २ ॥

स्विदित्येको निपातोऽयम् 'अधः स्विदासी[2] दुपरि'[3] ।
चन चेन्नन्वमी च स्युरभिन्ना इति निश्चयः ॥ ३ ॥

समुदाया निपातानां नामी[3] नो मो अथो इति ।
ओदन्तस्य[4] प्रगृह्यत्वं पृथक् शास्ति हि पाणिनिः[5] ॥ ४ ॥

'मो अहं द्विषते रधम्'[6] [7]मैवाहं द्विषते रधम् ।
एवं 'नो वयं मराम'†[7] [8]नैव वयं मरामेति[8] ॥ ५ ॥

समुदायत्वम् अनयोर् इत्थम् अर्थप्रतीतितः[9] ।
इच्छन्ति कवयः केचिद् द्वयोरेकः स्वरस्तथा ॥ ६ ॥

नहीत्येको निपातोऽयं पृथगध्वर्यवस्तु तम् ।
[10]'अधीयते द्वयुदात्तं[10] च 'न ह्यस्या अपरं चन'[11] ॥ ७ ॥

नहीत्यनेन योगे च स्मर्तव्यस्तिङुदात्तवान् ।
केवलेन हिना योगे शाब्दिकैः स्मर्यते यथा ॥ ८ ॥

बह्वृचा हिकमित्येकं किमिति द्वावधीयते ।
अयं च युज्यते ह्येक एकोदात्तस्य दर्शनात् ॥ ९ ॥

'राजा हि कं भुवनानाम्'[12] 'तिष्ठा सु कं मघवन् मा'[13] ।
'योना नु कं मानुषी'[14] च त्रयोऽमी निहताः क्रमः ॥ १० ॥

सूक्ष्मेक्षिकापरा विप्राः कथयन्त्यत्र बह्वृचाः ।
यथा समासे पदयोरैकार्थ्यमुपजायते ॥ ११ ॥

---

१. ऋ १,६,४. २. ऋ १०,१२९,५. ३. नाभी ल. ४. नास्ति वि[२] अ[१]; अतस्तेषां वेंऋअ. ५. तु. पा १, १, १५. ६. ऋ १, ५०, १३. ७-७. त्रुटितम् वि[२] अ[१]; नास्ति वेंऋअ. † ऋ १, १९१,१०. ८-८. ··· मरामेति ल; नो वयं मराम इति वेंऋअ. ९. त्रुटितम् वि[२] अ[१]. १०-१०. °तेऽद्युदा' वेंऋअ. ११. तै १,७,१३,१ [वैतु. ऋ १०,८६,११ नह्य' ]. १२. ऋ १,९८,१. १३. ऋ ३,५३,२. १४. ऋ १,७२,८.

नञो हेश्च तथैकार्थ्यं नहीत्यत्रोपजायते ।
ह्यर्थस्य च प्रधानत्वादन्तोदात्तमभूत् पदम् ॥ १२ ॥

हिना योगे नुसुभ्यां च कमित्येतन्निहन्यते ।
"रा॒जा हि कं॒ भुव॑नाना॒"† 'येना॒ नु कं॒ मानु॑षी(षी"‡ -इ)ति ॥ १३ ॥

पदेनान्येन[२] संयोगाद् यथाख्यातं निहन्यते ।
हिनुयोगे कमित्येतदेवमेवेति बह्वृचाः ॥ १४ ॥

अध्वर्यवस्तु नेच्छन्त्य् 'आ॒शिषे॒ वै कं यज॑मानः'[३] ।
इत्युदात्तमधीयानाः पृथक् चार्थं[४] कमो विदुः ॥ १५ ॥

## [ ३० ]

[५]विश्वामित्रः गाथिन ऋषि । इन्द्रोः देवता । त्रिष्टुप् छन्द.[५] ।

इ॒च्छन्ति॑ त्वा सो॒म्यासः॒ सखा॑यः सु॒न्वन्ति॒ सोमं॒ दध॑ति॒ प्रयां॑सि ।
तिति॑क्षन्ते अ॒भिश॑स्तिं॒ जना॑ना॒मिन्द्र॒ त्वदा कश्च॒न हि प्र॑के॒तः ॥ १ ॥

इ॒च्छन्ति॑ । त्वा॒ । सो॒म्यासः॑ । सखा॑यः । सु॒न्वन्ति॑ । सोम॑म् । दध॑ति । प्रयां॑सि ।
तिति॑क्षन्ते । अ॒भिऽश॑स्तिम् । जना॑नाम् । इन्द्र॑ । त्वत् । आ । कः । च॒न । हि । प्र॒ऽके॒तः ॥१॥

वेङ्कट० विश्वामित्रः । इच्छन्ति त्वाम्[६] सोमपानार्हाः समानख्याना यजमानाः, तुभ्यम् सोमम् सुन्वन्ति निदधति च[७] अन्नानि । तथा तव बलाच्छत्रुजनानाम्[८] अभिशंसनं च सहन्ते[९] । हे इन्द्र ! त्वत्तोऽन्यः कः![१०] खल्वस्ति हि प्रकर्षेण ज्ञायमान इति ॥ १ ॥

न ते॑ दू॒रे प॑र॒मा चि॒द् रजां॒स्या तु प्र या॑हि हरिवो॒ हरि॑भ्याम् ।
स्थि॒राय॒ वृष्णे॒ सव॑ना कृ॒तेमा यु॒क्ता ग्रावा॑णः समिधा॒ने अ॒ग्नौ ॥ २ ॥

न । ते॒ । दू॒रे । प॒र॒मा । चि॒त् । रजां॑सि । आ । तु । प्र । या॒हि॒ । ह॒रि॒ऽवः॒ । हरि॑ऽभ्याम् ।
स्थि॒राय॑ । वृष्णे॑ । सव॑ना । कृ॒ता । इ॒मा । यु॒क्ताः । ग्रावा॑णः । स॒म्ऽइ॒धा॒ने । अ॒ग्नौ ॥ २ ॥

वेङ्कट० न तव दूरे भवन्ति दूरस्थानि अपि अवस्थानानि । शीघ्रम् आ प्र याहि हे हरिवः! हरिभ्याम् । स्थिराय वर्षित्रे सवनानि इमानि अस्माभिः कृतानि, युक्ताः चाभिषवार्थम् ग्रावाणः, होमार्थम् समिधाने अग्नौ आगच्छेति । दूराभावे[११] शीघ्रं तत्र गन्तुमसौ शक्त इति ॥ २ ॥

---

१-१. नास्ति वेंकअ. † ऋ १,९८,१. ‡ ऋ १,७२,८. २. °नेन वेंकअ. ३. तै १,५, ९,६. ४. वार्थं लपं. ५-५.नास्ति मूको. ६. त्वा वि[१] लपं. ७. वा वि[१] लपं. ८. बलं शत्रुबलानाम् वि[१] लपं. ९. सहते वि[२] अ[१]. १०. नास्ति वि[१] लपं. ११. दूराभावः वि[२] अ[१] ल; °भवः वि[१] लपं.

इन्द्रः सुशिप्रो मघवा तरुत्रो महाव्रातस्तुविकूर्मिर्ऋघावान् ।
यदुग्रो धा बाधितो मर्त्येषु क्व त्या ते वृषभ वीर्याणि ॥ ३ ॥

इन्द्रः । सुऽशिप्रः । मघऽवा । तरुत्रः । महाऽव्रातः । तुविऽकूर्मिः । ऋघावान् ।
यत् । उग्रः । धाः । बाधितः । मर्त्येषु । क्व । त्या । ते । वृषभ । वीर्याणि ॥ ३ ॥

वेङ्कट० इन्द्रः सुहनुः धनवान् तारयिता महता व्रातेन मरुतां[1] संयुक्तः बहूनामवदानकर्मणां कर्ता वा हिंसावान् यानि उद्गूर्णः धारयसि [2]शत्रुभिः बाध्यमानः[2] शत्रुषु मनुष्येषु जयार्थं कृतानि[3] क्व तानि[4] तव हे वृषभ! वीर्याणि इति न तानि सम्प्रति दृश्यन्ते, इत्यनागमनाद् इन्द्रम् अधिक्षिपति ॥ ३ ॥

त्वं हि ष्मा च्यावयन्नच्युतान्येको वृत्रा चरसि जिघ्नमानः ।
तव द्यावापृथिवी पर्वतासोऽनु व्रताय निमितेव तस्थुः ॥ ४ ॥

त्वम् । हि । स्म । च्यवयन् । अच्युतानि । एकः । वृत्रा । चरसि । जिघ्नमानः ।
तव । द्यावापृथिवी इति । पर्वतासः । अनु । व्रताय । निमिताऽइव । तस्थुः ॥ ४ ॥

वेङ्कट० हे इन्द्र! अच्युतानि अपि त्वम् शत्रुबलानि च्यावयन् असहायः[5] उपद्रवान् नाशयन् चरसि हि[6] ततश्च द्यावापृथिवी पर्वताश्च तव कर्मणे भीताः सञ्चरणकुशला[7] अपि निमिता इव अनु तस्थुः[8], यथा पृथिव्यामुप्ताः स्थावरा अचलास्तिष्ठन्त्येवमिति ॥ ४ ॥

उताभये पुरुहूत श्रवोभिरेको दृळ्हमवदो वृत्रहा सन् ।
इमे चिदिन्द्र रोदसी अपारे यत् संगृभ्णा मघवन् काशिरित् ते ॥ ५ ॥

उत । अभये । पुरुऽहूत । श्रवःऽभिः । एकः । दृळ्हम् । अवदः । वृत्रऽहा । सन् ।
इमे इति । चित् । इन्द्र । रोदसी इति । अपारे इति । यत् । सम्ऽगृभ्णाः । मघऽवन् । काशिः । इत् । ते ॥५॥

वेङ्कट० अपि च हे बहुभिराहूत! अभयार्थम् अन्नैर्हविर्भिः एकः त्वम् दृढं वदसि युद्धे यजमानशत्रूणां हन्ता सन् । किं च यत् इमे द्यावापृथिव्यौ दूरपारे अपि सङ्गृह्णासि हे मघवन् इन्द्र!, अतः तव मुष्टिः, महानिति शेषः, तथैव यास्केनोक्तम् ( ६,१ ) इति ॥ ५ ॥

[9]इति तृतीयाष्टके द्वितीयाध्याये प्रथमो वर्गः[9] ॥

प्र सू त इन्द्र प्रवता हरिभ्यां प्र ते वज्रः प्रमृणन्नेतु शत्रून् ।
जहि प्रतीचो अनूचः पराचो विश्वं सत्यं कृणुहि विष्टमस्तु ॥ ६ ॥

---

१. मरुता वि[2] अ[1]. २-२. शत्रुबध्यमानः लपं. ३. नास्ति वि[2] अ[1]. ४. नास्ति वि[1] लपं. ५. न सहायः वि[1]. ६. नास्ति वि[2] अ[1]; हि दूरं खलु वि[1] लपं. ७. सञ्चारकु° वि[1] ८. अभितस्थुः लपं. ९-९. नास्ति मूको.

प्र । सु । ते । इन्द्र । प्रऽवता । हरिऽभ्याम् । प्र । ते । वज्रः । प्रऽमृणन् । एतु । शत्रून् ।
जहि । प्रतीचः । अनूचः । पराचः । विश्वम् । सत्यम् । कृणुहि । विष्टम् । अस्तु ॥ ६ ॥

**वेङ्कट०** प्र गच्छतु सुष्ठु तव, रथ इति शेषः, प्रवणेन मार्गेण अश्वाभ्याम् । प्र एतु च तव वज्रः[1] शत्रून् प्रकर्षेण हिंसन् । स त्वम् अग्रतः प्रतिमुखमागच्छतः पृष्ठतश्चानुमुखमागच्छतः अग्रत एव पराङ्मुखं गच्छतः सर्वानेव शत्रून्[2] जहि । तदीयं च[3] विश्वम् सत्यम् अस्मिन् युद्धे कृणुहि । निविष्टम्[4] अस्तु अस्मदीयं बलमिति ॥ ६ ॥

यस्मै धायुरदधा मर्त्यायाभक्तं चिद् भजते गेह्यं१ सः ।
भद्रा त इन्द्र सुमतिर्घृताची सहस्रदाना पुरुहूत रातिः ॥ ७ ॥

यस्मै । धायुः । अदधाः । मर्त्याय । अभक्तम् । चित् । भजते । गेह्यम् । सः ।
भद्रा । ते । इन्द्र । सुऽमतिः । घृताची । सहस्रऽदाना । पुरुऽहूत । रातिः ॥ ७ ॥

**वेङ्कट०** यस्मै मनुष्याय धारणं त्वं प्रयच्छसि सः मर्त्यः[5] अलब्धम् अपि[6] शत्रुभ्यो गृहयोग्यं धनं लभते । किंच कल्याणा तव सुमतिः, योदकं वृष्टिलक्षणमञ्चति, तथा रातिः[7] अनेकदाना अनेकधनसम्बन्धादिति[8] ॥ ७ ॥

सहदानुं पुरुहूत क्षियन्तमहस्तमिन्द्र सं पिणक् कुणारुम् ।
अभि वृत्रं वर्धमानं पियारुमपादमिन्द्र तवसा जघन्थ ॥ ८ ॥

सहऽदानुम् । पुरुऽहूत । क्षियन्तम् । अहस्तम् । इन्द्र । सम् । पिणक् । कुणारुम् ।
अभि । वृत्रम् । वर्धमानम् । पियारुम् । अपादम् । इन्द्र । तवसा । जघन्थ ॥ ८ ॥

**वेङ्कट०** दानुनाम्ना असुरेण सहितम् हे पुरुहूत ! निवसन्तम्, अत्र यास्कः—'अहस्तम् इन्द्र ! कृत्वा सं पिण्डि परिक्वणनं मेघम्' ( या ६,१ ), तथा अभि जघन्थ वृत्रम् वर्धमानम् 'उदकस्य पातारम्' अपादम् कृत्वा हे इन्द्र ! बलेन ॥ ८ ॥

नि सामनामिषिरामिन्द्र भूमिं महीमपारां सदने ससत्थ ।
अस्तभ्नाद् द्यां वृषभो अन्तरिक्षमर्षन्त्वापस्त्वयेह प्रसूताः ॥ ९ ॥

नि । सामनाम् । इषिराम् । इन्द्र । भूमिम् । महीम् । अपाराम् । सदने । ससत्थ ।
अस्तभ्नात् । द्याम् । वृषभः । अन्तरिक्षम् । अर्षन्तु । आपः । त्वया । इह । प्रऽसूताः ॥ ९ ॥

---

१. नास्ति वि[१] अ[१]. २. नास्ति वि[१]. ३. नास्ति वि[१] लपं. ४. विष्टम् वि[१] लपं. ५. मत्तः वि[१] अ[१]. ६. इति वि[१] लपं. ७. नास्ति मूको. ८. अनेकदानमनेक° मूको. ९-९. उदकस्यापातारम् लपं.

वेङ्कट० समस्थलवतीम् [1]सामनाम् दीर्घव्यत्ययश्छान्दसः[1]। विषमां समां कृत्वा गमनस्वभावाम् इन्द्र! भूमिम्[2] महतीम् अपर्यन्ताम् त्वम् सदने नि ससत्थ स्वस्थाने स्थापितवान्। अथ परोक्षः। धारयति दिवम् अन्तरिक्षम् च कामानां वर्षिता। त्वया प्रेरिताः आपः अस्मिन् लोके गच्छन्तु ॥ ९ ॥

अलातृणो वल इन्द्र व्रजो गोः पुरा हन्तोर्भयमानो व्यार ।
सुगान् पथो अकृणोन्निरजे गाः प्रावन् वाणीः पुरुहूतं धमन्तीः ॥ १० ॥

अलातृणः। वलः। इन्द्र। व्रजः। गोः। पुरा। हन्तोः। भयमानः। वि। आर।
सुऽगान्। पथः। अकृणोत्। निःऽअजे। गाः। प्र। आवन्। वाणीः। पुरुऽहूतम्। धमन्तीः ॥

वेङ्कट० अलमातर्दनः वलः नामाऽसुरः देव! गोसङ्घस्य व्रजस्थानीयः [3]पुरा हननात्[3] भीतः सन् वि आर तिरोबभूव। अथ परोक्षः। सुगमान् मार्गान् अकरोत् पशून् निर्गमयितुम्। अथवा वाण्यो वहनाद्भाव उच्यन्ते। ताः इन्द्रं निर्गच्छन्त्यः पुरुहूतम् प्रत्यगच्छन्निति। यास्कस्त्वाह— '[4]अलातृणोऽलमातर्दनो मेघः[4]। वलो वृणोतेः। व्रजो व्रजत्यन्तरिक्षे। गोरेतस्या माध्यमिकाया वाचः। पुरा हननाद्भयमानो व्यार। [5]सुगान्पथो अकृणोन्निरजे गाः[5]। सुगमनान् पथोऽकरोत्[6] निरजनाय गवाम्' ( या ६,२ ) इति ॥ १० ॥

[5]इति तृतीयाष्टके द्वितीयाध्याये द्वितीयो वर्गः[5] ॥

एको द्वे वसुमती समीची इन्द्र आ पप्रौ पृथिवीमुत द्याम् ।
उतान्तरिक्षादभि नः समीक इषो रथीः सयुजः शूर वाजान् ॥ ११ ॥

एकः। द्वे इति। वसुमती इति वसुऽमती। समीची इति सम्ऽईची। इन्द्रः। आ। पप्रौ। पृथिवीम्। उत। द्याम्। उत। अन्तरिक्षात्। अभि। नः। सम्ऽईके। इषः। रथीः। सऽयुजः। शूर। वाजान् ॥ ११ ॥

वेङ्कट० एकः[7] एव द्वे धनवत्यौ समीची परस्परमभिमुखे इन्द्रः तेजसाऽऽपूरयति द्यावापृथिव्यौ। अपि च अन्तरिक्षात् आगत्य अभि गच्छ अस्माकं सङ्ग्रामे रथवांस्त्वम् अस्माभिः सङ्गतानि अन्नानि बलानि च[8] कर्तुमिति[9] ॥ ११ ॥

दिशः सूर्यो न मिनाति प्रदिष्टा दिवेदिवे हर्यश्वप्रसूताः ।
सं यदानळध्वन आदिदश्वैर्विमोचनं कृणुते तत् त्वस्य ॥ १२ ॥

दिशः। सूर्यः। न। मिनाति। प्रऽदिष्टाः। दिवेऽदिवे। हर्यश्वऽप्रसूताः।
सम। यत्। आनट्। अध्वनः। आत्। इत्। अश्वैः। विऽमोचनम्। कृणुते। तत्। तु। अस्य ॥ १२ ॥

वेङ्कट० इन्द्रेण हरिहयेन प्रवर्तिताः दिशः सूर्यः न मिनाति न हिनस्ति अन्वहम् उदयेन दिग्वि-

---

१-१. सामानं दीर्घश्छा° लपं; सामानां दीर्घश्छा° वि[1]; समानदीर्घश्छा° वि[2] अ[1] ल. २. भूमिम् लपं. ३-३. त्रुटितम् वि[2] अ[1]. ४-४. अलमातर्दनः मूको. ५-५. नास्ति मूको. ६. पथोऽकृणोत् मूको. ७. नास्ति वि[2] अ[1]. ८. नास्ति मूको. ९. नास्ति वि[1] लपं.

भागं करोति प्रदिष्टाः इन्द्रेण 'अनेन मार्गेण त्वया गन्तव्यम्' इति । यदा च गन्तव्यान् मार्गान् असौ सम् अश्नुते, अनन्तरम् एव अश्वानाम् रथात् विमोचनम् करोति । तत् इदं 'सर्वं कर्म'[1] इन्द्रस्य प्रभावकृतमिति ॥ १२ ॥

दिदृक्षन्त उषसो यामन्नक्तोर्विवस्वत्या महिं चित्रमनीकम् ।
विश्वे जानन्ति महिना यदागादिन्द्रस्य कर्म सुकृता पुरूणि ॥ १३ ॥

दिदृक्षन्ते । उषसः । यामन् । अक्तोः । विवस्वत्याः । महिं । चित्रम् । अनीकम् ।
विश्वे । जानन्ति । महिना । यत् । आ । अगात् । इन्द्रस्य । कर्म । सुऽकृता । पुरूणि ॥१३॥

**वेङ्कट०** रात्रेः आगमने सति विवासनवत्याः उषसः महत् चित्रम् अनीकम्[2] रश्मिसङ्घम् जनाः द्रष्टुमिच्छन्ति । विश्वे च प्रातः तामागताम् जानन्ति । सा महिम्ना सह यत् आ गच्छति, तच्चैतदिन्द्रकृतम् । तस्मात् इन्द्रस्य सुकृतानि कर्माणि बहूनीति ॥ १३ ॥

महि ज्योतिर्निहितं वक्षणास्वामा पक्वं चरति बिभ्रती गौः ।
विश्वं स्वाद्म संभृतमुस्रियायां यत् सीमिन्द्रो अदधाद् भोजनाय ॥ १४ ॥

महिं । ज्योतिः । निऽहितम् । वक्षणासु । आमा । पक्वम् । चरति । बिभ्रती । गौः ।
विश्वम् । स्वाद्म । सम्ऽभृतम् । उस्रियायाम् । यत् । सीम् । इन्द्रः । अदधात् । भोजनाय ॥१४॥

**वेङ्कट०** महत्[3] ज्योतिः निहितम् देवानां वहनशीलासु । एतद्विशदमाह — आमा गौः पक्वम् पयः बिभ्रती सञ्चरतीति । पयोदधिघृतमिति विश्वम् अन्नम् गवि संभृतम् यत् इन्द्रः मनुष्याणां भोजनार्थम् गवि स्थापितवानेतदिति । सीम् इति पूरणः परिग्रहार्थीयो वा । परिगृह्य निहितवानिति ॥ १४ ॥

इन्द्र दृह्य यामकोशा अभूवन् यज्ञाय शिक्ष गृणते सखिभ्यः ।
दुर्मायवो दुरेवा मर्त्यासो निषङ्गिणो रिपवो हन्त्वासः ॥ १५ ॥

इन्द्र । दृह्य । यामऽकोशाः । अभूवन् । यज्ञाय । शिक्ष । गृणते । सखिऽभ्यः ।
दुःऽमायवः । दुःऽएवाः । मर्त्यासः । निषङ्गिणः । रिपवः । हन्त्वासः ॥ १५ ॥

**वेङ्कट०** हे इन्द्र! अर्थिभ्यो धनानां दृंहणे साधो![4] तव प्रादुर्भवन्ति यामकोशाः[5] यजमानेष्वागमने देयानि धनानि । तत आदाय त्वां गृणते[1] स्तुवते यजमानाय पुत्रपौत्रार्थं देहि, यज्ञशब्दो यजमान-

---

१-१. सर्वकर्म वि॰ लपं. २. नास्ति मूको. ३. महि वि॰ लपं. ४. दृह्य लोटि मपु॰ इत्यन्ये सर्वे.
५. यामे कोशाः लपं.

वचनश्च दर्शनात्,[१] सखिभ्यः यज्ञार्थं च देहीत्यपरमिति। दुर्मनमनाः दुष्टागमनाः मनुष्याः आयुधिनः शत्रवश्च हन्तव्याः त्वया ॥ १५ ॥

[२]इति तृतीयाष्टके द्वितीयाध्याये तृतीयो वर्गः[२]।

सं घोषः॑ शृण्वेऽव॒मैर॒मित्रै॑र्ज॒ही न्ये॑ष्व॒शनिं॒ तपि॑ष्ठाम् ।
वृ॒श्चेम॒धस्ता॒द् वि रु॑जा॒ सह॑स्व ज॒हि रक्षो॑ मघवन् र॒न्धय॑स्व ॥ १६ ॥

सम् । घोषः॑ । शृ॒ण्वे॒ । अ॒व॒मैः । अ॒मित्रैः॑ । ज॒हि । नि । ए॒षु॒ । अ॒शनि॑म् । तपि॑ष्ठाम् ।
वृ॒श्च । ई॒म् । अ॒धस्ता॑त् । वि । रु॒ज॒ । सह॑स्व । ज॒हि । रक्षः॑ । म॒घ॒ऽव॒न् । र॒न्धय॑स्व ॥ १६ ॥

वेङ्कट० अन्तिकागतैः शत्रुभिः क्रियमाणः शब्दः सम् श्रूयते। नि जहि एषु तापयितृतमाम् अशनिम्। किञ्च वृश्च एनान्[३] मूलतः वि रुज [४]अभिभव च[४]। तथा नाशय[५] रक्षः। हे मघवन्! वशं च नय हतशेषमिति ॥ १६ ॥

उद् वृ॑ह॒ रक्षः॑ स॒हमू॑लमिन्द्र वृ॒श्चा मध्यं॒ प्रत्यग्रं॑ शृणीहि ।
आ कीव॑तः सल॒लूकं॑ चकर्थ ब्रह्म॒द्विषे॒ तपु॑षिं हे॒तिम॑स्य ॥ १७ ॥

उत् । वृ॒ह॒ । रक्षः॑ । स॒हऽमू॑लम् । इ॒न्द्र॒ । वृ॒श्च । मध्य॑म् । प्रति॑ । अग्र॑म् । शृ॒णी॒हि॒ ।
आ । कीव॑तः । स॒ल॒लूक॑म् । च॒क॒र्थ॒ । ब्र॒ह्म॒ऽद्विषे॑ । तपु॑षिम् । हे॒तिम् । अ॒स्य॒ ॥ १७ ॥

वेङ्कट० उद्धर रक्षः सहमूलम् हे इन्द्र!, छिन्धि च[६] तस्य मध्यम्। प्रति शृणीहि[७] च अग्रम्, शृणातिर्हिंसाकर्मा, शिरस[८] उपरि वज्रं पातयेत्यर्थः। कीवितः कियतो दूरस्थितमपि सरणशीलं रक्षः स्वम् आ चकर्थ अग्रतः कुरु तस्माद्देशात्। अथ कर्मद्विषे तस्मै[६] तापयितृ आयुधम् प्रेरयेति। अथवा समुच्चयार्थ आकारः। अत्र यास्कः—'आ कियतो देशात्। सललूकं संलुब्धं[९] भवति। पापकमिति[१०] नैरुक्ताः। सररुकं वा स्यात् सरतेरभ्यस्तात्[११]। तपुषिस्तपतेः हेतिर्हन्तेः' (६,३) इति ॥ १७ ॥

स्व॒स्तये॑ वा॒जिभि॑श्च प्रणेतः॒ सं यन्म॒हीरिष॑ आ॒सत्सि॒ पूर्वीः॑ ।
रा॒यो व॒न्तारो॑ बृह॒तः स्या॑मा॒ऽस्मे अ॑स्तु॒ भग॑ इन्द्र प्र॒जावा॑न् ॥ १८ ॥

स्व॒स्तये॑ । वा॒जिऽभिः॑ । च॒ । प्र॒ने॒त॒रिति॑ प्रऽनेतः । सम् । यत् । म॒हीः । इषः॑ । आ॒ऽसत्सि॑ । पू॒र्वीः ।
रा॒यः । व॒न्तारः॑ । बृ॒ह॒तः । स्या॒म॒ । अ॒स्मे इति॑ । अ॒स्तु॒ । भगः॑ । इ॒न्द्र॒ । प्र॒जाऽवा॑न् ॥ १८ ॥

वेङ्कट० हे प्रकर्षेण नेतः इन्द्र! अस्माकम् स्वस्तये अश्वैः च यत् महतीः इषः हवींषि पुरातनानि सम् आसत्सि। धनस्य महतः सम्भक्तारः वयम् स्याम। अस्माकम् अस्तु प्रजायुक्तः भगः इति ॥१८॥

१. °द् गृणते मूको. २-२. नास्ति मूको. ३. एनं वि[१] लपं. ४-४. चाभिभव वि[१] लपं. ५. नाशय च वि[१]. ६. नास्ति वि[१] लपं. ७. गृणीहि वि[२] अ[१]. ८. शिरसि वि[२]. ९. संरुद्धं वि[२] अ[१]. १०. पावक° वि[२] अ[१]. ११. °रभ्यासात् मूको.

आ नो भर भगमिन्द्र द्युमन्तं नि ते देष्णस्य धीमहि प्ररेके ।
ऊर्वइव पप्रथे कामो अस्मे तमा पृण वसुपते वसूनाम् ॥ १९ ॥

आ । नः । भर । भगम् । इन्द्र । द्युऽमन्तम् । नि । ते । देष्णस्य । धीमहि । प्रऽरेके ।
ऊर्वःऽइव । पप्रथे । कामः । अस्मे इति । तम् । आ । पृण । वसुऽपते । वसूनाम् ॥१९॥

वेङ्कट० हे इन्द्र! [1]आ भर[1] अस्माकं धनं दीप्तिमत्[2] । [3]नि धीमहि[3] पदं वयम् तव दानशीलस्य धनस्य[4] प्ररेचने त्यागे । वाडवः इव पप्रथे कामः अस्माकम्, तम् आ पूरय हे वसूनाम्[5] वसुपते! ॥ १९ ॥

इमं कामं मन्दया गोभिरश्वैश्चन्द्रवता राधसा पप्रथश्च ।
स्वर्यवो मतिभिस्तुभ्यं विप्रा इन्द्राय वाहः कुशिकासो अक्रन् ॥ २० ॥

इमम् । कामम् । मन्दय । गोभिः । अश्वैः । चन्द्रऽवता । राधसा । पप्रथः । च ।
स्वःऽयवः । मतिऽभिः । तुभ्यम् । विप्राः । इन्द्राय । वाहः । कुशिकासः । अक्रन् ॥ २० ॥

वेङ्कट० इमम् कामम् पूरय गोभिः अश्वैः च, सुखवता धनेन विस्तीर्णम् च कुरु । स्वस्य आगमनसुखं स्वर्गं वा आत्मन इच्छन्तः तुभ्यम् इन्द्राय पूजाभिः सह विप्राः वहनसाधनं स्तोत्रम् कुशिकवंशजाः कृतवन्तः ॥ २० ॥

आ नो गोत्रा दर्दृहि गोपते गाः समस्मभ्यं सनयो यन्तु वाजाः ।
दिवक्षा असि वृषभ सत्यशुष्मोऽस्मभ्यं सु मघवन् बोधि गोदाः ॥ २१ ॥

आ । नः । गोत्रा । दर्दृहि । गोऽपते । गाः । सम् । अस्मभ्यम् । सनयः । यन्तु । वाजाः ।
दिवक्षाः । असि । वृषभ । सत्यऽशुष्मः । अस्मभ्यम् । सु । मघऽवन् । बोधि । गोऽदाः ॥२१॥

वेङ्कट० हे गोपते! अस्माकम् उदकानि [6]मेघान् आ दर्दृहि[6] रश्मिभिः, इति द्विकर्मकः[7] । सम् यन्तु[8] अस्मभ्यम् धनानि अन्नानि । दिवं व्याप्नुवंस्त्वम् वृषभ! असि सत्यबलः । स[9] त्वम् अस्मभ्यम् सुष्ठु बुध्यस्व गोदाः भवामीति हे धनवन्![10] इति ॥ २१ ॥

शुनं हुवेम मघवानमिन्द्रमस्मिन् भरे नृतमं वाजसातौ ।
शृण्वन्तमुग्रमूतये समत्सु घ्नन्तं वृत्राणि संजितं धनानाम् ॥ २२ ॥

---

१-१. आचर वि[1] अ[1]; आहर वि[1] लपं. २. दीप्तम् वि[1]. ३-३. अभिधीमहि वि[1] लपं. ४. नास्ति लपं. ५. वसूनां ते वि[2] अ[1]. ६-६. मेघाः दर्दृहि ल. ७. द्विकर्मकम् वि[1] लपं. ८. यन्ति लपं. ९. त वि[1] लपं. १०. सनवन् वि[1] लपं.

शुनम् । हुवेम । मघऽवानम् । इन्द्रम् । अस्मिन् । भरे । नृऽतमम् । वाजऽसातौ ।
शृण्वन्तम् । उग्रम् । ऊतये । समत्ऽसु । घ्नन्तम् । वृत्राणि । सम्ऽजितम् । धनानाम् ॥ २२ ॥

**वेङ्कट०** सुखतरम्[1] हुवेम[2] धनवन्तम् इन्द्रम् अस्मिन् सङ्ग्रामे नेतृतमम् अन्नलाभनिमित्ते शृण्वन्तम् आह्वानानि उद्गूर्णम् रक्षणाय युद्धेषु घ्नन्तम् शत्रून्[3] धनानाम् सम्यग्जेतारम् इति ॥ २२ ॥

[4]इति तृतीयाष्टके द्वितीयाध्याये चतुर्थो वर्गः[4] ।

## [ ३१ ]

[4]कुशिक ऐषीरथिर्ऋषिः, गाथिनो विश्वामित्रो वा । इन्द्रो देवता । त्रिष्टुप् छन्दः[4] ।

**शासद् वह्निर्दुहितुर्नप्त्यं गाद् विद्वाँ ऋतस्य दीधितिं सपर्यन् ।**
**पिता यत्र दुहितुः सेकमृञ्जन्त्सं शग्म्येन मनसा दधन्वे ॥ १ ॥**

शासत् । वह्निः । दुहितुः । नप्त्यम् । गात् । विद्वान् । ऋतस्य । दीधितिम् । सपर्यन् ।
पिता । यत्र । दुहितुः । सेकम् । ऋञ्जन् । सम् । शग्म्येन । मनसा । दधन्वे ॥ १ ॥

**वेङ्कट०** कुशिको वैश्वामित्रः(?) । तृतीयस्यामृचि पुत्रप्रसङ्गादिदमुक्तम् 'अस्यां यो जायते पुत्रः स मे पुत्रो भवेदिति' ( वाध १७,१७ ) । विट्पतेरनुशासनं कुर्वन् वह्निः दुहितरमन्यं प्रति नयन् दुहितुः पुत्रं गच्छति रेतसः धारकं पूजयन् । दौहित्रस्तस्य पुत्रो भवति । विट्पतिः यत्र अनपत्यस्य दुहितुः पुत्रिकायाः रेतःसेकम् ऋञ्जन् केवलसुखनिमित्तेन मनसा सन्दधात्यात्मानं न पुत्रनिमित्तेनेति 'प्रशास्ति वोळहा सन्तानकमणे' ( ३, ४ ) इत्यादिकं निरुक्तं द्रष्टव्यम् ।

'करोति पुत्रिकां नाम[5] यथा दुहितरं तथा ॥
तस्यां सिञ्चति रेतो वा तच्छासदिति कीर्तितम्' । (बृदे ४,११०;१११) इति शौनकः ।

'रिक्थस्य दुहितुर्दानं नेत्यृचि प्रतिषिध्यते ॥
तस्याश्चाऽऽह[6] यवीयांसं भ्रातरं ज्येष्ठवत्सुतम्' । ( बृदे ४,१११;११२ ) इति च[7] ॥१॥

**न जामये तान्वो रिक्थमारैक् चकार गर्भं सनितुर्निधानम् ।**
**यदी मातरो जनयन्त वह्निमन्यः कर्ता सुकृतोरन्य ऋन्धन् ॥ २ ॥**

न । जामये । तान्वः । रिक्थम् । अरैक् । चकार । गर्भम् । सनितुः । निऽधानम् ।
यदि । मातरः । जनयन्त । वह्निम् । अन्यः । कर्ता । सुऽकृतोः । अन्यः । ऋन्धन् ॥ २ ॥

---

१. नास्ति वि[2] अ[1] लपं. २. नास्ति वि[2]. ३. शत्रुम् मूको. ४-४. नास्ति मूको. ५. नारीं लपं. ६. तस्यां व वि[2] लपं. ७. नास्ति लपं.

वेङ्कट० [1]न भगिन्यै तान्वः[1] आत्मजः पुत्रः रिक्थम्[2] प्रारिचत् प्रादात्, चकार एनाम् गर्भम् सम्भक्तुर्हस्तग्राभस्य गर्भनिधानीम्। यदि मातरः जनयन्ति [3]पुत्रम् एकस्य[3] भार्याः, तदानीं तयोः पुत्रस्य[4] दुहितुश्च अन्यः[5] पुत्रः शोभनस्य कर्मणः कर्ता भवति स्वतन्त्रः। तथा[6] अन्यः, दुहितेत्यर्थः, सा तस्मै[7] 'वशमात्मानं नयमाना[8] भवति। यास्कस्त्वाह—'यदी[9] मातरो जनयन्त। वह्निं पुत्रम्। अवह्निं च स्त्रियम्। अन्यतरः[10] सन्तानकर्ता भवति पुमान् दायादः। अन्यतरोऽर्द्धयित्वा जामिः प्रदीयते परस्मै[11]' ( ३,६ ) इति ॥ २ ॥

अग्निर्जज्ञे जुह्वा३ रेजमानो महस्पुत्राँ अरुषस्य प्रयक्षे।
महान् गर्भो मह्या जातमेषां मही प्रवृद्धर्यश्वस्य यज्ञैः ॥ ३ ॥

अग्निः। जज्ञे। जुह्वा। रेजमानः। महः। पुत्रान्। अरुषस्य। प्रऽयक्षे।
महान्। गर्भः। महि। आ। जातम्। एषाम्। मही। प्रऽवृत्। हर्यऽअश्वस्य। यज्ञैः ॥ ३ ॥

वेङ्कट० अग्निः[1] जज्ञे[12] होमेन चलन् महतः पुत्रस्थानीयान् रश्मीन् आरोचमानस्येन्द्रस्य[13] प्रकर्षेण यागाय। महत् एषाम् रश्मीनाम् उत्पत्तिस्थानम् महच्च जननम्। महती च प्रवृत्तिः हर्यश्वस्य यज्ञार्थमिति ॥ ३ ॥

अभि जैत्रीरसचन्त स्पृधानं महि ज्योतिस्तमसो निरजानन्।
तं जानतीः प्रत्युदायन्नुषासः पतिर्गवामभवदेक इन्द्रः ॥ ४ ॥

अभि। जैत्रीः। असचन्त। स्पृधानम्। महि। ज्योतिः। तमसः। निः। अजानन्।
तम्। जानतीः। प्रति। उत्। आयन्। उषसः। पतिः। गवाम्। अभवत्। एकः। इन्द्रः ॥ ४ ॥

वेङ्कट० पणिभिः स्पर्धमानमिन्द्रं जयहेतव उषसः अभि असचन्त। महच्च ज्योतिः पणिभिरुत्पादितात् अन्धकारात् निः अजानन्[14] इति। एतदेवाह—तमिति। तम् स्पर्धमानम् जानत्यः उषसः प्रति उत् आयन्[15]। अथ इन्द्रः असहायः गा जित्वा पतिः तासाम् अभवत् इति ॥ ४ ॥

वीळौ सतीरभि धीरा अतृन्दन् प्राचाहिन्वन् मनसा सप्त विप्राः।
विश्वामविन्दन् पथ्यामृतस्य प्रजानन्नित्ता नमसा विवेश ॥ ५ ॥

---

१-१. नास्ति वि[2] अ[1]. २. नास्ति वि[1] अ[1]. ३-३. पुत्रकस्य ल. ४. पुत्र वि[1] लपं. ५. अन्यस्य मूको. ६. यथा मूको. ७. कस्मै वि[1] अ[1] क. ८. वशमात्मानं नयनं वि[2] अ[1]; वशमात्मना वि[1] ल लपं. ९. यदि हि वि[1,2] अ[1]; यदि ह लपं. १०. °तरः सन् वि[2]. ११. परा लपं १२. जजान वि[1] ल. १३. °चनस्येन्द्र° वि[1]. १४. °जनयन् वि[1] अ[1]. १५. अयान् लपं.

वीळौ । सतीः । अभि । धीराः । अतृन्दन् । प्राचा । अहिन्वन् । मनसा । सप्त । विप्राः ।
विश्वाम् । अविन्दन । पथ्याम् । ऋतस्य । प्रऽजानन् । इत् । ता । नमसा । आ । विवेश ॥५॥

**वेङ्कट०** दृढे शिलोच्चये वर्तमानाः[1] धृष्टाः सप्त विप्राः ऋषयः अभि अतृन्दन्[2] । शिलोच्चयस्य द्वाराण्यकुर्वन्नित्यर्थः । अथ प्राचीनेन धृष्टेनाऽपराङ्मुखेन मनसा युक्ता ऋषयः[3] ताः स्वर्गं प्रति अहिन्वन् प्रैरयन्, सर्वामेव[4] यज्ञस्य[5] [6]भेषजभूतां गाम् अविन्दन् । अथ ताः प्रकर्षेण जानन्[6] एव सर्वो जनः अन्नार्थम् गृहेषु निवेशयति स्मेति । अस्मदीया एवैता इति प्रज्ञानमिति ॥ ५ ॥

[7]इति तृतीयाष्टके द्वितीयाध्याये पञ्चमो वर्गः[7] ॥

विदद् यदी सरमा रुग्णमद्रेर्महि पाथः पूर्व्यं सध्र्यक्कः ।
अग्रं नयत्सुपद्यक्षराणामच्छा रवं प्रथमा जानती गात् ॥ ६ ॥

विदत् । यदि । सरमा । रुग्णम् । अद्रेः । महि । पाथः । पूर्व्यम् । सध्र्यक् । कुरिति कः ।
अग्रम् । नयत् । सुऽपदी । अक्षराणाम् । अच्छ । रवम् । प्रथमा । जानती । गात् ॥ ६ ॥

**वेङ्कट०** पणिभिरपहृता गा ज्ञात्वा देवेषु सरमा प्रत्याजगाम । अथ देवा वदन्ति[8]—यदि शिलोच्चयस्य बिलम् सरमा ज्ञातवती, महत् अन्नं पूर्वकालभवम् अस्मदीयं[9] गवात्मकम् अस्माभिः सहितं करोतु । यत्र गावो गत्वाऽतिष्ठन् सः अग्रम् उच्यते । तत् अस्मान्नयतु । शोभनपदी तदर्थमस्माकमग्रतः गवाम्, शत्रुष्वपि न हन्यन्त इति गावोऽक्षराण्युच्यन्ते, स्वच्छम्[10] देशम् अवगच्छन्ती गच्छतु ॥६॥

अगच्छदु विप्रतमः सखीयन्नसूदयत् सुकृते गर्भमद्रिः ।
ससान मर्यो युवभिर्मखस्यन्नथाभवदङ्गिराः सद्यो अर्चन् ॥ ७ ॥

अगच्छत् । ऊँ इति । विप्रऽतमः । सखिऽयन् । असूदयत् । सुऽकृते । गर्भम् । अद्रिः ।
ससान । मर्यः । युवऽभिः । मखस्यन् । अथ । अभवत् । अङ्गिराः । सद्यः । अर्चन् ॥ ७ ॥

**वेङ्कट०** अगच्छत् मेधावितमः सखित्वमङ्गिरोभिरिच्छन्[11] तेषां गोप्रदानार्थम् । अथ सुकृते इन्द्राय शिलोच्चयः गर्भभूतं गोसङ्घम् असूदयत्, सूदयतिः[12] क्षरणकर्मा, निरगमयत् । अथ भेजे च[13] गाः मरुद्भिः सह इन्द्रः यज्ञमिच्छन् । तथा अभवत् ऋषिः अङ्गिराः सद्यः एवेन्द्रं स्तुतिभिः[14] अर्चन् आहृता[15] गा दृष्ट्वेति ॥ ७ ॥

सतःसतः प्रतिमानं पुरोभूर्विश्वा वेद जनिमा हन्ति शुष्णम् ।
प्र णो दिवः पदवीर्गव्युरर्चन्त्सखा सखीँरमुञ्चन्निरवद्यात् ॥ ८ ॥

---

१. वर्धमानाः वि[2] अ[1]; °माना गाः वि[1] लपं. २-२. अतृदन् वि[1,1,2] अ[1]. ३. नास्ति वि[1] लपं.
४. पूर्वमेव वि[1] लपं. ५. नास्ति वि[1]. ६-६. नास्ति वि[1] लपं. ७. नास्ति मूको. ८. वन्दन्ति वि[1] ल.
९. °काले भव° लपं. १०. स्वच्छतं वि[2] अ[1]. ११. सखीमगच्छन् वि[1] लपं; सखीमङ्गिर इच्छन् वि[2] अ[1].
१२. सूदतिः वि[1] लपं. १३. नास्ति ल. १४. कृतिभिः वि[1] लपं. १५. आगृह्य वि[1] लप.

सतःऽसतः । प्रतिऽमानम् । पुरःऽभूः । विश्वा । वेद । जनिम । हन्ति । शुष्णम् ।
प्र । नः । दिवः । पदऽवीः । गव्युः । अर्चन् । सखा । सखीन् । अमुञ्चत् । निः । अवद्यात् ॥८॥

वेङ्कट० सर्वस्य बलवतः प्रतिमानम् अग्रतो भवन्निन्द्रः सर्वाणि वेत्ति जातानि भूतानि, हन्ति च शुष्णम् असुरम् । सोऽस्मान् दिवः प्रधानभूतः अस्माकं गा इच्छन् गोभिश्चास्मान् प्र अर्चन् सखा सन् सखीन्[1] अस्मान् महोपद्रवात्[2] निर्मुञ्चतु[3] ॥ ८ ॥

नि गव्यता मनसा सेदुरर्कैः कृण्वानासो अमृतत्वाय गातुम् ।
इदं चिन्नु सदनं भूर्येषां येन मासाँ असिषासन्नृतेन ॥ ९ ॥

नि । गव्यता । मनसा । सेदुः । अर्कैः । कृण्वानासः । अमृतऽत्वाय । गातुम् ।
इदम् । चित् । नु । सदनम् । भूरि । एषाम् । येन । मासान् । असिसासन् । ऋतेन ॥ ९ ॥

वेङ्कट० नि सेदुः सत्रमङ्गिरसः गा इच्छता मनसा स्तोत्रैः सह कुर्वन्तश्च अमृतत्वप्राप्त्यर्थम्[4] मार्गम् । इदम् चित नु सत्राऽऽसनं बहु भवति एषाम्, येन आसनेन मासान् सम्भक्तुमैच्छन् यज्ञेन अङ्गिरसो बहून् ॥ ९ ॥

संपश्यमाना अमदन्नभि स्वं पयः प्रत्नस्य रेतसो दुघानाः ।
वि रोदसी अतपद् घोष एषां जाते निःष्ठामदधुर्गोषु वीरान् ॥ १० ॥

सम्ऽपश्यमानाः । अमदन् । अभि । स्वम् । पयः । प्रत्नस्य । रेतसः । दुघानाः ।
वि । रोदसी इति । अतपत् । घोषः । एषाम् । जाते । निःऽस्थाम् । अदधुः । गोषु । वीरान् ॥

वेङ्कट० सह पश्यन्तः स्वभूतं गोसङ्घम् अङ्गिरसः अभि अमदन् पुराणस्य रेतसः पुत्रस्य पयः दुहानाः । कुमारार्थं पयो यथापूर्वं दुहाना इत्यर्थः । [5]वि अतपत्[5] अङ्गिरसां तपोवेगादिन्द्रम् स्तुवताम् शब्दः द्यां च पृथिवीं च । अथ ते तपसा जाते भूते प्रज्ञानम् अदधुः, गोषु च वीरान् इति । जातेषु रमणं[6] निहितवन्त इत्यपरमिति ॥ १० ॥

[7]इति तृतीयाष्टके द्वितीयाध्याये षष्ठो वर्गः[7] ।

स जातेभिर्वृत्रहा सेदु हव्यैरुदुस्रिया असृजदिन्द्रो अर्कैः ।
उरूच्यस्मै घृतवद् भरन्ती मधु स्वाद्म दुदुहे जेन्या गौः ॥ ११ ॥

सः । जातेभिः । वृत्रऽहा । सः । इत् । ऊँ इति । हव्यैः । उत् । उस्रियाः । असृजत् । इन्द्रः । अर्कैः ।
उरूची । अस्मै । घृतऽवत् । भरन्ती । मधु । स्वाद्म । दुदुहे । जेन्या । गौः ॥ ११ ॥

---

१. नास्ति वि[०] लपं. २. महदुप[०] ल. ३. निमुञ्चतु वि[०] लपं ४. अमृतप्रा[०] मूको. ५-५. अप्यतपत् मूको. ६. मरणं वि[०] अ[०] ल. ७-७. नास्ति मूको.

**वेङ्कट०** सः[1] मनुष्यार्थं शत्रुहा। सः एव देवार्थं पणिभिरपहृता गाः पर्वतात् उत् असृजत् इन्द्रः सप्तभिर्विप्रैः[2] प्रयुक्तैः स्तोत्रैः। उरुत्वमञ्चन्ती[3] बह्वी[4] पणिभ्यो जिता गौः भरन्ती इन्द्राय घृतयुक्तं स्वदनीयं पयः दुदुहे इति ॥ ११ ॥

पित्रे चिच्चक्रुः सदनं समस्मै महि त्विषीमत् सुकृतो वि हि ख्यन् ।
विष्कभ्नन्तः स्कम्भनेना जनित्री आसीना ऊर्ध्वं रभसं वि मिन्वन् ॥ १२ ॥

पित्रे । चित् । चक्रुः । सदनम् । सम् । अस्मै । महि । त्विषिऽमत् । सुऽकृतः । वि । हि । ख्यन् ।
विऽस्कभ्नन्तः । स्कम्भनेन । जनित्री इति । आसीनाः । ऊर्ध्वम् । रभसम् । वि । मिन्वन् ॥१२॥

**वेङ्कट०** जगतां पालयित्रे इन्द्राय सदनम् स्थानमन्तरिक्षम् सम् चक्रुः। महदिदमन्तरिक्षम् दीप्तिमत् सुकृतः हि वि अख्यन् दृष्टवन्तः। प्रजनयित्र्यौ द्यावापृथिव्यौ स्कम्भनेन[5] इन्द्रेण विष्कभ्नन्तः आसीनाः अङ्गिरसः वेगवन्तम् इन्द्रम् अन्तरिक्षे ऊर्ध्वम् अस्थापयन् ॥ १२ ॥

मही यदि धिषणा शिश्नथे धात् सद्योवृधं विभ्वं१ रोदस्योः ।
गिरो यस्मिन्ननवद्याः समीचीर्विश्वा इन्द्राय तविषीरनुत्ताः ॥ १३ ॥

मही । यदि । धिषणा । शिश्नथे । धात् । सद्यःऽवृधम् । विऽभ्वम् । रोदस्योः ।
गिरः । यस्मिन् । अनवद्याः । सम्ऽईचीः । विश्वाः । इन्द्राय । तविषीः । अनुत्ताः ॥ १३ ॥

**वेङ्कट०** महती यदि वाक् सद्यो वर्धमानम्[6] द्यावापृथिव्योः व्याप्तमिन्द्रम् अशिश्नथत् न्यपीडयत्[7]। अथ स धारयत्यस्मानिन्द्रः। स्तुतयः यस्मिन् इन्द्रे अवद्यरहिताः समीच्यो भवन्ति गच्छन्ति[8], अस्मा[9] एव इन्द्राय सर्वाण्येव बलानि शत्रुभिरनुत्तानि विद्यन्त इति[10] ॥ १३ ॥

मह्या ते सख्यं वश्मि शक्तीरा वृत्रघ्ने नियुतो यन्ति पूर्वीः ।
महि स्तोत्रमव आगन्म सूरेरस्माकं सु मघवन् बोधि गोपाः ॥ १४ ॥

महि । आ । ते । सख्यम् । वश्मि । शक्तीः । आ । वृत्रऽघ्ने । निऽयुतः । यन्ति । पूर्वीः ।
महि । स्तोत्रम् । अवः । आ । अगन्म । सूरेः । अस्माकम् । सु । मघऽवन् । बोधि । गोपाः ॥१४॥

**वेङ्कट०** हे इन्द्र! महत् तव सख्यम् आ कामये बलानि च[11]। आ यान्ति अस्मान् प्रति गमनाय इन्द्राय अश्वाः पुरातनाः। महत् स्तोत्रम् हविः च[5] आ गमयामः सूरेः इन्द्रस्य तव। त्वम् अस्माकम् हे धनवन्! सुष्ठु बुध्यस्व गोपायिता भवामीति ॥ १४ ॥

---

१. नास्ति वि[1]. २. सप्तभिर्विर्यैः ळ. ३. °मञ्चती मूको. ४. बह्वीः ळ. ५. स्तम्भ° वि[1] ळपं. ६. नास्ति वि[1] ळपं. ७. नास्ति ळ; निपडिनम् वि[2] ळपं. ८. गच्छन्त्यः अ[1]. ९. अस्मान् अ[1]. १०. नास्ति वि[3] अ[1]. ११. वा ळपं.

महि क्षेत्रं पुरु श्चन्द्रं विविद्वानादित् सखिभ्यश्चरथं समैरत् ।
इन्द्रो नृभिरजनद् दीद्यानः साकं सूर्यमुषसं गातुमग्निम् ॥ १५ ॥

महि । क्षेत्रम् । पुरु । चन्द्रम् । विविद्वान् । आत् । इत् । सखिऽभ्यः । चरथम् । सम् । ऐरत् ।
इन्द्रः । नृऽभिः । अजनत् । दीद्यानः । साकम् । सूर्यम् । उषसम् । गातुम् । अग्निम् ॥ १५ ॥

**वेङ्कट०** महत्[1] क्षेत्रम् बहु च सुवर्णं च लम्भयन् अनन्तरम् एव स्तोतृभ्यः चरणशीलं गवादिकं च सम् प्रैरयत् । इन्द्रः मनुष्यानुद्दिश्य अजनयत् दीप्यमानः सह सूर्यम् उषसम् गमनशीलं वायुम्[2] अग्निम् चेति ॥ १५ ॥

[3]इति तृतीयाष्टके द्वितीयाध्याये सप्तमो वर्गः[3] ॥

अपश्चिदेष विभ्वो३ दमूनाः प्र सध्रीचीरसृजद् विश्वश्चन्द्राः ।
मध्वः पुनानाः कविभिः पवित्रैर्द्युभिर्हिन्वन्त्यक्तुभिर्धनुत्रीः ॥ १६ ॥

अपः । चित् । एषः । विऽभ्वः । दमूनाः । प्र । सध्रीचीः । असृजत् । विश्वऽचन्द्राः ।
मध्वः । पुनानाः । कविऽभिः । पवित्रैः । द्युऽभिः । हिन्वन्ति । अक्तुऽभिः । धनुत्रीः ॥ १६ ॥

**वेङ्कट०** एषः दममनाः[4] व्याप्ताः अपः च प्र असृजत् सहाञ्चतीः सर्वस्य कमनीयाः । सोमान्[5] पुनानाः[6] ऋत्विग्भिः दशापवित्रैश्च सह अहस्सु रात्रिषु[7] च[8] अनवरतं गच्छन्ति प्रीणयित्र्यः ॥ १६ ॥

अनु कृष्णे वसुधिती जिहाते उभे सूर्यस्य मंहना यजत्रे ।
परि यत् ते महिमानं वृजध्यै सखाय इन्द्र काम्या ऋजिप्याः ॥ १७ ॥

अनु । कृष्णे इति । वसुधिती इति वसुऽधिती । जिहाते इति । उभे इति । सूर्यस्य । मंहना । यजत्रे इति ।
परि । यत् । ते । महिमानम् । वृजध्यै । सखायः । इन्द्र । काम्याः । ऋजिप्याः ॥ १७ ॥

**वेङ्कट०** सुवीर्यस्येन्द्रस्य तेजांसि मंहनानि लोकस्याऽनुगच्छतः कृष्णा रात्रिरहश्च निहितधने उभे यजनीये । परि गन्तुम् तव महिमानम् यस्मात् समानख्यानाः हे इन्द्र! सञ्जातकामाः ऋजुगमनाः देवा इति ॥ १७ ॥

पतिर्भव वृत्रहन्त्सूनृतानां गिरां विश्वायुर्वृषभो वयोधाः ।
आ नो गहि सख्येभिः शिवेभिर्महान् महीभिरूतिभिः सरण्यन् ॥ १८ ॥

---

१. नास्ति वि[१] अ[१]. २. नास्ति वि[१]. ३-३. नास्ति मूको. ४. दानमानाः वि[१] लपं. ५. सोमं लपं. ६. पुनः पुनः लपं. ७. रात्रीषु लपं. ८. वा वि[१] अ[१].

पतिः । भव । वृत्रऽहन् । सूनृतानाम् । गिराम् । विश्वऽआयुः । वृषभः । वयःऽधाः ।
आ । नः । गहि । सख्येभिः । शिवेभिः । महान् । महीभिः । ऊतिऽभिः । सरण्यन् ॥ १८ ॥

**वेङ्कट०** स्वामी भव हे शत्रुहन्! सत्यानाम् स्तुतीनाम्[1] सर्वगमनः कामानां वर्षिता[2] अन्नस्य दाता च। आ गच्छ अस्मान् कल्याणैः सख्यैः महान् महद्भिः मरुद्भिः सह सरणमिच्छन् ॥ १८ ॥

तमङ्गिरस्वन्नमसा सपर्यन् नव्यं कृणोमि सन्यसे पुराजाम् ।
द्रुहो वि याहि बहुला अदेवीः स्वश्च नो मघवन्त्सातये धाः ॥ १९ ॥

तम् । अङ्गिरस्वत् । नमसा । सपर्यन् । नव्यम् । कृणोमि । सन्यसे । पुराऽजाम् ।
द्रुहः । वि । याहि । बहुलाः । अदेवीः । स्वरिति स्वः । च । नः । मघऽवन् । सातये । धाः ॥

**वेङ्कट०** अङ्गिरस इव तम् त्वाम् अन्नेन पूजयन् नवम् कृणोमि स्तोतृणां धनसर्गार्थम् पुरा जातम्। यातिर्वधकर्मसु[3] पठितः, द्रोग्ध्रीः वि जहि बहुलाः[4] आसुरीः सेनाः। स्वर्गम् च अस्माकम् हे धनवन्! असुरविनाशेन भजनाय कुर्विति ॥ १९ ॥

मिहः पावकाः प्रतता अभूवन्त्स्वस्ति नः पिपृहि पारमासाम् ।
इन्द्र त्वं रथिरः पाहि नो रिषो मक्षूमक्षू कृणुहि गोजितो नः ॥ २० ॥

मिहः । पावकाः । प्रऽतताः । अभूवन् । स्वस्ति । नः । पिपृहि । पारम् । आसाम् ।
इन्द्र । त्वम् । रथिरः । पाहि । नः । रिषः । मक्षुऽमक्षु । कृणुहि । गोऽजितः । नः ॥२० ॥

**वेङ्कट०** नद्यः शोधयित्र्यः प्रतताः भवन्ति। स्वस्ति अस्मान् पारय तीरम् आसाम् इति नदीरुत्तितीर्षुर्वदति। संवादश्च भविष्यति 'प्र पर्वतानाम्' (ऋ ३,३३,१) इति। त्वम् हे इन्द्र! रथवान् रक्ष अस्मान् [4]विनाशात् क्षिप्रं च[4] अस्मान् गवां जेतॄन् कुरु ॥ २० ॥

अदेदिष्ट वृत्रहा गोपतिर्गा अन्तः कृष्णाँ अरुषैर्धामभिर्गात् ।
प्र सूनृता दिशमान ऋतेन दुरश्च विश्वा अवृणोदप स्वाः ॥ २१ ॥

अदेदिष्ट । वृत्रऽहा । गोऽपतिः । गाः । अन्तरिति । कृष्णान् । अरुषैः । धामऽभिः । गात् ।
प्र । सूनृताः । दिशमानः । ऋतेन । दुरः । च । विश्वाः । अवृणोत् । अप । स्वाः ॥ २१ ॥

**वेङ्कट०** प्रायच्छत् वृत्रहा गवां पतिः पशून्। तदर्थं कृष्णवर्णान् असुरान् आरोचमानैः तेजोभिः अन्तः जगाम। प्र दिशन् धनप्रदानाभिमुखीः सत्या वाचः यज्ञेन सर्वाणि स्वानि द्वाराणि च अपावृणोतु धनप्रदानार्थमिति ॥ २१ ॥

---

१. नास्ति वि[1] लपं. २. वर्षिता च लपं. ३. °कर्मा लपं. ४-४. नास्ति वि[1].

शुनं हुवेम मघवानमिन्द्रमस्मिन् भरे नृतमं वाजसातौ ।
शृण्वन्तमुग्रमूतये समत्सु घ्नन्तं वृत्राणि संजितं धनानाम् ॥ २२ ॥

शुनम् । हुवेम । मघऽवानम् । इन्द्रम् । अस्मिन् । भरे । नृऽतमम् । वाजऽसातौ ।
शृण्वन्तम् । उग्रम् । ऊतये । समत्ऽसु । घ्नन्तम् । वृत्राणि । सम्ऽजितम् । धनानाम् ॥ २२ ॥

**वेङ्कट०** ऋ ३,३०,२२ द्र. ॥ २२ ॥

[1]इति तृतीयाष्टके द्वितीयाध्याये अष्टमो वर्गः[1] ॥

[ ३२ ]

[1]विश्वामित्रः गाथिन ऋषिः । इन्द्रो देवता । त्रिष्टुप् छन्दः[1] ।

इन्द्र सोमं सोमपते पिबेमं माध्यंदिनं सवनं चारु यत् ते ।
प्रप्रुथ्या शिप्रे मघवन्नृजीषिन् विमुच्या हरी इह मादयस्व ॥ १ ॥

इन्द्र । सोमम् । सोमऽपते । पिब । इमम् । माध्यन्दिनम् । सवनम् । चारु । यत् । ते ।
प्रऽप्रुथ्य । शिप्रे इति । मघऽवन् । ऋजीषिन् । विऽमुच्य । हरी इति । इह । मादयस्व ॥ १ ॥

**वेङ्कट०** विश्वामित्रः । हे सोमपते इन्द्र! यत् त्वदीयम् माध्यन्दिम् सवनम्[2] चारु, तत्र सोमम् इमम् पिब । प्रसार्य हनू मघवन्! तृतीयसवनेऽप्यन्वयाद् ऋजीषवन्! अश्वौ विमुच्य अत्र सोमेन तृप्यस्व ॥ १ ॥

गवाशिरं मन्थिनमिन्द्र शुक्रं पिबा सोमं ररिमा ते मदाय ।
ब्रह्मकृता मारुतेना गणेन सजोषा रुद्रैस्तृपदा वृषस्व ॥ २ ॥

गोऽआशिरम् । मन्थिनम् । इन्द्र । शुक्रम् । पिब । सोमम् । ररिम । ते । मदाय ।
ब्रह्मऽकृता । मारुतेन । गणेन । सऽजोषाः । रुद्रैः । तृपत् । आ । वृषस्व ॥ २ ॥

**वेङ्कट०** मन्थः[3] करम्भः । [4]पयोमिश्रणं करम्भिणम्[4] हे इन्द्र! दीप्तम् पिब सोमम्, दद्मः तुभ्यम् मदाय । ब्रह्मकृता मरुताम् गणेन सहितः रुद्रैः च सह तृप्यन् आ सिञ्चस्व जठरे सोममिति ॥ २ ॥

ये ते शुष्मं ये तविषीमवर्धन्नर्चन्त इन्द्र मरुतस्त ओजः ।
माध्यंदिने सवने वज्रहस्त पिबा रुद्रेभिः सगणः सुशिप्र ॥ ३ ॥

---

१-१. नास्ति मूको. २. सावनं वि[2] अ[1]. ३. मन्था मूको. ४-४. पयोमिश्रणकरम्भिणम् वि[1] लपं.

ये । ते । शुष्मम् । ये । तविषीम् । अवर्धन् । अर्चन्तः । इन्द्र । मरुतः । ते । ओजः ।
माध्यन्दिने । सवने । वज्रऽहस्त । पिब । रुद्रेभिः । सऽगणः । सुऽशिप्र ॥ ३ ॥

**वेङ्कट०** ये तव शोषकं तेजः **वर्धयन्ति,** ये **च वृद्धिम्, पूजयन्तः** इन्द्र! **तव बलम्** मरुतः, माध्यन्दिने सवने हे वज्रहस्त! पिब **रुद्रपुत्रैस्तैः सहितः सोमं सुहनो! ॥ ३ ॥**

**त इन्न्वस्य मधुमद् विविप्र इन्द्रस्य शर्धो मरुतो य आसन् ।**
**येभिर्वृत्रस्येषितो विवेदामर्मणो मन्यमानस्य मर्म ॥ ४ ॥**

ते । इत् । नु । अस्य । मधुऽमत् । विविप्रे । इन्द्रस्य । शर्धः । मरुतः । ये । आसन् ।
येभिः । वृत्रस्य । इषितः । विवेद । अमर्मणः । मन्यमानस्य । मर्म ॥ ४ ॥

**वेङ्कट०** ते एव क्षिप्रम् अस्य मधुमत् उदकम् प्रावेपयन्[1], ये मरुतः **अस्य वृत्रेण स्पर्धमानस्य बलम् अभवन्।** येभिः **यैः[2] मरुद्भिः** प्रेषितः **अमर्माऽहमस्मीति** मन्यमानस्य वृत्रस्य **मर्मस्थानं ज्ञातवानिति ॥ ४ ॥**

**मनुष्वदिन्द्र सवनं जुषाणः पिबा सोमं शश्वते वीर्याय ।**
**स आ ववृत्स्व हर्यश्व यज्ञैः सरण्युभिरपो अर्णा सिसर्षि ॥ ५ ॥**

मनुष्वत् । इन्द्र । सवनम् । जुषाणः । पिब । सोमम् । शश्वते । वीर्याय ।
सः । आ । ववृत्स्व । हरिऽअश्व । यज्ञैः । सरण्युऽभिः । अपः । अर्णा । सिसर्षि ॥ ५ ॥

**वेङ्कट० मनोरिव अस्माकमपि** सवनम् हे इन्द्र! **सेवमानः** पिब सोमम् **समग्राय** वीर्याय। सः त्वम् आ **वर्तस्व** हे[3] हर्यश्व!, **यजनीयैर्मरुद्भिः। तव सरणमिच्छद्भिः[4] वृत्रस्थाः** अपः **गमनशीलाः निस्सारय ॥ ५ ॥**

[5]इति तृतीयाष्टके द्वितीयाध्याये नवमो वर्गः[5] ॥

**त्वमपो यद्ध वृत्रं जघन्वाँ अत्याँइव प्रासृजः सर्तवाजौ ।**
**शयानमिन्द्र चरता वधेन वव्रिवांसं परि देवीरदेवम् ॥ ६ ॥**

त्वम् । अपः । यत् । ह । वृत्रम् । जघन्वान् । अत्यान्ऽइव । प्र । असृजः । सर्तवै । आजौ ।
शयानम् । इन्द्र । चरता । वधेन । वव्रिऽवांसम् । परि । देवीः । अदेवम् ॥ ६ ॥

---

१. प्रवेपयन्त लपं.  २. वा वि[1,2] अ[1].  ३. नास्ति वि[1] लपं.  ४. शरणमिच्छति वि[1] लपं.
५-५ नास्ति मूको.

वेङ्कट० त्वम् उदकानि यदा वृत्रम् हतवानसि तदानीमश्वानिव [1]सङ्ग्रामे सरणार्थम्[1] पृथ्वीं[2] प्रति प्र असृजः । शयानम् इन्द्र![3] वृत्रं देवनशीलाः अपः परितः वव्रिवांसम् अदेवनशीलं तं [4]प्रति गच्छता† वज्रेण जघ्निवानित्यन्वय इति[4] ॥ ६ ॥

यजाम इन्नमसा वृद्धमिन्द्रं बृहन्तमृष्वमजरं युवानम् ।
यस्य प्रिये ममतुर्यज्ञियस्य न रोदसी महिमानं ममाते ॥ ७ ॥

यजामः । इत् । नमसा । वृद्धम् । इन्द्रम् । बृहन्तम् । ऋष्वम् । अजरम् । युवानम् ।
यस्य । प्रिये इति । ममतुः । यज्ञियस्य । न । रोदसी इति । महिमानम् । ममाते इति ॥ ७ ॥

वेङ्कट० यजामः एव [5]अन्नेन प्रवृद्धम् इन्द्रम् महान्तं दर्शनीयं जरावर्जितम् युवानम् । यस्य प्रियतमे अत्यन्तं[5] परिच्छेत्तुः(?)[6] यज्ञार्हस्य न द्यावापृथिवी महिमानम् परिच्छेत्तुं शक्नुतः । 'परि द्यावापृथिवी जभ्र उर्वी नास्य ते महिमानम्' ( ऋ १,६१,८ ) इत्युक्तमिति ॥ ७ ॥

इन्द्रस्य कर्म सुकृता पुरूणि व्रतानि देवा न मिनन्ति विश्वे ।
दाधार यः पृथिवीं द्यामुतेमां जजान सूर्यमुषसं सुदंसाः ॥ ८ ॥

इन्द्रस्य । कर्म । सुऽकृता । पुरूणि । व्रतानि । देवाः । न । मिनन्ति । विश्वे ।
दाधार । यः । पृथिवीम् । द्याम् । उत । इमाम् । जजान । सूर्यम् । उषसम् । सुऽदंसाः ॥ ८ ॥

वेङ्कट० इन्द्रस्य कर्माणि सुकृतानि बहूनि । व्रतानि चाऽस्य सर्वे देवाः न हिंसन्ति । दधार[7] यः अन्तरिक्षं दिवं भूमिं च । 'पृथिवी' ( निघ १,३ ) इति अन्तरिक्षनाम । जनयामास च सूर्यम् उषसम् च शोभनकर्मा ॥ ८ ॥

अद्रोघ सत्यं तव तन्महित्वं सद्यो यज्जातो अपिबो ह सोमम् ।
न द्याव इन्द्र तवसस्त ओजो नाहा न मासाः शरदो वरन्त ॥ ९ ॥

अद्रोघ । सत्यम् । तव । तत् । महिऽत्वम् । सद्यः । यत् । जातः । अपिबः । ह । सोमम् ।
न । द्यावः । इन्द्र । तवसः । ते । ओजः । न । अहा । न । मासाः । शरदः । वरन्त ॥ ९ ॥

वेङ्कट० हे अद्रोह हिंसारहित! सत्यम् तव तत् महत्त्वम्, सद्यः एव यत् जातः त्वम् सोमम् अपिबः । न द्युलोकाः[8] इन्द्र! वृद्धस्य तव बलम् निवारयन्ति, तथा अहःप्रभृतयश्चेति ॥ ९ ॥

---

१-१. संवरणार्थं संग्रामे वि[२] लपं. २. पृथिवीं लपं. ३. नास्ति मूको. ४-४. नास्ति वि[२] अ[१]. † गच्छ तावत् ल; गच्छता चरता ल प्रस्तावः. ५-५. नास्ति वि[२] अ[१]. ६. परिगच्छन्तु वि[२] ल. ७. दाधर अ[१]. ८. °कात् मूको.

त्वं स॒द्यो अ॑पिबो जा॒त इ॑न्द्र॒ मदा॑य॒ सोमं॑ पर॒मे व्यो॑मन् ।
यद्ध॒ द्यावा॑पृथि॒वी आवि॑वेशी॒रथा॑भवः पू॒र्व्यः का॒रुधा॑याः ॥ १० ॥

त्वम् । स॒द्यः । अ॒पि॒बः॒ । जा॒तः । इ॒न्द्र॒ । मदा॑य । सोम॑म् । प॒र॒मे । वि॒ऽओ॑मन् ।
यत् । ह॒ । द्यावा॑पृथि॒वी इति॑ । आ । अवि॑वेशीः । अथ॑ । अ॒भ॒वः॒ । पू॒र्व्यः । का॒रु॒ऽधा॑याः ॥१०॥

**वेङ्कट०** त्वम् तदानीमेव अपिबः जातः इन्द्र! मदाय सोमम् परमे[1] व्योम्नि स्वस्थाने[2] स्थितः । यदा त्वं प्रादुर्भूत उदितः द्यावापृथिव्यौ आ विशसि, अथ भवसि पुरातनः कारूणां धर्ता ॥ १० ॥

[3]इति तृतीयाष्टके द्वितीयाध्याये दशमो वर्गः[3] ॥

अह॒न्नहिं॑ परि॒शया॑न॒मर्ण॑ ओजा॒यमा॑नं तुविजात॒ तव्या॑न् ।
न ते॑ महि॒त्वमनु॑ भू॒दध॒ द्यौर्यद॒न्यया॑ स्फि॒ग्या॒३॒॑ क्षामव॑स्थाः ॥ ११ ॥

अह॑न् । अहि॑म् । प॒रि॒ऽशया॑नम् । अर्णः॑ । ओ॒जा॒यमा॑नम् । तु॒वि॒ऽजा॒त॒ । तव्या॑न् ।
न । ते॒ । म॒हि॒ऽत्वम् । अनु॑ । भू॒त् । अध॑ । द्यौः । यत् । अ॒न्यया॑ । स्फि॒ग्या॑ । क्षाम् । अव॑स्थाः ॥

**वेङ्कट०** उदकम् परिवृत्य शयानम् अहिम् हतवानसि बलमाचरन्तम् हे बहुजनन! तवीयान् प्रवृद्धतरः । न तव महत्त्वम् अथ अनु भवति द्यौः अपि, यदा त्वम् अन्यतरया कट्या पृथिवीम् अवतिष्ठसि अधःस्थिताम् अधितिष्ठसीति ॥ ११ ॥

य॒ज्ञो हि त॑ इन्द्र॒ वर्ध॑नो॒ भूदु॒त प्रि॒यः सु॒तसो॑मो मि॒येधः॑ ।
य॒ज्ञेन॑ य॒ज्ञम॑व य॒ज्ञियः॒ सन् य॒ज्ञस्ते॒ वज्र॑महि॒हत्य॑ आवत् ॥ १२ ॥

य॒ज्ञः । हि । ते॒ । इ॒न्द्र॒ । वर्ध॑नः । भूत् । उ॒त । प्रि॒यः । सु॒तऽसो॑मः । मि॒येधः॑ ।
य॒ज्ञेन॑ । य॒ज्ञम् । अ॒व॒ । य॒ज्ञियः॑ । सन् । य॒ज्ञः । ते॒ । वज्र॑म् । अ॒हि॒ऽहत्ये॑ । आ॒व॒त् ॥ १२ ॥

**वेङ्कट०** यज्ञः हि तव हे इन्द्र! वर्धनः भवति । अपि च प्रियः सुतसोमः मेधार्हो यजमानः । ततस्त्वम् यज्ञेन यजमानम् रक्ष यज्ञार्हः सन् । यज्ञः तव वज्रम् अहिहनने[4] अरक्षत्[5] बलानुप्रदानादिति ॥१२॥

य॒ज्ञेनेन्द्र॒मव॑सा च॑क्रे अ॒र्वागैनं॑ सु॒म्नाय॒ नव्य॑से ववृत्याम् ।
यः स्तोमे॑भिर्वावृ॒धे पू॒र्व्येभि॒र्यो म॑ध्य॒मेभि॑रु॒त नूत॑नेभिः ॥ १३ ॥

---

१. नास्ति वि॰ लपं. २. संस्थाने वि॰ लपं. ३-३. नास्ति मूको. ४. °ननेन लपं. ५. रक्षन् वि॰ लपं.

यज्ञेन । इन्द्रम् । अवसा । आ । चक्रे । अर्वाक् । आ । एनम् । सुम्नाय । नव्यसे । ववृत्याम् ।
यः । स्तोमेभिः । ववृधे । पूर्व्येभिः । यः । मध्यमेभिः । उत । नूतनेभिः ॥ १३ ॥

वेङ्कट० रक्षकेण यज्ञेन इन्द्रम् आ करोमि । [1]अभिमुखम् आ वर्तयेयम्[1] अथ[2] अहम् एनम् इन्द्रम् सुखाय नवतराय, यः स्तोमेभिः ववृधे पूर्वेषु[3] भवैः, यः वा मध्यभवैः[4], अपि च सम्प्रतितनैः ॥ १३ ॥

विवेष यन्मा धिषणा जजान स्तवै पुरा पार्यादिन्द्रमह्नः ।
अंहसो यत्र पीपरद् यथा नो नावेव यान्तमुभये हवन्ते ॥ १४ ॥

विवेष । यत् । मा । धिषणा । जजान । स्तवै । पुरा । पार्यात् । इन्द्रम् । अह्नः ।
अंहसः । यत्र । पीपरत् । यथा । नः । नावाऽइव । यान्तम् । उभये । हवन्ते ॥ १४ ॥

वेङ्कट० उपस्थिता यस्मात्[5] मां स्तुतिवाक्, अतस्तां जनयामि । स्तवानि [6]पुरा एव पारे[6] भवात् मरणदिवसात् इन्द्रम् । यस्मिन् स्तोत्रे सति येन प्रकारेण अस्मान् अंहसः पीपरत् इन्द्रः, तेनैव प्रकारेण बहुधनान् अस्मान् नावा यान्तम् इव उभयकूलस्था उभयपार्श्वस्था[7] आह्वयन्ति[8] लिप्सन्त इति ॥ १४ ॥

आपूर्णो अस्य कलशः स्वाहा सेक्तेव कोशं सिसिचे पिबध्यै ।
समु प्रिया आववृत्रन् मदाय प्रदक्षिणिदभि सोमास इन्द्रम् ॥ १५ ॥

आऽपूर्णः । अस्य । कलशः । स्वाहा । सेक्ताऽइव । कोशम् । सिसिचे । पिबध्यै ।
सम् । ऊँ इति । प्रियाः । आ । अववृत्रन् । मदाय । प्रऽदक्षिणित् । अभि । सोमासः । इन्द्रम् ॥

वेङ्कट० इन्द्रार्थं सोमेन द्रोणकलशः आपूर्णः । स हूयते पृथिव्यादिकं सिञ्चन् । यथा कोशम् सिञ्चति उत्सेक्ता, एवमहम् इन्द्रस्य सोमपानार्थम् द्रोणकलशम् उत्तरवेद्यां सिञ्चामि । सम् अभि आ अववृत्रन्[9] प्रदक्षिणं [10]प्रियाः सोमाः मदार्थम्[10] इन्द्रम् इति ॥ १५ ॥

न त्वा गभीरः पुरुहूत सिन्धुर्नाद्रयः परि षन्तो वरन्त ।
इत्था सखिभ्य इषितो यदिन्द्रा दृळ्हं चिदरुजो गव्यमूर्वम् ॥ १६ ॥

न । त्वा । गभीरः । पुरुऽहूत । सिन्धुः । न । अद्रयः । परि । सन्तः । वरन्त ।
इत्था । सखिऽभ्यः । इषितः । यत् । इन्द्र । आ । दृळ्हम् । चित् । अरुजः । गव्यम् । ऊर्वम् ॥ १६ ॥

---

१-१. त्रुटितम् वि[2] अ[1]. २. नास्ति ल. ३. पृष्ठे वि[1] लपं. ४. मध्यम° वि[1,2] अ[1] ल.
५. नास्ति वि[1] लपं. ६-६. नास्ति वि[2] अ[1]. ७. वउन्तः पार्श्व° वि[1] लपं. ८. ··· यन्ति वि[2] अ[1].
९. °ववृत्रन् इन्द्रं मूको. १०-१०. नास्ति वि[1] लपं.

वेङ्कट० हे पुरुभिराहूत इन्द्र! न त्वां गम्भीरा नद्यः परि वारयन्ति, न च शिलोच्चया विद्यमानाः। इत्थम् सूक्त उक्तेन प्रकारेण सखिभ्यः देवेभ्योऽङ्गिरोभ्यश्च तैः प्रेषितः सन् यदा त्वम् इन्द्र! आ अरुजः दृढम् गवामावरणम् ऊर्वम् महान्तं शिलोच्चयम् इति ॥ १६ ॥

शुनं हुवेम मघवानमिन्द्रमस्मिन् भरे नृतमं वाजसातौ ।
शृण्वन्तमुग्रमूतये समत्सु घ्नन्तं वृत्राणि संजितं धनानाम् ॥ १७ ॥

शुनम् । हुवेम । मघऽवानम् । इन्द्रम् । अस्मिन् । भरे । नृऽतमम् । वाजऽसातौ ।
शृण्वन्तम् । उग्रम् । ऊतये । समत्ऽसु । घ्नन्तम् । वृत्राणि । सम्ऽजितम् । धनानाम् ॥ १७ ॥

वेङ्कट० ऋ ३,३०,२२ द्र. ॥ १७ ॥

[1]इति तृतीयाष्टके द्वितीयाध्याये एकादशो वर्गः[1] ॥

[ ३३ ]

[1]विश्वामित्रो गाथिन ऋषिः, चतुर्थीषष्ठ्यष्टमीदशमीनां नद्य ऋषिकाः। नद्यो देवता, चतुर्थ्यष्टमीदशमीनां विश्वामित्रः, षष्ठीसप्तम्योरिन्द्रः। त्रिष्टुप् छन्दः, त्रयोदश्यनुष्टुप्[1]।

प्र पर्वतानामुशती उपस्थादश्वे इव विषिते हासमाने ।
गावेव शुभ्रे मातरा रिहाणे विपाट्छुतुद्री पयसा जवेते ॥ १ ॥

प्र । पर्वतानाम् । उशती इति । उपऽस्थात् । अश्वे इवेत्यश्वेऽइव । विसिते इति विऽसिते । हासमाने इति ।
गावाऽइव । शुभ्रे इति । मातरा । रिहाणे इति । विऽपाट् । शुतुद्री । पयसा । जवेते इति ॥१॥

वेङ्कट० यास्कः—'विश्वामित्रः सर्वमित्रः[2]। स[3] वित्तं[4] गृहीत्वा विपाट्छुतुद्र्योः[5] सम्भेदमाययौ, अनुययुरितरे। स विश्वामित्रो नदीस्तुष्टाव, गाधा भवतेति। अपि द्विवत्। अपि बहुवत्' (२,२४) इति। तदेतद्[6] द्विवत् 'प्र पर्वतानाम्' इति। पर्वतानाम् उपस्थानात् निर्गत्य कामयमाने वडवे इव विमुक्ते, हासतिः स्पर्धाकर्मा, परस्परं स्पर्धमाने, हर्षकर्मा वा, हर्षमाणे गावाविव शोभमाने श्वेतवर्णे मातृस्थानीये इतरेतरं संलिहाने विपाट्छुतुद्र्यौ[5] पयसा प्र जवेते ॥ १ ॥

इन्द्रेषिते प्रसवं भिक्षमाणे अच्छा समुद्रं रथ्येव याथः ।
समाराणे ऊर्मिभिः पिन्वमाने अन्या वामन्यामप्येति शुभ्रे ॥ २ ॥

---

१-१. नास्ति मूको. २. त्रुटितम् मूको. ३. नास्ति वि[1,2] अ[1]. ४. व्रतं वि[1] अ[1]. ५. °शत° वि[1] अ[1]. ६. नास्ति वि[1]; तदैतव वि[2] अ[1] ख कपं.

इन्द्रेषिते इतीन्द्रऽइषिते । प्रऽसवम् । भिक्षमाणे इति । अच्छ । समुद्रम् । रथ्याऽइव । याथः । समाराणे इति सम्ऽआराणे । ऊर्मिऽभिः । पिन्वमाने इति । अन्या । वाम् । अन्याम् । अपि । एति । शुभ्रे इति ॥ २ ॥

वेङ्कट० इन्द्रेण प्रेषिते तस्मादनुज्ञाम् भिक्षमाणे समुद्रम् प्रति रथमार्गेण रथ इव युवां गच्छथः सङ्गच्छमाने परस्परम् ऊर्मिभिः उदकम् पिन्वमाने । युवयोः अन्या अन्याम् अपि एति हे शुभ्रे! ॥ २ ॥

अच्छा सिन्धुं मातृतमामयासं विपाशमुर्वीं सुभगामगन्म ।
वत्समिव मातरा संरिहाणे समानं योनिमनु संचरन्ती ॥ ३ ॥

अच्छ । सिन्धुम् । मातृऽतमाम् । अयासम् । विऽपाशम् । उर्वीम् । सुऽभगाम् । अगन्म । वत्सम्ऽइव । मातरा । संरिहाणे इति सम्ऽरिहाणे । समानम् । योनिम् । अनु । संचरन्ती इति सम्ऽचरन्ती ॥ ३ ॥

वेङ्कट० अतिशयेन मातृस्थानीयाम्[1] सिन्धुम् आभिमुख्येन यामि शुतुद्रीम्[2], विपाशम् च विस्तीर्णां कल्याणीम् अभिगतवन्तः, वत्समिव मातरौ संलिहाने समानम् स्थानं समुद्रं लक्ष्यीकृत्य सञ्चरन्त्याविति ॥ ३ ॥

एना वयं पयसा पिन्वमाना अनु योनिं देवकृतं चरन्तीः ।
न वर्तवे प्रसवः सर्गतक्तः किंयुर्विप्रो नद्यो जोहवीति ॥ ४ ॥

एना । वयम् । पयसा । पिन्वमानाः । अनु । योनिम् । देवऽकृतम् । चरन्तीः । न । वर्तवे । प्रऽसवः । सर्गऽतक्तः । किम्ऽयुः । विप्रः । नद्यः । जोहवीति ॥ ४ ॥

वेङ्कट० नद्यो वदन्ति । अनेन उदकेन वयम् क्षरन्त्यः[3] देवेन कृतं स्थानं समुद्रम् अनु चरन्त्यो[4] भवाम । न निवर्तयितुं शक्यः अस्माकमिन्द्रकृतः प्रसवः प्रसक्तगमनः । 'अत्यो नाज्मन्त्सर्गप्रतक्तः' ( ऋ १, ६५,३ ) इति मन्त्रः । एवं सति किं मच्छन् अयं ब्राह्मणः नदीः अस्मान् आह्वयति ॥ ४ ॥

रमध्वं मे वचसे सोम्याय ऋतावरीरुप मुहूर्तमेवैः ।
प्र सिन्धुमच्छा बृहती मनीषावस्युरह्वे कुशिकस्य सूनुः ॥ ५ ॥

रमध्वम् । मे । वचसे । सोम्याय । ऋतऽवरीः । उप । मुहूर्तम् । एवैः । प्र । सिन्धुम् । अच्छ । बृहती । मनीषा । अवस्युः । अह्वे । कुशिकस्य । सूनुः ॥ ५ ॥

वेङ्कट० यज्ञार्थमसौ गच्छति, तदर्थं च नदीरनुधावति । यास्कः—'उपरमध्वम् मे वचसे सोम्याय सोमसम्पादिने । ऋतावरीर्ऋतवत्यः । ऋतमित्युदकनाम, प्रत्यृतं भवति । मुहूर्तम् एवैरयनैरवनैर्वा ।

---

१. °नीयम् मूको. २. शुतुद्रिं वि[२]; शतद्रुम् अ[१]. ३. रक्षन्त्यः वि[१] अपं. ४. सञ्चर° वि[१] अ[१].

मुहूर्तो मुहुर्कृतुः। ऋतुरर्तेर्गतिकर्मणः, मुहुर्मूळ्ह[1] इव कालः, यावदभीक्ष्णं चेति। प्राभिह्वयामि सिन्धुं बृहत्या महत्या मनीषया। मनस ईषया[2] स्तुत्या प्रज्ञया[3] [4]वा। अवनाय[4] कुशिकस्य सूनुः' (२, २५) इति ॥ ५ ॥

[5]इति तृतीयाष्टके द्वितीयाध्याये द्वादशो वर्गः[5]।

इन्द्रो॑ अ॒स्माँ अ॑रद॒द् वज्र॑बाहु॒रपा॑हन् वृ॒त्रं प॑रि॒धिं न॒दीना॑म्।
दे॒वो॑ऽनयत् सवि॒ता सु॑पा॒णिस्तस्य॑ व॒यं प्र॑स॒वे या॑म उ॒र्वीः ॥ ६ ॥

इन्द्रः॑। अ॒स्मान्। अ॒र॒द॒त्। वज्र॑ऽबाहुः। अप॑। अ॒ह॒न्। वृ॒त्रम्। प॒रि॒ऽधिम्। न॒दीना॑म्।
दे॒वः। अ॒न॒य॒त्। स॒वि॒ता। सु॒ऽपा॒णिः। तस्य॑। व॒यम्। प्र॒ऽस॒वे। या॒मः। उ॒र्वीः ॥ ६ ॥

**वेङ्कट०** **नद्यः प्रत्यूचुः**[6]। इन्द्रः अस्मान् अरदत् वज्रबाहुः। 'रदतिः खनतिकर्मा' (या २,२६)। **अपहतवान्**[7] **वृत्रासुरं परिधानम्** नदीनाम्। **अथ अस्मान्** देवः अनयत् सविता **कल्याणपाणिः**। तस्य वयम् **सवितुः** प्रसवे यामः '**आच्छादयित्र्यो महत्यो**[8]' वेति ॥ ६ ॥

प्र॒वाच्यं॑ शश्व॒धा वी॒र्यं१॒॑ तदिन्द्र॑स्य॒ कर्म॒ यदहिं॑ वि॒वृ॒श्चत्।
वि वज्रे॑ण परि॒षदो॑ जघा॒नाय॒न्नापोऽय॑नमि॒च्छमा॑नाः ॥ ७ ॥

प्र॒ऽवाच्य॑म्। श॒श्व॒धा। वी॒र्य॑म्। तत्। इन्द्र॑स्य। कर्म॑। यत्। अहि॑म्। वि॒ऽवृ॒श्चत्।
वि। वज्रे॑ण। प॒रि॒ऽसदः॑। ज॒घा॒न॒। आय॑न्। आपः॑। अय॑नम्। इ॒च्छमा॑नाः ॥ ७ ॥

**वेङ्कट०** **ऋषिवचनम्। छान्दसो धाप्रत्ययः। प्रकर्षेण वाच्यं सर्वथा** वीर्यम् तत्। **किं तत् इत्याह**। **इन्द्रस्य कर्म,** यत् अहिम् वि॒वृ॒श्चत्, वि जघान **च** वज्रेण **परितः सीदतः अनुचरान् अहेः। अथाऽगच्छन्** आपः **स्थानं समुद्रम् इच्छमानाः** ॥ ७ ॥

ए॒तद् वचो॑ जरित॒र्मापि॑ मृष्ठा॒ आ यत् ते॒ घोषा॒नुत्त॑रा यु॒गानि॑।
उ॒क्थेषु॑ का॒रो प्रति॑ नो जुषस्व॒ मा नो॒ नि कः॑ पुरुष॒त्रा नम॑स्ते ॥ ८ ॥

ए॒तत्। वचः॑। ज॒रि॒त॒रिति॑। मा। अपि॑। मृ॒ष्ठाः॒। आ। यत्। ते॒। घोषा॑न्। उत्ऽत॑रा। यु॒गानि॑।
उ॒क्थेषु॑। का॒रो इति॑। प्रति॑। नः॒। जु॒ष॒स्व॒। मा। नः॒। नि। क॒रि॒ति॑ कः। पु॒रु॒ष॒ऽत्रा। नमः॑। ते॒ ॥ ८ ॥

**वेङ्कट०** **संवादात्मकम्।** एतत् वचः **हे स्तोतः!** मा अपि मृष्ठाः। **अपिमार्जनं निराकरणम्।** आ **घोषयन्ति** यत् **त्वदीयमिदं वचो मनुष्याः उत्तराण्यपि** युगानि। **आगच्छति काल इत्यर्थः। तथापि स्मरणाद् अस्मानपि** उक्थेषु कारो! प्रति जुषस्व **प्रतिसेवस्व, भाजयेत्यर्थः। मा नः नि कार्षीः स्तुत्याः**[9] **पुरुषेषु**[10]। नमः ते इति ॥ ८ ॥

---

१. °मूढ अ[1]. २. °ष्टयया मूको. ३. नास्ति लपं. ४-४. पालनाय° वि[1] लपं. ५-५ नास्ति मूको. ६. नास्ति लपं. ७ अपहतवान वि[1] ल; अवा हतवान् वि[3] अ[1]. ८-८. °च्छादयित्र्यौ महत्यौ वि[2]. ९. स्तुत्या ल. १०. कुरु पुरु° मूको.

ओ षु स्व॑सारः का॒रवे॑ शृणोत य॒यौ वो॑ दू॒रादन॑सा॒ रथे॑न ।
नि षू न॑मध्वं॒ भव॑ता सुपा॒रा अ॑धोअ॒क्षाः सिन्ध॑वः स्रो॒त्याभि॑ः ॥ ९ ॥

ओ इति॑ । सु । स्व॒सा॒रः॒ । का॒रवे॑ । शृ॒णो॒त॒ । य॒यौ । वः॒ । दू॒रात् । अन॑सा । रथे॑न ।
नि । सु । न॒म॒ध्व॒म् । भव॑त । सु॒ऽपा॒राः । अ॒धः॒ऽअ॒क्षाः । सि॒न्ध॒वः॒ । स्रो॒त्याभि॑ः ॥ ९ ॥

वेङ्कट० अपेक्षितमधुना विश्वामित्रो वदति । हे भगिन्यः! अस्मदीयं वचनं सुष्ठु आ शृणुत । यातवान् अहम् युष्मान् दूरात् अनोभिश्च रथैश्च । आगतं मां दृष्ट्वा सुष्ठु नि नमध्वम्, स्वल्पाः भवत । भवत मम सुखेन पारयितव्याः । तदर्थं गमनानुगुणं हे सिन्धवः! स्रोतोभिः अक्षस्याऽधोभूता भवतेति ॥ ९ ॥

आ ते॑ कारो शृणवामा॒ वचां॑सि य॒याथ॑ दू॒रादन॑सा॒ रथे॑न ।
नि ते॑ नंसै पीप्या॒नेव॒ योषा॒ मर्या॑येव क॒न्या॑ शश्व॒चै ते॑ ॥ १० ॥

आ । ते॒ । का॒रो इति॑ । शृ॒ण॒वा॒म॒ । वचां॑सि । य॒याथ॑ । दू॒रात् । अन॑सा । रथे॑न ।
नि । ते॒ । नं॒सै॒ । पी॒प्या॒नाऽइ॑व । योषा॑ । मर्या॑यऽइव । क॒न्या॑ । श॒श्व॒चै । त॒ इति॑ ते ॥ १० ॥

वेङ्कट० यास्क आह — 'आ शृणवाम ते कारो! वचनानि । याहि दूरात् अनसा च रथेन च । नि नमाम ते, पाययमानेव योषा पुत्रम्, मर्यायेव कन्या परिष्वजनाय' (२,२७) इति । कन्या युवतिः मैथुनाय[1] निनमति, पुत्राय माता स्तनं प्रदातुमिति ॥ १० ॥

[2]इति तृतीयाष्टके द्वितीयाध्याये त्रयोदशो वर्गः[2] ॥

यद॒ङ्ग त्वा॑ भर॒ताः स॒न्तरे॑युर्ग॒व्यन् ग्राम॑ इषि॒त इन्द्र॑जूतः ।
अर्षा॒दह॑ प्रस॒वः सर्ग॑तक्त॒ आ वो॑ वृणे सुम॒तिं य॒ज्ञिया॑नाम् ॥ ११ ॥

यत् । अ॒ङ्ग । त्वा॒ । भ॒र॒ताः । स॒म्ऽतरे॑युः । ग॒व्यन् । ग्राम॑ः । इ॒षि॒तः । इन्द्र॑ऽजूतः ।
अर्षा॑त् । अह॑ । प्र॒ऽस॒वः । सर्ग॑ऽतक्तः । आ । वः॒ । वृ॒णे॒ । सु॒ऽम॒तिम् । य॒ज्ञिया॑नाम् ॥ ११ ॥

वेङ्कट० यदा क्षिप्रम् भरतकुलजाताः[3] विश्वामित्रस्तत्सहायाश्च हे नदि! [4]त्वा सन्तरेयुः[4] इति । एतेद्वाह गा इच्छन् भरतानां संवातः[5] इन्द्रप्रेषितः इन्द्रेण कामदेनाऽऽकृष्टः अनन्तरमेव गच्छतु यथापूर्वम् प्रसक्तगमनः तवोदकप्रसवः[6] । अथ[7] बहुवदाह । आ वृणे वः सुमतिम् अहम् यज्ञार्हाणामिति ॥ ११ ॥

अता॑रिषुर्भर॒ता ग॒व्यवः॒ सम॑भक्त॒ विप्रः॑ सुम॒तिं न॒दीना॑म् ।
प्र पि॑न्वध्वमि॒षय॑न्तीः सु॒राधा॒ आ व॒क्षणा॑ः पृ॒णध्वं॑ या॒त शीभ॑म् ॥ १२ ॥

---

१. मैथुनेन वि[2] लपं. २-२ नास्ति मूको. ३. ...वुले वि[2] अ[1]. ४-४. त्वान्तरेयुः वि[2] क[1]. ५. सङ्घः लपं. ६. °दक... वि[2] अ[1]. ७. नास्ति वि[2] अ[1].

अतारिषुः । भरताः । गव्यवः । सम् । अभक्त । विप्रः । सुऽमतिम् । नदीनाम् ।
प्र । पिन्वध्वम् । इषयन्तीः । सुऽराधाः । आ । वक्षणाः । पृणध्वम् । यात । शीभम् ॥ १२ ॥

**वेङ्कट०** सम् अतारिषुः भरतवंशजाः[1] सर्वे यज्ञेन गाः इच्छन्तः । अथ विश्वामित्रश्च नदीनाम् सुमतिम् अभक्त । अथ यूयं मनुष्याणाम् अन्नमुत्पादयितुमिच्छन्त्यः शोभनधनाः अपः[2] प्र पिन्वध्वम् प्रक्षरत, कूलानि चाऽऽपूरयत, यथापूर्वं शीघ्रम्[3] यात इत्युत्तीर्णस्य वचनमिति ॥ १२ ॥

उद् व ऊर्मिः शम्या हन्त्वापो योक्त्राणि मुञ्चत ।
मादुष्कृतौ व्येनसाघ्न्यौ शूनमारताम् ॥ १३ ॥

उत् । वः । ऊर्मिः । शम्याः । हन्तु । आपः । योक्त्राणि । मुञ्चत ।
मा । अदुःऽकृतौ । विऽएनसा । अघ्न्यौ । शूनम् । आ । अरताम् ॥ १३ ॥

**वेङ्कट०** हे आपः! युष्माकम् ऊर्मिः शकटेषु युक्तानां गवां याः[4] शम्यास्ताः उत् हन्तु [5]शम्यानां मूलमाहन्तु[5] न तत ऊर्ध्वं गच्छतु। तथा[6] यूयं गवां योक्त्राणि च विसृजत[7] । अदुष्टकारिण्यौ विगतपापे विपाट्शुतुद्र्यौ[8] अहन्तव्ये वृद्धिम् मा आगच्छतामिति ॥ १३ ॥

[9]इति तृतीयाष्टके द्वितीयाध्याये चतुर्दशो वर्गः[9] ॥

[ ३४ ]

[1]विश्वामित्रो गाथिन ऋषिः। इन्द्रो देवता । त्रिष्टुप् छन्दः[1] ।

इन्द्रः पूर्भिदातिरद् दासमर्कैर्विदद्वसुर्दयमानो वि शत्रून् ।
ब्रह्मजूतस्तन्वा वावृधानो भूरिदात्र आपृणद् रोदसी उभे ॥ १ ॥

इन्द्रः । पूःऽभित् । आ । अतिरत् । दासम् । अर्कैः । विदत्ऽवसुः । दयमानः । वि । शत्रून् ।
ब्रह्मऽजूतः । तन्वा । ववृधानः । भूरिऽदात्रः । आ । अपृणत् । रोदसी इति । उभे इति ॥ १ ॥

**वेङ्कट०** इन्द्रः पुरां भेत्ता वृत्रमसुरं स्तुतिभिः प्रवृद्धः आजघान लभ्यमानधनः वि हिंसन् शत्रून्[10] । स्तुतिभिराकृष्टः शरीरेण वर्धमानः बहुदानः[11] द्यावापृथिवी उभे अपि[12] तेजसा आ पूरयति ॥ १ ॥

मखस्य ते तविषस्य प्र जूतिमियर्मि वाचममृताय भूषन् ।
इन्द्र क्षितीनामसि मानुषीणां विशां दैवीनामुत पूर्वयावा ॥ २ ॥

---

१. °जाताः वि[1] लपं. २. आपः वि[1] ल. ३. °प्रतरं वि[1,2] अ[1] लपं. ४. स्वाः मूको. ५-५. नास्ति वि[1] लपं. ६. यथा मूको. ७. नास्ति वि[1] लपं. ८. °शतद्र्यौ अ[1]. ९-९. नास्ति मूको. १०. शत्रुम् मूको. ११. नास्ति वि[2] अ[1]. १२. अपि च वि[1] लपं.

म॒खस्य॑ । ते॒ । त॒वि॒षस्य॑ । प्र । जू॒तिम् । इय॑र्मि । वाच॑म् । अ॒मृता॑य । भूष॑न् ।
इन्द्र॑ । क्षि॒ती॒नाम् । अ॒सि॒ । मानु॑षीणाम् । वि॒शाम् । दैवी॑नाम् । उ॒त । पू॒र्व॒ऽयावा॑ ॥ २ ॥

**वेङ्कट०** मखो मंहतेर्दानकर्मणः ( तु. निघ ३,२० )। दातुः प्रवृद्धस्य तव आकर्षणसाधनभूतां स्तुतिम् अहं प्र ईरयामि अमृतत्वाय भवितुमिच्छन्। हे इन्द्र! त्वम् असि मानुषीणाम् प्रजानाम् अपि च दैवीनाम् विशाम् अग्रे गन्ता ॥ २ ॥

इन्द्रो॑ वृ॒त्रम॑वृणो॒च्छर्ध॑नीतिः॒ प्र मा॒यिना॑ममिना॒द् वर्प॑णीतिः ।
अह॒न् व्यं॑समु॒शध॒ग्वने॑ष्वा॒विर्धेना॑ अकृणोद् रा॒म्याणा॑म् ॥ ३ ॥

इन्द्रः॑ । वृ॒त्रम् । अ॒वृ॒णो॒त् । शर्ध॑ऽनीतिः । प्र । मा॒यिना॑म् । अ॒मि॒ना॒त् । वर्प॑ऽनीतिः ।
अह॑न् । विऽअं॑सम् । उ॒शध॑क् । वने॑षु । आ॒विः । धेनाः॑ । अ॒कृ॒णो॒त् । रा॒म्याणा॑म् ॥ ३ ॥

**वेङ्कट०** इन्द्रः वृत्रम् अवृणोत् उद्युक्तनयनः तथा मायायुक्तानामसुराणाम् प्रकर्षेण कृतवान् हिंसां शत्रूणामावारकनयनः। तथा व्यंसनामासुरम् अहन् अभिलषितदहनः तस्याऽऽवासभूतेष्वरण्येषु। दग्धवांश्च तस्यारण्यमित्यर्थः। क्रियापदं वा उशधक् इति। हवींषि कामयामास देवयजनभूतेष्वरण्येष्विति। रमणकुशलानां कवीनाम् स्तुतीश्च आविः अकृणोत् ॥ ३ ॥

इन्द्रः॑ स्व॒र्षा ज॒नय॒न्नहा॑नि जि॒गायो॒शिग्भिः॒ पृत॑ना अ॒भिष्टिः॑ ।
प्रारो॑चय॒न्मन॑वे के॒तुमह्ना॒मवि॑न्द॒ज्ज्योति॑र्बृह॒ते रणा॑य ॥ ४ ॥

इन्द्रः॑ । स्वः॒ऽसाः । ज॒नय॑न् । अहा॑नि । जि॒गाय॑ । उ॒शिक्ऽभिः॑ । पृत॑नाः । अ॒भिष्टिः॑ ।
प्र । अ॒रो॒च॒य॒त् । मन॑वे । के॒तुम् । अह्ना॑म् । अवि॑न्दत् । ज्योतिः॑ । बृ॒ह॒ते । रणा॑य ॥ ४ ॥

**वेङ्कट०** इन्द्रः स्वर्गस्य सम्भक्ता दिवसांश्च जनयन् जयति[1] कामयमानैर्मरुद्भिः सह शत्रुसेनाः अभ्येषणशीलः। प्र दीपयति च मनुष्येभ्यः अह्नाम् केतुम् सूर्यम्। अन्धकारविनाशे महते युद्धाय प्रकाशं लम्भयति ॥ ४ ॥

इन्द्र॒स्तुजो॑ ब॒र्हणा॒ आ वि॑वेश नृ॒वद् दधा॑नो॒ नर्या॑ पु॒रूणि॑ ।
अचे॑तय॒द् धिय॑ इ॒मा ज॑रि॒त्रे प्रेमं वर्ण॒मति॑रच्छु॒क्रमा॑साम् ॥ ५ ॥

इन्द्रः॑ । तुजः॑ । ब॒र्हणाः॑ । आ । वि॒वे॒श॒ । नृ॒ऽवत् । दधा॑नः । नर्या॑ । पु॒रूणि॑ ।
अचे॑तयत् । धियः॑ । इ॒माः । ज॒रि॒त्रे । प्र । इ॒मम् । वर्ण॑म् । अ॒ति॒र॒त् । शु॒क्रम् । आ॒सा॒म् ॥ ५ ॥

---

१. जनयति वि[1].

वेङ्कट० इन्द्रः शत्रूणां हिंसाः[1] परिबर्हणाश्च अभितः आ विशति मनुष्येषु निदधानो धनानि बहूनि। ज्ञापयत्येव कर्तव्यम् इतीमानि कर्माणि स्तोत्रे। वर्धयति च एषां कर्मणाम्[2] इमम् [3]शुक्लम् वर्णम्†[3]। अमलान्युपद्रवरहितानि कर्माणि करोतीत्यर्थः ॥ ५ ॥

[4]इति तृतीयाष्टके द्वितीयाध्याये पञ्चदशो वर्गः[4] ॥

महो महानि पनयन्त्यस्येन्द्रस्य कर्म सुकृता पुरूणि ।
वृजनेन वृजिनान्त्सं पिपेष मायाभिर्दस्यूँरभिभूत्योजाः ॥ ६ ॥

महः । महानि । पनयन्ति । अस्य । इन्द्रस्य । कर्म । सुऽकृता । पुरूणि ।
वृजनेन । वृजिनान् । सम् । पिपेष । मायाभिः । दस्यून् । अभिभूतिऽओजाः ॥ ६ ॥

वेङ्कट० महतः महानि अस्य स्तुवन्ति इन्द्रकर्माणि सुकृतानि बहूनि। बलेनाऽयम् स्तोतृणामुपद्रवान्[5] सम् पिनष्टि, मायाभिः च दस्यून् अभिभवनशीलबलः ॥ ६ ॥

युधेन्द्रो मह्ना वरिवश्चकार देवेभ्यः सत्पतिश्चर्षणिप्राः ।
विवस्वतः सदने अस्य तानि विप्रा उक्थेभिः कवयो गृणन्ति ॥ ७ ॥

युधा । इन्द्रः । मह्ना । वरिवः । चकार । देवेभ्यः । सत्ऽपतिः । चर्षणिऽप्राः ।
विवस्वतः । सदने । अस्य । तानि । विप्राः । उक्थेभिः । कवयः । गृणन्ति ॥ ७ ॥

वेङ्कट० युद्धेन[6] इन्द्रः महता धनम् करोति देवेभ्यः सतां पतिः मनुष्याणां कामैः पूरयिता। यजमानस्य गृहे अस्य तानि कर्माणि क्रान्तदर्शनाः मेधाविनः शस्त्रैः गृणन्ति[7] प्रकाशयन्ति ॥ ७ ॥

सत्रासाहं वरेण्यं सहोदां ससवांसं स्वरपश्च देवीः ।
ससान यः पृथिवीं द्यामुतेमामिन्द्रं मदन्त्यनु धीरणासः ॥ ८ ॥

सत्राऽसहम् । वरेण्यम् । सहःऽदाम् । ससऽवांसम् । स्वः । अपः । च । देवीः ।
ससान । यः । पृथिवीम् । द्याम् । उत । इमाम् । इन्द्रम् । मदन्ति । अनु । धीऽरणासः ॥ ८ ॥

वेङ्कट० सत्रमेव शत्रूणामभिभवितारम्[8] वरणीयम् बलस्य दातारं स्तोतृणां प्रयच्छन्तं च स्वर्गम् देवनशीलाः अपः च इन्द्रम् स्तुतिभिः अनु मदन्ति कर्मसु ये रमन्ते यजमानाः, यः इन्द्रः अन्तरिक्षम् द्याम् इमाम् भूमिं च मनुष्येभ्यः प्रायच्छत्। 'पृथिवी' ( निघ १, ३ ) इत्यन्तरिक्षनामेति ॥ ८ ॥

---

१. हिंसां अ[1] लपं.　२. कर्मणा वि[1,2] ल लपं.　३-३. शुक्लवर्णम् वि[2] अ[1].　† नास्ति लपं.
४-४. नास्ति मूको.　५. °द्रवाणाम् अ[1].　६. युधा युद्धेन वि[2].　७. गृह्णन्ति वि[1] लपं.　८. °विता ··· वि[2] अ[1].

ससानात्याँ उत सूर्यं ससानेन्द्रः ससान पुरुभोजसं गाम् ।
हिरण्ययमुत भोगं ससान हत्वी दस्यून् प्रार्यं वर्णमावत् ॥ ९ ॥

ससान । अत्यान् । उत । सूर्यम् । ससान । इन्द्रः । ससान । पुरुऽभोजसम् । गाम् ।
हिरण्ययम् । उत । भोगम् । ससान । हत्वी । दस्यून् । प्र । आर्यम् । वर्णम् । आवत् ॥ ९ ॥

**वेङ्कट०** जगतः इन्द्रः प्रायच्छत् अश्वान्, अपि च सूर्यम्, तथा बहुप्रकारभोज्याम् गाम् च। तथा हिरण्ययुक्तम् भोगम् च प्रयच्छति । सोऽयमिन्द्रः दस्यून् हत्वा त्रैवर्णिकान् प्र आवत् इति ॥ ९ ॥

इन्द्र ओषधीरसनोदहानि वनस्पतीँरसनोदन्तरिक्षम् ।
बिभेद वलं नुनुदे विवाचोऽथाभवद् दमिताभिक्रतूनाम् ॥ १० ॥

इन्द्रः । ओषधीः । असनोत् । अहानि । वनस्पतीन् । असनोत् । अन्तरिक्षम् ।
बिभेद । वलम् । नुनुदे । विऽवाचः । अथ । अभवत् । दमिता । अभिऽक्रतूनाम् ॥ १० ॥

**वेङ्कट०** इन्द्रः ओषधीः अहानि प्रति प्रेरयति, तथा वनस्पतीन् अन्तरिक्षम् प्रति, वलम् वासुरम् बिभेद, वाचश्चाव्याकृताः विनुनुदे व्याचकार, अथ अभवत् दमिता अभिकर्मणां शत्रूणामिति ॥१०॥

शुनं हुवेम मघवानमिन्द्रमस्मिन् भरे नृतमं वाजसातौ ।
शृण्वन्तमुग्रमूतये समत्सु घ्नन्तं वृत्राणि संजितं धनानाम् ॥ ११ ॥

शुनम् । हुवेम । मघऽवानम् । इन्द्रम् । अस्मिन् । भरे । नृऽतमम् । वाजऽसातौ ।
शृण्वन्तम् । उग्रम् । ऊतये । समत्ऽसु । घ्नन्तम् । वृत्राणि । सम्ऽजितम् । धनानाम् ॥ ११ ॥

**वेङ्कट०** ऋ ३,३०,२२ द्र. ॥ ११ ॥

[1]इति तृतीयाष्टके द्वितीयाध्याये षोडशो वर्गः[1] ।

## [ ३५ ]

[1]गाथिनो विश्वामित्र ऋषिः । इन्द्रो देवता । त्रिष्टुप् छन्दः[1] ।

तिष्ठा हरी रथ आ युज्यमाना याहि वायुर्न नियुतो नो अच्छ ।
पिबास्यन्धो अभिसृष्टो अस्मे इन्द्र स्वाहा ररिमा ते मदाय ॥ १ ॥

तिष्ठ । हरी इति । रथे । आ । युज्यमाना । याहि । वायुः । न । निऽयुतः । नः । अच्छ ।
पिबासि । अन्धः । अभिऽसृष्टः । अस्मे इति । इन्द्र । स्वाहा । ररिम । ते । मदाय ॥ १ ॥

---

१-१. नास्ति मूको.

**वेङ्कट०** इन्द्र! आ तिष्ठ **रथमिमम्। तस्मिन् इमावश्वौ युज्यमानौ भवतः। अथाऽस्मान् अभि** आ याहि, **यथा** वायुः नियुतः अच्छ **याति। पिब च आगत्य सोमलक्षणमन्नम् अस्माभिः तस्मिन्नभिविसृष्टः। हे** इन्द्र! **स्वाहुतमस्तु, सोमं दध्मः तुभ्यं मदार्थम् इति वाक्यद्वयम्।** ततः ररिम इत्युदात्तमिति ॥ १ ॥

**उपाजिरा पुरुहूताय सप्ती हरी रथस्य धूर्ष्वा युनज्मि ।**
**द्रवद् यथा संभृतं विश्वतश्चिदुपेमं यज्ञमा वहात इन्द्रम् ॥ २ ॥**

उप । अजिरा । पुरुऽहूताय । सप्ती इति । हरी इति । रथस्य । धूःऽसु । आ । युनज्मि ।
द्रवत् । यथा । सम्ऽभृतम् । विश्वतः । चित् । उप । इमम् । यज्ञम् । आ । वहातः । इन्द्रम् ॥

**वेङ्कट०** उप आ युनज्मि **ब्रह्मणा वेगवन्तौ बहुभिराहूताय सर्पणशीलौ** हरी रथस्य धूर्षु। द्रवत् **इदम्** सम्भृतम् **ऋत्विग्जातं भवति** यथा **सर्वतोदिशम्**, एवम् इमम्[1] यज्ञम्[2] प्रति इन्द्रम् **अश्वौ** आ **वहेताम्**[3] ॥२॥

**उपो नयस्व वृषणा तपुष्पोतेमव त्वं वृषभ स्वधावः ।**
**ग्रसेतामश्वा वि मुचेह शोणा दिवेदिवे सदृशीरद्धि धानाः ॥ ३ ॥**

उपो इति । नयस्व । वृषणा । तपुःऽपा । उत । ईम् । अव । त्वम् । वृषभ । स्वधाऽवः ।
ग्रसेताम् । अश्वा । वि । मुच । इह । शोणा । दिवेऽदिवे । सऽदृशीः । अद्धि । धानाः ॥ ३ ॥

**वेङ्कट०** **उप नयस्व पुमांसौ बलस्य रक्षकौ** त्वम् **अश्वौ। अथ एनं रक्ष हे कामानां** वर्षितः [4]**अन्नवन्!। तव**[4] **अश्वाविमौ घासम्** ग्रसेताम्, **तदर्थं शोणवर्णावश्वौ अस्मिन् यज्ञे विमुञ्च।** [5]**दिवसेदिवसे**[5] **हारियोजनस्थिताः** धानाः खाद ॥ ३ ॥

**ब्रह्मणा ते ब्रह्मयुजा युनज्मि हरी सखाया सधमाद आशू ।**
**स्थिरं रथं सुखमिन्द्राधितिष्ठन् प्रजानन् विद्वाँ उप याहि सोमम् ॥ ४ ॥**

ब्रह्मणा । ते । ब्रह्मऽयुजा । युनज्मि । हरी इति । सखाया । सधऽमादे । आशू इति ।
स्थिरम् । रथम् । सुऽखम् । इन्द्र । अधिऽतिष्ठन् । प्रऽजानन् । विद्वान् । उप । याहि । सोमम् ॥ ४ ॥

**वेङ्कट०** **तव मन्त्रेण योजनीयौ सखायौ अश्वौ सङ्ग्रामे क्षिप्रगमनौ अहम्** ब्रह्मणा युनज्मि। **तम्** [6]**स्थिरम्** रथम्[6] **शोभनाक्षादिद्वारम्** हे इन्द्र! अधितिष्ठन् **प्रकर्षेण जानन्** विद्वान् उप **गच्छ इमम्** सोमम् ॥ ४ ॥

---

१. इदम् मूको. २. **नास्ति वि[2] अ[1].** ३. वहताम् लपं. ४-४. **नास्ति वि[2] अ[1].** ५-५. दिवसे वि[2] अ[1]. ६-६. रथं स्थिरं वि[2] अ[1].

मा ते हरी वृषणा वीतपृष्ठा नि रीरमन् यजमानासो अन्ये ।
अत्यायाहि शश्वतो वयं तेऽरं सुतेभिः कृणवाम सोमैः ॥ ५ ॥

मा । ते । हरी इति । वृषणा । वीतऽपृष्ठा । नि । रीरमन् । यजमानासः । अन्ये ।
अतिऽआयाहि । शश्वतः । वयम् । ते । अरम् । सुतेभिः । कृणवाम । सोमैः ॥ ५ ॥

**वेङ्कट०** मा तव अश्वौ वर्षितारौ कान्तपृष्ठौ[1] यजमानाः अस्मद्व्यतिरिक्ताः [2]नि रीरमन् आत्मनि[2] निरमयन्तु[3] । तानतीत्यास्मानागच्छ । पुरातनाः वयम् सुतैः सोमैः तव [4]पर्याप्तिं कुर्मः[4] ॥ ५ ॥

[5]इति तृतीयाष्टके द्वितीयाध्याये सप्तदशो वर्गः[5] ।

तवायं सोमस्त्वमेह्यर्वाङ् शश्वत्तमं सुमना अस्य पाहि ।
अस्मिन् यज्ञे बर्हिष्या निषद्या दधिष्वेमं जठर इन्दुमिन्द्र ॥ ६ ॥

तव । अयम् । सोमः । त्वम् । आ । इहि । अर्वाङ् । शश्वत्ऽतमम् । सुऽमनाः । अस्य । पाहि ।
अस्मिन् । यज्ञे । बर्हिषि । आ । निऽसद्य । दधिष्व । इमम् । जठरे । इन्दुम् । इन्द्र ॥ ६ ॥

**वेङ्कट०** [6]तव अयम् सोमः । त्वम् अस्मदभिमुखम् आगच्छ । शश्वत्तमशब्दः[6] सदा इत्यनेन समानार्थः । सर्वदा [7]शोभनमनाः इमं[7] सोमं पिब । अवशिष्टं[8] स्पष्टम्[9] इति ॥ ६ ॥

स्तीर्णं ते बर्हिः सुत इन्द्र सोमः कृता धाना अत्तवे ते हरिभ्याम् ।
तदोकसे पुरुशाकाय वृष्णे मरुत्वते तुभ्यं राता हवींषि ॥ ७ ॥

स्तीर्णम् । ते । बर्हिः । सुतः । इन्द्र । सोमः । कृताः । धानाः । अत्तवे । ते । हरिऽभ्याम् ।
तत्ऽओकसे । पुरुऽशाकाय । वृष्णे । मरुत्वते । तुभ्यम् । राता । हवींषि ॥ ७ ॥

**वेङ्कट०** आसनाय स्तीर्णम् तव बर्हिः, सुतः च इन्द्र! सोमः, कृताः[10] धानाः तव अश्वयोः भक्षणार्थम् । बर्हिः[11] निवासस्थानं यस्य तस्मै बहुसहायाय वृष्णे मरुद्भिर्युक्ताय[12] तुभ्यम् दत्तानि हवींषि ॥ ७ ॥

इमं नरः पर्वतास्तुभ्यमापः समिन्द्र गोभिर्मधुमन्तमक्रन् ।
तस्यागत्या सुमना ऋष्व पाहि प्रजानन् विद्वान् पथ्या३ अनु स्वाः ॥ ८ ॥

---

१. °क्रान्त वि[1] अ[1] ल. २-२. नास्ति वि[2] अ[1]. ३. रमयन्तु वि[2] अ[1] ल. ४-४. नास्ति वि[1] लपं. ५-५. नास्ति मूको. ६-६. ······शब्दः वि[1] लपं. ७-७. शोभन···वि[2] अ[1]. ८. °शिष्टः वि[1] ल. ९. स्पष्टः वि[1] ल. १०. कृताश्च वि[2] अ[1]. ११. नास्ति वि[1] लपं. १२. °काय वि[2] अ[1].

इमम् । नरः । पर्वताः । तुभ्यम् । आपः । सम् । इन्द्र । गोभिः । मधुऽमन्तम् । अक्रन् ।
तस्य । आऽगत्य । सुऽमनाः । ऋष्व । पाहि । प्रऽजानन् । विद्वान् । पथ्याः । अनु । स्वाः ॥८॥

वेङ्कट० इमम् मधुमन्तम् सोमम् ऋत्विजः ग्रावाणश्च तुभ्यम् वसतीवर्यश्च सम् अक्रन् इन्द्र! अभिषवणचर्मप्रदैः गोभिः सह। तम् आगत्य शोभनमनाः दर्शनीय! पाहि, स्वान् मार्गान् प्रजानन् तान् अनु आगत्य विद्वान्[1] पाहि इति ॥ ८ ॥

याँ आभंजो मरुत इन्द्र सोमे ये त्वामवर्धन्नभवन् गणस्ते ।
तेभिरेतं सजोषा वावशानोऽग्नेः पिब जिह्वया सोममिन्द्र ॥ ९ ॥

यान् । आ । अभंजः । मरुतः । इन्द्र । सोमे । ये । त्वाम् । अवर्धन् । अभवन् । गणः । ते ।
तेभिः । एतम् । सऽजोषाः । वावशानः । अग्नेः । पिब । जिह्वया । सोमम् । इन्द्र ॥ ९ ॥

वेङ्कट० [2]त्वम् इन्द्र! सोमे यान् मरुतः यमिनः† कृतवानसि, ये च त्वाम् अवर्धयन्, ये च ते गणः अभवन्, तेभिः‡ सहितः एतम् सोमं कामयमानः अग्नेः जिह्वया पिब सोमम् इन्द्र![2] ॥ ९ ॥

इन्द्र पिब स्वधया चित् सुतस्याग्नेर्वा पाहि जिह्वया यजत्र ।
अध्वर्योर्वा प्रयतं शक्र हस्ताद्धोतुर्वा यज्ञं हविषो जुषस्व ॥ १० ॥

इन्द्र । पिब । स्वधया । चित् । सुतस्य । अग्नेः । वा । पाहि । जिह्वया । यजत्र ।
अध्वर्योः । वा । प्रऽयतम् । शक्र । हस्तात् । होतुः । वा । यज्ञम् । हविषः । जुषस्व ॥१०॥

वेङ्कट० इन्द्र! पिब बलेन अभिषुतं सोमम्, अथवा हुतं सोमम् अग्नेः जिह्वया सेवस्व[3] हे यष्टव्य!, अथवा शक्र![3] होमार्थम् आत्तम्[4] अध्वर्योः हस्तात् एव पिब। अथवा हविषः दानं याज्यान्ते[5] होतुः[6] सेवस्व ॥ १० ॥

शुनं हुवेम मघवानमिन्द्रमस्मिन् भरे नृतमं वाजसातौ ।
शृण्वन्तमुग्रमूतये समत्सु घ्नन्तं वृत्राणि संजितं धनानाम् ॥ ११ ॥

शुनम् । हुवेम । मघऽवानम् । इन्द्रम् । अस्मिन् । भरे । नृऽतमम् । वाजऽसातौ ।
शृण्वन्तम् । उग्रम् । ऊतये । समत्ऽसु । घ्नन्तम् । वृत्राणि । सम्ऽजितम् । धनानाम् ॥ ११ ॥

वेङ्कट० ऋ ३,३०,२२. द्र. ॥ ११ ॥

[7]इति तृतीयाष्टके द्वितीयाध्यायेऽष्टादशो वर्गः[7] ॥

---

१. नास्ति मूको. २-२. नास्ति वि[२] अ[१]. † नः ल लपं. ‡ तैः ल. ३. नास्ति वि[२] अ[१] ल लपं. ४. °मार्थं वि[१] लपं. ५. याज्यम् ते वि[१] ल लपं. ६. होतुर्वा मूको ७-७. नास्ति मूको.

[ ३६ ]

[1]विश्वामित्रो गाथिन ऋषिः, दशम्या घोर आङ्गिरसः। इन्द्रो देवता। त्रिष्टुप् छन्दः[1]।

इमामू षु प्रभृतिं सातये धाः शश्वच्छश्वदूतिभिर्यादमानः।
सुतेसुते वावृधे वर्धनेभिर्यः कर्मभिर्महद्भिः सुश्रुतो भूत् ॥ १ ॥

इमाम्। ऊँ इति। सु। प्रऽभृतिम्। सातये। धाः। शश्वत्ऽशश्वत्। ऊतिऽभिः। यादमानः।
सुतेऽसुते। ववृधे। वर्धनेभिः। यः। कर्मऽभिः। महत्ऽभिः। सुऽश्रुतः। भूत् ॥ १ ॥

वेङ्कट० इमाम् त्वदीयां धनस्य प्रभृतिम् प्रदानम्[2] अस्मासु[3] सुष्ठु निधेहि भजनाय नित्यं[4] मरुद्भिः सह अस्मान् प्रत्यागच्छन्। अथ परोक्षः। सुतेसुते ववृधे [5]इन्द्रो वर्धयितृभिः[5], यः इन्द्रः कर्मभिः महद्भिः जगति [6]विश्रुतः अभवदिति[6] ॥ १ ॥

इन्द्राय सोमाः प्रदिवो विदाना ऋभुर्येभिर्वृषपर्वा विहायाः।
प्रयम्यमानान् प्रति षू गृभायेन्द्र पिब वृषधूतस्य वृष्णः ॥ २ ॥

इन्द्राय। सोमाः। प्रऽदिवः। विदानाः। ऋभुः। येभिः। वृषऽपर्वा। विऽहायाः।
प्रऽयम्यमानान्। प्रति। सु। गृभाय। इन्द्र। पिब। वृषऽधूतस्य। वृष्णः ॥ २ ॥

वेङ्कट० इन्द्राय सोमाः पूर्वेष्वप्यहस्सु ज्ञायमानाः भवन्ति। मेधावी यैः पीतैः[7] वृषपर्वा इन्द्रः महान् भवति। प्रदीयमानान् तान् इन्द्र! [8]सुष्ठु प्रति† गृहाण। इन्द्र![8] पिब अध्वर्युणा आप्नौ प्रक्षिप्तं वृषणं सोममिति ॥ २ ॥

पिबा वर्धस्व तव घा सुतास इन्द्र सोमासः प्रथमा उतेमे।
यथापिबः पूर्व्याँ इन्द्र सोमाँ एवा पाहि पन्यो अद्या नवीयान् ॥ ३ ॥

पिब। वर्धस्व। तव। घ। सुतासः। इन्द्र। सोमासः। प्रथमाः। उत। इमे।
यथा। अपिबः। पूर्व्यान्। इन्द्र। सोमान्। एव। पाहि। पन्यः। अद्य। नवीयान् ॥ ३ ॥

वेङ्कट० पिब[9] सोमान्, वर्धस्व च तैः। तव एव खलु सुताः इन्द्र! सोमाः पूर्वे भवन्ति, अपि च अमी सम्प्रतितनाः। ततः त्वम् यथा अपिबः पुरातनान् इन्द्र! सोमान्, एवम् पिब स्तोतव्यः अद्यतनानपि नवतरः ॥ ३ ॥

महाँ अमत्रो वृजने विरप्श्युग्रं शवः पत्यते धृष्ण्वोजः।
नाह विव्याच पृथिवी चनैनं यत् सोमासो हर्यश्वममन्दन् ॥ ४ ॥

---

1-1. नास्ति मूको. 2. नास्ति वि[2] अ[1] ल. 3. अस्य लपं. 4. नास्ति वि[1] लपं. 5-5. इन्द्रवर्ध° वि[2] अ[1] ल. 6-6. मन भवदिति वि[2] अ[1]. 7. प्रीतैः वि[2]. 8-8. नास्ति वि[1]. † नास्ति लपं. 9. नास्ति वि[1].

महान् । अमत्रः । वृजने । विऽरप्शी । उग्रम् । शवः । पत्यते । धृष्णु । ओजः ।
न । अह । विव्याच । पृथिवी । चन । एनम् । यत् । सोमासः । हरिऽअश्वम् । अमन्दन् ॥४॥

**वेङ्कट०** 'महनीयो महान्' ( ३, १३ ), 'अमत्रोऽमात्रः'[1] ( ६, २३ ), इति यास्कः। स्तुतिः विरप्शं तद्वान् विरप्शी युद्धे स्तोतव्यः। उद्गूर्णं धर्षणशीलम् अस्य ओजः शत्रूणां बलस्य ईष्टे। न एव पृथिवी अपि एनम् व्याप्तवती[2], यदा पीताः सोमाः हर्यश्वम् अमन्दन्। तदा भूम्या अपि महानासीदिति ॥ ४ ॥

महाँ उग्रो वावृधे वीर्याय समाचक्रे वृषभः काव्येन ।
इन्द्रो भगो वाजदा अस्य गावः प्र जायन्ते दक्षिणा अस्य पूर्वीः ॥ ५ ॥

महान् । उग्रः । ववृधे । वीर्याय । सम्ऽआचक्रे । वृषभः । काव्येन ।
इन्द्रः । भगः । वाजऽदाः । अस्य । गावः । प्र । जायन्ते । दक्षिणाः । अस्य । पूर्वीः ॥ ५ ॥

**वेङ्कट०** महान् उद्गूर्णः वृद्ध आसीत् वीर्यकरणाय। सोऽयम् स्तोतॄणां स्तोत्रेण[3] समभिमुखीक्रियते। सोऽयम्[4] इन्द्रः भजनीयः अन्नस्य दाता। अस्य स्वभूताः गावः विद्यन्ते। तथा अस्य मनुष्येभ्यो दत्ताः दक्षिणाः प्रजाभिः प्र जायन्ते बह्वयः ॥ ५ ॥

[5]इति तृतीयाष्टके द्वितीयाध्याये एकोनविंशो वर्गः[5] ॥

प्र यत् सिन्धवः प्रसवं यथायन्नापः समुद्रं रथ्येव जग्मुः ।
अतश्चिदिन्द्रः सदसो वरीयान् यदीं सोमः पृणति दुग्धो अंशुः ॥ ६ ॥

प्र । यत् । सिन्धवः । प्रऽसवम् । यथा । आयन् । आपः । समुद्रम् । रथ्याऽइव । जग्मुः ।
अतः । चित् । इन्द्रः । सदसः । वरीयान् । यत् । ईम् । सोमः । पृणति । दुग्धः । अंशुः ॥६॥

**वेङ्कट०** यस्मिन् काले येन प्रकारेण नद्यः इन्द्रस्य अनुज्ञाम् प्र आयन्, तस्मिन् काले तेन प्रकारेण आपः समुद्रम् विस्तीर्णाः रथमार्गाः इव गच्छन्ति। अस्मात् कारणात् इन्द्रः स्वस्थानात् अन्तरिक्षात् अपि उरुतरः। यत् एनम् सोमः पूरयति दुग्धः अंशुः। अत्र यास्कः—'अंशुः शमष्टमात्रो भवति' ( २,५ ) इति ॥ ६ ॥

समुद्रेण सिन्धवो यादमाना इन्द्राय सोमं सुषुतं भरन्तः ।
अंशुं दुहन्ति हस्तिनो भरित्रैर्मध्वः पुनन्ति धारया पवित्रैः ॥ ७ ॥

समुद्रेण । सिन्धवः । यादमानाः । इन्द्राय । सोमम् । सुऽसुतम् । भरन्तः ।
अंशुम् । दुहन्ति । हस्तिनः । भरित्रैः । मध्वः । पुनन्ति । धारया । पवित्रैः ॥ ७ ॥

---

१-१. °त्रोऽमत्रि ल; °त्रोऽमत्रः वि[1] लपं. २. नास्ति वि[1]. ३. नास्ति अ[1]. ४. इति इयं सोमम् वि[1]; सोममिति अ[1]; सोमम् वि[1] ल लपं. ५-५. नास्ति मूको.

वेङ्कट० द्रोणकलशेन[1] आपः सङ्गच्छमानाः इन्द्राय सोमम् सुष्ठ्वभिषुतम्[2] समभरन्[3]। तथा अंशुम् दुहन्ति हस्तयुक्ता अध्वर्यवः सोमसम्भरणसाधनैः । मधूनि पुनन्ति धारया दशापवित्रैश्चेति ॥ ७ ॥

ह्रदाइ॑व कुक्षयः॑ सोम॒धानाः॒ समी॒ वि॑व्याच॒ सव॑ना पु॒रूणि॑ ।
अन्ना॒ यदिन्द्रः॑ प्रथ॒मा व्याश॑ वृ॒त्रं ज॑घ॒न्वाँ अ॑वृणीत॒ सोम॑म् ॥ ८ ॥

ह्र॒दाःऽइ॑व । कु॒क्षयः॑ । सो॒म॒ऽधानाः॑ । सम् । ई॒मिति॑ । वि॒व्याच॒ । सव॑ना । पु॒रूणि॑ ।
अन्ना॑ । यत् । इन्द्रः॑ । प्र॒थ॒मा । वि । आश॑ । वृ॒त्रम् । ज॒घ॒न्वान् । अ॒वृ॒णी॒त॒ । सोम॑म् ॥ ८ ॥

वेङ्कट० ह्रदाः इव इन्द्रस्य जठरावकाशाः सोमाधाराः । सम् व्याप्नोति बहूनि सवनानि । ईम् इति पूरणम् । अन्त्यलोपश्छान्दसः । अन्नानि विविधानि पुरातनानि वृत्रवधात् पूर्वं यस्मात् इन्द्रः विविधम् अश्नात् । अथ वृत्रम् जघन्वान् [4]देवेभ्यः सोमम् एव[4] वृतवानिति ॥ ८ ॥

आ तू भ॑र॒ माकि॑रे॒तत् परि॑ ष्ठाद् वि॒द्मा हि त्वा॒ वसु॑पतिं॒ वसू॑नाम् ।
इन्द्र॒ यत् ते॒ माहि॑नं॒ दत्र॒मस्त्य॒स्मभ्यं॒ तद्ध॑र्यश्व॒ प्र य॑न्धि ॥ ९ ॥

आ । तु । भ॒र॒ । माकिः॑ । ए॒तत् । परि॑ । स्था॒त् । वि॒द्म । हि । त्वा॒ । वसु॑ऽपतिम् । वसू॑नाम् ।
इन्द्र॑ । यत् । ते॒ । माहि॑नम् । दत्र॑म् । अस्ति॑ । अ॒स्मभ्य॑म् । तत् । ह॒रि॒ऽअ॒श्व॒ । प्र । य॒न्धि॒ ॥९॥

वेङ्कट० आ भर धनं क्षिप्रमस्मभ्यं दातुम् । मा कश्चित् त्वया दीयमानम् एतत् निरुणद्धु । जानीमः हि त्वाम् वसुपतिम् वसूनाम् । तथा सति इन्द्र! यत् तव पूजनीयं देयधनम् अस्ति, [5]हे हर्यश्व![5] तत् अस्मभ्यम् प्र यच्छेति ॥ ९ ॥

अ॒स्मे प्र य॑न्धि मघवन्नृजीषि॒न्निन्द्र॑ रा॒यो वि॒श्ववा॑रस्य॒ भूरेः॑ ।
अ॒स्मे श॒तं श॒रदो॑ जी॒वसे॑ धा अ॒स्मे वी॒राञ्छश्व॑त इन्द्र शिप्रिन् ॥ १० ॥

अ॒स्मे इति॑ । प्र । य॒न्धि॒ । म॒घ॒ऽव॒न् । ऋ॒जी॒षि॒न् । इन्द्र॑ । रा॒यः । वि॒श्वऽवा॑रस्य । भूरेः॑ ।
अ॒स्मे इति॑ । श॒तम् । श॒रदः॑ । जी॒वसे॑ । धाः॒ । अ॒स्मे इति॑ । वी॒रान् । शश्व॑तः । इ॒न्द्र॒ । शि॒प्रि॒न् ॥

वेङ्कट० आङ्गिरसो[6] घोर एतां[7] ददर्श । अस्मभ्यं प्रयच्छ धनवन्! तृतीयसवनान्वयात् ऋजीषवन्! इन्द्र! सर्वैर्वरणीयं भूरि धनम् । तथाऽस्मभ्यं जीवनार्थम् [8]शतम् शरदः प्रयच्छ[8] अस्मभ्यम् वीरान् च बहून् इन्द्र! शिप्रिन्![9] ॥ १० ॥

---

१. °णशकलेन ल. २. त्रुटितम् वि[२] अ[१]. ३. सम्भरन् मूको. ४-४. °वेभ्यः···व वि[२] अ[१]. ५-५ नास्ति वि[२] अ[१]. ६. अङ्गिरसो मूको. ७. एव वि[१] लपं. ८-८. त्रुटितम् वि[२] अ[१]. ९. याचन्ते वि[१] लपं.

शुनं हुवेम मघवानमिन्द्रमस्मिन् भरे नृतमं वाजसातौ ।
शृण्वन्तमुग्रमूतये समत्सु घ्नन्तं वृत्राणि संजितं धनानाम् ॥ ११ ॥

शुनम् । हुवेम । मघऽवानम । इन्द्रम् । अस्मिन् । भरे । नृऽतमम् । वाजऽसातौ ।
शृण्वन्तम । उग्रम् । ऊतये । समत्ऽसु । घ्नन्तम् । वृत्राणि । सम्ऽजितम् । धनानाम् ॥ ११ ॥

**वेङ्कट०** ऋ ३,३०,२२ द्र. ॥ ११ ॥

[1]इति तृतीयाष्टके द्वितीयाध्याये विंशो वर्गः[1] ॥

[ ३७ ]

[1]विश्वामित्रो गाथिन ऋषिः । इन्द्रो देवता । गायत्री छन्दः, एकादशी अनुष्टुप्[1] ।

वार्त्रहत्याय शवसे पृतनाषाह्याय च । इन्द्र त्वा वर्तयामसि ॥ १ ॥

वार्त्रऽहत्याय । शवसे । पृतनाऽसह्याय । च । इन्द्र । त्वा । आ । वर्तयामसि ॥ १ ॥

**वेङ्कट०** वार्त्रहत्याय शत्रुहननिमित्ताय सेनाभिभवनिमित्ताय च[2] बलाय तदस्माकं[3] यथा स्यादित्येवम् इन्द्र! त्वाम् आ वर्तयामः ॥ १ ॥

अर्वाचीनं सु ते मन उत चक्षुः शतक्रतो । इन्द्र कृण्वन्तु वाघतः ॥ २ ॥

अर्वाचीनम् । सु । ते । मनः । उत । चक्षुः । शतक्रतो इति शतऽक्रतो । इन्द्र । कृण्वन्तु । वाघतः ॥ २ ॥

**वेङ्कट०** अभिमुखं[4] सुष्ठु कृण्वन्तु तव मनः चक्षुः च हे बहुप्रज्ञ इन्द्र! वाघतः ऋत्विजः ॥ २ ॥

नामानि ते शतक्रतो विश्वाभिर्गीर्भिरीमहे । इन्द्राभिमातिषाह्ये ॥ ३ ॥

नामानि । ते । शतक्रतो इति शतऽक्रतो । विश्वाभिः । गीःऽभिः । ईमहे । इन्द्र । अभिमातिऽसह्ये ॥३॥

**वेङ्कट०** हे शतक्रतो[5] इन्द्र! शक्रपुरुहूतेत्यादीनि तव नामानि सर्वाभिः स्तुतिभिः अभिमातीनां[6] सहननिमित्तं याचामहे[7] ॥ ३ ॥

पुरुष्टुतस्य धामभिः शतेन महयामसि । इन्द्रस्य चर्षणीधृतः ॥ ४ ॥

पुरुऽस्तुतस्य । धामऽभिः । शतेन । महयामसि । इन्द्रस्य । चर्षणिऽधृतः ॥ ४ ॥

---

१-१. नास्ति मूको. २. नास्ति वि[1] अ[1]. ३. तथाऽस्माकं वि[1] अ[1]. ४. ···मुखं वि[1] अ[1]. ५. नास्ति मूको. ६. मातीनां वि[1] लपं. ७. °हे नेन्दु चस्तू हत्याव शत्रवरन्त इतीत्यर्थमुक्तमिनि वि[1]; °हे नेन्द्रं···न्तेऽपि तर्हि नामान्युचरन्त इतीत्थमुक्तमिति वि[1] अ[1]; °हे नेन्द्रष्ट्वा वा आहत्याय शत्रुचरन्त इतीत्यर्थमुक्तमिति लपं.

वेङ्कट० बहुस्तुतस्य पृथक्संज्ञासंज्ञितैः शतेन धामभिः[1] तनुभिः[2] पूजां कुर्मो बलम् कीर्तितैः इन्द्रस्य मनुष्यधृतः[3] ॥ ४ ॥

इन्द्रं वृत्राय हन्तवे पुरुहूतमुप ब्रुवे । भरेषु वाजसातये ॥ ५ ॥

इन्द्रम् । वृत्राय । हन्तवे । पुरुऽहूतम् । उप । ब्रुवे । भरेषु । वाजऽसातये ॥ ५ ॥

वेङ्कट० इन्द्रम् [4]उपद्रवस्य हननाय[4] बहुभिराहूतम् उप स्तौमि सङ्ग्रामेषु अन्नभजनाय ॥ ५ ॥

[5]इति तृतीयाष्टके द्वितीयाध्याये एकत्रिंशो वर्गः[5] ॥

वाजेषु सासहिर्भव त्वामीमहे शतक्रतो । इन्द्र वृत्राय हन्तवे ॥ ६ ॥

वाजेषु । ससहिः । भव । त्वाम् । ईमहे । शतक्रतो इति शतऽक्रतो । इन्द्र । वृत्राय । हन्तवे ॥६॥

वेङ्कट० सङ्ग्रामेषु अभिभविता भव, त्वाम् याचामहे हे शतकर्मन् इन्द्र! शत्रुं हन्तुम् ॥ ६ ॥

द्युम्नेषु पृतनाज्ये पृत्सुतूर्षु श्रवःसु च । इन्द्र साक्ष्वाभिमातिषु ॥ ७ ।

द्युम्नेषु । पृतनाज्ये । पृत्सुतूर्षु । श्रवःऽसु । च । इन्द्र । साक्ष्व । अभिऽमातिषु ॥ ७ ॥

वेङ्कट० अन्नेषु[6] पृतनाज्ये[7], 'पृतनाज्यम्'[7] ( निघ २,१७ ) इति सङ्ग्रामनाम, सेनाविषयेषु तरणेषु कीर्तिषु सक्तो भव इन्द्र!, ये च त्वामभिमन्यन्ते तेषु चेति ॥ ७ ॥

शुष्मिन्तमं न ऊतये द्युम्निनं पाहि जागृविम् । इन्द्र सोमं शतक्रतो ॥ ८ ॥

शुष्मिन्ऽतमम् । नः । ऊतये । द्युम्निनम् । पाहि । जागृविम् । इन्द्र । सोमम् । शतक्रतो इति शतऽक्रतो ॥

वेङ्कट० बलवत्तमम् अस्माकं रक्षणाय धनाद्यन्नयुक्तं[8] पिब जागरणशीलम् अद्भूतरसम् इन्द्र! सोमम् शतकर्मन्! ॥ ८ ॥

इन्द्रियाणि शतक्रतो या ते जनेषु पञ्चसु । इन्द्र तानि त आ वृणे ॥ ९ ॥

इन्द्रियाणि । शतक्रतो इति शतऽक्रतो । या । ते । जनेषु । पञ्चऽसु । इन्द्र । तानि । ते । आ । वृणे ॥

वेङ्कट० निषादपञ्चमेषु चतुर्षु वर्णेषु यानि त्वया दीयन्ते बलानि स्तोतृषु, [9]अथवा तत्रास्य[9] बलानि व्यासक्तानि[10] तिष्ठन्ति, इन्द्र! त्वदीयानि सर्वाण्येव तानि अहम् आ वृणे इति ॥ ९ ॥

अगन्निन्द्र श्रवो बृहद् द्युम्नं दधिष्व दुष्टरम् । उत् ते शुष्मं तिरामसि ॥ १० ॥

---

१. नास्ति मूको. २. तनूभिः वि[2] ख. ३. °व्यस्य धृतः मूको. ४-४. उप…नाय वि[2] अ[1]. ५-५. नास्ति मूको. ६. नास्ति वि[2] लपं. ७. नास्ति वि[2] अ[1]. ८. धनान्नयु° वि[2] अ[1]. ९-९ त्रुटितम् वि[2] अ[1]. १०. व्यास° वि° लपं.

अगन् । इन्द्र । श्रवः । बृहत् । द्युम्नम् । दधिष्व । दुस्तरम् । उत । ते । शुष्मम् । तिरामसि ॥१०॥

वेङ्कट० आगतम्[1] इन्द्र ! बृहत् अन्नम् द्योतमसाधनम्, तज्जठरे धारय[2] । शत्रुभिः [3]दुष्टरम् वर्धयामः[3] तव बलं सोमेन ॥ १० ॥

अर्वावतो न आ गह्यथो शक्र परावतः । उ लोको यस्ते अद्रिव इन्द्रेह तत आ गहि ॥११॥

अर्वाऽवतः । नः । आ । गहि । अथो इति । शक्र । पराऽवतः ।
ॐ इति । लोकः । यः । ते । अद्रिऽवः । इन्द्र । इह । ततः । आ । गहि ॥ ११ ॥

वेङ्कट० आसन्नात् देशात् अस्मान् आ गच्छ, अपि च शक्र ! दूरात् । किं बहुना । यत् तव स्थानम् इन्द्र ! इह ततः आ गच्छ ॥ ११ ॥

[4]इति तृतीयाष्टके द्वितीयाध्याये द्वाविंशो वर्गः[4] ॥

[ ३८ ]

[4]प्रजापतिः वैश्वामित्रो वाच्यो वा ऋषिः, तावुभावपि वा, विश्वामित्रो गाथिनो वा ।
इन्द्रो देवता । त्रिष्टुप् छन्दः[4] ।

अभि तष्टेव दीधया मनीषामत्यो न वाजी सुधुरो जिहानः ।
अभि प्रियाणि मर्मृशत् पराणि कवीँरिच्छामि संदृशे सुमेधाः ॥ १ ॥

अभि । तष्टाऽइव । दीधय । मनीषाम् । अत्यः । न । वाजी । सुऽधुरः । जिहानः ।
अभि । प्रियाणि । मर्मृशत् । पराणि । कवीन् । इच्छामि । समऽदृशे । सुऽमेधाः ॥ १ ॥

वेङ्कट० प्रजापतिर्वैश्वामित्रो[5] वाच्यो वा । यथा तष्टा काष्ठं संस्करोति, एवं त्वं स्तोतः ![6] तव बुद्धिम् इन्द्रस्तवार्थम् अभिदीपय तीक्ष्णां कुरु, अतनशीलः अश्व इव सुष्ठु धूर्वहनक्षमः पन्थानं गच्छन् । सोऽपि तीक्ष्णबुद्धिर्भवति गमनाय । अथ तथा करोमीति वदति — अभि प्रियाणि इति । इन्द्रस्य प्रियतमानि उत्तमानि कर्माणि स्तोतुं बुद्ध्या विमृशन् कवीन् अभिगच्छामि सन्दर्शनाय प्राज्ञः । 'ये वै ते न ऋषयः पूर्वे प्रेतास्ते वै कवयः' ( ऐब्रा ६, २० ) इत्युक्तमिति ॥ १ ॥

इनोत पृच्छ जनिमा कवीनां मनोधृतः सुकृतस्तक्षत द्याम् ।
इमा उ ते प्रण्यो॒३ वर्धमाना मनोवाता अध नु धर्मणि ग्मन् ॥ २ ॥

इना । उत । पृच्छ । जनिम । कवीनाम् । मनःऽधृतः । सुऽकृतः । तक्षत । द्याम् ।
इमाः । ॐ इति । ते । प्रऽन्यः । वर्धमानाः । मनःऽवाताः । अध । नु । धर्मणि । ग्मन् ॥ २ ॥

---

१. अगत् लपं. २. साधय अ[1] वि[2]. ३-३. त्रुटितम् वि[2] अ[1]. ४-४. नास्ति मूको.
५. वैश्वामित्रः वि[2] अ[1]. ६. स्तोतुः वि[1] ल लपं.

वेङ्कट० अपि च देवानीश्वरान् पृच्छ पूर्वेषां प्रेतानाम् कवीनाम् जन्मानि । मनसो धारयितारः शोभनकर्मणः[1] कर्तारः देवाः द्युलोकम् कृतवन्तः, कवयश्च प्रेतास्तत्र वर्तन्ते । इमाः स्तुतयः त्वदीयाः इन्द्रं प्रति प्रणीयमानाः वर्धमानाः भवन्ति । अथ[2] श्रवणार्थं मनःसदृशगतयः त्वां धारयितुम् क्षिप्रम् आगताः । तान्[3] पृच्छेति ॥ २ ॥

नि षीमिदत्र गुह्या दधाना उत क्षत्राय रोदसी समञ्जन् ।
सं मात्राभिर्ममिरे येमुरुर्वी अन्तर्मही समृते धायसे धुः ॥ ३ ॥

नि । सीम् । इत् । अत्र । गुह्या । दधानाः । उत । क्षत्राय । रोदसी इति । सम् । अञ्जन् । सम् । मात्राभिः । ममिरे । येमुः । उर्वी इति । अन्तः । मही इति । समृते इति समऽऋते । धायसे । धुरिति धुः ॥ ३ ॥

वेङ्कट० अस्मिन् लोके सर्वत एव दुर्निरूपकारणानि नानाजातीयकानि[4] कर्माणि कुर्वन्तः अपि च प्राणिनां धनार्थं द्यावापृथिवी सम् अञ्जन् इतरेतराश्लिष्टे अकुर्वन् । 'भूमिं पर्जन्या जिन्वन्ति दिवं जिन्वन्त्यग्नयः' ( ऋ १,१६४,५१ ) इति[5] तथा कृतवन्त इत्यर्थः । दृश्यमानाभिः मात्राभिः प्रमाणैः द्यां च पृथिवीं च निर्मितवन्तः, तथाऽयच्छंश्च, यमनं धारणम्,[6] विस्तीर्णे,[7] तथा महती सङ्गते द्यावापृथिव्यौ अन्तरिक्षेण अन्तः दधुः सर्वेषां धारणार्थमिति ॥ ३ ॥

आतिष्ठन्तं परि विश्वे अभूषञ्छ्रियो वसानश्चरति स्वरोचिः ।
महत् तद् वृष्णो असुरस्य नामा विश्वरूपो अमृतानि तस्थौ ॥ ४ ॥

आऽतिष्ठन्तम् । परि । विश्वे । अभूषन् । श्रियः । वसानः । चरति । स्वऽरोचिः । महत् । तत् । वृष्णः । असुरस्य । नाम । आ । विश्वऽरूपः । अमृतानि । तस्थौ ॥ ४ ॥

वेङ्कट० हवींषि प्रत्यागच्छन्तम् इन्द्रम् विश्वे देवाः परितः भवन्ति । अथायं शोभाः वसानः यज्ञं प्रति गच्छति[8] स्वदीप्तिः । महत् तत् इदम् इन्द्रस्य मनुष्यान् प्रति नमनम् आगमनम्[9] बलवतः, सोऽयम् विश्वरूपः[10] यज्ञे सोमान् आ तिष्ठति ॥ ४ ॥

असूत पूर्वो वृषभो ज्यायानिमा अस्य शुरुधः सन्ति पूर्वीः ।
दिवो नपाता विदथस्य धीभिः क्षत्रं राजाना प्रदिवो दधाथे ॥ ५ ॥

असूत । पूर्वः । वृषभः । ज्यायान् । इमाः । अस्य । शुरुधः । सन्ति । पूर्वीः । दिवः । नपाता । विदथस्य । धीभिः । क्षत्रम् । राजाना । प्रऽदिवः । दधाथे इति ॥ ५ ॥

---

१ °र्मणः वि[2] अ[1]. २. तत् लपं; नास्ति वि[1]; उत वि[2] अ[1]. ३. तान् प्रति वि[1] लपं. ४. नास्ति वि[1] लपं. ५. नास्ति वि[2] अ[1]. ६. धारणं च अ[1] ल. ७. °र्णयोः मूको. ८. गच्छ वि[2] अ[1]. ९. गमनमा° मूको. १०. नास्ति मूको.

**वेङ्कट०** असूत पूर्वः कामानां वर्षिता वृद्धतरः उदकानीमानि[1]। अस्य शुचो[2] रोधयित्र्यः पूर्व्यः आपः सन्ति। दिवः उदितौ! इन्द्रावरुणौ! यज्ञस्य कर्मभिराप्यायितौ पुराणम् बलम् धारयेथे ॥ ५ ॥

[3]इति तृतीयाष्टके द्वितीयाध्याये त्रयोविंशो वर्गः[3] ॥

त्रीणि राजाना विदथे पुरूणि परि विश्वानि भूषथः सदांसि।
अपश्यमत्र मनसा जगन्वान् व्रते गन्धर्वाँ अपि वायुकेशान् ॥ ६ ॥

त्रीणि। राजाना। विदथे। पुरूणि। परि। विश्वानि। भूषथः। सदांसि।
अपश्यम्। अत्र। मनसा। जगन्वान्। व्रते। गन्धर्वान्। अपि। वायुऽकेशान् ॥ ६ ॥

**वेङ्कट०** हे राजानौ! यज्ञे त्रीणि बहुयज्ञविषयत्वाद्[4] बहुसंख्यानि सवनानि परिभवथः, तथा विश्वानि च सदांसि। किञ्च[5] अपश्यम् एषु सदःसु मनसा जगन्वान् मनस्तत्र प्रवेशयन् यज्ञे गन्धर्वान् स्तोतॄन् अपि वायुकेशान् नामेति ॥ ६ ॥

तदिन्न्वस्य वृषभस्य धेनोरा नामभिर्ममिरे सक्म्यं गोः।
अन्यदन्यदसुर्यं१ वसाना नि मायिनो ममिरे रूपमस्मिन् ॥ ७ ॥

तत्। इत्। नु। अस्य। वृषभस्य। धेनोः। आ। नामऽभिः। ममिरे। सक्म्यम्। गोः।
अन्यत्ऽअन्यत्। असुर्यम्। वसानाः। नि। मायिनः। ममिरे। रूपम्। अस्मिन् ॥ ७ ॥

**वेङ्कट०** तत् अस्य वर्षितुः प्रीणयितुः गमनशीलस्य युद्धनिमित्तमिन्द्रियं स्तोतारः उच्चरितैः नामभिः अभिमुखम् कुर्वन्ति। तथा अन्यदन्यत् नानाविधम् असुराणां स्वभूतम् रूपम् भीषणम् आच्छादयन्तः मायायुक्ता असुराः अस्मिन् इन्द्रे निमितं कुर्वन्ति[6] विनाशयन्ति ॥ ७ ॥

तदिन्न्वस्य सवितुर्नकिर्मे हिरण्ययीममतिं यामशिश्रेत्।
आ सुष्टुती रोदसी विश्वमिन्वे अपीव योषा जनिमानि वव्रे ॥ ८ ॥

तत्। इत्। नु। अस्य। सवितुः। नकिः। मे। हिरण्ययीम्। अमतिम्। याम्। अशिश्रेत्।
आ। सुऽस्तुती। रोदसी इति। विश्वमिन्वे इति विश्वम्ऽइन्वे। अपिऽइव। योषा। जनिमानि। वव्रे ॥८॥

**वेङ्कट०** तत् अस्य प्रेरयितृ रूपम् न मीयते केनचिदपि, हिरण्यवर्णं यत् रूपम् असावाश्रयति। [7]किञ्च यः[7] सुष्टुत्या विश्वव्यापिन्यौ द्यावापृथिव्यौ अपि आ वृणोति, यथा जनयित्री स्त्री जातान्यपत्यानि ॥ ८ ॥

---

१. [0]दका मा हि वि[3] अ[1]. २. नास्ति वि[2] अ[1]. ३-३. नास्ति मूको. ४. त्रुटितम् वि[2] अ[1]. ५. इति वि[1] लपं. ६. नास्ति वि[1] लपं. ७-७. नास्ति वि[2] अ[1].

युवं प्रत्नस्य साधथो महो यद् दैवी स्वस्तिः परि णः स्यातम् ।
गोपाजिह्वस्य तस्थुषो विरूपा विश्वे पश्यन्ति मायिनः कृतानि ॥ ९ ॥

युवम् । प्रत्नस्य । साधथः । महः । यत् । दैवी । स्वस्तिः । परि । नः । स्यातम् ।
गोपाजिह्वस्य । तस्थुषः । विऽरूपा । विश्वे । पश्यन्ति । मायिनः । कृतानि ॥ ९ ॥

वेङ्कट० युवामिन्द्रावरुणौ पुराणस्य मम तद्धनं[1] साधयतम्, यत् महतः भवत्याढ्यस्य[2] । [3]अस्मानपि परितः भवतम् । गोप्त्री† स्तोतॄणां[3] यस्य वाग्[4] भवति धनप्रदानात् तस्य स्थिरस्य नानाविधानि कर्माणि सर्वे पश्यन्ति प्रज्ञावन्तः । सूक्तमिदमनिरुक्तम्[5] । वृद्धैः सह चिन्त्यमिति[6] ॥ ९ ॥

शुनं हुवेम मघवानमिन्द्रमस्मिन् भरे नृतमं वाजसातौ ।
शृण्वन्तमुग्रमूतये समत्सु घ्नन्तं वृत्राणि संजितं धनानाम् ॥ १० ॥

शुनम् । हुवेम । मघऽवानम् । इन्द्रम् । अस्मिन् । भरे । नृऽतमम् । वाजऽसातौ ।
शृण्वन्तम् । उग्रम् । ऊतये । समत्ऽसु । घ्नन्तम् । वृत्राणि । सम्ऽजितम् । धनानाम् ॥ १० ॥

वेङ्कट० ऋ ३,३०,२२ द्र. ॥ १० ॥

[7]इति तृतीयाष्टके द्वितीयाध्याये चतुर्विंशो वर्गः[7] ।

## [ ३९ ]

[7]विश्वामित्रो गाथिन ऋषिः । इन्द्रो देवता । त्रिष्टुप् छन्दः[7] ।

इन्द्रं मतिर्हृद आ वच्यमानाऽच्छा पतिं स्तोमतष्टा जिगाति ।
या जागृविर्विदथे शस्यमानेन्द्र यत् ते जायते विद्धि तस्य ॥ १ ॥

इन्द्रम् । मतिः । हृदः । आ । वच्यमाना । अच्छ । पतिम् । स्तोमऽतष्टा । जिगाति ।
या । जागृविः । विदथे । शस्यमाना । इन्द्र । यत् । ते । जायते । विद्धि । तस्य ॥ १ ॥

वेङ्कट० विश्वामित्रः[8] । इन्द्रम् स्तुतिः मदीयाद् हृदयात् मयोच्यमाना स्तोत्रियासंख्याभिः संस्कृता[9] स्वामिनम् अभि गच्छति, या स्तुतिः इन्द्रोद्बोधनाय जागर्ति यज्ञे शस्यमाना । तथा [10]सति हे इन्द्र! यत्†[10] त्वदर्थं वचः[8] मत्तः जायते, तत् विद्धि[11] ॥ १ ॥

---

१. नास्ति वि[1] लपं. २. नास्ति वि[1]. ३-३. नास्ति लपं. † गोप्तिः मूको. ४. नास्ति वि[1] लपं. ५. सूक्तमनिरु° वि[1] लपं. ६. नास्ति वि[2] अ[1] ल. ७-७. नास्ति मूको. ८. नास्ति वि[2]. ९. संस्तुता वि[1] लपं. १०-१०. नास्ति वि[2] अ[1]. † नास्ति वि[1]. ११. नास्ति अ[1].

दिवश्चिदा पूर्व्या जायमाना वि जागृविर्विदथे शस्यमाना ।
भद्रा वस्त्राण्यर्जुना वसाना सेयमस्मे सनजा पित्र्या धीः ॥ २ ॥

दिवः । चित् । आ । पूर्व्या । जायमाना । वि । जागृविः । विदथे । शस्यमाना ।
भद्रा । वस्त्राणि । अर्जुना । वसाना । सा । इयम् । अस्मे इति । सनऽजा । पित्र्या । धीः ॥२॥

**वेङ्कट०** द्युलोकात् उदीयमाना पुरातनी जागरणशीला यज्ञे शस्यमाना कल्याणानि शुक्लानि वस्त्राणि वसाना विभवति। सा इयम् अस्माकम् क्रमादागतत्वात्[1] पुरातनी भवति धीः इति वाचमाह[2] 'यद्धि मनसा ध्यायति तद्वाचा वदति' इति ब्राह्मणम् इति ॥ २ ॥

यमा चिदत्र यमसूरसूत जिह्वाया अग्रं पतदा ह्यस्थात् ।
वपूंषि जाता मिथुना सचेते तमोहना तपुषो बुध्न एता ॥ ३ ॥

यमा । चित् । अत्र । यमऽसूः । असूत । जिह्वायाः । अग्रम् । पतत् । आ । हि । अस्थात् ।
वपूंषि । जाता । मिथुना । सचेते इति । तमःऽहना । तपुषः । बुध्ने । आऽइता ॥ ३ ॥

**वेङ्कट०** इन्द्रस्य विवस्वतश्च स्तुतिमेतां[3] मन्यते। अदितेर्द्वौ[4] पुत्रावजायेताम्, तत्रैक इन्द्रोऽपरो[5] विवस्वानिति। अपरं मतम्—यमसूः बुद्धिः यमौ अजनयत्[6] वाचं च मनश्च। तत्र जिह्वायाः अग्रम् चलनस्वभावम् वाग् आ तिष्ठति हि। ताविमौ मनुष्याणां शरीराणि जातौ मिथुनौ सेवेते ज्योतीरूपौ तमसो हन्तारौ, 'मनोज्योतिः' ( माश १४,६,९,११ ) 'वाग्ज्योतिः' ( माश १४,७,१,५ ) इति ब्राह्मणम्, बलस्य मूलम् आगताविति। केचिदिन्द्रावरुणयोः स्तुतिमेतां मन्यन्त इति ॥ ३ ॥

नकिरेषां निन्दिता मर्त्येषु ये अस्माकं पितरो गोषु योधाः ।
इन्द्र एषां दृंहिता माहिनावानुद् गोत्राणि ससृजे दंसनावान् ॥ ४ ॥

नकिः । एषाम् । निन्दिता । मर्त्येषु । ये । अस्माकम् । पितरः । गोषु । योधाः ।
इन्द्रः । एषाम् । दृंहिता । माहिनऽवान् । उत् । गोत्राणि । ससृजे । दंसनाऽवान् ॥ ४ ॥

**वेङ्कट०** न कश्चिदस्ति एषाम् निन्दकः मनुष्येषु सुकर्मणाम्[7]। ये सर्वेषाम् अस्माकम् पितृभूता अङ्गिरसः पणिभिरपहृतासु[8] गोषु[9] तदर्थं योद्धारः। इन्द्रः एषाम् अङ्गिरसाम् उपोद्वलकः पूजावान् गवामावारणान्[10] मेघान् वज्रेण उत् ससृजे कर्मवान् इति[11] ॥ ४ ॥

---

१. त्रुटितम् वि[2] अ[1]. २. वाचा° वि[1,2]. ३. °मेनां वि[1] ल लपं. ४. दितेर्द्वौ द्वौ वि[2] अ[1]; दि द्वौ द्वौ वि[1]; द्वौ द्वौ लपं; दितर्द्वौ ल. ५. इन्द्रो मूको. ६. अजायत मूको. ७. सकर्म° वि[1]. ८. °हृतेषु मूको. ९. नास्ति वि[2] अ[1]. १०. °मावरणा वि[2] अ[1]. ११. नास्ति लपं वि[1,2] ल.

सखा॑ ह॒ यत्र॒ सखि॑भि॒र्नव॑ग्वैरभि॒ज्ञ्वा सत्व॑भि॒र्गा अ॑नु॒ग्मन् ।
स॒त्यं तदिन्द्रो॑ द॒शभि॒र्दश॑ग्वैः सूर्यं॑ विवेद॒ तम॑सि क्षि॒यन्त॑म् ॥ ५ ॥

सखा॑ । ह॒ । यत्र॑ । सखि॑ऽभिः । नव॑ऽग्वैः । अ॒भि॒ऽज्ञु । आ । सत्व॑ऽभिः । गाः । अ॒नु॒ऽग्मन् ।
स॒त्यम् । तत् । इन्द्रः॑ । द॒शऽभिः॑ । दश॑ऽग्वैः । सूर्य॑म् । वि॒वेद॑ । तम॑सि । क्षि॒यन्त॑म् ॥ ५ ॥

**वेङ्कट०** सखा खलु यत्र समानख्यानैः अङ्गिरोभिः युद्धार्थमभिगतजानुकैः अन्यैश्च सत्वभिः भटैः गाः आभिमुख्येनान्वगच्छत्[1] । सत्यम् तदानीम् इन्द्रः दशसंख्यैः अङ्गिरोभिः सह असुरान् हत्वा तमोहननेन[2] तमसि निवसन्तम् [3]विवेद सूर्यम् इति[3] ॥ ५ ॥

[4]इति तृतीयाष्टके द्वितीयाध्याये पञ्चविंशो वर्गः[4] ॥

इन्द्रो॒ मधु॒ संभृ॑तमु॒स्रिया॑यां प॒द्वद् वि॑वेद श॒फव॒न्नमे॒ गोः ।
गुहा॑ हि॒तं गुह्यं॑ गू॒ळ्हम॒प्सु हस्ते॑ दधे॒ दक्षि॑णे॒ दक्षि॑णावान् ॥ ६ ॥

इन्द्रः॑ । मधु॑ । सम्ऽभृ॑तम् । उ॒स्रिया॑याम् । प॒त्ऽवत् । वि॒वे॒द॒ । श॒फऽव॑त् । नमे॑ । गोः ।
गुहा॑ । हि॒तम् । गुह्य॑म् । गू॒ळ्हम् । अ॒प्ऽसु । हस्ते॑ । द॒धे॒ । दक्षि॑णे । दक्षि॑णऽवान् ॥ ६ ॥

**वेङ्कट०** [5]इन्द्रः मधुरसम् गवि संभृतम् पयः विवेद, तत्कारणभूतं पदयुक्तम् शफयुक्तम् च धनं लेभे, गवार्थम् कृतवान् नमनमित्यर्थः। गुहायाम् निहितम् अत एव गुह्यम् उदकेषु स्थितमन्नं स्तोतुः दक्षिणे हस्ते प्रयच्छति देयधनवानिति[5] ॥ ६ ॥

ज्योति॑र्वृणीत॒ तम॑सो वि॒जा॒नन्नारे स्या॑म दु॒रि॒ताद॒भीके॑ ।
इ॒मा गिरः॑ सोमपाः सोमवृद्ध जु॒षस्वे॑न्द्र पुरु॒तम॑स्य का॒रोः ॥ ७ ॥

ज्योतिः॑ । वृ॒णी॒त॒ । तम॑सः । वि॒ऽजा॒नन् । आ॒रे । स्या॒म॒ । दुः॒ऽइ॒तात् । अ॒भीके॑ ।
इ॒माः । गिरः॑ । सो॒म॒ऽपाः॒ । सो॒म॒ऽवृ॒द्ध॒ । जु॒षस्व॑ । इ॒न्द्र॒ । पु॒रु॒ऽतम॑स्य । का॒रोः ॥ ७ ॥

**वेङ्कट०** [6]ज्योतिः †समभक्त नैशस्य तमसः† सकाशात्‡ विजायमानः । ततो वयं दूरे स्याम दुरितात्$ सङ्ग्रामे । इमाः स्तुतीः हे सोमस्य पातः सोमेन वृद्ध ! सेवस्व हे इन्द्र ! बहूनां ग्लपयितुः स्तोतुः[6] ॥७॥

ज्योति॑र्य॒ज्ञाय॒ रोद॑सी॒ अनु॑ ष्यादा॒रे स्या॑म दुरि॒तस्य॒ भूरेः॑ ।
भूरि॑ चि॒द्धि तु॒जतो॒ मर्त्य॑स्य सुपा॒रासो॑ वसवो ब॒र्हणा॑वत् ॥ ८ ॥

ज्योतिः॑ । य॒ज्ञाय॑ । रोद॑सी॒ इति॑ । अनु॑ । स्या॒त् । आ॒रे । स्या॒म॒ । दुः॒ऽइ॒तस्य॑ । भूरेः॑ ।
भूरि॑ । चि॒त् । हि । तु॒ज॒तः । मर्त्य॑स्य । सु॒ऽपा॒रासः॑ । व॒स॒वः॒ । ब॒र्हणा॑ऽवत् ॥ ८ ॥

---

१. °ख्वेनागच्छन् वि[1] लपं; °ख्वेनागच्छत् ल; °च्छन् वि[2] अ[1]. २. तमोऽवहनेन अ[1]. ३-३. नास्ति वि[1] लपं. ४-४. नास्ति मूको. ५-५. नास्ति वि[1] लपं. † देवध° वि[2] अ[1] ल. ६-६. नास्ति वि[1]. †-† नास्ति लपं. ‡ नास्ति वि[2] अ[1] ल लपं. $ दूरस्व वि[2] अ[1] ल लपं; दुरितस्व ल प्रस्तावः.

वेङ्कट० हे वसवः! अस्माकं यज्ञकरणार्थं नैशस्य तमसो बाधकं ज्योतिः द्यावापृथिवी अनु भवतु। आरे स्याम तमसा कृतस्य दुरितस्य भूरेः। इन्द्रमित्थं स्तुवतो बहु अपि धनम् देवार्थं प्रयच्छतः मर्त्यस्य शोभनपारणा यूयम् हे वसवः! धनं प्रयच्छथ वृद्धिमदिति ॥ ८ ॥

शुनं हुवेम मघवानमिन्द्रमस्मिन् भरे नृतमं वाजसातौ।
शृण्वन्तमुग्रमूतये समत्सु घ्नन्तं वृत्राणि संजितं धनानाम् ॥ ९ ॥

शुनम्। हुवेम। मघऽवानम्। इन्द्रम्। अस्मिन्। भरे। नृऽतमम्। वाजऽसातौ।
शृण्वन्तम्। उग्रम्। ऊतये। समत्ऽसु। घ्नन्तम्। वृत्राणि। सम्ऽजितम्। धनानाम् ॥ ९ ॥

वेङ्कट० ऋ ३,३०,२२ द्र. ॥ ९ ॥

'इति तृतीयाष्टके द्वितीयाध्याये षड्विंशो वर्गः'।

व्याख्यद् द्वितीयमध्यायं तृतीयस्याऽष्टकस्य सः।
मित्रावरुणयोर्वंशे मातुर्यस्य समुद्भवः ॥ १ ॥

इति वेङ्कटमाधवाचार्यविरचिते ऋक्संहिताव्याख्याने तृतीयाष्टके द्वितीयोऽध्यायः।

— ❀ —

इति ऋग्वेदे सभाष्ये तृतीयाष्टके द्वितीयोऽध्यायः ॥



१-१. नास्ति मूको.

## अथ तृतीयाऽष्टके तृतीयोऽध्यायः

वेङ्कट०

'इन्द्र त्वा वृषभं वयं' व्याचिख्यासति माधवः ।
निपातेष्वेव केषांचिद् वृत्तिभेदं प्रदर्शयन् ॥ १ ॥

निपाता ये विकल्पार्था ये समुच्चयवाचिनः ।
ये वा विनिग्रहार्थीया उपमार्थाश्च ये तथा ॥ २ ॥

सर्वे ते न प्रयुज्यन्त ऋक्पादादिष्विति[1] स्थितिः ।
'इव देवदत्त' इति न हि लोके प्रयुज्यते ॥ ३ ॥

'वा देवदत्त' इति वा तथा वेदे च दृश्यताम् ।
नन्वेवकारसदृश उकारो दर्शनात्तथा ॥ ४ ॥

स दृश्यते च पादादाव् [2]'उ लोकमग्ने कृणवः'†[2] ।
'उ लोककृत्नुमीमहे'[3] 'उ लोककृत्नुमद्रिवः'[4] ॥ ५ ॥

'उ लोको यस्ते अद्रिवः'[5] ते चत्वार उदाहृताः ।
नामी विनिग्रहार्थीया न ह्येष्वस्ति विनिग्रहः ॥ ६ ॥

पूरणत्वं च [6]नैतेषां न ह्यादौ[6] सन्ति पूरणाः ।
उ लोक उत्तमो लोकः इति वक्तुं[7] न युज्यते ॥ ७ ॥

शाकल्यो ह्यवगृह्णीयात् तदा नो इति दर्शयेत् ।
अथाप्युत्तमपर्यायं लोकात् प्राक् पर्यवस्थितम् ॥ ८ ॥

मन्यामहे कान्दिशीकास्तत्र वृद्धेषु निर्णयः ।
उपमार्थश्च नन्वादौ यथाशब्दः प्रयुज्यते ॥ ९ ॥

'तथा तदस्तु सोमपाः'[8], 'यथा त उश्मसीष्टये'[8] ।
प्रकारवचनः सोऽयं लौकिकाश्च प्रयुञ्जते ॥ १० ॥

येन प्रकारेण कृतं तेनास्माकं [9]करोत्विति ।
इव[9] देवदत्ते[10] कृतं [11]न तु[11] दृष्टं तथा क्वचित् ॥ ११ ॥

---

१. ऋक्पदा° वि लपं. २-२. नास्ति वि[1] लपं. † ऋ ५,४,११. ३. ऋ ९,२,८. ४. ऋ ८,१५,४. ५. ऋ ३,३७,११. ६-६. नैतेषामप्यादौ वि[1] लपं. ७. नास्ति वि[1]. ८. ऋ १,३०,१२. ९-९. नास्ति वि[2] अ[1]. १०. देवदत्तेन वि[1] अ[1] वेंकम. ११-११. नास्ति वि[1] लपं.

तस्मात् यथेवौ[1] भिन्नार्थाविति सूक्ष्मेक्षिकापराः ।
प्रयुज्यते यथाशब्दे क्रियापदमपेक्षितम् ॥ १२ ॥

उद्दमसीत्यादिकं नैवमिवयोगे[2] प्रयुज्यते ।
[3]बहुष्वर्थेषु दृष्टो नञ्[3] निषेधेऽथ समुच्चये ॥ १३ ॥

सम्प्रत्यर्थे इवार्थे च पूरणेऽपि च दृश्यते ।
प्रयुज्यते न वाक्यादावुपमार्थं इति स्थितिः ॥ १४ ॥

उपमायां निषेधे च दृश्यन्ते बहवो नञः ।
तथा[4] समुच्चयार्थीयाः 'अ॒ग्निमु॒षां न जे॑रते'[5] ॥ १५ ॥

'तस्मि॑न्त्सा॒कं त्रि॒श॒ता न'[6], 'होना॑ मनु॒ष्यो॑३ न दक्षः'[7] ।
'अश्वे॒ न चि॒त्रे अरुषि'[8] सम्प्रत्यर्थं नञं विदुः ॥ १६ ॥

'अ॒स्मै भी॒माय॑'[9] च तथा सन्ति चान्येऽपि तादृशाः ।
'वि॒पा॑ ज्योतींषि बिभ्र॑ते'[10] नकारस्तत्र[11] पूरणः ॥ १७ ॥

पादादौ[12] न प्रयुज्यन्ते हि-स्म-चेत्-स्विद्-ह-वै-तवः ।
कारणं तत्र वाक्यादावर्थस्यैषामनन्वयः ॥ १८ ॥

पादादावपि सद्भावं[13] पूरणानामपीच्छति ।
यास्को यदाह[14]—'नू॒नं सा'[15] नूनमित्येष पूरणः ॥ १९ ॥

यथा 'न नू॒नम॑स्ति'[16] इति सम्प्रत्यर्थस्य[17] वाचकः ।
तथैव सम्प्रत्यर्थत्वमत्रापीच्छन्ति केचन ॥ २० ॥

नुशब्दः क्षिप्रवचनो वाक्यादावपि दृश्यते ।
'नू मर्तो॑ दयते'[18] इति मध्ये प्रश्नस्य वाचकः ॥ २१ ॥

निपातानां [19]प्रयोगस्य स्थानं ज्ञात्वा† न मुह्यति[19] ।
अतो लोकानुसारेण निपातार्थं प्रदर्शयेत् ॥ २२ ॥ इति

---

१. यथेव वि[2]; अथैव अ[1]. २. नैवयोगे वि[2] अ[1]. ३-३. नास्ति वि[2] अ[1]. ४. एते वि[1]; नास्ति वि[2] अ[1]. ५ ऋ १,१८१,९. ६. ऋ १,१६४,४८. ७. ऋ १,५९,४. ८. ऋ १,३०,२१. ९. ऋ १,५७,३. १०. ऋ ३,१०,५. ११. नकारस्तता वि[1] लपं. १२. पदादौ वि[1] लपं. १३. यद्भावः वि[1] लपं; °वः वि[2] अ[1] ल. १४. या १,६;७ द्र. १५. ऋ २,११,२१. १६. ऋ १,१७०,१. १७. सम्प्रतित्वस्य वेंकअ. १८. ऋ ७,१००,१. १९-१९. प्रयोगज्ञा न मुह्यन्ति कदाचन वेंकअ.
† नास्ति मूको; जानन् वा ल प्रस्तावः.

[ ४० ]

[1]विश्वामित्रो गाथिन ऋषिः । इन्द्रो देवता । गायत्री छन्दः[1] ।

इन्द्र॑ त्वा वृष॒भं व॒यं सु॒ते सोमे॑ हवामहे । स पा॑हि॒ मध्वो॒ अन्ध॑सः ॥ १ ॥

इन्द्र॑ । त्वा॒ । वृ॒ष॒भम् । व॒यम् । सु॒ते । सोमे॑ । ह॒वा॒म॒हे॒ । सः । पा॒हि॒ । मध्वः॑ । अन्ध॑सः ॥ १ ॥

**वेङ्कट०** विश्वामित्रः । आद्या निगदसिद्धा ॥ १ ॥

इन्द्र॑ क्रतु॒विदं॑ सु॒तं सोमं॑ हर्य पुरुष्टुत । पिबा वृ॑षस्व॒ तातृ॑पिम् ॥ २ ॥

इन्द्र॑ । क्र॒तु॒ऽविद॑म् । सु॒तम् । सोम॑म् । ह॒र्य॒ । पु॒रु॒ऽस्तु॒त॒ । पिब॑ । आ । वृ॒ष॒स्व॒ । तातृ॑पिम् ॥२॥

**वेङ्कट०** इन्द्र! प्रज्ञाया लम्भकम् सुतम् सोमम् इच्छ पुरुष्टुत!, अथ पिब, जठरे च सिञ्चस्व तर्पणसमर्थम्[2] ॥ २ ॥

इन्द्र॒ प्र णो॑ धि॒तावा॑नं य॒ज्ञं विश्वे॑भिर्दे॒वेभि॑ः । ति॒र स्त॑वान विश्पते ॥ ३ ॥

इन्द्र॑ । प्र । नः॒ । धि॒तऽवा॑नम् । य॒ज्ञम् । विश्वे॑भिः । दे॒वेभि॑ः । ति॒र । स्त॒वा॒न॒ । वि॒श्प॒ते॒ ॥ ३ ॥

**वेङ्कट०** इन्द्र! वर्धय अस्माकम् निहितसोमम् यज्ञम् विश्वैः देवैः सह हे स्तूयमान विशां पते! ॥ ३ ॥

इन्द्र॒ सोमा॑ः सु॒ता इ॒मे तव॒ प्र य॑न्ति सत्पते । क्षयं॑ च॒न्द्रास॒ इन्द॑वः ॥ ४ ॥

इन्द्र॑ । सोमा॑ः । सु॒ताः । इ॒मे । तव॑ । प्र । य॒न्ति॒ । स॒त्ऽप॒ते॒ । क्षय॑म् । च॒न्द्रास॑ः । इन्द॑वः ॥४॥

**वेङ्कट०** इन्द्र! इमे सुताः सोमाः तव जठरं प्रति गच्छन्ति हे सत्पते! सोमाः हर्षकराः दीप्ताः ॥ ४ ॥

द॒धि॒ष्वा ज॒ठरे॑ सु॒तं सोम॑मिन्द्र॒ वरे॑ण्यम् । तव॑ द्यु॒क्षास॒ इन्द॑वः ॥ ५ ॥

द॒धि॒ष्व । ज॒ठरे॑ । सु॒तम् । सोम॑म् । इ॒न्द्र॒ । वरे॑ण्यम् । तव॑ । द्यु॒क्षास॑ः । इन्द॑वः ॥ ५ ॥

**वेङ्कट०** इन्द्र! स्थापय[3] जठरे सुतम् सोमम् वरणीयम् । [4]तव भवन्ति[4] दीप्ताः सोमा इति ॥ ५ ॥

[5]इति तृतीयाष्टके तृतीयाध्याये प्रथमो वर्गः[5] ।

गिर्व॑णः पा॒हि न॑ः सु॒तं मधो॒र्धारा॑भिरज्यसे । इन्द्र॒ त्वादा॑त॒मिद्य॑शः ॥ ६ ॥

गिर्व॑णः । पा॒हि । न॒ः । सु॒तम् । मधो॑ः । धारा॑भिः । अ॒ज्य॒से॒ । इन्द्र॑ । त्वाऽदा॑तम् । इत् । यश॑ः ॥६॥

**वेङ्कट०** [5]हे गीर्भिः[5] वननीय![6] पिब नः सुतम् सोमम् । मधुसदृशस्य सोमस्य धाराभिः त्वम् अज्यसे । इन्द्र! त्वयैव दीयते यजमानानां कीर्तिः[7], ततस्तां च देहीति ॥ ६ ॥

---

१-१. नास्ति मूको. २. र्पण° ल लपं. ३. भवस्था° वि[2]; वस्था अ[1]. ४-४. तपन्ति वि[2] अ[1]. ५-५. नास्ति वि[2] अ[1]. ६. गीर्वेगः अ[1]; वरणीव वि[2] लपं. ७. नास्ति वि[2]; कीर्तिः तत्र वि[2] अ[1] लपं.

अभि द्युम्नानि वनिन इन्द्रं सचन्ते अक्षिता । पीत्वी सोमस्य वावृधे ॥ ७ ॥

अभि । द्युम्नानि । वनिनः । इन्द्रम् । सचन्ते । अक्षिता । पीत्वी । सोमस्य । वावृधे ॥ ७ ॥

**वेङ्कट०** द्युम्नानि[1] 'द्युम्नं[2] द्योततेः, यशो वान्नं[2] वा' (या ५,५) इत्युक्तम्, सोमलक्षणान्यन्नानि भजनवतो यजमानात् इन्द्रम् अभि सचन्ते अक्षीणानि । ततोऽयं पीत्वा सोमम् वर्धते ॥ ७ ॥

अर्वावतो न आ गहि परावतश्च वृत्रहन् । इमा जुषस्व नो गिरः ॥ ८ ॥

अर्वाऽवतः । नः । आ । गहि । पराऽवतः । च । वृत्रऽहन् । इमाः । जुषस्व । नः । गिरः ॥८॥

**वेङ्कट०** इन्द्र! समीपात् अस्मान् आ गच्छ, दूरस्थः च इतः । अथाऽस्माकम् इमाः स्तुतीः सेवस्व ॥८॥

यदन्तरा परावतमर्वावतं च हूयसे । इन्द्रेह तत आ गहि ॥ ९ ॥

यत् । अन्तरा । पराऽवतम् । अर्वाऽवतम् । च । हूयसे । इन्द्र । इह । ततः । आ । गहि ॥९॥

**वेङ्कट०** दूरान्तिकयोः मध्ये वर्तमानस्त्वम् यस्मात् अस्माभिः आहूयसे, ततः[3] इन्द्र! अत्र आ गच्छ ॥ ९ ॥

[4]इति तृतीयाष्टके तृतीयाध्याये द्वितीयो वर्गः[4] ।

## [ ४१ ]

[4]विश्वामित्रो गाथिन ऋषिः । इन्द्रो देवता । गायत्री छन्दः[4] ।

आ तू न इन्द्र मद्र्यग्घुवानः सोमपीतये । हरिभ्यां याह्यद्रिवः ॥ १ ॥

आ । तु । नः । इन्द्र । मद्र्यक् । हुवानः । सोमऽपीतये । हरिऽभ्याम् । याहि । अद्रिऽवः ॥ १ ॥

**वेङ्कट०** आ याहि क्षिप्रम् अस्मान् अस्मदभिमुखम् होतृभिर्हूयमानः सोमपानार्थम् अश्वाभ्याम् हे वज्रिन्! ॥१॥

सत्तो होता न ऋत्वियस्तिस्तिरे बर्हिरानुषक् । अयुज्रन् प्रातरद्रयः ॥ २ ॥

सत्तः । होता । नः । ऋत्वियः । तिस्तिरे । बर्हिः । आनुषक् । अयुज्रन् । प्रातः । अद्रयः ॥२॥

**वेङ्कट०** निषण्णः होता अस्माकम्, यागकालः प्राप्तो[5] यस्य सः[6] ऋत्वियः । तथा स्तीर्णं च बर्हिः अनुषक्तम् । युक्ताश्चाऽऽसन् प्रातः एव अभिषवार्थम् ग्रावाणः ॥ २ ॥

---

१. नास्ति मूको. २. अन्नं वि[2] अ[1]. ३-३. से ततः वि[1] लपं; स ततः वि[1] अ[1] ल. ४-४. नास्ति मूको. ५. नास्ति वि[1] लपं; प्राप्नोति अ[1]. ६. नास्ति लपं.

इमा ब्रह्म ब्रह्मवाहः क्रियन्त आ बर्हिः सीद । वीहि शूर पुरोळाशम् ॥ ३ ॥

इमा । ब्रह्म । ब्रह्मऽवाहः । क्रियन्ते । आ । बर्हिः । सीद । वीहि । शूर । पुरोळाशम् ॥ ३ ॥

वेङ्कट० स्तुतिभिर्य उह्यते तस्य सम्बोधनम् ब्रह्मवाहः इति । हे ब्रह्मवाहः![1] इमानि ब्रह्माणि स्तुतयः क्रियन्ते त्वदर्थम् । ततः स्तीर्णम् बर्हिः आ सीद, भक्षय च शूर! पुरोडाशम् ॥ ३ ॥

रारन्धि सवनेषु ण एषु स्तोमेषु वृत्रहन् । उक्थेष्विन्द्र गिर्वणः ॥ ४ ॥

ररन्धि । सवनेषु । नः । एषु । स्तोमेषु । वृत्रऽहन् । उक्थेषु । इन्द्र । गिर्वणः ॥ ४ ॥

वेङ्कट० रमस्व सवनेषु अस्माकम् एषु[2] स्तोमेषु वृत्रहन्! शस्त्रेषु च[3] इन्द्र! गीर्भिर्वननीय! ॥ ४ ॥

मतयः सोमपामुरुं रिहन्ति शवसस्पतिम् । इन्द्रं वत्सं न मातरः ॥ ५ ॥

मतयः । सोमऽपाम् । उरुम् । रिहन्ति । शवसः । पतिम् । इन्द्रम् । वत्सम् । न । मातरः ॥५॥

वेङ्कट० स्तुतयः सोमपातारम् महान्तम् लिहन्ति बलस्य पतिम् इन्द्रम् वत्सम् [4]इव मातरः[4] ॥ ५ ॥

[5]इति तृतीयाष्टके तृतीयाध्याये तृतीयो वर्गः[5] ॥

स मन्दस्वा ह्यन्धसो राधसे तन्वा महे । न स्तोतारं निदे करः ॥ ६ ॥

सः । मन्दस्व । हि । अन्धसः । राधसे । तन्वा । महे । न । स्तोतारम् । निदे । करः ॥ ६ ॥

वेङ्कट० सः त्वम् मन्दस्व अन्नेन महते धनाय शरीरभूतेन सोमेन[6] हि । स्तोतारम् च निन्दायै शत्रूणाम् मा कार्षीः । चलोपस्यात्र सद्भावाद् 'यद्धितुपरं छन्दसि' (पा ८,१,५६) इत्येवं[7] न प्रवर्तते । एवं चात्र हि इति पूरणम् ॥ ६ ॥

वयमिन्द्र त्वायवो हविष्मन्तो जरामहे । उत त्वमस्मयुर्वसो ॥ ७ ॥

वयम् । इन्द्र । त्वाऽयवः । हविष्मन्तः । जरामहे । उत । त्वम् । अस्मऽयुः । वसो इति ॥७॥

वेङ्कट० वयम् इन्द्र! त्वत्कामाः हविष्मन्तः स्तुमः, अपि च त्वम् अपि अस्मत्कामो भव हे वासयितः! ॥७॥

मारे अस्मद् वि मुमुचो हरिप्रियार्वाङ् याहि । इन्द्र स्वधावो मत्स्वेह ॥ ८ ॥

मा । आरे । अस्मत् । वि । मुमुचः । हरिऽप्रिय । अर्वाङ् । याहि । इन्द्र । स्वधाऽवः । मत्स्व । इह ॥

१. नास्ति मूको. २. एषु च वि[2] अ[1]; एषु वा वि[1]. ३. वा वि[1] लपं. ४-४. नास्ति वि[1]. ५-५. नास्ति मूको. ६. °न मन्दस्व मूको. ७. इत्येवं तु ल प्रस्तावः.

वेङ्कट० अस्मत्तः दूरेऽन्यस्मिन्[1] यजमाने अश्वाः मा वि मुचः हे हरिप्रिय!, अस्मदभिमुखम्[2] आगच्छ, इन्द्र! अन्नवन्! इह सोमेन मत्स्व ॥ ८ ॥

अर्वाञ्चं त्वा सुखे रथे वहतामिन्द्र केशिना । घृतस्नू बर्हिरासदे ॥ ९ ॥

अर्वाञ्चम् । त्वा । सुऽखे । रथे । वहताम् । इन्द्र । केशिना । घृतस्नू इति घृतऽस्नू । बर्हिः । आऽसदे ॥९॥

वेङ्कट० अस्मदभिमुखम् त्वाम् सुखे[3] रथे स्थापयित्वा वहताम् हे इन्द्र! अश्वौ केशवन्तौ घृतस्नू[4] "'घृतम्' ( निघ १,१२ ) इत्युदकनाम,[5] उदकस्राविणौ बर्हिः इदम् अधिष्ठातुम्[6] ॥ ९ ॥

[7]इति तृतीयाष्टके तृतीयाध्याये चतुर्थो वर्गः[7] ॥

[ ४२ ]

[7]विश्वामित्रो गाथिन ऋषिः । इन्द्रो देवता । गायत्री छन्दः[7] ।

उप नः सुतमा गहि सोममिन्द्र गवाशिरम् । हरिभ्यां यस्ते अस्मयुः ॥ १ ॥

उप । नः । सुतम् । आ । गहि । सोमम् । इन्द्र । गोऽआशिरम् । हरिऽभ्याम् । यः । ते । अस्मऽयुः ॥१॥

वेङ्कट० उप आ गच्छ अस्माकम् 'सुतम् सोमम्[8] इन्द्र! पयोमिश्रम्[9], अश्वाभ्याम्, यः ते अस्मत्कामो रथः तेन चेति ॥ १ ॥

तमिन्द्र मदमा गहि बर्हिःष्ठां ग्रावभिः सुतम् । कुविन्न्वस्य तृप्णवः ॥ २ ॥

तम् । इन्द्र । मदम् । आ । गहि । बर्हिःऽस्थाम् । ग्रावऽभिः । सुतम् । कुवित् । नु । अस्य । तृप्णवः ॥२॥

वेङ्कट० तम् इमम् सोमम् इन्द्र! आ गच्छ बर्हिषि स्थितम् ग्रावभिः अभिषुतम् । बहु च अनेन तृप्यस्व ॥ २ ॥

इन्द्रमित्था गिरो ममाच्छागुरिषिता इतः । आवृते सोमपीतये ॥ ३ ॥

इन्द्रम् । इत्था । गिरः । मम । अच्छ । अगुः । इषिताः । इतः । आऽवृते । सोमऽपीतये ॥ ३ ॥

वेङ्कट० इन्द्रम् प्रति गच्छन्ति इत्थं प्रयुज्यमानाः मम स्तुतयः मया प्रेषिताः मत्सकाशात् मां प्रत्यागन्तुम् सोमं च पातुम् ॥ ३ ॥

---

१. दूरेऽस्मिन् वि[1]. २. °मुख वि[1] लपं. ३. नु वि[1]; नु द्वारे वि[1] अ[1]. ४. नास्ति मूको. ५-५. नास्ति वि[1] लपं. ६. अभितिष्ठत वि[1]. ७-७. नास्ति मूको. ८. सोमम् सुतम् वि[1] लपं. ९. °मिश्रम् ल.

इन्द्रं सोम॑स्य पी॒तये॒ स्तोमै॑रि॒ह ह॑वामहे । उ॒क्थेभि॑: कु॒विदा॒गम॑त् ॥ ४ ॥

इन्द्र॑म् । सोम॑स्य । पी॒तये॑ । स्तोमै॑: । इ॒ह । ह॒वा॒म॒हे॒ । उ॒क्थेभि॑: । कु॒वित् । आ॒ऽगम॑त् ॥ ४ ॥

वेङ्कट० इन्द्रम् सोमपानार्थम् स्तोत्रैः[1] अस्मिन्[2] यज्ञे हवामहे । स चाऽस्मदीयानि शस्त्राण्युद्दिश्य बहु इह आगच्छतु ॥ ४ ॥

इन्द्र॒ सोमा॑: सु॒ता इ॒मे तान् द॑धिष्व शतक्रतो । ज॒ठरे॑ वाजिनीवसो ॥ ५ ॥

इन्द्र॑ । सोमा॑: । सु॒ताः । इ॒मे । तान् । द॒धि॒ष्व॒ । श॒त॒क्र॒तो॒ इति॑ शतऽक्रतो । ज॒ठरे॑ । वा॒जि॒नी॒व॒सो॒ इति॑ वाजिनीऽवसो ॥ ५ ॥

वेङ्कट० इन्द्र ! सुतान् सोमान् जठरे कुरु हे शतक्रतो ! अन्नेन वासयितः ! ॥ ५ ॥

[3]इति तृतीयाष्टके तृतीयाध्याये पञ्चमो वर्गः[3] ।

वि॒द्मा हि त्वा॑ धनंज॒यं वाजे॑षु दधृ॒षं क॑वे । अधा॑ ते सु॒म्नमी॑महे ॥ ६ ॥

वि॒द्म । हि । त्वा॒ । ध॒न॒म्ऽज॒यम् । वाजे॑षु । द॒धृ॒षम् । क॒वे॒ । अध॑ । ते॒ । सु॒म्नम् । ई॒म॒हे॒ ॥ ६ ॥

वेङ्कट० जानीमः हि वयम् त्वाम्[4] धनानां जेतारम् सङ्ग्रामेषु धर्षितारं हे प्राज्ञ ! । ततो वयम् त्वत्तः सुखं याचामहे ॥ ६ ॥

इ॒ममि॑न्द्र॒ गवा॑शिरं॒ यवा॑शिरं च नः पिब । आ॒गत्या॒ वृष॑भिः सु॒तम् ॥ ७ ॥

इ॒मम् । इ॒न्द्र॒ । गोऽआ॑शिरम् । यव॑ऽआशिरम् । च॒ । नः॒ । पि॒ब॒ । आ॒ऽगत्य॑ । वृष॑ऽभिः । सु॒तम् ॥

वेङ्कट० इमम् इन्द्र ! पयोमिश्रणम् यवसक्तुमिश्रणम् च अस्मदीयम् पिब सोमम् आगत्य अध्वर्युभिर्ग्रावभिर्वा सुतम् ॥ ७ ॥

तुभ्येदि॑न्द्र॒ स्व ओ॒क्ये॒३॒॑ सोमं॑ चोदा॒मि पी॒तये॑ । ए॒ष रा॑रन्तु ते हृ॒दि ॥ ८ ॥

तुभ्य॑ । इत् । इ॒न्द्र॒ । स्वे । ओ॒क्ये॑ । सोम॑म् । चो॒दा॒मि॒ । पी॒तये॑ । ए॒षः । र॒र॒न्तु॒ । ते॒ । हृ॒दि ॥ ८ ॥

वेङ्कट० तुभ्यम् एव इन्द्र ! [5]स्वे ओक्ये आहवनीये[5] सोमम् प्रेरयामि पानाय[6] । एषः तव हृदये[7] रमताम् ॥ ८ ॥

---

१. नास्ति लपं. २. कस्मिन् वि[२] अ[२]. ३-३. नास्ति मूको. ४. नास्ति वि[२] अपं. ५-५. स्वोदक[°] वि अ[२] लपं; स्वे उदक[°] वि[२] क. ६. नास्ति वि[२] अ[२]. ७. हम वि[१]; नास्ति अ[१].

त्वां सुतस्य पीतये प्रत्नमिन्द्र हवामहे। कुशिकासो अवस्यवः ॥ ९ ॥

त्वाम्। सुतस्य। पीतये। प्रत्नम्। इन्द्र। हवामहे। कुशिकासः। अवस्यवः ॥ ९ ॥

**वेङ्कट०** निगदव्याख्याता ॥ ९ ॥

[1]इति तृतीयाष्टके तृतीयाध्याये षष्ठो वर्गः[1] ॥

[ ४३ ]

[1]विश्वामित्रो गाथिन ऋषिः। इन्द्रो देवता। त्रिष्टुप् छन्दः[1]।

आ याह्यर्वाङुप वन्धुरेष्ठास्तवेदनु प्रदिवः सोमपेयम्।
प्रिया सखाया वि मुचोप बर्हिस्त्वामिमे हव्यवाहो हवन्ते ॥ १ ॥

आ। याहि। अर्वाङ्। उप। वन्धुरेऽस्थाः। तव। इत्। अनु। प्रऽदिवः। सोमऽपेयम्।
प्रिया। सखाया। वि। मुच। उप। बर्हिः। त्वाम्। इमे। हव्यऽवाहः। हवन्ते ॥ १ ॥

**वेङ्कट०** उप आ गच्छ अभिमुखः रथवन्धुरे तिष्ठन्, वन्धुरशब्दः फलकासङ्घाटवचनः, तव[2] एव स्वभूतम् पुराणम् सोमपानम् लक्षीकृत्य[3]। प्रियौ सखायावश्वौ वि मुच उपेत्य बर्हिः। त्वाम् इमे हविषां वोढारः कुशिकाः हवन्ते ॥ १ ॥

आ याहि पूर्वीरति चर्षणीराँ अर्य आशिष उप नो हरिभ्याम्।
इमा हि त्वा मतयः स्तोमतष्टा इन्द्र हवन्ते सख्यं जुषाणाः ॥ २ ॥

आ। याहि। पूर्वीः। अति। चर्षणीः। आ। अर्यः। आऽशिषः। उप। नः। हरिऽभ्याम्।
इमाः। हि। त्वा। मतयः। स्तोमऽतष्टाः। इन्द्र। हवन्ते। सख्यम्। जुषाणाः ॥ २ ॥

**वेङ्कट०** पूर्वान्[4] यजमानान् अतिक्रम्य अस्मान् प्रति आ याहि। एक आकारः पूरणः। स्वामी स्वम् अस्माकम् आशासनानि प्रति उपागच्छ[5] अश्वाभ्याम्। इमाः हि त्वाम् स्तुतयः त्रिवृदादिभिः संस्कृताः[6] इन्द्र! हवन्ते त्वया सख्यम् सेवमानाः ॥ २ ॥

आ नो यज्ञं नमोवृधं सजोषा इन्द्र देव हरिभिर्याहि तूयम्।
अहं हि त्वा मतिभिर्जोहवीमि घृतप्रयाः सधमादे मधूनाम् ॥ ३ ॥

आ। नः। यज्ञम्। नमःऽवृधम्। सऽजोषाः। इन्द्र। देव। हरिऽभिः। याहि। तूयम्।
अहम्। हि। त्वा। मतिऽभिः। जोहवीमि। घृतऽप्रयाः। सधऽमादे। मधूनाम् ॥ ३ ॥

---

१-१. नास्ति मूको. २. ते वि[२]. ३. नास्ति वि[२] अ[१]. ४. पूर्व्यान् वि[१]. ५. उपागच्छागच्छ वि[२] अ[१]. ६. संस्तुता लपं.

वेङ्कट० आ याहि अस्माकम् यज्ञम् अन्नेन वर्धमानम् मरुद्भिः सहितः हे इन्द्र! देव! अश्वैः तूर्णम्। अहम् हि त्वा स्तुतिभिः अत्यन्तमाह्वयामि क्षरदन्नः सोमानाम् सहमदनस्थाने यज्ञे ॥ ३ ॥

आ च त्वामेता वृषणा वहातो हरी सखाया सुधुरा स्वङ्गा ।
धानावदिन्द्रः सवनं जुषाणः सखा सख्युः शृणवद् वन्दनानि ॥ ४ ॥

आ । च । त्वाम् । एता । वृषणा । वहातः । हरी इति । सखाया । सुऽधुरा । सुऽअङ्गा ।
धानाऽवत् । इन्द्रः । सवनम् । जुषाणः । सखा । सख्युः । शृणवत् । वन्दनानि ॥ ४ ॥

वेङ्कट० आ वहतः च त्वाम् एतौ वर्षितारौ अश्वौ तव सखायौ शोभनधुरौ शोभनाङ्गौ । उत्तरोऽर्धः[1] परोक्षः । धानायुक्तम् सवनम् इन्द्रः सेवमानः सखा सख्युः यजमानस्य शृणुयात् स्तोत्राणि[2] ॥ ४ ॥

कुविन्मा गोपां करसे जनस्य कुविद् राजानं मघवन्नृजीषिन् ।
कुविन्म ऋषिं पपिवांसं सुतस्य कुविन्मे वस्वो अमृतस्य शिक्षाः ॥ ५ ॥

कुवित् । मा । गोपाम् । करसे । जनस्य । कुवित् । राजानम् । मघऽवन् । ऋजीषिन् ।
कुवित् । मा । ऋषिम् । पपिऽवांसम् । सुतस्य । कुवित् । मे । वस्वः । अमृतस्य । शिक्षाः ॥५॥

वेङ्कट० बहु मा त्वं पुत्रादेः गोपायितारम् करोषि, [3]कुवित् च धनस्येश्वरम् हे धनवन्! ऋजीषवन्! तृतीयसवनेऽन्वयात्, तथा बहु माम् द्रष्टारं करोषि[3], सोमम् पपिवांसम् । तथा मह्यम् अमृतसदृशम् वासयितारं गवादिकं [4]बहु प्रयच्छ[4] । शिक्षतिर्दानकर्मेति ॥ ५ ॥

आ त्वा बृहन्तो हरयो युजाना अर्वागिन्द्र सधमादो वहन्तु ।
प्र ये द्विता दिव ऋञ्जन्त्याताः सुसंमृष्टासो वृषभस्य मूराः ॥ ६ ॥

आ । त्वा । बृहन्तः । हरयः । युजानाः । अर्वाक् । इन्द्र । सधऽमादः । वहन्तु ।
प्र । ये । द्विता । दिवः । ऋञ्जन्ति । आताः । सुऽसंमृष्टासः । वृषभस्य । मूराः ॥ ६ ॥

वेङ्कट० आ वहन्तु त्वाम् महान्तः अश्वाः रथे नियुज्यमानाः[5] अस्मदभिमुखम् इन्द्र! सह माद्यन्तः, ये द्युलोकस्य, आताः इति दिङ्नाम, दिशः अन्धकारेण परिवृतत्वात् मूढाः प्रकर्षेण ऋञ्जन्ति द्वैधम्, मध्येन गच्छन्तः प्रकाशनेन अलङ्कुर्वन्तीत्यर्थः, सुसम्मृष्टाङ्गाः कामानां वर्षितुरिन्द्रस्य स्वभूताः ॥ ६ ॥

---

१. 'त्तरार्धः वि'. २. स्तोत्रमिति कपं; स्तोत्रंमि वि'. ३-३. नास्ति अ'. ४-४. यच्छ वि अ'. ५. युज्य° लुप्तं वि'.

इन्द्र पिब वृषधूतस्य वृष्ण आ यं ते श्येन उशते जभार ।
यस्य मदे च्यावयसि प्र कृष्टीर्यस्य मदे अप गोत्रा ववर्थ ॥ ७ ॥

इन्द्र । पिब । वृषऽधूतस्य । वृष्णः । आ । यम् । ते । श्येनः । उशते । जभार ।
यस्य । मदे । च्यवयसि । प्र । कृष्टीः । यस्य । मदे । अप । गोत्रा । ववर्थ ॥ ७ ॥

**वेङ्कट०** इन्द्र! पिब ग्रावभिरंशुभ्योऽवधूतम्[1] वृषाणं सोमम्, यम् त्वदर्थम् दिवः गायत्री आ जहार कामयमानाय । यस्य पीतस्य मदे शत्रून् प्र च्यावयसि[2], यस्य मदे मेघान् अप[3] ववर्थ ॥ ७ ॥

शुनं हुवेम मघवानमिन्द्रमस्मिन् भरे नृतमं वाजसातौ ।
शृण्वन्तमुग्रमूतये समत्सु घ्नन्तं वृत्राणि संजितं धनानाम् ॥ ८ ॥

शुनम् । हुवेम । मघऽवानम् । इन्द्रम् । अस्मिन् । भरे । नृऽतमम । वाजऽसातौ ।
शृण्वन्तम् । उग्रम् । ऊतये । समत्ऽसु । घ्नन्तम् । वृत्राणि । सम्ऽजितम् । धनानाम् ॥ ८ ॥

**वेङ्कट०** ऋ ३,३०,२२ द्र. ॥ ८ ॥

[4]इति तृतीयाष्टके तृतीयाध्याये सप्तमो वर्गः[4] ।

## [ ४४ ]

[5]विश्वामित्रो गाथिन ऋषिः । इन्द्रो देवता । बृहती छन्दः[5] ।

अयं ते अस्तु हर्यतः सोम आ हरिभिः सुतः ।
जुषाण इन्द्र हरिभिर्न आ गह्या तिष्ठ हरितं रथम् ॥ १ ॥

अयम् । ते । अस्तु । हर्यतः । सोमः । आ । हरिऽभिः । सुतः ।
जुषाणः । इन्द्र । हरिऽभिः । नः । आ । गहि । आ । तिष्ठ । हरितम । रथम् ॥ १ ॥

**वेङ्कट०** अयम्[5] तव अस्तु पानाय प्रेप्सतः सोमः, आ-कार. पूरणः, ग्रावभिः सुतः । तमिमं सेवमानस्त्वम् इन्द्र![6] अस्मान् अश्वैः आ गच्छ । तदर्थं हरितवर्णम् रथम् आ तिष्ठ इति ॥ १ ॥

हर्यन्नुषसमर्चयः सूर्यं हर्यन्नरोचयः ।
विद्वांश्चिकित्वान् हर्यश्व वर्धस इन्द्र विश्वा अभि श्रियः ॥ २ ॥

हर्यन् । उषसम् । अर्चयः । सूर्यम् । हर्यन् । अरोचयः ।
विद्वान् । चिकित्वान् । हरिऽअश्व । । वर्धसे । इन्द्र । विश्वाः । अभि । श्रियः ॥ २ ॥

---

१. °धूतम् वि[2]. २. च्य° वि[2] अ[1]. ३. अव वि[1,2] अ[1] लपं. ४-४. नास्ति मूको.
५. नास्ति वि[2]. ६. नास्ति मूको.

वेङ्कट० इत्थं करोमीति कामयमानः उषसम् प्रकाशितवानसि, सूर्यम्[1] अरोचयः। केतनवेदनयोरल्पो भेदः। स त्वं यजमानानां [2]सर्वाः श्रियः[2] लक्ष्यीकृत्य वर्धसे हे हरितवर्णाश्व इन्द्र! ॥ २ ॥

**द्यामिन्द्रो हरिधायसं पृथिवीं हरिवर्पसम्। अधारयद्धरितोर्भूरि भोजनं ययोरन्तर्हरिश्चरत्॥३॥**

द्याम्। इन्द्रः। हरिऽधायसम्। पृथिवीम्। हरिऽवर्पसम्।
अधारयत्। हरितोः। भूरि। भोजनम्। ययोः। अन्तः। हरिः। चरत्॥ ३ ॥

वेङ्कट० द्युलोकम् [3]इन्द्रः रश्मीनां दिशां वा धारकं[3] कृतवान्, भूमिं च ओषधिभिर्हरितरूपाम्[4]। तथा दिवि च पृथिव्यां च देवमनुष्याणां भूरि भोजनम् अधारयत्, ययोः मध्ये हरिः चरति ॥ ३ ॥

**जज्ञानो हरितो वृषा विश्वमा भाति रोचनम्।**
**हर्यश्वो हरितं धत्त आयुधमा वज्रं बाह्वोर्हरिम्॥ ४ ॥**

जज्ञानः। हरितः। वृषा। विश्वम्। आ। भाति। रोचनम्।
हरिऽअश्वः। हरितम्। धत्ते। आयुधम्। आ। वज्रम्। बाह्वोः। हरिम्॥ ४ ॥

वेङ्कट० जायमानः हरितवर्णः इन्द्रः सर्वम् लोकम् प्रकाशयति। हरितवर्णाश्वः हरितवर्णम् आयुधम्[5] धारयति बाह्वोः वज्रसंज्ञम् शत्रूणां हरणशीलम्। आ-कारः पूरणः ॥ ४ ॥

**इन्द्रो हर्यन्तमर्जुनं वज्रं शुक्रैरभीवृतम्। अपावृणोद्धरिभिरद्रिभिः सुतमुद् गा हरिभिराजत॥५॥**

इन्द्रः। हर्यन्तम्। अर्जुनम्। वज्रम्। शुक्रैः। अभिऽवृतम्।
अप। अवृणोत्। हरिऽभिः। अद्रिऽभिः। सुतम्। उत्। गाः। हरिऽभिः। आजत॥ ५ ॥

वेङ्कट० इन्द्रः शत्रून् प्रेप्सन्तम् अर्जुनवर्णम् वज्रम् शुक्लैस्तेजोभिः[6] परिवृतम् आदाय रसाहरणशीलैः ग्रावभिः सुतम् सोमं पात्रस्थं पिहितद्वारम् पानाय अप अवृणोत्। अथ पीत्वा सोमं पणीन् अश्वैर्जित्वा तैरपहृताः गाः उत् आजत इति ॥ ५ ॥

[7]इति तृतीयाष्टके तृतीयाध्यायेऽष्टमो वर्गः[7] ॥

[ ४५ ]

[7]विश्वामित्रो गाथिन ऋषिः। इन्द्रो देवता। बृहती छन्दः[7]।

**आ मन्द्रैरिन्द्र हरिभिर्याहि मयूररोमभिः।**
**मा त्वा के चिन्नि यमन् विं न पाशिनोऽति धन्वेव ताँ इहि॥ १ ॥**

---

१. सूर्यमपि वि[1] अ[1] लपं. २-२. सर्वा श्रीः मूको. ३-३. °न्द्र....रकं वि[1] लपं. ४. ओषधीभि° वि[2] अ[1] क लपं. ५. आयुधम् धनम् वि[1] लपं. ६. शुक्रै° वि[1] लपं. ७-७. नास्ति मूको.

आ । मन्द्रैः । इन्द्र । हरिऽभिः । याहि । मयूररोमऽभिः ।
मा । त्वा । के । चित् । नि । यमन् । विम् । न । पाशिनः । अति । धन्वऽइव । तान् । इहि ॥ १ ॥

वेङ्कट० आ याहि मदनशीलैः इन्द्र! अश्वैः मयूररोमसदृशरोमभिः । मा त्वा केचित् आगच्छन्तम् नि यच्छन्तु बध्नन्तु पक्षिणम् इव पाशिनः पाशैः । तान् सर्वान् अति गच्छ शीघ्रम् निरुदकमिव देशमिति ॥ १ ॥

वृत्रखादो वलंरुजः पुरां दर्मो अपामजः ।
स्थाता रथस्य हर्योरभिस्वर इन्द्रो दृळ्हा चिदारुजः ॥ २ ॥

वृत्रऽखादः । वलम्ऽरुजः । पुराम् । दर्मः । अपाम् । अजः ।
स्थाता । रथस्य । हर्योः । अभिऽस्वरे । इन्द्रः । दृळ्हा । चित् । आऽरुजः ॥ २ ॥

वेङ्कट० वृत्रासुरस्य खादिता हन्ता तथा[1] वलस्य[2] भङ्क्ता असुरपुराणाम् दारयिता मेघस्थानाम् अपाम् प्रेरकः अधिष्ठाता रथस्य गमनार्थम् अश्वयोः अभिस्वरणे सति इन्द्रः दृढानि अपि असुरपुराणि आरुजः ॥ २ ॥

गम्भीराँ उदधीँरिव क्रतुं पुष्यसि गाइव ।
प्र सुगोपा यवसं धेनवो यथा ह्रदं कुल्याइवाशत ॥ ३ ॥

गम्भीरान् । उदधीन्ऽइव । क्रतुम् । पुष्यसि । गाःऽइव ।
प्र । सुऽगोपाः । यवसम् । धेनवः । यथा । ह्रदम् । कुल्याःऽइव । आशत ॥ ३ ॥

वेङ्कट० महावकाशानि उदधानानीवाद्भिः गा[3] इव च यवसेन यज्ञम् फलेन पुष्यसि[4] । यथा तृणम् धेनवः प्राश्नुवते, यथा वा ह्रदम् कुल्याः, एवमिन्द्रं सुष्ठु गोपायितारः सोमाः[5] प्राश्नुवत[6] इति ॥ ३ ॥

आ नस्तुजं रयिं भरांशं न प्रतिजानते ।
वृक्षं पक्वं फलमङ्कीव धूनुहीन्द्र संपारणं वसु ॥ ४ ॥

आ । नः । तुजम् । रयिम् । भर । अंशम् । न । प्रतिऽजानते ।
वृक्षम् । पक्वम् । फलम् । अङ्कीऽइव । धूनुहि । इन्द्र । सम्ऽपारणम् । वसु ॥ ४ ॥

वेङ्कट० आ भर अस्मभ्यम् क्षिप्रम् धनम्, अंशम् इव पुत्राय [7]जानन्तं पितरम्[7] प्रतिजानते। 'प्रति [8]हि स्वः स्वं संजानीते[8]' ( माश १,१,४,५ ) इति ब्राह्मणम्। यथा वृक्षम् पक्वम् फलम् अङ्की चलयन् अवधुनोति, एवमस्माकम् सम्पारयितृ धनम् त्वम् धूनुहि[9] ॥ ४ ॥

---

१. अथा वि[1]; अथ लपं. २. बलस्य मूको. ३. गाव वि[1] अ[1] लपं. ४. °ष्यति वि[1] लपं. ५. नास्ति वि[1] लपं. ६. °वन्त मूको. ७-७. यजमानपि° लपं. ८-८. हिस्व स्वं जा° मूको. ९. धु° वि[1] अ[1] लपं.

स्वयुरिन्द्र स्वराळसि स्मद्दिष्टिः स्वयशस्तरः ।
स वावृधान ओजसा पुरुष्टुत भवा नः सुश्रवस्तमः ॥ ५ ॥

स्वऽयुः । इन्द्र । स्वऽराट् । असि । स्मत्ऽदिष्टिः । स्वयशःऽतरः ।
सः । वृवृधानः । ओजसा । पुरुऽस्तुत । भव । नः । सुश्रवःऽतमः ॥ ५ ॥

वेङ्कट० हे इन्द्र! धनेच्छुः स्वयमेव राजसे सर्वस्य शोभनदेशनः अतिशयेन स्वायत्तकीर्तिः । सः त्वम् बलेन वर्धमानः हे बहुभिः स्तुत! भव अस्माकम् अतिशयेन शोभनान्नः ॥ ५ ॥

[1]इति तृतीयाष्टके तृतीयाध्याये नवमो वर्गः[1] ॥

## [ ४६ ]

[2]विश्वामित्रो गाथिन ऋषिः । इन्द्रो देवता । त्रिष्टुप् छन्दः[2] ।

युध्मस्य ते वृषभस्य स्वराज उग्रस्य यूनः स्थविरस्य घृष्वेः ।
अजूर्यतो वज्रिणो वीर्याणीन्द्र श्रुतस्य महतो महानि ॥ १ ॥

युध्मस्य । ते । वृषभस्य । स्वऽराजः । उग्रस्य । यूनः । स्थविरस्य । घृष्वेः ।
अजूर्यतः । वज्रिणः । वीर्याणि । इन्द्र । श्रुतस्य । महतः । महानि ॥ १ ॥

वेङ्कट० योधनशीलस्य वर्षितुः कामानाम् सर्वेश्वरस्य उद्गूर्णस्य तरुणस्य पुरातनस्य[3] शत्रूणां धर्षणशीलस्य जरारहितस्य वज्रिणः विश्रुतस्य महतः तव हे इन्द्र! महान्ति[3] वीर्याणि भवन्तीति ॥ १ ॥

महाँ असि महिष वृष्ण्येभिर्धनस्पृदुग्र सहमानो अन्यान् ।
एको विश्वस्य भुवनस्य राजा स योधया च क्षयया च जनान् ॥ २ ॥

महान् । असि । महिष । वृष्ण्येभिः । धनऽस्पृत् । उग्र । सहमानः । अन्यान् ।
एकः । विश्वस्य । भुवनस्य । राजा । सः । योधय । च । क्षयय । च । जनान् ॥ २ ॥

वेङ्कट० 'महान् महिषः' इति द्वे महन्नामनी । तत्रैकं नैघण्टुकम् । हे [4]महिष! पौंस्यैः त्वं[4] पूजनीयः भवसि शत्रुधनानामभिकाङ्क्षितः उद्गूर्ण! शत्रून् अभिभवन् । एकः[5] सर्वस्य लोकस्य ईश्वरो भवसि । सः त्वम् शत्रून् योधय, विनाशनम् च नय[6] तानिति ॥ २ ॥

प्र मात्राभी रिरिचे रोचमानः प्र देवेभिर्विश्वतो अप्रतीतः ।
प्र मज्मना दिव इन्द्रः पृथिव्याः प्रोरोर्महो अन्तरिक्षादृजीषी ॥ ३ ॥

---

१-१. नास्ति मूको. २-२. नास्ति वि[2] अ[1]. ३-३. °ष इति···स्त्वं वि; °ष इति अ[1]. ४. एक एव वि[1] लपं. ५. नयन् मूको.

प्र । मात्राभिः । रिरिचे । रोचमानः । प्र । देवेभिः । विश्वतः । अप्रतिऽइतः ।
प्र । मज्मना । दिवः । इन्द्रः । पृथिव्याः । प्र । उरोः । महः । अन्तरिक्षात् । ऋजीषी ॥ ३ ॥

वेङ्कट० मात्रावतां मात्राः इन्द्रः प्र रिरिचे मात्राभिः[1] अतिरिक्तपरिमाणो भवति दीप्यमानः । एवं सर्वेभ्यो देवेभ्यः सर्वत एव शत्रुभिरप्रतिगतः, तथा बलवतां बलाच्च प्र रिरिचे । किं बहुना, दिवः पृथिव्याः महतः उरोः अन्तरिक्षात् च प्र रिरिचे तृतीयसवनान्वयात् ऋजीषी ॥ ३ ॥

उरुं गभीरं जनुषाभ्युग्रं विश्वव्यचसमवतं मतीनाम् ।
इन्द्रं सोमासः प्रदिवि सुतासः समुद्रं न स्रवत आ विशन्ति ॥ ४ ॥

उरुम् । गभीरम् । जनुषा । अभि । उग्रम् । विश्वऽव्यचसम् । अवतम् । मतीनाम् ।
इन्द्रम् । सोमासः । प्रऽदिवि । सुतासः । समुद्रम् । न । स्रवतः । आ । विशन्ति ॥ ४ ॥

वेङ्कट० विस्तीर्णम् गम्भीरम् जन्मप्रभृति उद्गूर्णम् सर्वव्यापिनम् स्तुतीनाम् कूपम् इन्द्रम् सोमाः पुराणेष्वप्यहःसु सुताः समुद्रम् इव नद्यः अभि आ विशन्ति ॥ ४ ॥

यं सोममिन्द्र पृथिवीद्यावा गर्भं न माता बिभृतस्त्वाया ।
तं ते हिन्वन्ति तमु ते मृजन्त्यध्वर्यवो वृषभ पातवा उ ॥ ५ ॥

यम् । सोमम् । इन्द्र । पृथिवीद्यावा । गर्भम् । न । माता । बिभृतः । त्वाऽया ।
तम् । ते । हिन्वन्ति । तम् । ऊँ इति । ते । मृजन्ति । अध्वर्यवः । वृषभ । पातवै । ऊँ इति ॥

वेङ्कट० यम् [2]सोमम् हे इन्द्र! द्यावापृथिवी वर्षणादुत्पादनाच्च† गर्भम् इव माता बिभृतः‡ त्वत्कामनया, तम् अध्वर्यवः तुभ्यम् अंशुभ्यः प्रेरयन्ति[2] अभिषुण्वन्ति, तथा ग्रहेषु गृहीतम् पवित्रेण मृजन्ति हे वर्षितः! तव पानाय ॥ ५ ॥

[3]इति तृतीयाष्टके तृतीयाध्याये दशमो वर्गः[3] ॥

## [ ४७ ]

[3]विश्वामित्रो गाथिन ऋषिः । इन्द्रो देवता । त्रिष्टुप् छन्दः[3] ।

मरुत्वाँ इन्द्र वृषभो रणाय पिबा सोममनुष्वधं मदाय ।
आ सिञ्चस्व जठरे मध्व ऊर्मिं त्वं राजासि प्रदिवः सुतानाम् ॥ १ ॥

मरुत्वान् । इन्द्र । वृषभः । रणाय । पिब । सोमम् । अनुऽस्वधम् । मदाय ।
आ । सिञ्चस्व । जठरे । मध्वः । ऊर्मिम् । त्वम् । राजा । असि । प्रऽदिवः । सुतानाम् ॥ १ ॥

---

1. मात्राभ्यः ल प्रस्तावः. 2-2. नास्ति वि[1] लपं. † उत्पन्नाच्च ल. ‡ बिभ्रतः मूको.
3-3. नास्ति मूको.

**वेङ्कट०** हे इन्द्र![1] **मरुद्भिः सहितस्त्वम् कामानां वर्षिता असुरैः सङ्ग्रामं कर्तुम्** पिब[2] सोमम् **अनुगतपुरोडाशम्** मदाय। आ सिञ्चस्व जठरे **मधुनः** [2]**ऊर्मिम् इति सोमाभिप्रायम्**। त्वम् **ईश्वरः** असि **पूर्वेष्वप्यहःसु** सुतानाम्[2] ॥ १ ॥

**स॒जोषा॑ इन्द्र॒ सग॑णो म॒रुद्भिः॒ सोमं॑ पिब वृत्र॒हा शू॑र वि॒द्वान् ।**
**ज॒हि शत्रूँ॒रप॒ मृधो॑ नुद॒स्वाथाभ॑यं कृणुहि वि॒श्वतो॑ नः ॥ २ ॥**

स॒ऽजोषाः॑ । इन्द्र॒ । स॒ऽग॑णः । म॒रुत्ऽभिः॑ । सोम॑म् । पि॒ब॒ । वृ॒त्र॒ऽहा । शू॒र॒ । वि॒द्वान् ।
ज॒हि । शत्रू॑न् । अप॑ । मृधः॑ । नु॒द॒स्व॒ । अथ॑ । अभ॑यम् । कृ॒णु॒हि॒ । वि॒श्वतः॑ । नः॒ ॥ २ ॥

**वेङ्कट०** इन्द्र![1] मरुद्भिः **सहितः सङ्गतः**[2] **मरुद्भिः सहगणस्त्वम्**[3], **कार्येषु यः साहाय्यं करोति तं गणमाहुः**, सोमम् पिब [4]**वृत्रस्य हन्ता** हे शूर! **प्राज्ञः**, †जहि शत्रून्, मृधः† **च** अप नुदस्व। **अथ** अभयम् **कुरु सर्वतः**[4] **अस्माकमिति** ॥ २ ॥

**उ॒त ऋ॒तुभि॑र्ऋतुपाः पाहि॒ सोम॒मिन्द्र॑ दे॒वेभिः॒ सखि॑भिः सु॒तं नः॑ ।**
**याँ आभ॑जो म॒रुतो॒ ये त्वान्वह॒न् वृत्रमद॑धु॒स्तुभ्य॒मोजः॑ ॥ ३ ॥**

उ॒त । ऋ॒तुऽभिः॑ । ऋ॒तु॒ऽपाः॒ । पा॒हि॒ । सोम॑म् । इन्द्र॑ । दे॒वेभिः॑ । सखि॑ऽभिः । सु॒तम् । नः॒ ।
यान् । आ । अभ॑जः । म॒रुतः॑ । ये । त्वा॒ । अनु॑ । अह॑न् । वृ॒त्रम् । अद॑धुः । तुभ्य॑म् । ओजः॑ ॥ ३ ॥

**वेङ्कट०** **अपि** [5]**च मधुमाधवादिभिः सह पिब**[5] सोमम् **हे** ऋतुभिः **सह** पातः **इन्द्र! देवैश्च सह** सखिभिः **मरुद्भिः** सुतम् **अस्माकम्**। **यान् त्वम्** मरुतः **साहाय्यार्थमात्मना संयोजितवानसि**, **ये त्वाम्** अनु **भजन्ति**[6], **तैः सह हतवानसि वृत्रम्**, **ते च तुभ्यम्** अदधुः **ओजः** ॥ ३ ॥

**ये त्वा॑हि॒हत्ये॑ मघव॒न्नव॑र्ध॒न् ये शा॑म्ब॒रे ह॑रिवो॒ ये गवि॑ष्टौ ।**
**ये त्वा॑ नू॒नम॑नु॒मद॑न्ति॒ विप्राः॒ पिबे॑न्द्र॒ सोमं॒ सग॑णो म॒रुद्भिः॑ ॥ ४ ॥**

ये । त्वा॒ । अ॒हि॒ऽहत्ये॑ । म॒घ॒ऽव॒न् । अव॑र्धन् । ये । शा॒म्ब॒रे । ह॒रि॒ऽवः॒ । ये । गोऽइ॑ष्टौ ।
ये । त्वा॒ । नू॒नम् । अ॒नु॒ऽमद॑न्ति । विप्राः॑ । पिब॑ । इन्द्र॒ । सोम॑म् । स॒ऽग॑णः । म॒रुत्ऽभिः॑ ॥ ४ ॥

**वेङ्कट०** ये **त्वाम्** हे **धनवन्! अहिहनने** अवर्धयन्, ये वा **शम्बरेण सह युद्धे** हे **अश्ववन्!**, ये **वा पणिभिरपहृतानां गवामन्वेषणे**, [7]ये वा[7] **सम्प्रति त्वाम्** अनुमदन्ति **मेधाविनः**, **मदतिः सकर्मकश्च भवति, तैः मरुद्भिः सहितस्त्वम्** इन्द्र! पिब सोमम् ॥ ४ ॥

---

१. नास्ति वि[1] लपं. २-२. नास्ति वि[1] कः. ३. सगणं त्वम् वि[1] लपं. ४-४. नास्ति वि[1] अ[1].
†-† प्रतिविरय राजानः अथः शत्रुनाशाय मृधः वि[1] लपं; जहि प्रतिवेश्य राज्ञः मृधः शत्रुनाशाय मृधः ल.
५-५. नास्ति वि[1] अ[1]. ६. भवन्ति मूको. ७-७. च त्वां वि[1]; ये च त्वां अ[1].

मरुत्वन्तं वृषभं वावृधानमकवारिं दिव्यं शासमिन्द्रम् ।
विश्वासाहमवसे नूतनायोग्रं सहोदामिह तं हुवेम ॥ ५ ॥

मरुत्वन्तम् । वृषभम् । ववृधानम् । अकवऽअरिम् । दिव्यम् । शासम् । इन्द्रम् ।
विश्वऽसहम् । अवसे । नूतनाय । उग्रम् । सहःऽदाम् । इह । तम् । हुवेम ॥ ५ ॥

**वेङ्कट०** मरुद्भिः सहितम् वृषभम् वीर्येण [1]वर्धमानम् अकुत्सितशत्रुम्[1], प्रबला एवास्यारातयो भवन्ति, दिवि भवम् शासितारम् इन्द्रम् सर्वस्याभिभवितारम् रक्षणाय नवतराय उद्गूर्णम् बलस्य दातारम् अस्मिन् यज्ञे तम् आह्वयेम ॥ ५ ॥

[2]इति तृतीयाष्टके तृतीयाध्याये एकादशो वर्गः[2] ॥

## [ ४८ ]

[2]विश्वामित्रो गाथिन ऋषिः । इन्द्रो देवता । त्रिष्टुप् छन्दः[2] ।

सद्यो ह जातो वृषभः कनीनः प्रभर्तुमावदन्धसः सुतस्य ।
साधोः पिब प्रतिकामं यथा ते रसाशिरः प्रथमं सोम्यस्य ॥ १ ॥

सद्यः । ह । जातः । वृषभः । कनीनः । प्रऽभर्तुम् । आवत् । अन्धसः । सुतस्य ।
साधोः । पिब । प्रतिऽकामम् । यथा । ते । रसऽआशिरः । प्रथमम् । सोम्यस्य ॥ १ ॥

**वेङ्कट०** तदहः एव जातः इन्द्रः कामानां वर्षिता कान्तः कामयिता वा दीप्तो वा[3] सुतस्य सोमस्य प्रभर्तारं[4] यजमानम् अभिगच्छति । अथ प्रत्यक्षः । साधयितारम् पिब कामंकामं प्रति[5] प्रतिकामम् यथा ते कामो भवति, गोरसमिश्रणम् यज्ञमुख एव सोमम्, यकार उपजनः, सोमार्हस्य वा तव सम्बन्धिनं सोममिति ॥ १ ॥

यज्जायथास्तदहरस्य कामेंऽशोः पीयूषमपिबो गिरिष्ठाम् ।
तं ते माता परि योषा जनित्री महः पितुर्दम आसिञ्चदग्रे ॥ २ ॥

यत् । जायथाः । तत् । अहः । अस्य । कामे । अंशोः । पीयूषम् । अपिबः । गिरिऽस्थाम् ।
तम् । ते । माता । परि । योषा । जनित्री । महः । पितुः । दमे । आ । असिञ्चत् । अग्रे ॥२॥

**वेङ्कट०** यस्मिन्नहनि प्रातः[6] जायथाः तत् अहः एव अस्य अंशोः पातव्यम् अभिषुतम् अभिषवात् प्राक्[7] पर्वतेषु लतासु स्थितम् कामानुगुणम् अपिबः । तम् रसम् तव माता[7] आमिश्रयित्री पृथिवी महतः द्युलोकादाकृष्य यज्ञे[8] मुखतः परितः आ असिञ्चत् इति ॥ २ ॥

---

१-१. °न कुत्सि° वि[2] अ[1]; °नम् कुत्सि° वि[1] ल लपं. २-२. नास्ति मूको. ३. नास्ति वि[2]. ४. भर्ता° वि[1] लपं. ५. नास्ति मूको. ६. वृतस्त्वं लपं; पूतस्त्वं वि[1]. ७. नास्ति वि[1] लपं. ८. यज्ञेषु वि[1] लपं.

उपस्थाय मातरमन्नमैट्ट तिग्ममपश्यदभि सोममूधः ।
प्रयावयन्नचरद् गृत्सो अन्यान् महानि चक्रे पुरुधप्रतीकः ॥ ३ ॥

उपऽस्थाय । मातरम् । अन्नम् । ऐट्ट । तिग्मम् । अपश्यत् । अभि । सोमम् । ऊधः ।
प्रऽयवयन् । अचरत् । गृत्सः । अन्यान् । महानि । चक्रे । पुरुधऽप्रतीकः ॥ ३ ॥

वेङ्कट० प्रातर्जात इन्द्र उपगम्य पृथिवीम् आत्मनः अन्नम् ऐट्ट[1] इति । इच्छतेः रूपम् । अथ तीव्रम् सोमम् तस्याः[2] ऊधः लक्षीकृत्य स्थितम् अपश्यत् । अथ तं पीत्वा प्रकर्षेण पृथक् कुर्वन् अचरत् मेधावी अन्यान् शत्रून्, युद्धानि च चक्रे बहुप्रकारावयवः ॥ ३ ॥

उग्रस्तुराषाळभिभूत्योजा यथावशं तन्वं चक्र एषः ।
त्वष्टारमिन्द्रो जनुषाभिभूयामुष्या सोममपिबच्चमूषु ॥ ४ ॥

उग्रः । तुराषाट् । अभिभूतिऽओजाः । यथावशम् । तन्वम् । चक्रे । एषः ।
त्वष्टारम् । इन्द्रः । जनुषा । अभिऽभूय । आऽमुष्य । सोमम् । अपिबत् । चमूषु ॥ ४ ॥

वेङ्कट० उद्‌गूर्णः तूर्णमभिभविता अभिभवनशीलबलः यथाकामम् शरीरम् करोति, कामरूपो भवति अयम् । सोऽयम् इन्द्रः त्वष्टारम् पुत्रस्य[3] वधाद् अनिन्द्रियं सोममाहरन्तम् प्रादुर्भावात् [4]अभिभूय चमूषु स्थितम् सोमम् परिमुष्य अपिबत् । 'स यज्ञवेशसम् कृत्वा प्रासहा सोममपिबत्' ( माश १२,७,१,१; तै २,४,१२,१ ) इति ब्राह्मणम् इति[4] ॥ ४ ॥

शुनं हुवेम मघवानमिन्द्रमस्मिन् भरे नृतमं वाजसातौ ।
शृण्वन्तमुग्रमूतये समत्सु घ्नन्तं वृत्राणि संजितं धनानाम् ॥ ५ ॥

शुनम् । हुवेम । मघऽवानम् । इन्द्रम् । अस्मिन् । भरे । नृऽतमम् । वाजऽसातौ ।
शृण्वन्तम् । उग्रम् । ऊतये । समत्ऽसु । घ्नन्तम् । वृत्राणि । सम्ऽजितम् । धनानाम् ॥ ५ ॥

वेङ्कट० ऋ ३,३०,२२ द्र. ॥ ५ ॥

[5]इति तृतीयाष्टके तृतीयाध्याये द्वादशो वर्गः[5] ॥

[ ४९ ]

[5]विश्वामित्रो गाथिन ऋषिः । इन्द्रो देवता । त्रिष्टुप् छन्दः[5] ।

शंसा महामिन्द्रं यस्मिन् विश्वा आ कृष्टयः सोमपाः काममव्यन् ।
यं सुक्रतुं धिषणे विभ्वतष्टं घनं वृत्राणां जनयन्त देवाः ॥ १ ॥

---

१. नास्ति वि[1]. २. तस्य ल. ३. वृत्रस्य लपं. ४-४. नास्ति वि[1] अ[1]. ५-५. नास्ति मूको.

शंस । महाम् । इन्द्रम् । यस्मिन् । विश्वाः । आ । कृष्टयः । सोमऽपाः । कामम् । अव्यन् ।
यम् । सुऽक्रतुम् । धिषणे इति । विभ्वऽतष्टम् । घनम् । वृत्राणाम् । जनयन्त । देवाः ॥ १ ॥

वेङ्कट० [1]स्तुहि महान्तम् इन्द्रम्, यस्मिन् विश्वाः सोमपायिन्यः[1] प्रजाः स्वाभिलषितम्[2] आभिमुख्येन गच्छन्ति, यम् सुकर्माणम् द्यावापृथिवी शत्रूणाम् हन्तारम् देवाः च[3] अजनयन्, 'विभ्वम्' इति महन्नाम, पृथुतष्टम् यथा महाशरीरो भवति तथा कृतमिति ॥ १ ॥

यं नु नकिः पृतनासु स्वराजं द्विता तरति नृतमं हरिष्ठाम् ।
इनतमः सत्वभिर्यो ह शूषैः पृथुज्रया अमिनादायुर्दस्योः ॥ २ ॥

यम् । नु । नकिः । पृतनासु । स्वऽराजम् । द्विता । तरति । नृऽतमम् । हरिऽस्थाम् ।
इनऽतमः । सत्वऽभिः । यः । ह । शूषैः । पृथुऽज्रयाः । अमिनात् । आयुः । दस्योः ॥ २ ॥

वेङ्कट० यम् नु न कश्चित् सङ्ग्रामेषु स्वराजम् नेतृतमम् अश्वस्थितम् द्वैधम् तरति । सबलम् एनमाक्रम्य मध्येन न गच्छतीत्यर्थः[4] । ईश्वरतमः भटैः बलिष्ठैः पृथुवेगः यः[5] असुरस्य जीवितम् हतवान्, तं शंसेति सम्बन्धः ॥ २ ॥

सहावा पृत्सु तरणिर्नार्वा व्यानशी रोदसी मेहनावान् ।
भगो न कारे हव्यो मतीनां पितेव चारुः सुहवो वयोधाः ॥ ३ ॥

सहऽवा । पृत्ऽसु । तरणिः । न । अर्वा । विऽआनशिः । रोदसी इति । मेहनाऽवान् ।
भगः । न । कारे । हव्यः । मतीनाम् । पिताऽइव । चारुः । सुऽहवः । वयःऽधाः ॥ ३ ॥

वेङ्कट० सहनवान् सङ्ग्रामेषु शत्रूणां तरिता न च अन्यमाश्रितः द्यावापृथिव्योः व्याप्ता सेचनवान् भगः इव देवः कर्तव्येऽवस्थिते[6] स्तोत्रैः आह्वातव्यः पितेव कल्याणः स्वाह्वानः अन्नस्य दाता अयमिन्द्रः ॥ ३ ॥

धर्ता दिवो रजसस्पृष्ट ऊर्ध्वो रथो न वायुर्वसुभिर्नियुत्वान् ।
क्षपां वस्ता जनिता सूर्यस्य विभक्ता भागं धिषणेव वाजम् ॥ ४ ॥

धर्ता । दिवः । रजसः । पृष्टः । ऊर्ध्वः । रथः । न । वायुः । वसुऽभिः । नियुत्वान् ।
क्षपाम् । वस्ता । जनिता । सूर्यस्य । विऽभक्ता । भागम् । धिषणाऽइव । वाजम् ॥ ४ ॥

---

१-१. नास्ति वि[२] अ[२]. २. °ताम् वि[१] लपं. ३. नास्ति ल. ४. गच्छन्तीत्य° मूको.
५. नास्ति वि[१] लपं. ६. °व्यो समुपस्थि° वि[१] लपं.

वेङ्कट० इन्द्रः 'धर्ता दिवः लोकस्य द्युलोकं[1] मूर्ध्ना स्पृशन्[2] अन्तरिक्ष ऊर्ध्वं स्थितः रथः इव गन्ता। अथ तैः सह मरुत्सु(?)[3] नियुत्वान्[4] रात्रीणाम् आच्छादयिता जनयिता सूर्यस्य विभक्ता यज्ञे स्वीयं भागम्, 'धिषणा' ( निघ २,११ ) इति वाङ्नाम, यथा वागिन्द्रियम् अन्नम् विविधं भजत्येवमिति ॥ ४ ॥

शुनं हुवेम मघवानमिन्द्रमस्मिन् भरे नृतमं वाजसातौ ।
शृण्वन्तमुग्रमूतये समत्सु घ्नन्तं वृत्राणि संजितं धनानाम् ॥ ५ ॥

शुनम् । हुवेम । मघऽवानम् । इन्द्रम् । अस्मिन् । भरे । नृऽतमम् । वाजऽसातौ ।
शृण्वन्तम् । उग्रम् । ऊतये । समत्ऽसु । घ्नन्तम् । वृत्राणि । समऽजितम् । धनानाम् ॥ ५ ॥

वेङ्कट० ऋ ३,३०,२२ द्र. ॥ ५ ॥

[5]इति तृतीयाष्टके तृतीयाध्याये त्रयोदशो वर्गः[5] ॥

## [ ५० ]

[5]विश्वामित्रो गाथिन ऋषिः । इन्द्रो देवता । त्रिष्टुप् छन्दः[5] ।

इन्द्रः स्वाहा पिबतु यस्य सोम आगत्या तुम्रो वृषभो मरुत्वान् ।
ओरुव्यचाः पृणतामेभिरन्नैरास्य हविस्तन्वः काममृध्याः ॥ १ ॥

इन्द्रः । स्वाहा । पिबतु । यस्य । सोमः । आऽगत्य । तुम्रः । वृषभः । मरुत्वान् ।
आ । उरुऽव्यचाः । पृणताम् । एभिः । अन्नैः । आ । अस्य । हविः । तन्वः । कामम् । ऋध्याः ॥१॥

वेङ्कट० इन्द्रः स्वाहुतं सोमम् पिबतु, यस्य स्वभूतः सोमः भवति, तुम्रिः शब्दकर्मा, आगत्य सिंहनादकृत् कामानां वर्षिता मरुत्वान्। आ पूरयतु आत्मानम् एभिः अन्नैः बहुव्याप्तिः। किञ्च अस्य हविः शरीराणि कामम् संवर्धयत्विति[6] ॥ १ ॥

आ ते सपर्यू जवसे युनज्मि ययोरनु प्रदिवः श्रुष्टिमावः ।
इह त्वा धेयुर्हरयः सुशिप्र पिबा त्वस्य सुषुतस्य चारोः ॥ २ ॥

आ । ते । सपर्यू इति । जवसे । युनज्मि । ययोः । अनु । प्रऽदिवः । श्रुष्टिम् । आवः ।
इह । त्वा । धेयुः । हरयः । सुऽशिप्र । पिब । तु । अस्य । सुऽसुतस्य । चारोः ॥ २ ॥

वेङ्कट० आ युनज्मि ते परिचरणशीलौ गमनाय अश्वौ, ययोः आशुगमनम् पुराणः त्वम्

---

1-1. ··· लोकं वि[3] अ[1]. २. स्पर्शन् वि[1] व[1] अ[1] ल; नम् लपं ३. वसुभिः मरुद्भिः सा.
४. नियन्छब्दो वि[11] लपं; निरुच्छब्दो अ[1]. ५-५. नास्ति मूको. ६. सम्बन्धयतु वि[1] लपं.

गच्छसीति। [1]द्विवद् उक्त्वा बहुवद् आह इह त्वा इति[1]। अस्मिन् यज्ञे त्वाम् निदध्युः अश्वाः सुशिप्र! । पिब शीघ्रम् सुष्ठु सुतम् कल्याणं सोमम् इममिति ॥ २ ॥

गोभि॑र्मिमि॒क्षुं द॑धिरे सुपा॒रमिन्द्रं॒ ज्यैष्ठ्या॑य॒ धाय॑से गृणा॒नाः ।
म॒न्दा॒नः सोमं॑ पपि॒वाँ ऋ॑जीषि॒न्त्सम॒स्मभ्यं॑ पुरु॒धा गा इ॑षण्य ॥ ३ ॥

गोभिः॑ । मि॒मि॒क्षुम् । द॒धि॒रे॒ । सु॒ऽपा॒रम् । इन्द्र॑म् । ज्यैष्ठ्या॑य । धाय॑से । गृ॒णा॒नाः ।
म॒न्दा॒नः । सोम॑म् । प॒पि॒ऽवान् । ऋ॒जी॒षि॒न् । सम् । अ॒स्मभ्य॑म् । पु॒रु॒धा । गाः । इ॒ष॒ण्य॒ ॥ ३ ॥

वेङ्कट० स्तुतिभिः वर्षेण सेक्तुमिच्छन्तम् धारयन्ति सुष्ठु पारयितारम् इन्द्रम् आत्मनो ज्यैष्ठ्याय धारणाय च स्तुवन्तः। मोदमानः सोमम् पपिवान् हे ऋजीषवन् इन्द्र! सम्प्रेरय अस्मभ्यम् बहुप्रकारम् पशूनिति ॥ ३ ॥

इ॒मं कामं॑ मन्दया॒ गोभि॒रश्वै॑श्च॒न्द्रव॑ता॒ राध॑सा प॒प्रथ॑श्च ।
स्व॒र्यवो॑ म॒तिभि॒स्तुभ्यं॒ विप्रा॒ इन्द्रा॑य॒ वाहः॑ कुशि॒कासो॑ अक्रन् ॥ ४ ॥

इ॒मम् । काम॑म् । म॒न्द॒य॒ । गोभिः॑ । अश्वैः॑ । च॒न्द्रऽव॑ता । राध॑सा । प॒प्रथः॑ । च॒ ।
स्वः॒ऽयवः॑ । म॒तिऽभिः॑ । तुभ्य॑म् । विप्राः॑ । इन्द्रा॑य । वाहः॑ । कु॒शि॒कासः॑ । अ॒क्र॒न् ॥ ४ ॥

वेङ्कट० ३,३०,२० द्र. ॥ ४ ॥

शु॒नं हु॑वेम म॒घवा॑न॒मिन्द्र॑म॒स्मिन् भरे॒ नृत॑मं॒ वाज॑सातौ ।
शृ॒ण्वन्त॑मु॒ग्रमू॒तये॑ स॒मत्सु॒ घ्नन्तं॑ वृ॒त्राणि॑ सं॒जितं॒ धना॑नाम् ॥ ५ ॥

शु॒नम् । हु॒वे॒म॒ । म॒घऽवा॑नम् । इन्द्र॑म् । अ॒स्मिन् । भरे॑ । नृऽत॑मम् । वाज॑ऽसातौ ।
शृ॒ण्वन्त॑म् । उ॒ग्रम् । ऊ॒तये॑ । स॒मत्ऽसु॑ । घ्नन्त॑म् । वृ॒त्राणि॑ । स॒म्ऽजित॑म् । धना॑नाम् ॥ ५ ॥

वेङ्कट० ३,३०,२२ द्र. ॥ ५ ॥

[2]इति तृतीयाष्टके तृतीयाध्याये चतुर्दशो वर्गः[2] ॥

## [ ५१ ]

[2]विश्वामित्रो गाथिन ऋषिः। इन्द्रो देवता। त्रिष्टुप् छन्दः, प्रथमातृतीययोर्जगती, दशमीद्वादश्योर्गायत्री[2]।

च॒र्ष॒णी॒धृतं॑ म॒घवा॑नमु॒क्थ्य१॒॑मिन्द्रं॒ गिरो॑ बृह॒तीर॒भ्य॑नूषत ।
वा॒वृ॒धा॒नं पु॑रुहू॒तं सु॑वृ॒क्तिभि॒रम॑र्त्यं॒ जर॑माणं दि॒वेदि॑वे ॥ १ ॥

---

१-१. द्विपः दुक्त्वा य इव दाहे हत्वेति वि[3] अ[4]; द्विदुक्त्वा बहु इ वा हे हत्वेति वि[1] लपं; द्विपदुक्त्वा म इव द आह ? इह त्वा इति ल. २-२. नास्ति मूको.

चर्षणिऽधृतम् । मघऽवानम् । उक्थ्यम् । इन्द्रम् । गिरः । बृहतीः । अभि । अनूषत ।
ववृधानम् । पुरुऽहूतम् । सुवृक्तिऽभिः । अमर्त्यम् । जरमाणम् । दिवेऽदिवे ॥ १ ॥

वेङ्कट० मनुष्याणां धर्तारम्[1] धनवन्तम् प्रशस्यम् इन्द्रम् स्तुतयः महत्यः अभि अस्तुवन् स्तुतिभिः वर्धमानम् बहुभिराहूतम् अमर्त्यम् स्तूयमानम् अन्वहम् ॥ १ ॥

शतक्रतुमर्णवं शाकिनं नरं गिरो म इन्द्रमुप यन्ति विश्वतः ।
वाजसनिं पूर्भिदं तूर्णिमप्तुरं धामसाचमभिषाचं स्वर्विदम् ॥ २ ॥

शतऽक्रतुम् । अर्णवम् । शाकिनम् । नरम् । गिरः । मे । इन्द्रम् । उप । यन्ति । विश्वतः ।
वाजऽसनिम् । पूःऽभिदम् । तूर्णिम् । अप्ऽतुरम् । धामऽसाचम् । अभिऽसाचम् । स्वःऽविदम् ॥

वेङ्कट० बहुप्रज्ञम्[2] उदकवन्तम् सहायम् नेतारम् स्तुतयः मम इन्द्रम् सर्वतः उप गच्छन्ति वाजस्य दातारम् पुरां भेत्तारम् क्षिप्रकारिणम् कर्मसु त्वरमाणम् तेजांसि भजमानम् अभिसम्भक्तारं[3] ( ? अभिभवितारं ) शत्रूणाम् सर्वज्ञम् ॥ २ ॥

आकरे वसोर्जरिता पनस्यतेऽनेहसः स्तुभ इन्द्रो दुवस्यति ।
विवस्वतः सदन आ हि पिप्रिये सत्रासाहमभिमातिहनं स्तुहि ॥ ३ ॥

आऽकरे । वसोः । जरिता । पनस्यते । अनेहसः । स्तुभः । इन्द्रः । दुवस्यति ।
विवस्वतः । सदने । आ । हि । पिप्रिये । सत्राऽसहम् । अभिमातिऽहनम् । स्तुहि ॥ ३ ॥

वेङ्कट० अभिमुखीकरणार्थम् धनस्य इन्द्रं स्तोता स्तौति । निरवद्याः स्तुतीः इन्द्रः पूजयति[4] । यजमानस्य गृहे हि इन्द्रः आप्रीतो भवति । बहूनां सोढारम् अभिमातीनां हन्तारम् इन्द्रम् स्तुहि ॥ ३ ॥

नृणामु त्वा नृतमं गीर्भिरुक्थैरभि प्र वीरमर्चता सबाधः ।
सं सहसे पुरुमायो जिहीते नमो अस्य प्रदिव एक ईशे ॥ ४ ॥

नृणाम् । ऊँ इति । त्वा । नृऽतमम् । गीःऽभिः । उक्थैः । अभि । प्र । वीरम् । अर्चत । सऽबाधः ।
सम् । सहसे । पुरुऽमायः । जिहीते । नमः । अस्य । प्रऽदिवः । एकः । ईशे ॥ ४ ॥

वेङ्कट० उत्तमं नेतारम् स्तोत्रशस्त्रैः त्वाम् एव बाधसहिता मनुष्याः प्र[5] आर्चन् । सोऽयमिन्द्रः

१. धारणम् वि[?] लपं. २. °प्रबहम् वि[?]; बज्ञम् लपं. ३. °समभक्तारम् वि. ४. पूरय° वि[?] अ[?] ल. ५. नास्ति मूको.

बहुप्रज्ञः बलाय स्तोतृभिः सङ्गच्छते। तस्य अस्य नमः अस्तु[1]। सोऽयं पुराणः एक एव सर्वस्येश्वरो भवति ॥ ४ ॥

पूर्वीरस्य निष्षिधो मर्त्येषु पुरू वसूनि पृथिवी बिभर्ति ।
इन्द्राय द्याव ओषधीरुतापो रयिं रक्षन्ति जीरयो वनानि ॥ ५ ॥

पूर्वीः । अस्य । निःऽसिधः । मर्त्येषु । पुरु । वसूनि । पृथिवी । बिभर्ति ।
इन्द्राय । द्यावः । ओषधीः । उत । आपः । रयिम् । रक्षन्ति । जीरयः । वनानि ॥ ५ ॥

**वेङ्कट०** पुरस्सराणि अस्य दमनानि भवन्ति शत्रुमनुष्येषु। बहूनि च धनान्युत्पादितानि[2] पृथिवी बिभर्ति। इन्द्रप्रीत्यर्थम् द्युलोकाः आपः ओषधयः च मनुष्याणामुपकारकं धनम् रक्षन्ति क्षिप्रगमना मरुतः अरण्यानि च ॥ ५ ॥

[3]इति तृतीयाष्टके तृतीयाध्याये पञ्चदशो वर्गः[3] ॥

तुभ्यं ब्रह्माणि गिर इन्द्र तुभ्यं सत्रा दधिरे हरिवो जुषस्व ।
बोध्यापिरवसो नूतनस्य सखे वसो जरितृभ्यो वयो धाः ॥ ६ ॥

तुभ्यम् । ब्रह्माणि । गिरः । इन्द्र । तुभ्यम् । सत्रा । दधिरे । हरिऽवः । जुषस्व ।
बोधि । आपिः । अवसः । नूतनस्य । सखे । वसो इति । जरितृऽभ्यः । वयः । धाः ॥ ६ ॥

**वेङ्कट०** हरिवः! स्तोतारः तुभ्यम् एव स्तोत्रशस्त्राणि धारयन्ति पृथूनि, तानि त्वं सेवस्व। बुध्यस्व बन्धुः सन् रक्षणस्य नवतरस्य[4]। हे सखे वासयितः! स्तोतृभ्यः अन्नम् धेहि ॥ ६ ॥

इन्द्र मरुत्व इह पाहि सोमं यथा शार्याते अपिबः सुतस्य ।
तव प्रणीती तव शूर शर्मन्ना विवासन्ति कवयः सुयज्ञाः ॥ ७ ॥

इन्द्र । मरुत्वः । इह । पाहि । सोमम् । यथा । शार्याते । अपिबः । सुतस्य ।
तव । प्रऽनीती । तव । शूर । शर्मन् । आ । विवासन्ति । कवयः । सुऽयज्ञाः ॥ ७ ॥

**वेङ्कट०** इन्द्र! मरुत्वः! अस्मिन् यज्ञे पिब सोमम्, यथा शार्यातस्यानिन्द्रं[5] सोममाहरतो यज्ञे बलात् पुरा सुतं सोमम् अपिबः। हे शूर! तव प्रणयनेन तव सुखे वर्तन्ते कवयः शोभनयज्ञाः ॥ ७ ॥

स वावशान इह पाहि सोमं मरुद्भिरिन्द्र सखिभिः सुतं नः ।
जातं यत् त्वा परि देवा अभूषन् महे भराय पुरुहूत विश्वे ॥ ८ ॥

---

1. अस्तु ते वि[२]. 2. °न्यनोत्पा° वि[२] लप. 3-3. नास्ति मूको. 4. नास्ति वि[१] लप. 5. शर्या° मूको.

सः । वावशानः । इह । पाहि । सोमम । मरुत्ऽभिः । इन्द्र । सखिऽभिः । सुतम् । नः ।
जातम् । यत् । त्वा । परि । देवाः । अभूषन् । महे । भराय । पुरुऽहूत । विश्वे ॥ ८ ॥

वेङ्कट० सः कामयमानः अस्मिन् यज्ञे पिब सोमम् मरुद्भिः सह इन्द्र! समानख्यानैः सुतम् अस्माकम् । जातम् यस्मात् त्वाम् परितः अभूवन् विश्वे देवाः मरुतः महते सङ्ग्रामाय हे पुरुहूत![1], तस्मात् तैः सह पिबेति ॥ ८ ॥

अप्तूर्ये मरुत आपिरेषोऽमन्दन्निन्द्रमनु दातिवाराः ।
तेभिः साकं पिबतु वृत्रखादः सुतं सोमं दाशुषः स्वे सधस्थे ॥ ९ ॥

अप्ऽतूर्ये । मरुतः । आपिः । एषः । अमन्दन् । इन्द्रम् । अनु । दातिऽवाराः ।
तेभिः । साकम् । पिबतु । वृत्रऽखादः । सुतम् । सोमम् । दाशुषः । स्वे । सधऽस्थे ॥ ९ ॥

वेङ्कट० हे मरुतः! उदकार्थे वृत्रेण सह युद्धे[2] युष्माकम् अयमिन्द्रः सहायो भवति । शेष[3] इन्द्रविषयः परोक्षः[4] । इन्द्रम् वृत्रतूर्ये अनु अमन्दन् यजमानानां दत्तवरणीयधना मरुतः । तैः सह पिबतु वृत्रहन्ता सुतम् सोमम् यजमानस्य स्वे गृहे ॥ ९ ॥

इदं ह्यन्वोजसा सुतं राधानां पते । पिबा त्व१स्य गिर्वणः ॥ १० ॥

इदम् । हि । अनु । ओजसा । सुतम् । राधानाम् । पते । पिब । तु । अस्य । गिर्वणः ॥१०॥

वेङ्कट० इदम्[5] हि सोमलक्षणमन्नं हे धनानाम् पते! त्वां लक्षीकृत्य ओजसा[1] सुतम् । तथा सति पिब एतत् हे गीर्भिर्वननीय! ॥ १० ॥

यस्ते अनु स्वधामसत् सुते नि यच्छ तन्वम् । स त्वा ममत्तु सोम्यम् ॥११॥

यः । ते । अनु । स्वधाम् । असत् । सुते । नि । यच्छ । तन्वम् । सः । त्वा । ममत्तु । सोम्यम ॥११॥

वेङ्कट० यः तव बलम् अनु भवति, तस्मिन् सुते सोमे नि यच्छ शरीरं पावनाय । सः त्वा ममत्तु सोमार्हम् ॥ ११ ॥

प्र ते अश्नोतु कुक्ष्योः प्रेन्द्र ब्रह्मणा शिरः । प्र बाहू शूर राधसे ॥ १२ ॥

प्र । ते । अश्नोतु । कुक्ष्योः । प्र । इन्द्र । ब्रह्मणा । शिरः । प्र । बाहू इति । शूर । राधसे ॥१२॥

---

१. नास्ति मूको. २. युद्धेषु वि[३] अ[१]. ३. शेषम् वि[१] लर्प. ४. °क्षम् वि[१] लर्प. ५. इमम् वि[१].

वेङ्कट० इन्द्र! सोमः तव कुक्ष्योः प्रकर्षेण व्याप्नोतु, शिरः च हविषा पुरोडाशादिना सह बाहू च हे शूर! अस्माकं धनाय प्र अश्नोतु इति ॥ १२ ॥

[1]इति तृतीयाष्टके तृतीयाध्याये षोडशो वर्गः[1] ॥

## [ ५२ ]

[1]विश्वामित्रो गाथिन ऋषिः । इन्द्रो देवता । त्रिष्टुप् छन्दः;
आद्याश्चतस्रो गायत्र्यः, षष्ठी जगती[1] ।

धानावन्तं करम्भिणमपूपवन्तमुक्थिनम् । इन्द्र प्रातर्जुषस्व नः ॥ १ ॥

धानाऽवन्तम् । करम्भिणम् । अपूपऽवन्तम् । उक्थिनम् । इन्द्र । प्रातः । जुषस्व । नः ॥१॥

वेङ्कट० धानादिभिर्युक्तम् शस्त्रवन्तं नः[2] सोमम् हे[2] इन्द्र![2] प्रातःसवने सेवस्वेति ॥ १ ॥

पुरोळाशं पचत्यं जुषस्वेन्द्रा गुरस्व च । तुभ्यं हव्यानि सिस्रते ॥ २ ॥

पुरोळाशम् । पचत्यम् । जुषस्व । इन्द्र । आ । गुरस्व । च । तुभ्यम् । हव्यानि । सिस्रते ॥२॥

वेङ्कट० पुरोडाशम् अन्यच्च[3] पचनीयम् सेवस्व । हे इन्द्र! उद्युक्तश्च भव[4] आगमनाय । तुभ्यम् हवींषि सरन्ति आहवनीयं प्रति ॥ २ ॥

पुरोळाशं च नो घसो जोषयासे गिरश्च नः । वधूयुरिव योषणाम् ॥ ३ ॥

पुरोळाशम् । च । नः । घसः । जोषयासे । गिरः । च । नः । वधूयुःऽइव । योषणाम् ॥ ३ ॥

वेङ्कट० पुरोडाशम् च अस्माकम् भक्षय । सेवस्व स्तुतीः अस्माकम्, वधूयुः वरो भवति, स यथा कन्यां स्त्रियं सेवते ॥ ३ ॥

पुरोळाशं सनश्रुत प्रातःसावे जुषस्व नः । इन्द्र क्रतुर्हि ते बृहन् ॥ ४ ॥

पुरोळाशम् । सनऽश्रुत । प्रातःऽसावे । जुषस्व । नः । इन्द्र । क्रतुः । हि । ते । बृहन् ॥ ४ ॥

वेङ्कट० पुरोडाशम् हे पुराणश्रुत! प्रातःसवने सेवस्व अस्माकम् । इन्द्र! प्रज्ञा हि तव महती ॥ ४ ॥

माध्यंदिनस्य सवनस्य धानाः पुरोळाशमिन्द्र कृष्वेह चारुम् ।
प्र यत् स्तोता जरिता तूर्ण्यर्थो वृषायमाण उप गीर्भिरीट्टे ॥ ५ ॥

---

१-१. नास्ति मूको. २. नास्ति मूको. ३. अन्यं च लर्प. ४. °व अस्माकम् ज°.

माध्यंन्दिनस्य । सवनस्य । धानाः । पुरोळाशम् । इन्द्र । कृष्व । इह । चारुम् ।
प्र । यत् । स्तोता । जरिता । तूर्णिऽअर्थः । वृषऽयमाणः । उप । गीःऽभिः । ईट्टे ॥ ५ ॥

**वेङ्कट०** माध्यन्दिनस्य सवनस्य पुरोडाशस्य धानानां च चारुत्वकारणं भक्षणेन। यदा स्तोता [1]शंसिता च होता प्रेरितहविष्कः वृषेवाऽऽचरन् गीर्भिः[1] प्रकर्षेण उपेत्य त्वां स्तौतीति ॥ ५ ॥

[2]इति तृतीयाष्टके तृतीयाध्याये सप्तदशो वर्गः[2] ॥

तृतीये धानाः सवने पुरुष्टुत पुरोळाशमाहुतं मामहस्व नः ।
ऋभुमन्तं वाजवन्तं त्वा कवे प्रयस्वन्त उप शिक्षेम धीतिभिः ॥ ६ ॥

तृतीये । धानाः । सवने । पुरुऽस्तुत । पुरोळाशम् । आऽहुतम् । ममहस्व । नः ।
ऋभुऽमन्तम् वाजऽवन्तम् । त्वा । कवे । प्रयस्वन्तः । उप । शिक्षेम । धीतिऽभिः ॥ ६ ॥

**वेङ्कट०** हे पुरुष्टुत! तृतीयसवने धानाः पुरोडाशम् च आहुतम् अद्धत्स्व अस्माकम्। ऋभुः विभ्वा वाज इति त्रय [2]ऋभवः। ऋभुभिर्युक्तम्[2] [3]वाजेन च युक्तम् त्वा कवे! अन्नवन्तो वयम् कर्मभिः विधेयं कुर्मः[3] ॥ ६ ॥

पूषण्वते ते चकृमा करम्भं हरिवते हर्यश्वाय धानाः ।
अपूपमद्धि सगणो मरुद्भिः सोमं पिब वृत्रहा शूर विद्वान् ॥ ७ ॥

पूषण्ऽवते । ते । चकृम । करम्भम् । हरिऽवते । हरिऽअश्वाय । धानाः ।
अपूपम् । अद्धि । सऽगणः । मरुत्ऽभिः । सोमम् । पिब । वृत्रऽहा । शूर । विद्वान् ॥ ७ ॥

**वेङ्कट०** [4]पूष्णा तद्वते तुभ्यम् कुर्मः करम्भम्। हरिभिस्तद्वते हर्यश्वाय धानाः† कुर्मः। वृत्रहा विद्वान् त्वं हे शूर! पुरोडाशम् भक्षय, मरुद्भिः सहितः सोमम् च पिब![4] ॥ ७ ॥

प्रति धाना भरत तूयमस्मै पुरोळाशं वीरतमाय नृणाम् ।
दिवेदिवे सदृशीरिन्द्र तुभ्यं वर्धन्तु त्वा सोमपेयाय धृष्णो ॥ ८ ॥

प्रति । धानाः । भरत । तूयम् । अस्मै । पुरोळाशम् । वीरऽतमाय । नृणाम् ।
दिवेऽदिवे । सऽदृशीः । इन्द्र । तुभ्यम् । वर्धन्तु । त्वा । सोमऽपेयाय । धृष्णो इति ॥ ८ ॥

**वेङ्कट०** [1]नृणाम् मध्ये अतिशयेन वीराय अस्मै धानाः पुरोडाशम् च क्षिप्रम् प्रति भरत। अन्वहम् एकरूपाः स्तुतयः हे इन्द्र! त्वदर्थं क्रियमाणाः त्वाम् वर्धयन्तु हे[1] धर्षणशील![5] तव सोमपानाय ॥८॥

[2]इति तृतीयाष्टके तृतीयाध्यायेऽष्टादशो वर्गः[2] ॥

---

१-१. नास्ति वि[२] अ[१]. २-२. नास्ति मूको. ३-३. नास्ति वि[१] लप. ४-४. नास्ति वि[१] लप. † धानानां ल; धनानां वि[२] अ[१]. ५. धर्षण° वि[२] अ[१].

[ ५३ ]

[1]विश्वामित्रो गाथिन ऋषिः। इन्द्रो देवता, आद्याया इन्द्रापर्वतौ, पञ्चदशीषोडश्योः
वाक् (ससर्परी), सप्तदश्यादिविंशत्यन्तानां रथाङ्गानि, एकविंश्यादि-
चतुर्विंशत्यन्तानामभिशापः। त्रिष्टुप् छन्दः, दशमीषोडश्यौ जगत्यौ,
त्रयोदशी गायत्री, द्वादशीविंशीद्वाविंश्योऽनुष्टुभः,
अष्टादशी बृहती[1]।

इन्द्रापर्वता बृहता रथेन वामीरिष आ वहतं सुवीराः।
वीतं हव्यान्यध्वरेषु देवा वर्धेथां गीर्भिरिळया मदन्ता ॥ १ ॥

इन्द्रापर्वता। बृहता। रथेन। वामीः। इषः। आ। वहतम्। सुऽवीराः।
वीतम्। हव्यानि। अध्वरेषु। देवा। वर्धेथाम्। गीःऽभिः। इळया। मदन्ता ॥ १ ॥

**वेङ्कट०** हे इन्द्रापर्वतौ! वननीयानि अन्नानि महता रथेन आ वहतम् शोभनापत्यसहितानि, भक्षयत च हवींषि यज्ञेषु, देवनशीलौ! वर्धेथाम्[2] च स्तुतिभिः अन्नेन माद्यन्तौ युवामिति ॥ १ ॥

तिष्ठा सु कं मघवन् मा परा गाः सोमस्य नु त्वा सुषुतस्य यक्षि।
पितुर्न पुत्रः सिचमा रभे त इन्द्र स्वादिष्ठया गिरा शचीवः ॥ २ ॥

तिष्ठ। सु। कम्। मघऽवन्। मा। परा। गाः। सोमस्य। नु। त्वा। सुऽसुतस्य। यक्षि।
पितुः। न। पुत्रः। सिचम्। आ। रभे। ते। इन्द्र। स्वादिष्ठया। गिरा। शचीऽवः ॥ २ ॥

**वेङ्कट०** मघवन्! सुष्ठु सुखं च अस्मत्पार्श्वे तिष्ठ। मा अस्मत्तः परागमः[3]। सोमेन सुष्ठु सुतेन शीघ्रम् अहं त्वा यजे। पितुः इव पुत्रः तव वाससोऽन्तम् हे इन्द्र! अहं हस्तेन गृह्णामि स्वादुतमया स्तुतिवाचा संयुक्तोऽहम् प्रज्ञावन्![4] ॥ २ ॥

शंसावाध्वर्यो प्रति मे गृणीहीन्द्राय वाहः कृणवाव जुष्टम्।
एदं बर्हिर्यजमानस्य सीदाऽथा च भूदुक्थमिन्द्राय शस्तम् ॥ ३ ॥

शंसाव। अध्वर्यो इति। प्रति। मे। गृणीहि। इन्द्राय। वाहः। कृणवाव। जुष्टम्।
आ। इदम्। बर्हिः। यजमानस्य। सीद। अथ। च। भूत्। उक्थम्। इन्द्राय। शस्तम् ॥ ३ ॥

**वेङ्कट०** हे अध्वर्यो! शंसाव आवाम्। तत्र त्वम् मे प्रतिगरं कुरु—'ओथामो दैव' इति। इन्द्राय शस्त्रम् पर्याप्तम् कृणवाव। तदर्थम् आ सीद इदम् बर्हिः अस्य यजमानस्य। अथ भवतु इन्द्राय शस्तम् उक्थम् इति ॥ ३ ॥

---

१-१. नास्ति मूको. २. वर्धेताम् मूको. ३. °म मूको. ४. °वान् वि[1][2] अ[1] कपं.

जायेदस्तं मघवन्त्सेदु योनिस्तदित् त्वा युक्ता हरयो वहन्तु ।
यदा कदा च सुनवाम सोममग्निष्ट्वा दूतो धन्वात्यच्छ ॥ ४ ॥

जाया । इत् । अस्तम् । मघऽवन् । सा । इत् । ऊँ इति । योनिः । तत् । इत् । त्वा । युक्ताः । हरयः । वहन्तु ।
यदा । कदा । च । सुनवाम । सोमम् । अग्निः । त्वा । दूतः । धन्वाति । अच्छ ॥ ४ ॥

**वेङ्कट०** मघवन्! पुरुषाणाम् जाया एव गृहं भवति, सा एव वासस्थानम्[1]। तत्र एव त्वामपि पीतसोमम् युक्ताः अश्वाः वहन्तु। पुनश्च वयम् यदा कदा च अत ऊर्ध्वम् सोमम् सुनवाम तदानीमयम् अग्निः दूतः त्वाम् प्रति धन्वाति अभिगच्छति, तदा पुनरागन्तव्यम्। अस्योत्तरा भूयसे निर्वचनाय ॥ ४ ॥

परा याहि मघवन्ना च याहीन्द्र भ्रातरुभयत्रा ते अर्थम् ।
यत्रा रथस्य बृहतो निधानं विमोचनं वाजिनो रासभस्य ॥ ५ ॥

परा । याहि । मघऽवन् । आ । च । याहि । इन्द्र । भ्रातः । उभयत्र । ते । अर्थम् ।
यत्र । रथस्य । बृहतः । निऽधानम् । विऽमोचनम् । वाजिनः । रासभस्य ॥ ५ ॥

**वेङ्कट०** पीते सोमे परा गच्छ मघवन्, आ याहि च श्वः प्रभाते सोमपानाय। हे इन्द्र! भ्रातृस्थानीय! भर्तः![2] वा उभयत्र च तव प्रयोजनम् अस्ति। सोमपानमत्र प्रयोजनम् तत्र [3]जाया। यत्र[3] यज्ञे महतः रथस्य विमुक्ताश्वस्य निधानम् भवति विमोचनम् च अश्वस्य वेगवतः, तत्रायाहीति[4]। सेयमनन्त्येऽहस्सु हारियोजनस्य पुरोऽनुवाक्यान्त्येषु पूर्वेति ॥ ५ ॥

[5]इति तृतीयाष्टके तृतीयाध्याये एकोनविंशो वर्गः[5] ॥

अपाः सोममस्तमिन्द्र प्र याहि कल्याणीर्जाया सुरणं गृहे ते ।
यत्रा रथस्य बृहतो निधानं विमोचनं वाजिनो दक्षिणावत् ॥ ६ ॥

अपाः । सोमम् । अस्तम् । इन्द्र । प्र । याहि । कल्याणीः । जाया । सुऽरणम् । गृहे । ते ।
यत्र । रथस्य । बृहतः । निऽधानम् । विऽमोचनम् । वाजिनः । दक्षिणाऽवत् ॥ ६ ॥

**वेङ्कट०** पीतवानसि सोमम्, गृहम् इन्द्र! प्रतिगच्छ। कल्याणीः[6] जाया सुष्ठु रमणसाधनं विद्यते गृहे तव। यत्र इति गतम्। सायं कार्यान्ते रथाद् विमुक्तानां वाजिनां[7] दक्षिणा विद्यते न प्रातरिति। दक्षिणा च[8] खादः पानं चेति ॥ ६ ॥

इमे भोजा अङ्गिरसो विरूपा दिवस्पुत्रासो असुरस्य वीराः ।
विश्वामित्राय ददतो मघानि सहस्रसावे प्र तिरन्त आयुः ॥ ७ ॥

---

१. मावास° वि[1] लर्प. २. मर्ता वि[2] अ[1] ३-३. नास्ति वि[1] लर्प. ४. °याचति मूको. ५-५. नास्ति मूको. ६. °णी लर्प. ७. नास्ति मूको. ८. नास्ति ल.

इमे । भोजाः । अङ्गिरसः । विऽरूपाः । दिवः । पुत्रासः । असुरस्य । वीराः ।
विश्वामित्राय । ददतः । मघानि । सहस्रऽसावे । प्र । तिरन्ते । आयुः ॥ ७ ॥

**वेङ्कट०** इन्द्रानुचराः इमे राजानः विविधरूपाः अङ्गिरसः च दिवः पुत्राश्च मरुतः असुरस्य बलवतो रुद्रस्य वीराः विश्वामित्राय मह्यम् धनानि प्रयच्छन्तः अनेकस्मिन् सोमाभिषवे आयुः वर्धयन्तीति[1] ॥ ७ ॥

रूपंरूपं मघवा बोभवीति मायाः कृण्वानस्तन्वं१ परि स्वाम् ।
त्रिर्यद् दिवः परि मुहूर्तमागात् स्वैर्मन्त्रैरनृतुपा ऋतावा ॥ ८ ॥

रूपम्ऽरूपम् । मघऽवा । बोभवीति । मायाः । कृण्वानः । तन्वम् । परि । स्वाम् ।
त्रिः । यत् । दिवः । परि । मुहूर्तम् । आ । अगात् । स्वैः । मन्त्रैः । अनृतुऽपाः । ऋतऽवा ॥८॥

**वेङ्कट०** नानाविधं रूपम् भावयति मघवा स्वाम् तनुम् परितः मायाः कुर्वन् । याभिर्जनान् मोहयति ता माया उच्यन्ते । बहुधा ह्येकमेव जना बुध्यन्ते । मुहूर्तम् मुहुः ऋतं भवतीति सवनमुच्यते । दिवः परि यदा[2] सवनान्यागच्छति स्वैः स्तोत्रैर्हेतुभिः । अन्ये देवा ऋतौ कस्मिंश्चित् काले पिबन्ति अयं तु अनृतुपाः सर्वेषु सवनेषु पिबति यज्ञवानिति । यास्कः 'यद्यद्रूपं कामयते तत्तद्देवता[3] भवति' ( १०,१७ ) इति ॥ ८ ॥

महाँ ऋषिर्देवजा देवजूतोऽस्तभ्नात् सिन्धुमर्णवं नृचक्षाः ।
विश्वामित्रो यदवहत् सुदासमप्रियायत कुशिकेभिरिन्द्रः ॥ ९ ॥

महान् । ऋषिः । देवऽजाः । देवऽजूतः । अस्तभ्नात् । सिन्धुम् । अर्णवम् । नृऽचक्षाः ।
विश्वामित्रः । यत् । अवहत् । सुऽदासम् । अप्रियायत । कुशिकेभिः । इन्द्रः ॥ ९ ॥

**वेङ्कट०** महान् अयम् ऋषिः देवार्थं जातः देवैराकृष्टः स्तम्भितवान् इन्द्रप्रसादात् [4]उदकवन्तम् सिन्धुम्[4] मनुष्याणां पुत्रपौत्रादीनां द्रष्टा । किञ्च यदा अयम् विश्वामित्रः[5] अश्वमेधेन याजयन् सुदासम् राजानम् पुरोधाः सन् अवहत् प्रणिनाय, तदानीं प्रीत आसीत् कुशिकैरस्माभिः इन्द्रः ॥ ९ ॥

हंसाइव कृणुथ श्लोकमद्रिभिर्मदन्तो गीर्भिरध्वरे सुते सचा ।
देवेभिर्विप्रा ऋषयो नृचक्षसो वि पिबध्वं कुशिकाः सोम्यं मधु ॥ १० ॥

हंसाःऽइव । कृणुथ । श्लोकम् । अद्रिऽभिः । मदन्तः । गीःऽभिः । अध्वरे । सुते । सचा ।
देवेभिः । विप्राः । ऋषयः । नृऽचक्षसः । वि । पिबध्वम् । कुशिकाः । सोम्यम् । मधु ॥ १० ॥

---

१. नास्ति अ[1]. २. यदि वि[2] अ[1]. ३. तत्तदेव मूको. ४-४. सिन्धुम् उदकवन्तम् वि[2] लपं.
५. नास्ति मूको.

**वेङ्कट०** हे कुशिकाः! हंसा इव मृदुवाचः कृणुथ स्तोत्रम् अभिषवग्रावभिः सह देवान् मादयन्तः स्तुतिभिः यज्ञे सुते सोमे सहभूताः। देवेभिः सह हे ब्राह्मणाः! हे ऋषयः! च मनुष्याणां द्रष्टारः! विविधम् पिबध्वम् सोममयम् मधु ॥ १० ॥

[1]इति तृतीयाष्टके तृतीयाध्याये विंशो वर्गः[1] ॥

उप॒ प्रेत॑ कुशिकाश्चे॒तय॑ध्व॒मश्वं॑ रा॒ये प्र मु॑ञ्चता सु॒दासः॑ ।
राजा॑ वृ॒त्रं ज॑ङ्घन॒त् प्रागपा॒गुद॒गथा॑ यजाते॒ वर॒ आ पृ॑थि॒व्याः ॥ ११ ॥

उप॑ । प्र । इ॒त॒ । कु॒शि॒काः॒ । चे॒तय॑ध्वम् । अश्व॑म् । रा॒ये । प्र । मु॒ञ्च॒त॒ । सु॒ऽदासः॑ ।
राजा॑ । वृ॒त्रम् । ज॒ङ्घ॒न॒त् । प्राक् । अपा॑क् । उद॑क् । अथ॑ । य॒जा॒ते॒ । वरे॑ । आ । पृ॒थि॒व्याः ॥

**वेङ्कट०** शौनकः— "[2]सुदासश्च[2] महायज्ञे शक्तिना गाथिसूनवे[3] ॥
निगृहीतं [4]बलाच्चेतः सोऽवसीदद्[4] विचेतनः ।
तस्मै[5] ब्राह्मीं तु सौरीं वा नाम्ना वाचं ससर्परीम् ॥
सूर्यक्षयादिहाहृत्य[6] ददुस्ते जमदग्नयः ।
कुशिकानां[7] ततः सा [8]वाक् अमतिं तामपाहनत्[8] ॥
'उपे(-प्र) इ)ति चास्यां[10] कुशिकान् विश्वामित्रोऽनुबोधयत्[11] ।
लब्ध्वा वाचं च हृष्टात्मा तानृषीन् प्रत्यपूजयत् ॥
'ससर्परीर्'[12] इति द्वाभ्यामृग्भ्यां[13] वाचं स्तुवन् स्वयम् ।
[14]'स्थिरौ'† इत्यनसोऽङ्गान्यनडुहश्च‡ गृहान् $ व्रजन् ॥
ततश्च¶[14] स्वशरीरेण[15] गृहान् गच्छन् परीददे[16] ।
पराश्चतस्रो[17] यास्त्वत्र वसिष्ठद्वेषिण्यः[18] स्मृताः ॥
[19]विश्वामित्रेण ताः प्रोक्ता अभिशापा† इति स्मृताः ।
‡द्विषद्द्वेषास्तु‡ ताः $प्रोक्ताः विद्याश्चैवाभिचारिकाः$[19] ॥
वसिष्ठास्ता[20] न शृण्वन्ति तदाचार्यकसम्मतम् ।

---

१-१. नास्ति मूको. २. सौदासस्य मूको. ३. गाथि° वि[1,2] अ[1] ल; गाधी° लपं. ४-४. लादोजः सोपासी° मूको. ५. तस्य मूको. ६. °हाकृत्य वि[1,2] अ[1] लपं. ७. °कान् वि[1] लपं. ८-८. ह गतिमान् (गति लपं.) तानपाहनत् ( °नुपाहनं लपं. ) मूको. ९. ऋ ३,५३,११. १०. चास्या वि[1] लपं; च स्यात् वि[2] अ[1] ल. ११. °त्रोऽन्ववो° वि[1,2] अ[1] ल; °त्रोन्वयो° लपं. १२. ऋ ३,५३,१५;१६. १३. द्वाभ्यां मृश्यान् वि[2] अ[1] ल; द्वाभ्यां वि[1] लपं. १४-१४. नास्ति वि[2] अ[1]. † ऋ ३.५३,१७. ‡ °हं च वि[1] ल लपं. $ गृहम् ल. ¶ तन्वं च वि[1] ल लपं. १५ स्वशरीरं च वि[2] अ[1] ल; स्वरशरीरं च वि[1] लपं. १६. नास्ति वि[2]; त्रुटितम् अ[1]. १७. ऋ ३,५३,२१-२४. १८. वशि° ल. १९-१९. पूर्वापरार्धश्लोकयोर्व्युत्क्रमः वि[1,2] ल लपं; नास्ति अ[1]. † अभिचारा वि[1] लपं. ‡-‡ द्विष द्वेष° वि[2] ल; द्विषे द्वेष वि[1] लपं. $-$ स्मृता विद्यादभिचारेषु शस्यते वि[1,2] ल लपं. २०. वशिष्ठास्तु वि[1] ल लपं; °ष्ठास्तु वि[2] अ[1].

'कीर्तनाच्छ्रवणाद् वापि महादोषश्च जायते' ॥
शतधा भिद्यते मूर्धा[२] कीर्तितेन श्रुतेन वा[३] ।
तेषां बालाः प्रमीयन्ते तस्मात् तास्तु न कीर्तयेत्'' ॥ (बृदे ४,११२-१२०) इति ।

हे कुशिकाः! **आगच्छत[४], मयोच्यमानं जानीत** । सुदासः **राज्ञः अश्वमेधाय अस्माकं धनाय च** अश्वम्[४] प्र मुञ्चत । **सोऽयं** राजा प्राक् **प्रत्यक्** उदक् **च** शत्रून् **भृशं** हतवान् । **अनार्यावासाद्[६] दक्षिणाया अकीर्तनम् । एवं सति सार्वभौमोऽयम्[७] पृथिव्याः वरिष्ठेऽस्मिन्देशे अश्वमेधेन यजत** इति ॥ ११ ॥

**य इमे रोदसी उभे अहमिन्द्रमतुष्टवम् ।**
**विश्वामित्रस्य रक्षति ब्रह्मेदं भारतं जनम् ॥ १२ ॥**

यः । इमे इति । रोदसी इति । उभे इति । अहम् । इन्द्रम् । अतुस्तवम् ।
विश्वामित्रस्य । रक्षति । ब्रह्म । इदम् । भारतम् । जनम् ॥ १२ ॥

**वेङ्कट०** यः अहम् इमे **द्यावापृथिवी** इन्द्रम् **मन्त्रकरणात् स्तावयामि । मद्दृष्टैर्मन्त्रैरुभये** देवमनुष्याः **स्तुवन्तीत्यर्थः । तस्य मम** विश्वामित्रस्य **मन्त्रः अयम् भरतकुलजातम्** जनम् रक्षति **इति ॥ १२ ॥**

**विश्वामित्रा अरासत ब्रह्मेन्द्राय वज्रिणे । करदिन्नः सुराधसः ॥ १३ ॥**

विश्वामित्राः । अरासत । ब्रह्म । इन्द्राय । वज्रिणे । करत् । इत् । नः । सुऽराधसः ॥ १३ ॥

**वेङ्कट०** विश्वामित्राः **प्रायच्छन् स्तुतिम्** वज्रिणे इन्द्राय । **सोऽस्मान् करोतु शोभनधनान् ॥ १३ ॥**

**किं ते कृण्वन्ति कीकटेषु गावो नाशिरं दुह्रे न तपन्ति घर्मम् ।**
**आ नो भर प्रमगन्दस्य वेदो नैचाशाखं मघवन् रन्धया नः ॥ १४ ॥**

किम् । ते । कृण्वन्ति । कीकटेषु । गावः । न । आऽशिरम् । दुह्रे । न । तपन्ति । घर्मम् ।
आ । नः । भर । प्रऽमगन्दस्य । वेदः । नैचाऽशाखम् । मघऽवन् । रन्धय । नः ॥ १४ ॥

**वेङ्कट०** किं क्रियाभिः इति **ये मन्यन्ते कीकटा नास्तिकाः, तेषु स्थिताः** गावः **तव** हे इन्द्र! किम् कृण्वन्ति । **नहि कीकटाः** आशिरम् दुहन्ति, **न च** तपन्ति घर्मम्, **तथा सति** आ भर **अस्माकम् कीकटेषु वर्तमानस्य** प्रमगन्दस्य **धनम् इति । एतदेवाह — परित्यक्तवेदशाखस्य** मघवन्![५] **धनम् अस्माकम् वशं नयेति । यास्कः—**'कीकटा नाम देशोऽनार्यनिवासः । कीकटाः किंकृताः किं क्रियाभिरिति

---

**१-१. नास्ति मूको.** २. मूर्धा वि[१] लप. ३. **नास्ति वि[१] लपं.** ४. उपाग° अ[१]; इवग° लपं.
**५. नास्ति मूको.** ६. °सत्वात् अ[२]. ७. °मो यः वि[१] लपं. ८ शोभनान् वि[१] लपं.

प्रेप्सा' ( ६, ३२ ) इति । तथोत्तरत्रोक्तम्—'मगन्दः कुसीदी । माङ्गदो मामागमिष्यतीति च ददाति । तदपत्यं प्रमगन्दः । अत्यन्तकुसीदिकुलीनः । प्रमदको वा । योऽयमेवास्ति लोको न पर इति प्रेप्सुः । पण्डको वा' ( ६,३२ ) इत्यादि ॥ १४ ॥

ससर्परीरमतिं बाधमाना बृहन्मिमाय जमदग्निदत्ता ।
आ सूर्यस्य दुहिता ततान श्रवो देवेष्वमृतमजुर्यम् ॥ १५ ॥

ससर्परीः । अमतिम् । बाधमाना । बृहत् । मिमाय । जमदग्निऽदत्ता ।
आ । सूर्यस्य । दुहिता । ततान । श्रवः । देवेषु । अमृतम् । अजुर्यम् ॥ १५ ॥

वेङ्कट० ससर्परीनाम्नी[1] शक्तिना कुशिकानामुत्पादितं मोहम् बाधमाना जमदग्निभिः सूर्यक्षयादाहृत्य दत्ता अत्यन्तम् शब्दायते। सेयम् सूर्यस्य दुहिता देवेषु अमृतत्वसाधनं च[2] अजरणसाधनं च अन्नम् मन्त्रात्मिका आ तनोति[3] । वागपि देवेभ्यो हव्यं वहतीति ॥ १५ ॥

[4]इति तृतीयाष्टके तृतीयाध्याये एकविंशो वर्गः[4] ॥

ससर्परीरभरत् तूयमेभ्योऽधि श्रवः पाञ्चजन्यासु कृष्टिषु ।
सा पक्ष्या३ नव्यमायुर्दधाना यां मे पलस्तिजमदग्नयो ददुः ॥ १६ ॥

ससर्परीः । अभरत् । तूयम् । एभ्यः । अधि । श्रवः । पाञ्चऽजन्यासु । कृष्टिषु ।
सा । पक्ष्या । नव्यम् । आयुः । दधाना । याम् । मे । पलस्तिऽजमदग्नयः । ददुः ॥ १६ ॥

वेङ्कट० रथकारपञ्चमाश्चत्वारो वर्णाः पञ्चजनाः, तत्प्रभवासु प्रजासु अधि यत् अन्नम् अस्ति, तद् इयम् एभ्यः देवेभ्यः क्षिप्रम् भरति । पक्षः सूर्यः पतनात्, तत्प्रभवा सा नवतरम् अन्नम् दधाना भवति । पलस्तिशब्दः पलितवचनः मृत्युरहिताः(?)[5] अपलिताः(?) आसन्[6] जमदग्नयः, ते याम् मह्यम् दत्तवन्तः इति[7] ॥ १६ ॥

स्थिरौ गावौ भवतां वीळुरक्षो मेषा वि वर्हि मा युगं वि शारि ।
इन्द्रः पातल्ये ददतां शरीतोररिष्टनेमे अभि नः सचस्व ॥ १७ ॥

स्थिरौ । गावौ । भवताम् । वीळुः । अक्षः । मा । ईषा । वि । वर्हि । मा । युगम् । वि । शारि ।
इन्द्रः । पातल्ये३ इति । ददताम् । शरीतोः । अरिष्टऽनेमे । अभि । नः । सचस्व ॥ १७ ॥

वेङ्कट० मनसि युक्तौ गावौ स्थिरौ भवताम् । अक्षः च दृढः, तथेयम् ईषा च विभ्रष्टा मा भूत्, युगम् च मा भूद् विशीर्णम् । पातल्यशब्दो नूनम् अवितथाणिवचनः शरणं दण्डा-

---

१. नाम्ना मूको. २. नास्ति वि[2] अ[1]. ३. मन्त्रात्मिका वि[2] अ[1]. ४-४. नास्ति मूको.
५. °रहितता वि[2] अ[1]. ६. दीर्घायुषः सा. ७. नास्ति वि[1] लर्प.

नामवरोपः, आ ततः इन्द्रः पातल्ये ददताम्। ददतिर्धारणकर्मा[1] (तु. या २, २)। त्वं च हे गरुड! अस्मान् अभि सचस्व शीघ्रगमनायेति ॥ १७ ॥

बलं धेहि तनूषु नो बलमिन्द्रानळुत्सु नः।
बलं तोकाय तनयाय जीवसे त्वं हि बलदा असि ॥ १८ ॥

बलम्। धेहि। तनूषु। नः। बलम्। इन्द्र। अनळुत्ऽसु। नः।
बलम्। तोकाय। तनयाय। जीवसे। त्वम्। हि। बलदाः। असि ॥ १८ ॥

वेङ्कट० निगदव्याख्याता ॥ १८ ॥

अभि व्ययस्व खदिरस्य सारमोजो धेहि स्पन्दने शिंशपायाम्।
अक्ष वीळो वीळित वीळयस्व मा यामादस्मादव जीहिपो नः ॥ १९ ॥

अभि। व्ययस्व। खदिरस्य। सारम्। ओजः। धेहि। स्पन्दने। शिंशपायाम्।
अक्ष। वीळो इति। वीळित। वीळयस्व। मा। यामात्। अस्मात्। अव। जीहिपः। नः ॥१९॥

वेङ्कट० खदिरस्य सारेणाऽऽण्योः करणं भवति, शिंशपया चक्रयोः। तत इदमाह—अक्षपार्श्वयोः खदिरस्य सारम् आणिम् आच्छादय तथा त्वं च बलम् स्पन्दनवेलायाम् शिंशपायाम् निधेहि। हे अक्ष! दृढ! पुरुषैश्च दृढीकृत! अत्यन्तं दृढो भव गमने। मा अस्मान् अस्मात् प्रयाणात् अव जीहिपः। अवहापनं[2] भवत्युपरिस्थितस्याक्षस्य भङ्ग इति ॥ १९ ॥

अयमस्मान् वनस्पतिर्मा च हा मा च रीरिषत्।
स्वस्त्या गृहेभ्य आवसा आ विमोचनात् ॥ २० ॥

अयम्। अस्मान्। वनस्पतिः। मा। च। हाः। मा। च। रिरिषत्।
स्वस्ति। आ। गृहेभ्यः। आ। अवऽसै। आ। विऽमोचनात् ॥ २० ॥

वेङ्कट० शकटभूतः अयम् अस्मान् वनस्पतिः मा च त्याक्षीत्[3] मा च हिंसितान् कार्षीत्। किञ्च अविनाशहेतुर्भवतु[4] आ गृहप्राप्तेः, आ च अवसानात्, आ [5]च अनडुहोर्विमोचनात्[5] ॥ २० ॥

[6]इति तृतीयाष्टके तृतीयाध्याये द्वाविंशो वर्गः[6] ॥

इन्द्रोतिभिर्बहुलाभिर्नो अद्य याच्छ्रेष्ठाभिर्मघवञ्छूर जिन्व।
यो नो द्वेष्ट्यधरः सस्पदीष्ट यमु द्विष्मस्तमु प्राणो जहातु ॥ २१ ॥

---

१. °कर्मेति यास्कः मूको. २. °हावनं वि[2] अ[1]. ३. अत्याक्षीः मूको. ४. °वति वि[2] अ[1] लपं. ५-५. वानडु° वि[2] अ[1] लपं. ६-६. नास्ति मूको.

इन्द्र॑ । ऊ॒तिऽभिः॑ । ब॒हु॒लाभिः॑ । नः॒ । अ॒द्य । या॒त्ऽश्रे॒ष्ठाभिः॑ । म॒घ॒ऽव॒न् । शू॒र॒ । जि॒न्व॒ । यः । नः॒ । द्वेष्टि॑ । अध॑रः । सः । प॒दी॒ष्ट॒ । यम् । ऊँ इति॑ । द्वि॒ष्मः । तम् । ऊँ इति॑ । प्रा॒णः । ज॒हा॒तु॒ ॥२१॥

वेङ्कट० इन्द्र! मार्गैः बहुभिः अस्मान्[१] अद्य गच्छतां[२] प्रशस्यतमैः मघवन्! शूर! प्रीणय। यः अस्मान् द्वेष्टि अधरः सः विपद्यताम्। यम्[३] वयम् द्विष्मः तम् एव प्राणः जहातु। शोभनैर्मार्गैरस्मान् प्रीणयेति[४] ॥ २१ ॥

प॒र॒शुं चि॒द् वि त॑पति शिम्ब॒लं चि॒द् वि वृ॑श्चति ।
उ॒खा चि॑दिन्द्र॒ येष॑न्ती॒ प्रय॑स्ता॒ फेन॑मस्यति ॥ २२ ॥

प॒र॒शुम् । चि॒त् । वि । त॒प॒ति॒ । शि॒म्ब॒लम् । चि॒त् । वि । वृ॒श्च॒ति॒ ।
उ॒खा । चि॒त् । इ॒न्द्र॒ । येष॑न्ती । प्रऽय॑स्ता । फेन॑म् । अ॒स्य॒ति॒ ॥ २२ ॥

वेङ्कट० भारतो[५] जनस्त्वामाश्रित्य हे इन्द्र! युद्धार्थम्[६] परशुम्[७] तीक्ष्णीकरोति। शिम्बलशब्दः शिरोवचनः, यथा[८] कमेः कम्बलः एवं शिमेर्वैधकर्मणः शिम्बलः, वसिष्ठानां भेद्यं शिरश्च वि वृश्चति। येषतिः[९] स्रवणकर्मा। उखाशब्दः शिरोवचनः, [१०]वसिष्ठानाम् उखा †च इन्द्र!† रुधिरं स्रवन्ती भरतक्षिप्ता आस्यैः फेनम् विसृजति[१०] ॥ २२ ॥

न साय॑कस्य चिकिते जनासो लो॒धं न॑यन्ति॒ पशु॒ मन्य॑मानाः ।
नावा॑जिनं वा॒जिना॑ हासयन्ति॒ न ग॑र्द॒भं पु॒रो अश्वा॑न्नयन्ति ॥ २३ ॥

न । साय॑कस्य । चि॒कि॒ते॒ । ज॒ना॒सः॒ । लो॒धम् । न॒य॒न्ति॒ । पशु॑ । मन्य॑मानाः ।
न । अवा॑जिनम् । वा॒जिना॑ । हा॒स॒य॒न्ति॒ । न । ग॒र्द॒भम् । पु॒रः । अश्वा॑त् । न॒य॒न्ति॒ ॥ २३ ॥

वेङ्कट० [११]हे जनाः! वासिष्ठो यो जनो भरतानामिन्द्राश्रयसाधितसायकम् न जानाति†, ततश्च तपसि स्तोत्रे वा लुब्धमृषिमिमं विश्वामित्रम् बलात् नयन्ति पशुमेनम् मन्यमानाः। तच्चायुक्तं‡ वसिष्ठानामित्याह 'नावाजिनम्' इति। अनश्वम् अजादिकम्[११] अश्वेन सह प्रतिमुखमवस्थाप्य न हासयन्ति किंत्वश्वमेवाश्वेन[१२] हेषयन्ति, न च गर्दभम् पापीयांसम् अश्वस्य पुरतः [१३]नयन्ति, पश्चादेव नयन्ति इति[१३] ॥ २३ ॥

इ॒म इ॑न्द्र भर॒तस्य॑ पु॒त्रा अ॑पपि॒त्वं चि॑कितु॒र्न प्र॑पि॒त्वम् ।
हि॒न्वन्त्यश्व॒मर॑णं॒ न नित्यं॒ ज्यावा॑जं॒ परि॑ णयन्त्या॒जौ ॥ २४ ॥

---

१. नास्ति वि[१] लपं. २. आग° वि[१] लपं. ३. नास्ति वि[२]. ४. प्रण° अ[१] ल. ५. भर° वि[२] अ[१] ल. ६ °र्थं च वि[२] अ[१]. ७. °शुम् च वि[१] अ[१] लपं. ८. नास्ति वि[१] लपं. ९. नास्ति लपं. १०-१०. वलिष्ठा वि[२]. †-† त्रुटितम् अ[१]. ११-११. नास्ति वि[१] लपं. † °मि अ[१] ल. ‡ °क्त वि[२]. १२. किन्त्व्श्व° वि[२] अ[१]. १३-१३. नास्ति वि[२] अ[१].

इमे । इन्द्र । भरतस्य । पुत्राः । अपऽपित्वम् । चिकितुः । न । प्रऽपित्वम् ।
हिन्वन्ति । अश्वम् । अरणम् । न । नित्यम् । ज्याऽवाजम् । परि । नयन्ति । आजौ ॥ २४ ॥

**वेङ्कट०** [1]विरहितारित्वं प्राप्तुं[1] त्वदाश्रयबलात् हे इन्द्र! इमे भरतस्य पुत्राः कुशिकाः वसिष्ठैः अपपित्वम् एव कर्तव्यतया जानन्ति, न तु प्रपित्वम्। ततश्च युद्धार्थम् अश्वम् प्रेरयन्ति[2] [3]शत्रूणाम् अरणीयम् स्वामिनि[3] स्थिरभक्तिम् भटम् इव, तथा ज्याबलं धनुश्च सङ्ग्रामे मण्डलीकुर्वन्ति ॥ २४ ॥

[4]इति तृतीयाष्टके तृतीयाध्याये त्रयोविंशो वर्गः[4] ॥

## [ ५४ ]

[4]प्रजापतिर्वैश्वामित्रो वाच्यो वा ऋषिः । विश्वे देवाः देवता । त्रिष्टुप् छन्दः[4] ।

इमं महे विदथ्याय शूषं शश्वत् कृत्व ईड्याय प्र जभ्रुः ।
शृणोतु नो दम्येभिरनीकैः शृणोत्वग्निर्दिव्यैरजस्रः ॥ १ ॥

इमम् । महे । विदथ्याय । शूषम । शश्वत् । कृत्वः । ईड्याय । प्र । जभ्रुः ।
शृणोतु । नः । दम्येभिः । अनीकैः । शृणोतु । अग्निः । दिव्यैः । अजस्रः ॥ १ ॥

**वेङ्कट०** उक्तगोत्रः प्रजापतिः । वैश्वदेवीयानि[5] सूक्तानि चत्वारि । इमम् स्तोमम् महते यज्ञियाय सुखकरम् बहु कृत्वः स्तुत्याय वैश्वामित्राः प्र भरन्ति । स[6] चास्माकं स्तोमम् रक्षसां दमनकुशलैः अनीकैः ज्वालालक्षणैः अन्तरिक्षभवैः नित्यं समिद्धः अग्निः शृणोतु इति ॥ १ ॥

महि महे दिवे अर्चा पृथिव्यै कामो म इच्छञ्चरति प्रजानन् ।
ययोर्ह स्तोमे विदथेषु देवाः सपर्यवो मादयन्ते सचायोः ॥ २ ॥

महि । महे । दिवे । अर्च । पृथिव्यै । कामः । मे । इच्छन् । चरति । प्रऽजानन् ।
ययोः । ह । स्तोमे । विदथेषु । देवाः । सपर्यवः । मादयन्ते । सचा । आयोः ॥ २ ॥

**वेङ्कट०** महान्तं स्तोमम् द्यावापृथिवीभ्याम् उच्चारय । मदीयः कामः स्वाभिलषितम् इच्छन् द्यावापृथिवी[7] प्रति चरति गच्छति तयोर्महिमानम् प्रकर्षेण जानन्। ययोः खलु स्तोमे क्रियमाणे यज्ञेषु देवाः सपर्यां मनुष्यैः क्रियमाणामिच्छन्तः सह सर्वे माद्यन्ति, प्रतिगृह्णन्ति ताम्[8] इत्यर्थः ॥ २ ॥

युवोर्ऋतं रोदसी सत्यमस्तु महे षु णः सुविताय प्र भूतम् ।
इदं दिवे नमो अग्ने पृथिव्यै सपर्यामि प्रयसा यामि रत्नम् ॥ ३ ॥

---

१-१. नास्ति वि[2] अ[1]; वि त्वमप्राप्तुम् वि[1] लपं. २-२. °ति वि[2]; °ति···करं अ[1]. ३-३. नास्ति वि[2] अ[1]. ४-४. नास्ति मूको. ५. वैश्वदेवानि वि[1] लपं. ६. नास्ति वि[1] लपं. ७. °व्यौ ल प्रस्तावः. ८. ज्योम् वि[1,2] अ[1] लपं; ज्याम् ल.

युवोः । ऋतम् । रोदसी इति । सत्यम् । अस्तु । महे । सु । नः । सुविताय । प्र । भूतम् ।
इदम् । दिवे । नमः । अग्ने । पृथिव्यै । सपर्यामि । प्रयसा । यामि । रत्नम् ॥ ३ ॥

**वेङ्कट०** हे द्यावपृथिवी[1]! युवयोराश्रितविषयम् ऋतम् आनृशंस्यम् सत्यम् अस्तु, महते अभ्युदयाय अस्माकम् सुष्ठु प्र भवतम्। इदम् नमः हे अग्ने! द्यावापृथिवीभ्याम्। किञ्च एने[2] अन्नेन पूजयामि, रत्नम् च याचे ॥ ३ ॥

उतो हि वां पूर्व्या आविविद्र ऋतावरी रोदसी सत्यवाचः ।
नरश्चिद् वां समिथे शूरसातौ ववन्दिरे पृथिवि वेविदानाः ॥ ४ ॥

उतो इति । हि । वाम् । पूर्व्याः । आऽविविद्रे । ऋतवरी इत्यृतऽवरी । रोदसी इति । सत्यऽवाचः ।
नरः । चित् । वाम् । समऽइथे । शूरऽसातौ । ववन्दिरे । पृथिवि । वेविदानाः ॥ ४ ॥

**वेङ्कट०** अपि च हे सत्ययुक्ते द्यावापृथिवी! वाम् एव पूर्वकालभवाः सत्यवाचः ऋषयः अभिलषितं ज्ञापितवन्तः। नूतना मनुष्याः अपि वाम् सङ्ग्रामे शूरसम्भजनस्थाने स्तुवन्ति हे[3] पृथिवि! विद्वांसः ॥ ४ ॥

को अद्धा वेद क इह प्र वोचद् देवाँ अच्छा पथ्या का समेति ।
ददृश्र एषामवमा सदांसि परेषु या गुह्येषु व्रतेषु ॥ ५ ॥

कः । अद्धा । वेद । कः । इह । प्र । वोचत् । देवान् । अच्छ । पथ्या । का । सम् । एति ।
ददृश्रे । एषाम् । अवमा । सदांसि । परेषु । या । गुह्येषु । व्रतेषु ॥ ५ ॥

**वेङ्कट०** कः मनुष्यः सत्यम् वेत्ति, कः वा इह[4] मनुष्येभ्यः एतत् [5]प्र वोचत्[5], को वा मार्गः देवान् अभि सम् एति, येन गत्वा याथात्म्यं जानीमः। एषाम् देवानां दिवि स्थितानाम् अवमानि अधोमुखानि स्थानानि दृश्यन्ते। 'देवगृहा वै नक्षत्राणि' ( तैब्रा १,५,२,६ ) इति ब्राह्मणम्। परमेषु दिवि स्थितेषु मनुष्याणां परोक्षेषु कर्मसु सत्सु यानि दृश्यन्ते। देवगृहा दृश्यन्ते, तत्रत्यानां देवानां कर्माणि परोक्षाणि भवन्तीत्यर्थः ॥ ५ ॥

[6]इति तृतीयाष्टके तृतीयाध्याये चतुर्विंशो वर्गः[6] ॥

कविर्नृचक्षा अभि षीमचष्ट ऋतस्य योना विघृते मदन्ती ।
नाना चक्राते सदनं यथा वेः समानेन क्रतुना संविदाने ॥ ६ ॥

---

१. द्यावापृथिव्यौ ल प्रस्तावः. २. एते अ[2]. ३. नास्ति लपं. ४. नास्ति मूको. ५-५. प्रावोचति वि[2] अ[1]; प्रवोचति वि[1] ल लपं; प्रावोचत्, प्रवक्ति वा ल प्रस्तावः. ६-६. नास्ति मूको.

कविः। नृऽचक्षाः। अभि। सीम्। अचष्ट। ऋतस्य। योना। विघृते इति विऽघृते। मन्दन्ती इति।
नाना। चक्राते इति। सदनम्। यथा। वेः। समानेन। क्रतुना। संविदाने इति सम्ऽविदाने ॥६॥

**वेङ्कट०** कविः मनुष्याणां द्रष्टा भगवानिन्द्रः द्यावापृथिवी सर्वतः अभि पश्यति[1] ऋतस्य योनिरित्युदकनाम तस्मिन् प्रादुर्भूते सति मदन्ती, मदप्रकार उक्तः, विघृते परस्परक्षरणे। 'समानमेतदुदकमुच्चैत्यव चाहभिः' ( ऋ १,१६४,५१ ) इत्येतदभिप्रायम्। एतदेवानयोः[2] समानं कर्म यदेव प्रीणनं द्यौः पृथिव्यै करोति तदेव पृथिव्यपि दिवः एतदेव संवेदनम् इति[3]। ते एते द्यावापृथिवी यथा शकुन्तस्य कुलायान्यावासाय दृश्यन्ते एवं देवमनुष्याणामावासाय नानाविधम् सदनम् कुरुत इति ॥ ६ ॥

समान्या वियुते दूरेअन्ते ध्रुवे पदे तस्थतुर्जागरूके।
उत स्वसारा युवती भवन्ती आदु ब्रुवाते मिथुनानि नाम ॥ ७ ॥

समान्या। वियुते इति विऽयुते। दूरेअन्ते इति दूरेऽअन्ते। ध्रुवे। पदे। तस्थतुः। जागरूके इति।
उत। स्वसारा। युवती इति। भवन्ती इति। आत्। ऊँ इति। ब्रुवाते इति। मिथुनानि। नाम ॥७॥

**वेङ्कट०** समानपरिणामे[4] वा समानप्रयोजने वा एकीभूते वा वियुते पृथग्भूते च दूरे ययोः पर्यन्तो विस्तृतयोस्तादृशे अपि च स्वसृस्थानीये तरुण्यौ भवन्त्यौ ध्रुवे स्थाने तिष्ठतः। यत्र स्थिते न निपततस्तद्[5] ध्रुवम्[6]। जागरणशीले भूत्वा नवतरं तिष्ठत इत्यर्थः। अन्यानि अपि एवंजातीयकानि मिथुनानि नामधेयानि 'उर्वी' 'पृथ्वी' 'बहुले' 'दूरे'[7] इत्यादीनि ब्रुवाते दृश्यमाने। तथा च द्यावापृथिव्योर्दर्शने एवंजातीयकानि नामानि निपतन्तीत्यर्थः ॥ ७ ॥

विश्वेदेते जनिमा सं विविक्तो महो देवान् बिभ्रती न व्यथेते।
एजद् ध्रुवं पत्यते विश्वमेकं चरत् पतत्रि विषुणं वि जातम् ॥ ८ ॥

विश्वा। इत्। एते इति। जनिम। सम्। विविक्तः। महः। देवान्। बिभ्रती इति। न। व्यथेते इति।
एजत्। ध्रुवम्। पत्यते। विश्वम्। एकम्। चरत्। पतत्रि। विषुणम्। वि। जातम् ॥ ८ ॥

**वेङ्कट०** विश्वानि एव एते जातानि भूतानि विस्तीर्णतया सम् विविक्तः पृथक्पृथक् असङ्कीर्णं धारयतः। किञ्च महतः देवान् अग्निवाय्वादीन् बिभ्राणे न चलतः। तथाऽनयोः एजत् चलं मनुष्यादिकम्[8] ध्रुवम् पर्वतादिकं च सर्वम् एकीभूतम् पतति वर्तते, यथा नानादिग्भ्यः समागता नगरद्वारि। तदेवाऽऽह—चरत् पश्वादिकम् पतनशीलं शकुन्यादिकम् एवं[9] विष्वग्गमनम् भूतजातम् अनयोर्विविधं पततीति ॥ ८ ॥

---

१. °विप° वि[2] अ[1]. २. तदेवा° वि[1] लपं. ३. अपि वि[1] लपं. ४. °रिमाणे वि[1] ५. पत° वि[1] लपं. ६. रूपम् वि[1] लपं. ७. नास्ति वि[2] अ[1]. ८. °कम् च वि[1] लपं. ९. एव वि[1] लपं.

सना पुराणमध्येम्यारान्महः पितुर्जनितुर्जामि तन्नः ।
देवासो यत्र पनितार एवैरुरौ पथि व्युते तस्थुरन्तः ॥ ९ ॥

सना । पुराणम् । अधि । एमि । आरात् । महः । पितुः । जनितुः । जामि । तत् । नः ।
देवासः । यत्र । पनितारः । एवैः । उरौ । पथि । विऽउते । तस्थुः । अन्तरिति ॥ ९ ॥

वेङ्कट० अस्माकम् महतः पितुः दिवः जनयितुर्भूमेश्च तत्[1] सनातनम् पुराणम् जामित्वम् अधि एमि पठामि उच्चारयामि सम्प्रति । आराच्छब्दोऽन्तिकवचनः सम्प्रतीत्यर्थः । देवाः यस्मिन् जामित्वे मया कथ्यमाने गमनैः आगत्य मां स्तुवन्तः, सुष्ठु त्वया स्तुतम् इति पननम्, विस्तीर्णे पथि अन्तरिक्षे द्यावापृथिव्योः अन्तः स्तोत्रश्रवणार्थं स्थिताः । स्तुतिभिः पटस्येवान्तरिक्षस्य[2] देवैर्बहुभिर्व्युतत्वमिति । अस्योत्तरा भूयसे निर्वचनाय ॥ ९ ॥

इमं स्तोमं रोदसी प्र ब्रवीम्यृदूदराः शृणवन्नग्निजिह्वाः ।
मित्रः सम्राजो वरुणो युवान आदित्यासः कवयः पप्रथानाः ॥ १० ॥

इमम् । स्तोमम् । रोदसी इति । प्र । ब्रवीमि । ऋदुऽउदराः । शृणवन् । अग्निऽजिह्वाः ।
मित्रः । सम्ऽराजः । वरुणः । युवानः । आदित्यासः । कवयः । पप्रथानाः ॥ १० ॥

वेङ्कट० हे द्यावापृथिवी! युवयोः इमम् स्तोमम् अहम् प्र ब्रवीमि । मृदुशब्दपर्याय ऋदुशब्द इति यास्कः ( ६,४ ) । मृदुः सोम उदरे येषाम् अग्निजिह्वानां[3] ते तं [4]शृण्वन्तु, मित्रः च वरुणः च अन्ये च सम्राजः[4] युवानः अदितेः पुत्राः[5] क्रान्तदर्शनाः विस्तीर्णा भवन्तः ॥ १० ॥

[6]इति तृतीयाष्टके तृतीयाध्याये पञ्चविंशो वर्गः[6] ॥

हिरण्यपाणिः सविता सुजिह्वस्त्रिरा दिवो विदथे पत्यमानः ।
देवेषु च सवितः श्लोकमश्रेरादस्मभ्यमा सुव सर्वतातिम् ॥ ११ ॥

हिरण्यऽपाणिः । सविता । सुऽजिह्वः । त्रिः । आ । दिवः । विदथे । पत्यमानः ।
देवेषु । च । सवितरिति । श्लोकम् । अश्रेः । आत् । अस्मभ्यम् । आ । सुव । सर्वऽतातिम् ॥ ११ ॥

वेङ्कट० हिरण्यपाणिः सविता सुवाक् दिवः च यज्ञे अह्नः त्रिः आ-गच्छन्, अथ प्रत्यक्षः, स त्वं हे सवितः! [7]मदीयां वाचं स्तुतिरूपाम्[7] देवेषु स्तुत्येषु प्रापय । अनन्तरमेव प्रेरय च अस्मभ्यं सर्वैर्देवैस्तायमानं धनम् ॥ ११ ॥

---

१. नास्ति वि[2] अ[1]. २. पदं स्वेवा° वि[2] अ[1]. ३. °जिह्वानां देवानां वि[1] अ[1]. ४-४. नास्ति वि[2] अ[1]. ५. नास्ति वि[2] लपं. ६-६. नास्ति मूको. ७-७. नास्ति वि[2] अ[1] लपं.

सुकृत् सुपाणिः स्ववाँ ऋतावा देवस्त्वष्टावसे तानि नो धात् ।
पूषण्वन्त ऋभवो मादयध्वमूर्ध्वग्रावाणो अध्वरमतष्ट ॥ १२ ॥

सुऽकृत् । सुऽपाणिः । स्वऽवान् । ऋतऽवा । देवः । त्वष्टा । अवसे । तानि । नः । धात् ।
पूषण्ऽवन्तः । ऋभवः । मादयध्वम् । ऊर्ध्वऽग्रावाणः । अध्वरम् । अतष्ट ॥ १२ ॥

**वेङ्कट०** शोभनकारी[1] शोभनपाणिः धनवान् सत्यकर्मा देवः त्वष्टा तानि स्वकीयानि धनानि रक्षणार्थम् अस्मभ्यं प्रयच्छतु । हे ऋभवः ! यूयं च पूष्णा सहिताः अस्मद्यज्ञे मादयध्वम्, उच्छ्रितग्रावाणः अभिषवार्थम् अध्वर्यवः यज्ञम् सोमाभिषवेण संस्कृतवन्त[2] इति ॥ १२ ॥

विद्युद्रथा मरुत ऋष्टिमन्तो दिवो मर्या ऋतजाता अयासः ।
सरस्वती शृणवन् यज्ञियासो धाता रयिं सहवीरं तुरासः ॥ १३ ॥

विद्युत्ऽरथाः । मरुतः । ऋष्टिऽमन्तः । दिवः । मर्याः । ऋतऽजाताः । अयासः ।
सरस्वती । शृणवन् । यज्ञियासः । धात । रयिम् । सहऽवीरम् । तुरासः ॥ १३ ॥

**वेङ्कट०** विद्युद्युक्तरथाः, 'आ विद्युन्मद्भिः' ( ऋ १,८८,१ ) इत्युक्तम्, मरुतः ऋष्टिभिरायुधैः सहिताः दिवः सम्बन्धिनः मर्याः[3] दिवः सूनवः उदकार्थं जाताः गन्तारः, तैः सहभूता माध्यमिका वाक् । शृण्वन्तु अस्मत्स्तोत्रम्[4] यज्ञार्हाः । अथ प्रत्यक्षः । दत्त धनम् पुत्रसहितम् हे क्षिप्रकारिणः ! ॥ १३ ॥

विष्णुं स्तोमासः पुरुदस्ममर्का भगस्येव कारिणो यामनि ग्मन् ।
उरुक्रमः ककुहो यस्य पूर्वीर्न मर्धन्ति युवतयो जनित्रीः ॥ १४ ॥

विष्णुम् । स्तोमासः । पुरुऽदस्मम् । अर्काः । भगस्यऽइव । कारिणः । यामनि । ग्मन् ।
उरुऽक्रमः । ककुहः । यस्य । पूर्वीः । न । मर्धन्ति । युवतयः । जनित्रीः ॥ १४ ॥

**वेङ्कट०** विष्णुम् स्तोत्रशस्त्राणि बहूनां दर्शनीयं गमने गच्छन्त्यभिगच्छन्ति, यथा भजनीयस्याढ्यस्य कर्मकराः आगमन उद्युक्ता भवन्ति । विस्तीर्णक्रमः स देवः । दिशः बह्व्यः[5] यस्य प्रसादाद् विविक्ता भवन्ति, तत्प्रभावादेव जनयित्र्यः युवतयः दिशः न मर्धन्ति न[6] परस्परं बाधन्ते यथास्थानं तिष्ठन्तीति ॥ १४ ॥

इन्द्रो विश्वैर्वीर्यैः पत्यमान उभे आ पप्रौ रोदसी महित्वा ।
पुरंदरो वृत्रहा धृष्णुषेणः संगृभ्या न आ भरा भूरि पश्वः ॥ १५ ॥

---

१. नास्ति वि[2] अ[1].  २. संस्तुत° वि[2] अ[1].  ३. मत्वाः वि[2]; °र्त्याः अ[1].  ४. अस्मिन् स्तो° वि[2] अ[1].  ५. पूर्व्यः वि[1,2] अ[1] ल.  ६. नास्ति लपं.

इन्द्रः । विश्वैः । वीर्यैः । पत्यमानः । उभे इति । आ । पप्रौ । रोदसी इति । महिऽत्वा ।
पुरम्ऽदरः । वृत्रऽहा । धृष्णुऽसेनः । सम्ऽगृभ्य । नः । आ । भर । भूरि । पश्वः ॥ १५ ॥

वेङ्कट० इन्द्रः सर्वैः वीर्यैः सह आगच्छन् उभे द्यावापृथिवी महत्त्वेन आ[1] पूरयति। [2]शिष्टः प्रत्यक्षः[2]। पुरां दारयिता शत्रूणां हन्ता प्रसहनसेनः त्वम्[3] पशोः भूरि हस्तेन सङ्गृह्य अस्मभ्यम् आ भर। बहून् देहि पशूनित्यर्थः ॥ १५ ॥

[4]इति तृतीयाष्टके तृतीयाध्याये षड्विंशो वर्गः[4]।

नासत्या मे पितरा बन्धुपृच्छा सजात्यमश्विनोश्चारु नाम ।
युवं हि स्थो रयिदौ नो रयीणां दात्रं रक्षेथे अकवैरदब्धा ॥ १६ ॥

नासत्या । मे । पितरा । बन्धुऽपृच्छा । सऽजात्यम् । अश्विनोः । चारु । नाम ।
युवम् । हि । स्थः । रयिऽदौ । नः । रयीणाम् । दात्रम् । रक्षेथे इति । अकवैः । अदब्धा ॥ १६ ॥

वेङ्कट० 'इमे अश्विनौ' (तु. माश ४,१,५,१६) इति ब्राह्मणाद् अश्विनौ द्यावापृथिव्यौ। अत उक्तम् अश्विनावेव मम मातापितराविति। बन्धनं यौ पृच्छतः किं त्वं बद्धोऽसि[5] इति तौ बन्धुपृच्छौ। तत्र शाट्यायनकम्— 'अश्विनौ वै देवानां बन्धुमुचौ' इति। समाने जन्मनि भवम् अश्विनोः कल्याणम् नासत्येत्यादिकं नाम। शेषः प्रत्यक्षः। युवाम् हि अस्माकं धनानाम् दातारौ भवथः, दत्तं[6] च धनम् रक्षेथे अकुत्सितैरुपायैः[7] शत्रुभिः अहिंसिताविति ॥ १६ ॥

महत् तद् वः कवयश्चारु नाम यद्ध देवा भवथ विश्व इन्द्रे ।
सख ऋभुभिः पुरुहूत प्रियेभिरिमां धियं सातये तक्षता नः ॥ १७ ॥

महत् । तत् । वः । कवयः । चारु । नाम । यत् । ह । देवाः । भवथ । विश्वे । इन्द्रे ।
सखा । ऋभुऽभिः । पुरुऽहूत । प्रियेभिः । इमाम् । धियम् । सातये । तक्षत । नः ॥ १७ ॥

वेङ्कट० हे क्रान्तदर्शनाः ऋभवः! महत् तत् वः नमनम् अभ्युदयावहम्, यत् खलु यूयं सर्वे एव देवाः![8] इन्द्रे सङ्गताः भवथ। त्वं च हे पुरुहूत! समानख्यानो भवसि प्रियैः ऋभुभिः। इत्थमिन्द्रेण सङ्गता यूयम् इदं कर्म अस्माकं लाभाय कुरुत ॥ १७ ॥

अर्यमा णो अदितिर्यज्ञियासोऽदब्धानि वरुणस्य व्रतानि ।
युयोत नो अनपत्यानि गन्तोः प्रजावान् नः पशुमाँ अस्तु गातुः ॥ १८ ॥

---

१. नास्ति वि[1] लपं. २-२. परोक्षः शिष्टः वि[1] लपं. ३. °सहसेन° वि[1] लपं. ४-४. नास्ति मूको. ५. बुद्धोसि मूको. ६. दत्त मूको. ७. कुसि° मूको. ८. नास्ति मूको.

अर्यमा । नः । अदितिः । यज्ञियासः । अदब्धानि । वरुणस्य । व्रतानि ।
युयोत । नः । अनपत्यानि । गन्तोः । प्रजाऽवान् । नः । पशुऽमान् । अस्तु । गातुः ॥ १८ ॥

**वेङ्कट०** अर्यमा च अस्माकमस्तु अदितिः च देवाश्च । असुरैरनुपहिंसितानि वरुणस्य व्रतानि भवन्ति, स चास्माकमस्तु । ते यूयं हे अर्यमप्रभृतयः! अभिगन्तव्याद् गृहात् अनपत्यानि पुत्राणामयोग्यानि ज्वरादीनि पृथक् कुरुत । ततोऽस्माकम् गातुः प्रजावान् अस्तु पशुमान् चेति ॥ १८ ॥

देवानां दूतः पुरुध प्रसूतोऽनागान् नो वोचतु सर्वताता ।
शृणोतु नः पृथिवी द्यौरुतापः सूर्यो नक्षत्रैरुर्व१न्तरिक्षम् ॥ १९ ॥

देवानाम् । दूतः । पुरुध । प्रऽसूतः । अनागान् । नः । वोचतु । सर्वऽताता ।
शृणोतु । नः । पृथिवी । द्यौः । उत । आपः । सूर्यः । नक्षत्रैः । उरु । अन्तरिक्षम् ॥ १९ ॥

**वेङ्कट०** देवानाम् दूतः अग्निः बहुप्रकारं यजमानैः प्रसूतः अपापा भवन्त्वमी इति अस्मान् वदतु सर्वस्य विस्तारयिता सर्वस्य कर्ता वा । शृणोतु अस्मान् पृथिवी द्यौः आपः सूर्यः च नक्षत्रैः सह विस्तीर्णम् अन्तरिक्षम् च ॥ १९ ॥

शृण्वन्तु नो वृषणः पर्वतासो ध्रुवक्षेमास इळया मदन्तः ।
आदित्यैर्नो अदितिः शृणोतु यच्छन्तु नो मरुतः शर्म भद्रम् ॥ २० ॥

शृण्वन्तु । नः । वृषणः । पर्वतासः । ध्रुवऽक्षेमासः । इळया । मदन्तः ।
आदित्यैः । नः । अदितिः । शृणोतु । यच्छन्तु । नः । मरुतः । शर्म । भद्रम् ॥ २० ॥

**वेङ्कट०** शृण्वन्तु अस्मान् सोमस्य वर्षितारः ग्रावाणः ध्रुवरक्षाः अन्नेन[1] मदन्तः । तथा आदित्यैः सह अस्मान् अदितिः च शृणोतु । मरुतः च अस्मभ्यं भजनीयं सुखं प्रयच्छन्तु ॥ २० ॥

सदा सुगः पितुमाँ अस्तु पन्था मध्वा देवा ओषधीः सं पिपृक्त ।
भगो मे अग्ने सख्ये न मृध्या उद् रायो अश्यां सदनं पुरुक्षोः ॥ २१ ॥

सदा । सुऽगः । पितुऽमान् । अस्तु । पन्थाः । मध्वा । देवाः । ओषधीः । सम् । पिपृक्त ।
भगः । मे । अग्ने । सख्ये । न । मृध्याः । उत् । रायः । अश्याम् । सदनम् । पुरुऽक्षोः ॥ २१ ॥

**वेङ्कट०** सदा शोभनगमनः अन्नवान् अस्तु मार्गोऽस्माकम् । तथा हे देवाः! ओषधीः मधुना सम्पृक्ताः कुरुत । 'मधु' (निघ १,१२) इत्युदकनाम । हे अग्ने! त्वया सख्ये सति अस्माकम् भगः न हिंस्येत । धनस्य सदनम् अहम् उत् अश्याम् बहुभिः शब्दनीयस्येति ॥ २१ ॥

---

१. नास्ति वि[1] लपं.

स्वदस्व हव्या समिषो दिदीह्यस्मद्र्य१क्सं मिमीहि श्रवांसि ।
विश्वाँ अग्ने पृत्सु ताञ्जेषि शत्रूनहा विश्वा सुमना दीदिही नः ॥ २२ ॥

स्वदस्व । हव्या । सम् । इषः । दिदीहि । अस्मद्र्यक् । सम् । मिमीहि । श्रवांसि ।
विश्वान् । अग्ने । पृत्ऽसु । तान् । जेषि । शत्रून् । अहा । विश्वा । सुऽमनाः । दीदिहि । नः ॥ २२ ॥

**वेङ्कट०** स्वदस्व अग्ने! स्वहवींषि, सन्दीपय च अन्नान्यस्माकम्। तथाऽस्मदभिमुखमेव सम् मिमीहि अन्नानि सम्मानं कुरु। तथा सर्वान् अग्ने! सङ्ग्रामेषु तान् शत्रून् अस्मदीयान् जय। किं बहुना सर्वेष्वपि अहःसु शोभनमतिः सन् दीप्यस्व अस्माकं गृह इति ॥ २२ ॥

[1]इति तृतीयाष्टके तृतीयाध्याये सप्तविंशो वर्गः[1] ॥

[ ५५ ]

[1]प्रजापतिर्वैश्वामित्रो वाच्यो वा ऋषिः। विश्वे देवाः देवता। त्रिष्टुप् छन्दः[1]।

उषसः पूर्वा अध यद् व्यूषुर्महद् वि जज्ञे अक्षरं पदे गोः ।
व्रता देवानामुप नु प्रभूषन् महद् देवानामसुरत्वमेकम् ॥ १ ॥

उषसः । पूर्वाः । अध । यत् । विऽऊषुः । महत् । वि । जज्ञे । अक्षरम् । पदे । गोः ।
व्रता । देवानाम् । उप । नु । प्रऽभूषन् । महत् । देवानाम् । असुरऽत्वम् । एकम् ॥ १ ॥

**वेङ्कट०** रात्रेरनन्तरम् उषसः पूर्वभाविन्यः यदा[2] व्युच्छन्ति ततः महत् अक्षरम् तेज आदित्याख्यम् वि जायते तेजसः स्थाने दिवि। तत उदिते आदित्ये देवानाम् व्रतानि कर्माणि प्रकर्षेण भवितुमिच्छन्[3] यजमानः उप भवति, अनुतिष्ठति कर्माणीत्यर्थः। तदिदं देवानाम् महत् एकम् प्राबल्यम् इति ॥ १ ॥

मो षू णो अत्र जुहुरन्त देवा मा पूर्वे अग्ने पितरः पदज्ञाः ।
पुराण्योः सद्मनोः केतुरन्तर्महद् देवानामसुरत्वमेकम् ॥ २ ॥

मो इति । सु । नः । अत्र । जुहुरन्त । देवाः । मा । पूर्वे । अग्ने । पितरः । पदऽज्ञाः ।
पुराण्योः । सद्मनोः । केतुः । अन्तः । महत् । देवानाम् । असुरऽत्वम् । एकम् ॥ २ ॥

**वेङ्कट०** हे अग्ने! अस्माकम् अस्मिन् लोके देवाः मा जुहुरन्त कुटिला मा भूवन्, भागधेयग्रहणार्थमिहागच्छन्तु, मा च पितरः अस्माकम् पूर्वे मृताः पिण्डपितृयज्ञदेवताः स्थानज्ञाः

---

१-१. नास्ति मूको. २. यदाह्नि व्यु° अ°. ३. नास्ति लपं.

स्वकुलजातानामावासज्ञाः । स्विति पूरणम् । पुरातन्योः द्यावापृथिव्योः [1]सर्वेषामावासभूतयोः मध्ये प्रज्ञापकस्त्वं दूतो भूत्वा[1] चरसि[2] । तस्मात् ते तथा कुर्वन्ति । तच्चैतद् देवानाम् महत् एकम् असुरत्वम् इति ॥ २ ॥

वि मे पुरुत्रा पतयन्ति कामाः शम्यच्छा दीद्ये पूर्व्याणि ।
समिद्धे अग्नावृतमिद् वदेम महद् देवानामसुरत्वमेकम् ॥ ३ ॥

वि । मे । पुरुऽत्रा । पतयन्ति । कामाः । शमि । अच्छ । दीद्ये । पूर्व्याणि ।
सम्ऽइद्धे । अग्नौ । ऋतम् । इत् । वदेम । महत् । देवानाम् । असुरऽत्वम् । एकम् ॥ ३ ॥

वेङ्कट० मम बहुविषयेषु प्रज्ञापश्वादिषु कामाः विविधम् पतन्ति । ततोऽहं [3]पुरातनानि वैदिकानि कर्माणि अभिलक्ष्य[3], तानि कर्तुमित्यर्थः, तदर्थमग्निं दीपयामि । अथ वयं समिद्धे सति अग्नौ तस्मै प्राप्तमासादितं हविः वदेम । यच्चैतदेवं[4] वयं कुर्मस्तदपि देवानाम् प्राबल्यकृतमिति ॥ ३ ॥

समानो राजा विभृतः पुरुत्रा शये शयासु प्रयुतो वनानु ।
अन्या वत्सं भरति क्षेति माता महद् देवानामसुरत्वमेकम् ॥ ४ ॥

समानः । राजा । विऽभृतः । पुरुऽत्रा । शये । शयासु । प्रऽयुतः । वना । अनु ।
अन्या । वत्सम् । भरति । क्षेति । माता । महत् । देवानाम् । असुरऽत्वम् । एकम् ॥ ४ ॥

वेङ्कट० [5]एक एव अयं[5] दीप्यमानोऽग्निः बहुषु[5] देशेषु विभृतः भवति धिष्ण्येषु[6] । स[7] तत्र शेते शयनयोग्यासु भूमिषु प्रश्लिष्टः काष्ठानि अनु । वत्सम् अग्निम् एका माता पृथिवी हविर्भिर्धारयति । अथ अन्या माता द्यौः निवासयति[8] सुखमेवाग्निदत्तं भुञ्जानेति ॥ ४ ॥

आक्षित् पूर्वास्वपरा अनूरुत् सद्यो जातासु तरुणीष्वन्तः ।
अन्तर्वतीः सुवते अप्रवीता महद् देवानामसुरत्वमेकम् ॥ ५ ॥

आऽक्षित् । पूर्वासु । अपराः । अनुऽरुत् । सद्यः । जातासु । तरुणीषु । अन्तरिति ।
अन्तःऽवतीः । सुवते । अप्रऽवीताः । महत् । देवानाम् । असुरऽत्वम् । एकम् ॥ ५ ॥

वेङ्कट० जरतीष्वप्योषधीषु आक्षेताऽग्निर्भवति, तथा अपराः च जनिष्यमाणाः अनुरुध्यते । तथेदानीम् जातासु तरुणीषु अपि अन्तः भवति । तत्र वर्तमानश्च गर्भवतीरोषधीः प्रेरयति प्रसूताः करोति ।

---

१-१. नास्ति वि[1] अ[1]. २. चरति मूको. ३-३. नास्ति वि[1] लपं. ४. °देव लपं.
५. प्रजापश्वादिषु वि[1] लपं. ६. धिष्णिये[?] वि[1]. ७. स तु वि[1] अ[1]. ८. निवसति वि[1] लपं.

पुरुषैरनिषिक्तगर्भा अपि। "तस्मादोषधयोऽनभ्यक्ता रेभन्ति"[1] ( तै ७,१,१,३ ) इति ब्राह्मणम्, 'तस्मात्पराचीः प्रजाः प्र वीयन्ते प्रतीचीर्जायन्ते' ( तै ६,३,१,४ ) इति चेति ॥ ५ ॥

[2]इति तृतीयाष्टके तृतीयाध्याये अष्टाविंशो वर्गः[2] ॥

शयुः परस्तादध नु द्विमाताबन्धनश्चरति वत्स एकः ।
मित्रस्य ता वरुणस्य व्रतानि महद् देवानामसुरत्वमेकम् ॥ ६ ॥

शयुः । परस्तात् । अध । नु । द्विऽमाता । अबन्धनः । चरति । वत्सः । एकः ।
मित्रस्य । ता । वरुणस्य । व्रतानि । महत् । देवानाम् । असुरऽत्वम् । एकम् ॥ ६ ॥

**वेङ्कट०** अपरस्यां दिशि गार्हपत्ये सर्वदा शयनशीलः द्वयोश्च लोकयोर्निर्माता कश्चित् वत्सः बन्धनरहितः[3] इतस्ततश्चरतीति । तादृशानि एतानि कर्माणि मित्रावरुणकृतानि । शयनं वरुणकृतम्, चरणं मित्रकृतमिति ॥ ६ ॥

द्विमाता होता विदथेषु सम्राळन्वग्रं चरति क्षेति बुध्नः ।
प्र रण्यानि रण्यवाचो भरन्ते महद् देवानामसुरत्वमेकम् ॥ ७ ॥

द्विऽमाता । होता । विदथेषु । सम्ऽराट् । अनु । अग्रम् । चरति । क्षेति । बुध्नः ।
प्र । रण्यानि । रण्यऽवाचः । भरन्ते । महत् । देवानाम् । असुरऽत्वम् । एकम् ॥ ७ ॥

**वेङ्कट०** द्विमाता ह्वाता यज्ञेषु सम्राड् आहवनीयो भूत्वा अग्रम् उत्तरवेदिम् प्रति गच्छति, तथा बुध्नः भूत्वा परस्ताच्च अनवरतं निवसति । तस्मा अग्नये प्र भरन्ते रमणीयानि हवींषि, रमणीयाः स्तुतीश्च यजमाना इति ॥ ७ ॥

शूरस्येव युध्यतो अन्तमस्य प्रतीचीनं ददृशे विश्वमायत् ।
अन्तर्मतिश्चरति निष्षिधं गोर्महद् देवानामसुरत्वमेकम् ॥ ८ ॥

शूरस्यऽइव । युध्यतः । अन्तमस्य । प्रतीचीनम् । ददृशे । विश्वम् । आऽयत् ।
अन्तः । मतिः । चरति । निःऽसिधम् । गोः । महत् । देवानाम् । असुरऽत्वम् । एकम् ॥ ८ ॥

**वेङ्कट०** शूरस्य इव युध्यतः अन्तिकतमस्य यथा तमागच्छन्तं दृष्ट्वाऽन्ये पराङ्मुखा भवन्ति एवम् एनं दृष्ट्वा पराङ्मुखं भवति हविःपरिमोषणार्थमागच्छत् सर्वं रक्षः । सोऽयं द्यावापृथिव्योर्मध्ये देवानां स्तोता हविरादाय रक्षांसि निषिध्य[4] चरति पृथिव्या दिवं प्रति ॥ ८ ॥

---

१-१. °भ्यक्तारो भवन्ति ल; °भ्यक्तारे भवन्ति वि[२] अ[१]. २-२. नास्ति मूको. ३. °नेमतः वि[२] अ[१] लपं. ४. निषिध्यति मूको.

नि वेवेति पलितो दूत आस्वन्तर्महांश्चरति रोचनेन ।
वपूंषि बिभ्रदभि नो वि चष्टे महद् देवानामसुरत्वमेकम् ॥ ९ ॥

नि । वेवेति । पलितः । दूतः । आसु । अन्तः । महान् । चरति । रोचनेन ।
वपूंषि । बिभ्रत् । अभि । नः । वि । चष्टे । महत् । देवानाम् । असुरऽत्वम् । एकम् ॥ ९ ॥

**वेङ्कट०** पालयिता श्वेतो वाऽग्निः दूतः सन् आसु[1] दिक्षु नि वेवेति गच्छत्याभिमुख्येन तांस्तान् देवान् प्रति, द्यावापृथिव्योर्मध्ये महान् चरति तेजसा सह, रूपाणि धारयन् नः[1] यजमानांश्च अभि वि पश्यति ॥९॥

विष्णुर्गोपाः परमं पाति पाथः प्रिया धामान्यमृता दधानः ।
अग्निष्टा विश्वा भुवनानि वेद महद् देवानामसुरत्वमेकम् ॥ १० ॥

विष्णुः । गोपाः । परमम् । पाति । पाथः । प्रिया । धामानि । अमृता । दधानः ।
अग्निः । ता । विश्वा । भुवनानि । वेद । महत् । देवानाम् । असुरऽत्वम् । एकम् ॥ १० ॥

**वेङ्कट०** विष्णुः गोपायिता उत्तमम् रक्षति स्थानम् प्रियाणि अमृतानि पृथिव्यादीनि बहूनि धारयन् अयम् अग्निः तानि सर्वाण्येव जानाति पार्थिवानि दिव्यानि च ॥ १० ॥

[2]इति तृतीयाष्टके तृतीयाध्याये एकत्रिंशो वर्गः[2] ॥

नाना चक्राते यम्याऽ वपूंषि तयोरन्यद् रोचते कृष्णमन्यत् ।
श्यावी च यदरुषी च स्वसारौ महद् देवानामसुरत्वमेकम् ॥ ११ ॥

नाना । चक्राते इति । यम्या । वपूंषि । तयोः । अन्यत् । रोचते । कृष्णम् । अन्यत् ।
श्यावी । च । यत् । अरुषी । च । स्वसारौ । महत् । देवानाम् । असुरऽत्वम् । एकम् ॥११॥

**वेङ्कट०** 'यम्या'( निघ १,७ ) इति रात्रिनाम साहचर्यादहोरात्रयोः प्रयुज्यते । अहोरात्रौ भिन्नानि रूपाणि कुरुतः । तदेवाह—तयोः अन्यत् रोचते ततश्च तच्छुक्लं भवत्यहः, अथ रात्रिः कृष्णा भवति । 'श्यावी' ( निघ १,७ ) इति रात्रिनाम, 'अरुषी' ( निघ १,८ ) इत्यहर्नाम । यत् अहोरात्रौ एकस्मादादित्या-दुत्पत्तेः[3] स्वसारौ इत्थं भवतः, एतच्च देवकृतमिति । अस्यामप्युच्यादित्य एव स्तूयते, अहोरात्रयोः कर्तृत्वात् तस्यैवोत्तरत्रापि स्तुतिः । स एवेन्द्रश्चोक्तः 'निषिध्वरीः' ( ऋ ३,५५,२२ ) इत्यस्यामृचीति प्रतिभाति ॥ ११ ॥

माता च यत्र दुहिता च धेनू सबर्दुघे धापयेते समीची ।
ऋतस्य ते सदसीळे अन्तर्महद् देवानामसुरत्वमेकम् ॥ १२ ॥

---

१. नास्ति मूको. २-२. नास्ति मूको. ३. एतस्मा° वि[२] अ[१].

माता । च । यत्र । दुहिता । च । धेनू इति । सबर्दुघे इति सबःऽदुघे । धापयेते इति । समीची इति समऽईची । ऋतस्य । ते इति । सदसि । ईळे । अन्तः । महत् । देवानाम् । असुरऽत्वम् । एकम् ॥१२॥

वेङ्कट० तिसृष्वपि ऋक्षु[1] ऋतशब्देनाऽऽदित्य उच्यते। माता पृथिवी, द्यौर्दुहिता यस्मात् तत्रत्यह-विरन्नेन[2] जीवति। माता दुहिता च[3] यस्मिन्नाकाशे[4] वर्तमाने कामानां दोग्ध्र्यौ, सबर्-शब्दोऽमृतनाम, अमृतस्य[5] दोग्ध्र्यौ, तत्र दिवस्तूदकममृतम् अन्नं पृथिव्याः, ते सङ्गते भूत्वा अमृतं तत्पयः पाययतः। ते च अहं स्तौमि आदित्यस्य स्वभूते सदसि आकाशे वर्तमाने इति। यदिदमाकाशे द्यावापृथिवी तिष्ठतस्तदपि देवकृतमिति ॥ १२ ॥

अन्यस्या वत्सं रिहती मिमाय कया भुवा नि दधे धेनुरूधः ।
ऋतस्य सा पयसाऽपिन्वतेळा महद् देवानामसुरत्वमेकम् ॥ १३ ॥

अन्यस्याः । वत्सम् । रिहती । मिमाय । कया । भुवा । नि । दधे । धेनुः । ऊधः ।
ऋतस्य । सा । पयसा । अपिन्वत । इळा । महत् । देवानाम् । असुरऽत्वम् । एकम् ॥ १३ ॥

वेङ्कट० पृथिव्याः वत्सभूतम् स्थावरं जङ्गमं च वर्षजिह्वया लिहती द्यौः शब्दं [6]करोति, सा धेनुः द्यौर्यदा[6] वर्षणजलरहितया[7] भूम्याऽऽत्मीयम् ऊधः सन्दधाति। इळेति गोनाम ( तु. निघ २,११)। सेयम् गोसदृशी द्यौः इन्द्रोत्पादितेनैव पयसा पृथिवीं प्रति क्षरति[8] ॥ १३ ॥

पद्या वस्ते पुरुरूपा वपूंष्यूर्ध्वा तस्थौ त्र्यविं रेरिहाणा ।
ऋतस्य सद्म वि चरामि विद्वान् महद् देवानामसुरत्वमेकम् ॥ १४ ॥

पद्या । वस्ते । पुरुऽरूपा । वपूंषि । ऊर्ध्वा । तस्थौ । त्रिऽअविम् । रेरिहाणा ।
ऋतस्य । सद्म । वि । चरामि । विद्वान् । महत् । देवानाम् । असुरऽत्वम् । एकम् ॥ १४ ॥

वेङ्कट० पदनिधानयोग्या[9] पृथिवी बहुरूपाणि स्थावरजङ्गमशरीराणि आच्छादयति। अथ ऊर्ध्वा द्यौः तिष्ठति त्र्यविप्रमाणम् आदित्यं वत्सभूतम् लिहती[10]। तद् इन्द्रस्य[1] स्थानं द्याम् अहं जानन् इह वि चरामि ॥ १४ ॥

पदेइव निहिते दस्मे अन्तस्तयोरन्यद् गुह्यमाविरन्यत् ।
सध्रीचीना पथ्या३ सा विषूची महद् देवानामसुरत्वमेकम् ॥ १५ ॥

---

१. नास्ति लपं. २. तत्रत्या इतः प्रदनेन वि[1] अ[1]; तत्रत्याहः प्रदनेन वि[1] ल लपं. ३. ना वि[1] लपं. ४. °श आकाशे वि[2] अ[1]. ५. ऋतस्य वि[2] लपं. ६-६. नास्ति वि[2] अ[1]. ७. वचनजल° वि[1] ल लपं; जलरहि° वि[2] अ[1]. ८. रक्षति मूको. ९. नास्ति वि[2] अ[1]. १०. °न्ती मूको.

पदेइवेति पदेऽइव । निहिते इति निऽहिते । दस्मे । अन्तरिति । तयोः । अन्यत् । गुह्यम् । आविः । अन्यत् ।
सध्रीचीना । पथ्या । सा । विषूची । महत् । देवानाम् । असुरऽत्वम् । एकम् ॥ १५ ॥

**वेङ्कट०** 'महत आकाशस्य पदे इव[1] निहिते दर्शनीये द्यावापृथिवी आकाशस्य मध्ये । तयोः अन्यत् गुह्यम् पदं भवति स्वर्गः । आविः [2]भवति अन्यत् पृथिवी । सोऽयम् द्यावापृथिव्यात्मको मार्गः[2] सध्रीचीनश्च भवति विषूचीनश्च । पृथिव्यां नानाकर्माणो मनुष्याः सह वर्तन्ते, परलोके तु न कश्चित् कञ्चन पश्यति, बहुविधैः कर्मभिर्बहुदेहान् प्राप्तवन्त[3] इत्यर्थः ॥ १५ ॥

[4]इति तृतीयाष्टके तृतीयाध्याये त्रिंशो वर्गः[4] ॥

आ धेनवो धुनयन्तामशिश्वीः सबर्दुघाः शशया अप्रदुग्धाः ।
नव्यानव्या युवतयो भवन्तीर्महद् देवानामसुरत्वमेकम् ॥ १६ ॥

आ । धेनवः । धुनयन्ताम् । अशिश्वीः । सबःऽदुघाः । शशयाः । अप्रऽदुग्धाः ।
नव्याःऽनव्याः । युवतयः । भवन्तीः । महत् । देवानाम् । असुरऽत्वम् । एकम् ॥ १६ ॥

**वेङ्कट०** वत्सवर्जिताः शयनशीलाः मनुष्यैश्च अप्रदुग्धाः सदा नवतराः तरुण्यश्च भवन्त्यः अमृतस्य दोग्ध्र्यः धेनवः इति दिगभिप्रायम्, ताः पयः आ धुनयन्ताम् [2]रक्षन्तु हे इन्द्र! तव प्रसादेनेति[2] मन्त्रैः साहचर्याद् बोद्धव्यमिति ॥ १६ ॥

यदन्यासु वृषभो रोरवीति सो अन्यस्मिन् यूथे नि दधाति रेतः ।
स हि क्षपावान्त्स भगः स राजा महद् देवानामसुरत्वमेकम् ॥ १७ ॥

यत् । अन्यासु । वृषभः । रोरवीति । सः । अन्यस्मिन् । यूथे । नि । दधाति । रेतः ।
सः । हि । क्षपाऽवान् । सः । भगः । सः । राजा । महत् । देवानाम् । असुरऽत्वम् । एकम् ॥ १७ ॥

**वेङ्कट०** यत् अन्यासु गोषु स्थित्वा[5] वृषभः शब्दं करोति तदानीमेव स वृषभः अन्यस्मिन् गोयूथे †रेतः †नि दधाति । स[6] [6]वृषभः क इत्यपेक्षायामुक्तम् स हि इति । सः शत्रूणां क्षपणात् क्षपावान् भवति भजनीयश्च स्तोतॄणाम्, ईष्टे च सर्वस्य । एवं चायं दिक्षु स्थित्वा पृथिव्या-मुदकं वर्षन्निन्द्रो भवति ॥ १७ ॥

वीरस्य नु स्वश्व्यं जनासः प्र नु वोचाम विदुरस्य देवाः ।
षोळहा युक्ताः पञ्चपञ्चा वहन्ति महद् देवानामसुरत्वमेकम् ॥ १८ ॥

---

१-१. नास्ति वि[२]. २-२. नास्ति वि[२] अ[१]. ३. प्राप्त व मूको. ४-४. नास्ति मूको.
५. स्थितः ल. ६-६. नास्ति अ[१]. †-† नास्ति वि[२].

वीरस्य । नु । सुऽअश्व्यम् । जनासः । प्र । नु । वोचाम । विदुः । अस्य । देवाः ।
षोळ्हा । युक्ताः । पञ्चऽपञ्च । आ । वहन्ति । महत् । देवानाम् । असुरऽत्वम् । एकम् ॥ १८ ॥

**वेङ्कट०** एको नुः पूरणः[1] । हे जनाः! वयमिन्द्रस्य शोभनाश्वत्वम् क्षिप्रम् प्र ब्रूमः । तदिदं मयोच्यमानम् देवाः एव जानन्ति । षोढा युक्ताः अश्वाः तं वीरं पञ्चपञ्च भूत्वा मनुष्यान् प्रति आ वहन्ति । तत्त्वतः षड् ऋतवो भवन्ति, तान् मनुष्या हेमन्तशिशिरयोर्धर्मभेदस्य सूक्ष्मत्वात् पञ्च बुध्यन्ते । बहुसंवत्सरापेक्षया वीप्सेति ॥ १८ ॥

देवस्त्वष्टा सविता विश्वरूपः पुपोष प्रजाः पुरुधा जजान ।
इमा च विश्वा भुवनान्यस्य महद् देवानामसुरत्वमेकम् ॥ १९ ॥

देवः । त्वष्टा । सविता । विश्वऽरूपः । पुपोष । प्रऽजाः । पुरुधा । जजान ।
इमा । च । विश्वा । भुवनानि । अस्य । महत् । देवानाम् । असुरऽत्वम् । एकम् ॥ १९ ॥

**वेङ्कट०** यास्कः—'देवः त्वष्टा सविता सर्वरूपः पोषति[2] प्रजा रसानुप्रदानेन । बहुधा चेमा[3] जनयति । इमानि च सर्वाणि भुवनान्युदकानि अस्य । महच्चास्मै देवानाम् असुरत्वम् एकम् । प्रज्ञावत्त्वं वा[4] अनवत्त्वं[5] वा[6]' ( १०,३४ ) इति ॥ १९ ॥

मही समैरच्चम्वा समीची उभे ते अस्य वसुना न्यृष्टे ।
शृण्वे वीरो विन्दमानो वसूनि महद् देवानामसुरत्वमेकम् ॥ २० ॥

मही इति । सम् । ऐरत् । चम्वा । समीची इति सम्ऽईची । उभे इति । ते इति । अस्य । वसुना । न्यृष्टे इति निऽऋष्टे । शृण्वे । वीरः । विन्दमानः । वसूनि । महत् । देवानाम् । असुरऽत्वम् । एकम् ॥ २० ॥

**वेङ्कट०** महत्यौ[7] द्यावापृथिवी परस्परं सङ्गमयति[8] मनसा धनेन समभिमुखे । ततश्च उभे ते द्यावापृथिवी इन्द्रोत्पादितेन धनेन ह्रद इवोर्मिभिः न्यृष्टे भवतः । सोऽयम् वीरः शत्रुभ्यो धनानि लभमानः श्रूयत इति ॥ २० ॥

इमां च नः पृथिवीं विश्वधाया उप क्षेति हितमित्रो न राजा ।
पुरःसदः शर्मसदो न वीरा महद् देवानामसुरत्वमेकम् ॥ २१ ॥

इमाम् । च । नः । पृथिवीम् । विश्वऽधायाः । उप । क्षेति । हितऽमित्रः । न । राजा ।
पुरःऽसदः । शर्मऽसदः । न । वीराः । महत् । देवानाम् । असुरऽत्वम् । एकम् ॥ २१ ॥

---

१. पुराणः वि[1] अ[1]; °रणार्थः ल. २. पोरयति मूको. ३. नास्ति मूको. ४. नास्ति वि[1] अ[1]. ५. प्राणव° मूको. ६. नास्ति वि[1]. ७. महन्ती वि[1] अ[1]. ८. °यति च वि[1] लपं.

वेङ्कट० स वीरः इमाम् च अस्मदीयाम् वेदिलक्षणां पृथिवीम् विश्वस्य धर्ता उपेत्य नित्रसति परितः हितमित्रः यथा गच्छत्येत्रमागच्छन्। तस्य पुरोगन्तारोऽनुचरा अप्रधृष्या[1] भवन्ति यथा गृहसदः वीराः। 'शर्म' ( निघ ३,४ ) इति गृहनाम। दुर्गस्था वीरा यथाऽनभिभवनीया [2]एवमिन्द्राश्रयाद् भवन्तीति[2] ॥ २१ ॥

निष्षिध्वरीस्त ओषधीरुतापो रयिं त इन्द्र पृथिवी बिभर्ति ।
सखायस्ते वामभाजः स्याम महद् देवानामसुरत्वमेकम् ॥ २२ ॥

निःऽसिध्वरीः । ते । ओषधीः । उत । आपः । रयिम् । ते । इन्द्र । पृथिवी । बिभर्ति ।
सखायः । ते । वामऽभाजः । स्याम । महत् । देवानाम् । असुरऽत्वम् । एकम् ॥ २२ ॥

वेङ्कट० हे इन्द्र! तुभ्यम् ओषधयः आपः च स्वसारस्य हविषः निष्षिध्वर्यो भवन्ति। स्वसारं निर्गमयन्तीत्यर्थः। तथा पृथिवी अपि त्वद्दत्तमेव गवात्मकमोषध्यात्मकं च धनम् बिभर्ति। तस्य तव सखायः वयम् धनभाजः स्याम इति ॥ २२ ॥

[3]इति तृतीयाष्टके तृतीयाध्याये एकत्रिंशो वर्गः[3] ॥

व्याख्यत् तृतीयमध्यायं तृतीयस्याष्टकस्य सः ।
कुण्डिनस्य कुले जाता माताऽभूद् यस्य सुन्दरी ॥

इति वेङ्कटमाधवाचार्यविरचिते ऋक्संहिताव्याख्याने
तृतीयाष्टके तृतीयोऽध्यायः ॥

— ❀ —

इति ऋग्वेदे सभाष्ये तृतीयाष्टके तृतीयोऽध्यायः ॥



---

१. °ध्यो क. २-२. °यात् ··· न्तीति मूको. ३-३. नास्ति लपं.

## अथ तृतीयाऽष्टके चतुर्थोऽध्यायः

वेङ्कट०

'न ता मिनन्ति मायिनः' व्याचिख्यासति माधवः ।
चाऽहाऽङ्गानां[1] निपातानामर्थमादौ प्रदर्शयन् ॥ १ ॥

चकारः समुच्चयार्थश्चेदर्थे चापि प्रवर्तते ।
काकुः समुच्चये कश्चित् तं चेदर्थं विदुर्बुधाः ॥ २ ॥

यद्योगे तिङुदात्तः स्यात् स चेदर्थः प्रकीर्तितः ।
समुच्चयार्थं तं विद्याद् यद्योगे तिङ् निहन्यते ॥ ३ ॥

'आ च त्वामेता वृषणा'[2], 'त्वं च सोम नो वशः'[3] ।
'इन्द्रश्च मृळयाति नः'[4] चेदर्थाश्च इमे मताः ॥ ४ ॥

एवकारेण सदृशौ हाऽहौ[5] यास्केन भाषितौ[6] ।
'यद्ध यान्ति मरुतो[7]ऽत्र' हकारः खलुना समः ॥ ५ ॥

'वद्ध नूनं कधप्रियः'[8], 'को ह कस्मिन्नसि श्रितः'[9] ।
'कथा ह तद्वरुणाय'[10] नैतेष्वस्ति विनिग्रहः ॥ ६ ॥

'तवं ह त्यदिन्द्र विश्वम्'[11] वर्तते हो विनिग्रहे[12] ।
स्फुटत्वोद्ग्रहणार्थीया हकारा[13] बहवः श्रुताः ॥ ७ ॥

'अत्राह तत् कण्व एषाम्'[14], 'अत्राह दानुमातिरः'[15] ।
'अत्राह तदुरुगायस्य'[16], 'दिप्सन्त इद्रिपवो नाह'[17] ॥ ८ ॥

अहा विनिग्रहार्थीयाश्चत्वारः समुदाहृताः ।
दृश्यन्ते बहवोऽन्ये च सर्वेषु निहतास्तिङः ॥ ९ ॥

पूजायां गम्यमानायामाख्यातं न निहन्यते ।
'आदह स्वधामनु'[18] इति तत्रोदाहरणं विदुः[19] ॥ १० ॥

---

१. चाहादीनां त्व प्रस्तावः. २. ऋ ३,४३,४. ३. ऋ १,९१,६. ४. ऋ २,४१,११. ५. विहौ वेंऋअ. ६. तु. या १,५. ७. ऋ १,३७,१३. ८. ऋ १,३८,१. ९. ऋ १,७५,३. १०. ऋ ४,३,५. ११. ऋ ६,२०,१३. १२. ॰ग्रहेषु त्रि' लपं. १३. ह अहा वेंऋअ. १४. ऋ १,४८,४. १५. ऋ ४,३०,७. १६. ऋ १,१५४,६. १७. ऋ १,१४७,३ १८. ऋ १,६,४. १९. स्मृतम् वेंअऋ.

अनन्तरमेव [1]वृष्टेर्गर्भत्वं† प्राप्नुवन्त्यमी‡[1]।
न चासते क्षणं[2] तूष्णीमिति पूजा प्रतीयते[3] ॥ ११ ॥

अङ्गेति क्षिप्रवचनं[4] सम्बोधयति चापरम्।
'सो अ॒ङ्ग वे॑द॒ यदि॑ वा॒ न'[5], 'त्वम॑ङ्ग प्र शं॑सिषः'[6] ॥ १२ ॥

एते [7]सम्बोधने प्राहुर्[7] '[8]इन्द्रो॑ अ॒ङ्ग' म॒हद्भ॒यम्'[8]।
अत्राहुः क्षिप्रवचनं यदा सम्बोधनं भवेत् ॥ १३ ॥

तदानीं प्रातिलोम्यं चेदाख्यातं न निहन्यते।
प्रातिलोम्योदाहरणं न दृष्टमधुना मया ॥ १४ ॥ इति ॥

## [ ५६ ]

[1]प्रजापतिः वैश्वामित्रो वाच्यो वा ऋषिः । विश्वे देवाः देवता । त्रिष्टुप् छन्दः[1] ।

न ता मि॑नन्ति मा॒यिनो॒ न धीरा॑ व्र॒ता दे॒वानां॑ प्रथ॒मा ध्रु॒वाणि॑ ।
न रोद॑सी अ॒द्रुहा॑ वे॒द्याभि॒र्न पर्व॑ता नि॒नमे॑ तस्थि॒वांसः॑ ॥ १ ॥

न । ता । मि॒न॒न्ति॒ । मा॒यिनः॑ । न । धीराः॑ । व्र॒ता । दे॒वाना॑म् । प्र॒थ॒मा । ध्रु॒वाणि॑ ।
न । रोद॑सी॒ इति॑ । अ॒द्रुहा॑ । वे॒द्याभिः॑ । न । पर्व॑ताः । नि॒ऽनमे॑ । त॒स्थि॒ऽवांसः॑ ॥ १ ॥

**वेङ्कट०** [1]प्रजापतिः । न तानि अन्यथा[1] कुर्वन्ति मायाविनोऽसुराः, नापि प्राज्ञाः । ततश्च देवैर्दृष्टानि पुराणानि व्रतानि तथैव स्थिराणि भवन्ति । [10]तत्रोदाहरणम्— न द्यावापृथिवी याः† च यावत्यो वेद्या अवगन्तव्या देवमनुष्यादिकाः[10] प्रजा विद्यन्ते ताभिः सर्वाभिः द्रोहवर्जिते निनमनाय भवतः, सह प्रजाभिर्धार्यमाणाभिस्तिष्ठतः । तथा पर्वताः च न निनमनाय भवन्ति तिष्ठन्तः[11] ॥ १ ॥

षड् भा॒राँ एको॒ अच॑रन् बिभर्त्यृ॒तं वर्षि॑ष्ठ॒मुप॒ गाव॒ आगुः॑ ।
ति॒स्रो म॒हीरुप॑रास्तस्थु॒रत्या॒ गुहा॒ द्वे निहि॑ते॒ दर्श्येका॑ ॥ २ ॥

षट् । भा॒रान् । एकः॑ । अच॑रन् । बि॒भ॒र्ति॒ । ऋ॒तम् । वर्षि॑ष्ठम् । उप॑ । गावः॑ । आ । अ॒गुः॒ ।
ति॒स्रः । म॒हीः । उप॑राः । त॒स्थुः॒ । अत्याः॑ । गुहा॑ । द्वे इति॑ । निहि॑ते॒ इति॒ निऽहि॑ते । दर्शि॑ । एका॑ ॥

**वेङ्कट०** स्वयमचलः[12] एकः संवत्सरः षट् भारान् बिभर्ति । तद्[13] 'इदं च दैव्यमेकं पदम्' गच्छद्-

---

१-१. नास्ति वि[2] अ[1]. † पुनर्ग॰ वि[1] ल लपं. ‡ प्राप्स्यन्त्य॰ वि[1,2] अ[1] ल लपं. २. क्षणवः वि[2] अ[1]. ३. प्रदी॰ वि[1]. ४. °वचनः वि[2] अ[1] वेंऋअ. ५. ऋ १०,१२९,७. ६. ऋ १,८४,१९. ७-७. नास्ति वि[2] अ[1]; एतौ सम्बोधनार्थीयौ वेंऋअ. ८. ऋ २, ४१, १०. ९-९. नास्ति मूको. १०-१०. नास्ति वि[2] अ[1]. † बे ल; या लपं. ११. नास्ति अ[1]. १२. इदं च दैव्यमेकं पदं स्वय॰ वि[1] ल लपं. १३. नास्ति वि[1].

भूतं वृद्धतमम् गावः उप गच्छन्ति इति ऋतूनाह। तथा त्रयो लोकाः महान्तः स्वे-स्वे स्थाने उपतिष्ठन्ति गमनस्वभावाः अपि। तेषां द्वौ लोकौ गुहायां निहितौ। सर्वैर्मनुष्यैर्दर्शनीयो भवति अयं लोकः ॥ २ ॥

त्रिपाजस्यो वृषभो विश्वरूप उत त्र्युधा पुरुध प्रजावान्।
त्र्यनीकः पत्यते माहिनावान्त्स रेतोधा वृषभः शश्वतीनाम् ॥ ३ ॥

त्रिऽपाजस्यः। वृषभः। विश्वऽरूपः। उत। त्रिऽउधा। पुरुध। प्रजाऽवान्।
त्रिऽअनीकः। पत्यते। माहिनऽवान्। सः। रेतःऽधाः। वृषभः। शश्वतीनाम् ॥ ३ ॥

वेङ्कट० पाजसे तेजसे हितानि[1] पाजस्यानि भवन्ति संवत्सरस्य त्रीणि, [2]वसन्ते प्रातः, ग्रीष्मे मध्यन्दिनः[2], शरद्यपराह्णः। कामानां वर्षिता, नानालिङ्गत्वाद् ऋतूनाम् विश्वरूपः, व्रीहिश्यामाकयवानामुत्पादनात्[3] त्र्यूधस्कः, बहुप्रकारं प्रजननं कुर्वन्। अनीकशब्दो मुखवचनः। तेजोयुक्ताश्चत्वारो मासा भवन्ति, वर्षयुक्ताश्चत्वारः, शीतयुक्ताश्चत्वारः[4] ततस्त्रिमुख उक्तः। सोऽयम् अभिगच्छति पूजावान्, 'पूजयन् प्रजाः[5] स संवत्सरः' इत्याह। सः रेतोधाः सर्वासामेव दिशां वर्षणाद् रेतो दधातीति ॥ ३ ॥

अभीक आसां पदवीरबोध्यादित्यानामह्वे चारु नाम।
आपश्चिदस्मा अरमन्त देवीः पृथग् व्रजन्तीः परि षीमवृञ्जन् ॥ ४ ॥

अभीके। आसाम्। पदऽवीः। अबोधि। आदित्यानाम्। अह्वे। चारु। नाम।
आपः। चित्। अस्मै। अरमन्त। देवीः। पृथक्। व्रजन्तीः। परि। सीम्। अवृञ्जन् ॥४॥

वेङ्कट० वर्षार्थं[6] दिक्षु यः पदं निधत्ते अभिगच्छति दिशां समीपे बुध्यते सङ्गच्छते[7] दिग्भिरित्यर्थः। यदाहं वर्षमिच्छन् वर्षस्येश्वराणाम् आदित्यानाम् आह्वयामि चारूणि नामानि। तस्मै[8] अस्मै संवत्सराय आपः रमयन्ते देव्यः वर्षासु पृथग् गच्छन्त्यः। परि वर्जयन्ति च एनं सर्वतोऽष्टसु मासेषु ॥ ४ ॥

त्री षधस्था सिन्धवस्त्रिः कवीनामुत त्रिमाता विदथेषु सम्राट्।
ऋतावरीर्योषणास्तिस्रो अप्यास्त्रिरा दिवो विदथे पत्यमानाः ॥ ५ ॥

त्री। सधऽस्था। सिन्धवः। त्रिः। कवीनाम्। उत। त्रिऽमाता। विदथेषु। सम्ऽराट्।
ऋतऽवरीः। योषणाः। तिस्रः। अप्याः। त्रिः। आ। दिवः। विदथे। पत्यमानाः ॥ ५ ॥

वेङ्कट० अपामिममर्थं बोधयति — त्रीणि सदनानि हे सिन्धवः! देवानां क्रान्तदर्शनानां स्थानानि, त्रिः च तेषां तेष्वागमनम्[9]। अपि च त्रयाणां लोकानां[10] निर्माता तेषु यज्ञेषु सम्राट् भवतीन्द्रः। तथा सत्यवत्यः स्त्रियश्च तिस्रः अन्तरिक्षभवाः इडा सरस्वती भारती चेति। अद्भयो

---

१. हित मूको. २-२. नास्ति वि॰ अ॰. ३. अपि च श्यामाक॰ वि॰ ख लपं. ४. नास्ति मूको. ५. नास्ति वि॰ लपं. ६. वर्षम् ल. ७. संगच्छन् वि॰. ८. तस्मात् वि॰ लपं. ९. तेषां गम॰ वि॰ लपं. १०. लोकान् वि॰ लपं.

हिता इत्यपरम्। ताश्च स्वर्गात् यज्ञे निर्गच्छन्त्यो भवन्ति। अनुसवनमागमनादि[1] इति बहुशः त्रिशब्दोच्चारणमपेक्षितमिति ॥ ५ ॥

त्रिरा दिवः सवितर्वार्याणि दिवेदिव आ सुव त्रिर्नो अह्नः ।
त्रिधातु राय आ सुवा वसूनि भग त्रातर्धिषणे सातये धाः ॥ ६ ॥

त्रिः । आ । दिवः । सवितरिति । वार्याणि । दिवेऽदिवे । आ । सुव । त्रिः । नः । अह्नः ।
त्रिऽधातु । रायः । आ । सुव । वसूनि । भग । त्रातः । धिषणे । सातये । धाः ॥ ६ ॥

**वेङ्कट०** हे सवितः! वरणीयानि धनानि दिवः त्रिः आगत्य अस्मभ्यम् अन्वहम् एकस्य अह्नः त्रिः प्रेरय। गोधनानि च त्रिधातूनि त्रिगुणानि आ सुव सवितः!। किं च हे भग! रक्षितः! अस्मान् धनाय धेहि। तथा त्वमपि हे धिषणे वाक्! इति ॥ ६ ॥

त्रिरा दिवः सविता सोषवीति राजाना मित्रावरुणा सुपाणी ।
आपश्चिदस्य रोदसी चिदुर्वी रत्नं भिक्षन्त सवितुः सवाय ॥ ७ ॥

त्रिः । आ । दिवः । सविता । सोसवीति । राजाना । मित्रावरुणा । सुपाणी इति सुऽपाणी ।
आपः । चित् । अस्य । रोदसी इति । चित् । उर्वी इति । रत्नम् । भिक्षन्त । सवितुः । सवाय ॥

**वेङ्कट०** सविता अमुष्माल्लोकात् अह्नः त्रिः प्रेरयति राजाना मित्रावरुणौ अहोरात्राधिपती शोभनपाणी। तावपि सवितृप्रेरितावित्यवगन्तव्यम्। 'आपः' ( निघ १, ३ ) इत्यन्तरिक्षनाम। अस्य सवितुर्वशे अन्तरिक्षम् विस्तीर्णे द्यावापृथिवी च वर्तन्ते। तस्मादस्मात् सवितुः रत्नम् स्तोतारो याचन्ते प्रेरणाय। देहीति वदन्तीत्यर्थः ॥ ७ ॥

त्रिरुत्तमा दूणशा रोचनानि त्रयो राजन्त्यसुरस्य वीराः ।
ऋतावान इषिरा दूळभासस्त्रिरा दिवो विदथे सन्तु देवाः ॥ ८ ॥

त्रिः । उत्ऽतमा । दुःऽनशा । रोचनानि । त्रयः । राजन्ति । असुरस्य । वीराः ।
ऋतऽवानः । इषिराः । दुःऽदभासः । त्रिः । आ । दिवः । विदथे । सन्तु । देवाः ॥ ८ ॥

**वेङ्कट०** त्रीणि उत्तमानि ऊर्ध्वानि नाशयितुमशक्यानि पृथिव्यादीनि रोचनानि त्रयः राजन्ति बलवतः संवत्सरस्य वीराः[2] अग्निर्वायुः सूर्यश्च। सत्यवन्तः हविषामेष्टारः दम्भितुमशक्याः दिवः त्रिः आ सन्तु अस्माकं यज्ञे देवाः ॥ ८ ॥

[3]इति तृतीयाष्टके चतुर्थाध्याये प्रथमो वर्गः[3] ॥

---

१. 'नुतपन॰ वि[2] अ[2]. २. धीराः वि[2] अ[1] ल लपं. ३-३. नास्ति मूको.

[ ५७ ]

[1]विश्वामित्रो गाथिन ऋषिः । विश्वे देवाः देवता । त्रिष्टुप् छन्दः[1] ।

प्र मे॑ विवि॒क्वाँ अ॑विदन्मनी॒षां धे॒नुं चर॑न्तीं॒ प्रयु॑ता॒मगो॑पाम् ।
स॒द्यश्चि॒द् या दु॑दु॒हे भूरि॑ धा॒सेरिन्द्र॒स्तद॒ग्निः प॑नि॒तारो॑ अस्याः ॥ १ ॥

प्र । मे॒ । वि॒वि॒क्वान् । अ॒वि॒द॒त् । म॒नी॒षाम् । धे॒नुम् । चर॑न्तीम् । प्रऽयु॑ताम् । अगो॑पाम् ।
स॒द्यः । चि॒त् । या । दु॒दु॒हे । भूरि॑ । धा॒सेः । इन्द्रः॑ । तत् । अ॒ग्निः । प॒नि॒तारः॑ । अ॒स्याः ॥१॥

वेङ्कट० विश्वामित्रः । प्र जानातु[2] मम गुणदोषविवेचनसमर्थः, पूजनसमर्थाम् धेनुम्, बन्धायुता प्रयुता विमुक्ता[3], विमुक्ताम् तृणानि भक्षयन्तीम् अगोपनीयाम् । सद्यः एव या दोग्धि बहु अन्नस्य । तत् च दुग्धम् अस्याः [4]इन्द्रः अग्निः[4] इत्यादयो देवाः स्तोतारो भवन्तीति । स्तुतिवाचः प्रवृत्ताया माधुर्यम् इन्द्रादयः स्तुवन्ति, सुष्ठु त्वया स्तुतमित्यर्थः ॥ १ ॥

इन्द्रः॒ सु पू॒षा वृष॑णा सु॒हस्ता॑ दि॒वो न प्री॒ताः श॑श॒यं दु॑दु॒ह्रे ।
विश्वे॒ यद॑स्यां र॒णय॑न्त दे॒वाः प्र वोऽत्र॑ वसवः सु॒म्नम॑श्याम् ॥ २ ॥

इन्द्रः॑ । सु । पू॒षा । वृष॑णा । सु॒ऽहस्ता॑ । दि॒वः । न । प्री॒ताः । श॒श॒यम् । दु॒दु॒ह्रे ।
विश्वे॑ । यत् । अ॒स्याम् । र॒णय॑न्त । दे॒वाः । प्र । वः॒ । अत्र॑ । व॒स॒वः॒ । सु॒म्नम् । अ॒श्या॒म् ॥२॥

वेङ्कट० इन्द्रः पूषा वर्षितारावश्विनौ च शोभनहस्तौ अस्याः [5]धेनोः स्तनं[5] सुष्ठु दुहन्ति, यथा प्रीताः अमी दिवः स्तनम् मेघम् दुहन्ति । यस्मात् अस्याम् धेन्वाम् विश्वे अपि[2] देवाः रमन्ते, तस्मात्[6] अस्यां धेन्वाम् हे वासयितारः देवाः! [2]युष्मदीयम् सुखम् अहम् प्रकर्षेण[5] प्राप्नुयाम् ॥२॥

या जा॒मयो॒ वृष्ण॑ इ॒च्छन्ति॑ श॒क्तिं न॑म॒स्यन्ती॑र्जानते॒ गर्भ॑म॒स्मिन् ।
अच्छा॑ पु॒त्रं धे॒नवो॑ वाव॒शा॒ना म॒हश्च॑रन्ति॒ बिभ्र॑तं॒ वपूं॑षि ॥ ३ ॥

याः । जा॒मयः॑ । वृष्णे॑ । इ॒च्छन्ति॑ । श॒क्तिम् । न॒म॒स्यन्तीः॑ । जा॒न॒ते॒ । गर्भ॑म् । अ॒स्मिन् ।
अच्छ॑ । पु॒त्रम् । धे॒नवः॑ । वा॒व॒शा॒नाः । म॒हः । च॒र॒न्ति॒ । बिभ्र॑तम् । वपूं॑षि ॥ ३ ॥

वेङ्कट० जामयः जनयन्त्यास्वपत्यम्[7] इति यास्कः ( ३,६ ) । याः जामयः[6] स्त्रियः सेक्त्रे पुरुषाय पुत्रम् इच्छन्ति, तास्तं[8] परिचरन्त्यः तस्मिन् [9]वृष्टिगर्भम् जनयन्ति, तदिदं देवकृतम्[9] । तथा धेनवः च[9] पुत्रम् वत्सम् कामयमानाः तदर्थं महान्ति रूपाणि बिभ्रतम् पेशलमृषभम् स्वयमेव आचरन्ति, एतच्च देवकृतमिति ॥ ३ ॥

---

१-१. नास्ति मूको. २. जानन्तु क. ३. नास्ति वि[1] लपं. ४-४. इन्द्राग्निः मूको. ५-५. नास्ति वि[2] अ[1]. ६. नास्ति मूको. ७. °यन्त्या स्वप° वि[1] लपं; °यन्त्याः स्वप° वि[2] अ[1] द. ८. तास्ताः वि[1] कपं. ९. नास्ति वि[2] अ[1].

अच्छा विवक्मि रोदसी सुमेके ग्राव्णो युजानो अध्वरे मनीषा ।
इमा उ ते मनवे भूरिवारा ऊर्ध्वा भवन्ति दर्शता यजत्राः ॥४॥

अच्छ । विवक्मि । रोदसी इति । सुमेके इति सुऽमेके । ग्राव्णः । युजानः । अध्वरे । मनीषा ।
इमाः । ऊँ इति । ते । मनवे । भूरिऽवाराः । ऊर्ध्वाः । भवन्ति । दर्शताः । यजत्राः ॥ ४ ॥

**वेङ्कट०** [1]अवशिष्टा आग्नेय्यः । द्यावापृथिवी[1] शोभनमात्रे लक्षीकृत्य स्तुतीः अहम्† विवक्मि । सोमाभिषवग्राव्णः यज्ञे युञ्जानः स्तुतिभिः सह शब्दमुच्चारयन् दिवं च पृथिवीं चाभ्युच्चरति । हे अग्ने! [2]तुभ्यम् मननकुशलाय इमाः स्तुतयः बहुभिर्वरणीयाः‡[2] दर्शनीयाः यजनकुशलाः ऊर्ध्वाः भवन्ति, मत्त उद्गच्छन्तीत्यर्थः ॥ ४ ॥

या ते जिह्वा मधुमती सुमेधा अग्ने देवेषूच्यत उरूची ।
तयेह विश्वाँ अवसे यजत्राना सादय पायया चा मधूनि ॥ ५ ॥

या । ते । जिह्वा । मधुऽमती । सुऽमेधाः । अग्ने । देवेषु । उच्यते । उरूची ।
तया । इह । विश्वान् । अवसे । यजत्रान् । आ । सादय । पायय । च । मधूनि ॥ ५ ॥

**वेङ्कट०** या तव जिह्वा[3], 'जिह्वा' ( निघ १,११ ) इति वाङ्नामसु, रसवती सुसारा हे अग्ने! देवान् प्रति उच्यते [3]बहूनञ्चन्ती† । ताम् विश्वान् रक्षणाय[3] यजनीयान् देवान् आ सादय पायय च सोमान्[4] । ज्वाला वा[5] जिह्वा । यां तवैवंविधां वदन्ति शोभनप्रज्ञाहेतुमिति तदानीं मधुमत्त्वं स्वादूकरणादिति ॥ ५ ॥

या ते अग्ने पर्वतस्येव धारासश्चन्ती पीपयद् देव चित्रा ।
तामस्मभ्यं प्रमतिं जातवेदो वसो रास्व सुमतिं विश्वजन्याम् ॥ ६ ॥

या । ते । अग्ने । पर्वतस्यऽइव । धारा । असश्चन्ती । पीपयत् । देव । चित्रा ।
ताम् । अस्मभ्यम् । प्रऽमतिम् । जातऽवेदः । वसो इति । रास्व । सुऽमतिम् । विश्वऽजन्याम् ॥

**वेङ्कट०** या [6]सुमतिः तव हे अग्ने! पर्वतस्य इव[6] निर्झरधारा अनवरतं प्रवृत्ता आप्याययति[6] स्तोतॄन् देव! चित्रा, ताम् अस्मभ्यम् प्रमतिम् हे जातधन वासयितः! देहि शोभनाम् सर्वजनहिताम्[7] ॥ ६ ॥

[8]इति तृतीयाष्टके चतुर्थाध्याये द्वितीयो वर्गः[8] ॥

---

१-१. नास्ति वि[2] अ[1]. † नास्ति वि[1] ल लपं. ‡ °ण्याय वि[1] लपं. २. नास्ति मूको. ३-३. नास्ति वि[2] अ[1]. † °ती ल. ४. सोमम् वि[1] लपं. ५. व मूको. ६. °प्यायति° वि[1]. ७. सर्वजन...वि[2] अ[1]; सर्वहिताम् वि[1] ल लपं. ८-८. नास्ति मूको.

[ ५८ ]

[1]विश्वामित्रो गाथिन ऋषिः। अश्विनौ देवता। त्रिष्टुप् छन्दः[1]।

धेनुः प्रत्नस्य काम्यं दुहानान्तः पुत्रश्चरति दक्षिणायाः।
आ द्योतनिं वहति शुभ्रयामोषसः स्तोमो अश्विनावजीगः ॥ १ ॥

धेनुः। प्रत्नस्य। काम्यम्। दुहाना। अन्तरिति। पुत्रः। चरति। दक्षिणायाः।
आ। द्योतनिम्। वहति। शुभ्रऽयामा। उषसः। स्तोमः। अश्विनौ। अजीगरिति ॥ १ ॥

वेङ्कट० काचित् 'धेनुः प्रत्नस्य' अग्नेर्वत्सस्य काम्यम् पयः अग्निहोत्राख्यम् दुहाना भवति। सः पुत्रः तस्या वर्धयिव्या मध्ये चरति। स शोभनगमनो वत्सः दीप्तिम् आ वहति इत्युषसमाह। अस्यां वेलायामुषसि[2] प्रवृत्तः स्तोमः अश्विनौ उज्जहार इति स्तुतिश्रवणार्थं निर्गमयतीत्यर्थः ॥ १ ॥

सुयुग् वहन्ति प्रति वामृतेनोर्ध्वा भवन्ति पितरेव मेधाः।
जरेथामस्मद् वि पणेर्मनीषां युवोरवश्चकृमा यातमर्वाक् ॥ २ ॥

सुऽयुक्। वहन्ति। प्रति। वाम्। ऋतेन। ऊर्ध्वाः। भवन्ति। पितराऽइव। मेधाः।
जरेथाम्। अस्मत्। वि। पणेः। मनीषाम्। युवोः। अवः। चकृम। आ। यातम्। अर्वाक् ॥ २ ॥

वेङ्कट० यज्ञेन हेतुना सुयुक्ता अश्वाः वाम् प्रति वहन्ति, ऊर्ध्वाः च भवन्ति स्तोतॄणां प्रज्ञावन्तः[3] स्तोत्रार्थम् यथा पुत्रं दृष्ट्वा पितरावुत्तिष्ठतः। तौ युवामस्माकम् शत्रोः अभिलषितं विविधं जीर्णं कुरुतम्। वयं युवयोः अवनसाधनं स्तोमम् कुर्मः, आ[4] गच्छतम् अभिमुखम् ॥ २ ॥

सुयुग्भिरश्वैः सुवृता रथेन दस्राविमं शृणुतं श्लोकमद्रेः।
किमङ्ग वां प्रत्यवर्तिं गमिष्ठाहुर्विप्रासो अश्विना पुराजाः ॥ ३ ॥

सुयुक्ऽभिः। अश्वैः। सुऽवृता। रथेन। दस्रौ। इमम्। शृणुतम्। श्लोकम्। अद्रेः।
किम्। अङ्ग। वाम्। प्रति। अवर्तिम्। गमिष्ठा। आहुः। विप्रासः। अश्विना। पुराऽजाः ॥ ३ ॥

वेङ्कट० शोभनयोगैः अश्वैः शोभनावर्तनेन च रथेन आगत्य हे दस्रौ! इमम् शृणुतम् श्लोकम् श्रद्दधानस्य स्तोतुः। किम् क्षिप्रमेव वाम् मनुष्याणाम् अवर्तिम् अजीवनम् प्रति गन्तृतरौ आहुः मेधाविनः हे अश्विनौ! पूर्वकालजाताः, किमिति प्रश्ने, एवं वदन्ति, तथा सति इतोऽकं प्रत्यागच्छतमिति ॥ ३ ॥

---

१-१. नास्ति मूको. २. नास्ति वि'. ३. प्रज्ञापयतः वि'' अ' लपं; °वतः ल. ४-४. अभि° वि' लपं.

आ मन्येथामा गतं कच्चिदेवैर्विश्वे जनासो अश्विना हवन्ते ।
इमा हि वां गोऋजीका मधूनि प्र मित्रासो न ददुरुस्रो अग्रे ॥ ४ ॥

आ । मन्येथाम् । आ । गतम् । कत् । चित् । एवैः । विश्वे । जनासः । अश्विना । हवन्ते ।
इमा । हि । वाम् । गोऽऋजीका । मधूनि । प्र । मित्रासः । न । ददुः । उस्रः । अग्रे ॥ ४ ॥

वेङ्कट० आभिमुख्येन अथास्माकं स्तुतिं बुध्यतम्, आगच्छतं च कदाचित् गमनसाधनरथैः। सर्वे एव जनाः अश्विनावेव हवन्ते। किंच इमानि हि युवाभ्याम् गोमिश्रणानि सोममयानि मधूनि जनाः प्रयच्छन्ति यथा मित्रेभ्यो मित्राणि प्रयच्छन्ति धनानि[1]। तदाऽऽदित्यश्च प्राच्यां दिशि प्रादुर्भवति च स भवतोः काल इति ॥ ४ ॥

तिरः पुरू चिदश्विना रजांस्याङ्गूषो वां मघवाना जनेषु ।
एह यातं पथिभिर्देवयानैर्दस्राविमे वां निधयो मधूनाम् ॥ ५ ॥

तिरः । पुरु । चित् । अश्विना । रजांसि । आङ्गूषः । वाम् । मघऽवाना । जनेषु ।
आ । इह । यातम् । पथिऽभिः । देवऽयानैः । दस्रौ । इमे । वाम् । निऽधयः । मधूनाम् ॥ ५ ॥

वेङ्कट० 'तिरः इति प्राप्तस्य' इति यास्कः ( ३,२० )। हे अश्विनौ![2] बहूनि औषधानि तेजांसि प्रादुर्भवन्ति। स्तोमश्च वाम् हे धनवन्तौ! स्तोतृषु वर्तते। तथा सति इह आगच्छतम् पथिभिः देवयानैः, हे दस्रौ! इमे वाम् सोमानाम् निधयः। निधयः[3] पात्रेषु गृहीताः सोमाः ॥ ५ ॥

[4]इति तृतीयाष्टके चतुर्थाध्याये तृतीयो वर्गः[4] ॥

पुराणमोकः सख्यं शिवं वां युवोर्नरा द्रविणं जह्नाव्याम् ।
पुनः कृण्वानाः सख्या शिवानि मध्वा मदेम सह नू समानाः ॥ ६ ॥

पुराणम् । ओकः । सख्यम् । शिवम् । वाम् । युवोः । नरा । द्रविणम् । जह्नाव्याम् ।
पुनरिति । कृण्वानाः । सख्या । शिवानि । मध्वा । मदेम । सह । नु । समानाः ॥ ६ ॥

वेङ्कट० जह्नोरपत्यभूतायां कुशिकायां प्रजायां युवयोः नरा![1] पुराणम् ओकः[5] सेवनं तथा सख्यम् च, तस्यां कल्याणं भवति तथा[6] युवयोः धनमपि तस्यामेव विसृज्यते। वयं च जह्नोरपत्यभूताः पुनः युवाभ्यां सख्यानि शिवानि कृण्वानाः सोमेन हे अश्विनौ! मदेम[7] सह क्षिप्रम् समानमनस्काः[8] ॥ ६ ॥

अश्विना वायुना युवं सुदक्षा नियुद्भिश्च सजोषसा युवाना ।
नासत्या तिरोअह्न्यं जुषाणा सोमं पिबतमस्रिधा सुदानू ॥ ७ ॥

---

१. नास्ति वि[१] लपं. २. °ना वि[१] अ[१]. ३. नास्ति मूको. ४-४. नास्ति मूको. ५. मातः वि[१] लपं. ६. यथा वि[१]. ७. मदे वि[१] लपं अ[१]. ८. सहमान° वि[१] लपं.

अश्विना । वायुना । युवम् । सुऽदक्षा । नियुत्ऽभिः । च । सऽजोषसा । युवाना ।
नासत्या । तिरःऽअह्न्यम् । जुषाणा । सोमम् । पिबतम् । अस्रिधा । सुदानू इति सुऽदानू ॥७॥

वेङ्कट० हे अश्विनौ! युवाम् वायुना सह हे शोभनबलौ! नियुद्भिः च सहितौ हे युवानौ[१] नासत्यौ! तिरोअह्न्यम् सोमम् पिबतम्[२] प्रीयमाणौ अक्षयौ[३] हे शोभनदानौ! ॥ ७ ॥

अश्विना परि वामिषः पुरूचीरीयुर्गीर्भिर्यतमाना अमृध्राः ।
रथो ह वामृतजा अद्रिजूतः परि द्यावापृथिवी याति सद्यः ॥ ८ ॥

अश्विना । परि । वाम् । इषः । पुरूचीः । ईयुः । गीःऽभिः । यतमानाः । अमृध्राः ।
रथः । ह । वाम् । ऋतऽजाः । अद्रिऽजूतः । परि । द्यावापृथिवी इति । याति । सद्यः ॥ ८ ॥

वेङ्कट० [४]हे अश्विनौ![४] परि गच्छन्ति वाम् अन्नानि बहुव्यञ्जनानि[५] मन्त्रैः सह यतमानानि रक्षोभिरहिंसितानि । यततिर्गतिकर्मा ( तु. निघ २,१४ )। रथः च युवयोः दिवसकरणाय जातः शिलोच्चयेनाकृष्टः परि गच्छति द्यावापृथिवी सद्यः एकेनैवाह्ना । तत्र मन्त्रः— 'न्यघ्न्यस्य मूर्धनि' ( ऋ १,३०,१९ ) इति ॥ ८ ॥

अश्विना मधुषुत्तमो युवाकुः सोमस्तं पातमा गतं दुरोणे ।
रथो ह वां भूरि वर्पः करिक्रत् सुतावतो निष्कृतमागमिष्ठः ॥ ९ ॥

अश्विना । मधुसुत्ऽतमः । युवाकुः । सोमः । तम् । पातम् । आ । गतम् । दुरोणे ।
रथः । ह । वाम् । भूरि । वर्पः । करिक्रत् । सुतऽवतः । निःऽकृतम् । आऽगमिष्ठः ॥ ९ ॥

वेङ्कट० हे अश्विनौ! मधुरसस्यातिशयेन सोता युवामेव कामयमानः सोमः भवति, तम् पिबतम् आ गच्छतं च गृहे। रथः ह वाम् बहु रूपम् कुर्वन् सुतवतः यजमानस्य निष्कृतम् सोमम् अतिशयेन आगन्तेति ॥ ९ ॥

[४]इति तृतीयाष्टके चतुर्थाध्याये चतुर्थो वर्गः[४] ॥

## [ ५९ ]

[६]विश्वामित्रो गाथिन ऋषिः । मित्रो देवता । आदितः पञ्च त्रिष्टुभः छन्दांसि, शिष्टाश्चतस्रो गायत्र्यः[६] ।

मित्रो जनान् यातयति ब्रुवाणो मित्रो दाधार पृथिवीमुत द्याम् ।
मित्रः कृष्टीरनिमिषाभि चष्टे मित्राय हव्यं घृतवज्जुहोत ॥ १ ॥

---

१. नास्ति लपं. २. प्रीणयन लपं. ३. 'यौ युवाम् मूको. ४-४. नाति पुराणा वि' लप. ५. 'ह्वजना° वि'' अ'. ६-६. नास्ति मूको.

मित्रः । जनान् । यातयति । ब्रुवाणः । मित्रः । दाधार । पृथिवीम् । उत । द्याम् ।
मित्रः । कृष्टीः । अनिऽमिषा । अभि । चष्टे । मित्राय । हव्यम् । घृतऽवत् । जुहोत ॥ १ ॥

**वेङ्कट०** [1]प्रातः कार्यार्थिनो[1] [2]जनान् निर्गमयति[2] मित्रः स्तूयमानः शब्दं कुर्वन् । स एव द्यावापृथिवी बिभर्त्ति । मित्रः एव मनुष्यान् अनिमेषेण अभि पश्यति, तस्मै मित्राय हविः घृतवत् जुहोत[3] ॥ १ ॥

प्र स मित्र मर्तो अस्तु प्रयस्वान् यस्त आदित्य शिक्षति व्रतेन ।
न हन्यते न जीयते त्वोतो नैनमंहो अश्नोत्यन्तितो न दूरात् ॥२॥

प्र । सः । मित्र । मर्तः । अस्तु । प्रयस्वान् । यः । ते । आदित्य । शिक्षति । व्रतेन ।
न । हन्यते । न । जीयते । त्वाऽऊतः । न । एनम् । अंहः । अश्नोति । अन्तितः । न । दूरात् ॥

**वेङ्कट०** [4]हे मित्र! सः मर्त्यः प्रकर्षेण अन्नवान् अस्तु, यः[5] तुभ्यम्[6] हे अदितेः पुत्र! हविः प्रयच्छति यज्ञे सत्यादिना व्रतेन युक्तः । न शत्रुभिः हन्यते, न च जीयते त्वया रक्षितः, न च[7] एनम् रक्षः व्याप्नोति अन्तिकतः दूरात् वा ॥ २ ॥

अनमीवास इळया मदन्तो मितज्ञवो वरिमन्ना पृथिव्याः ।
आदित्यस्य व्रतमुपक्षियन्तो वयं मित्रस्य सुमतौ स्याम ॥ ३ ॥

अनमीवासः । इळया । मदन्तः । मितऽज्ञवः । वरिमन् । आ । पृथिव्याः ।
आदित्यस्य । व्रतम् । उपऽक्षियन्तः । वयम् । मित्रस्य । सुऽमतौ । स्याम ॥ ३ ॥

**वेङ्कट०** अराक्षसाः अन्नेन मदन्तः ज्ञायमानजानुकाः प्रकाशसद्भावाद् गच्छन्तः पृथिव्याः विस्तीर्णे देशे वयम् अदितेः पुत्रस्य व्रतम् उपेत्य निवसन्तः मित्रस्य [6]कल्याण्यां मतौ[6] स्याम ॥ ३ ॥

अयं मित्रो नमस्यः सुशेवो राजा सुक्षत्रो अजनिष्ट वेधाः ।
तस्य वयं सुमतौ यज्ञियस्यापि भद्रे सौमनसे स्याम ॥ ४ ॥

अयम् । मित्रः । नमस्यः । सुऽशेवः । राजा । सुऽक्षत्रः । अजनिष्ट । वेधाः ।
तस्य । वयम् । सुऽमतौ । यज्ञियस्य । अपि । भद्रे । सौमनसे । स्याम ॥ ४ ॥

**वेङ्कट०** अयम्[7] मित्रः नमस्कार्यः सुसुखः अस्माकं[8] सर्वेषां राजा सुबलः प्रादुरभूत् विधाता सर्वस्य । तस्य वयम् यज्ञार्हस्य स्याम तथा भजनीये सौमनसे च । [2]मतिमनसोरल्पो भेदः[2] ॥४॥

---

१-१. प्रातःकालका° वि[2] अ[1]. २-२. नास्ति वि[2] अ[1]. ३. जुहोति मूको. ४. नास्ति अ[1]. ५. वा लपं. ६-६. नास्ति वि[1] लपं. ७. नास्ति वि[2] अ[1]. ८. नास्ति वि[1] लपं.

म॒हाँ आ॑दि॒त्यो नम॑सोप॒सद्यो॑ यात॒यज्ज॑नो गृण॒ते सु॒शेवः॑ ।
तस्मा॑ ए॒तत् पन्य॑तमाय॒ जुष्ट॑म॒ग्नौ मि॒त्राय॑ ह॒विरा जु॑होत ॥ ५ ॥

म॒हान् । आ॒दि॒त्यः । नम॑सा । उ॒प॒ऽसद्यः॑ । या॒त॒यत्ऽज॑नः । गृ॒ण॒ते । सु॒ऽशेवः॑ ।
तस्मै॑ । ए॒तत् । पन्य॑तमाय । जुष्ट॑म् । अ॒ग्नौ । मि॒त्राय॑ । ह॒विः । आ । जु॒हो॒त ॥ ५ ॥

वेङ्कट० महान् आदित्यः नमस्कारेण उपसदनीयः यातयज्जनः, निष्क्रामयति प्रकाशकरणात्[1] मनुष्यान्, स्तुवते च सुसुखः । [2]तस्मै एतत्[2] स्तुत्यतमाय पर्याप्तम् अग्नौ मित्राय हविः आ जुहोत इति ॥ ५ ॥

[3]इति तृतीयाष्टके चतुर्थाध्याये पञ्चमो वर्गः[3] ॥

मि॒त्रस्य॑ चर्षणी॒धृतोऽवो॑ दे॒वस्य॑ सान॒सि । द्यु॒म्नं चि॒त्रश्र॑वस्तमम् ॥ ६ ॥

मि॒त्रस्य॑ । च॒र्ष॒णि॒ऽधृतः॑ । अवः॑ । दे॒वस्य॑ । सा॒न॒सि । द्यु॒म्नम् । चि॒त्रश्र॑वःऽतमम् ॥ ६ ॥

वेङ्कट० मित्रस्य मनुष्याणां धारयितुः देवस्य रक्षणं भजनीयम् द्युम्नम्[4], 'द्युम्नं द्योततेः, यशः' इति यास्कः ( ५,५ ), [2]तत् चित्रकीर्तिः अतिशेते[2] ॥ ६ ॥

अ॒भि यो म॑हि॒ना दिवं॑ मि॒त्रो ब॒भूव॑ स॒प्रथाः॑ । अ॒भि श्रवो॑भिः पृथि॒वीम् ॥७॥

अ॒भि । यः । म॒हि॒ना । दिव॑म् । मि॒त्रः । ब॒भूव॑ । स॒ऽप्रथाः॑ । अ॒भि । श्रवः॑ऽभिः । पृ॒थि॒वीम् ॥७॥

वेङ्कट० अभि बभूव यः[5] महत्त्वेन दिवम् मित्रः सर्वतः पृथुतमः । अपि च कीर्तिभिः पृथिवीम् अभि अभवदिति[6] ॥ ७ ॥

मि॒त्राय॒ पञ्च॑ येमिरे॒ जना॑ अ॒भिष्टि॑शवसे । स दे॒वान् विश्वा॑न् बिभर्ति ॥८॥

मि॒त्राय॑ । पञ्च॑ । ये॒मि॒रे॒ । जनाः॑ । अ॒भिष्टि॑ऽशवसे । सः । दे॒वान् । विश्वा॑न् । बि॒भ॒र्ति॒ ॥ ८ ॥

वेङ्कट० मित्राय पञ्च जनाः आत्मानं नियच्छन्ति[7] शत्रूणाम् अभ्येषणशीलबलाय, सः देवान् सर्वान् धारयति ॥ ८ ॥

मि॒त्रो दे॒वेष्वा॒युषु॒ जना॑य वृ॒क्तब॑र्हिषे । इष॑ इ॒ष्टव्र॑ता अकः ॥ ९ ॥

मि॒त्रः । दे॒वेषु॑ । आ॒युषु॑ । जना॑य । वृ॒क्तऽब॑र्हिषे । इषः॑ । इ॒ष्टऽव्र॑ताः । अ॒क॒रित्य॑कः ॥ ९ ॥

---

१. प्राशकर° मूको. २-२. नास्ति वि[2] अ[1]. ३-३. नास्ति मूको. ४. नास्ति मूको. ५. नास्ति वि[1]. ६. अवददिति मूको. ७. °यति लपं; °यच्छति वि[1,2] अ[1] ल लपं.

वेङ्कट० देवमनुष्यप्रीणनार्थं यो जनो वृक्तबर्हिर्भवति[1], तस्मै मित्रः अभिलषितकर्मसाधनानि भद्राणि करोति ॥ ९ ॥

[2]इति तृतीयाष्टके चतुर्थाध्याये षष्ठो वर्गः[2] ॥

[ ६० ]

[2]विश्वामित्रो गाथिन ऋषिः। ऋभवो देवता, पञ्चमीसप्तम्योः इन्द्र ऋभवश्च जगती छन्दः[2]।

**इहेह वो मनसा बन्धुता नर उशिजो जग्मुरभि तानि वेदसा ।**
**याभिर्मायाभिः प्रतिजूतिवर्पसः सौधन्वना यज्ञियं भागमानश ॥ १ ॥**

इहऽइह । वः । मनसा । बन्धुता । नरः । उशिजः । जग्मुः । अभि । तानि । वेदसा ।
याभिः । मायाभिः । प्रतिजूतिऽवर्पसः । सौधन्वनाः । यज्ञियम् । भागम् । आनश ॥ १ ॥

वेङ्कट० हे नरः![3] युष्माकम् बन्धुता स्तोत्रम् इह च इह च अस्माकम् मनसा सङ्गच्छते, बहूनि कर्माणि स्तुत्यानि प्रादुर्भवन्तीत्यर्थः। तानि च[4] कामयमानाः[5] स्तोतारः अभि गच्छन्ति[6] स्तोतुं प्रज्ञानेन। यैः कर्मभिः मनुष्याणां चक्षूंषि प्रतिगच्छद्रूपास्तेजस्विनः यूयम् हे सुधन्वनः पुत्राः! यज्ञियम् भागम् प्राप्तवन्तः ॥ १ ॥

**याभिः शचीभिश्चमसाँ अपिंशत यया धिया गामरिणीत चर्मणः ।**
**येन हरी मनसा निरतक्षत तेन देवत्वमृभवः समानश ॥ २ ॥**

याभिः । शचीभिः । चमसान् । अपिंशत । यया । धिया । गाम् । अरिणीत । चर्मणः ।
येन । हरी इति । मनसा । निःऽअतक्षत । तेन । देवऽत्वम् । ऋभवः । सम । आनश ॥ २ ॥

वेङ्कट० याभिः प्रज्ञाभिः चमसान् कृतवन्तः। 'एकं चमसं चतुरः कृणोतन' (ऋ १,१६१,२) इति मन्त्रः। यया वा प्रज्ञया चर्मणः गाम् अरिणीत निरगमयत। 'निश्चर्मण ऋभवो गामपिंशत' (ऋ १,११०,८) इति मन्त्रः। येन वा मनसा इन्द्रायाश्वौ कृतवन्तः। तेन सर्वेण कर्मणा यूयम् हे ऋभवः! देवत्वम् संप्राप्ताः ॥ २ ॥

**इन्द्रस्य सख्यमृभवः समानशुर्मनोर्नपातो अपसो दधन्विरे ।**
**सौधन्वनासो अमृतत्वमेरिरे विष्ट्वी शमीभिः सुकृतः सुकृत्यया ॥ ३ ॥**

इन्द्रस्य । सख्यम् । ऋभवः । सम् । आनशुः । मनोः । नपातः । अपसः । दधन्विरे ।
सौधन्वनासः । अमृतऽत्वम् । आ । ईरिरे । विष्ट्वी । शमीभिः । सुऽकृतः । सुऽकृत्यया ॥ ३ ॥

1. °वति यज्ञो हि देवान् मनुष्यांश्च बिभर्ति त° वि[1] अ[1] लपं. २-२. नास्ति मूको. ३. नास्ति लपं. ४. नास्ति वि[1] लपं. ५. °मानः वि[1] लपं. ६. °च्छति वि[1] लपं.

**वेङ्कट०** इन्द्रस्य[1] सख्यम् ऋभवः सम्प्राप्ताः तथा मनुष्यस्य सुधन्वनः पुत्राः सन्तः [2]देववत् सर्वकर्माणि[2] धारयन्ति, यज्ञिया भवन्ति। सुधन्वनः पुत्राः देवत्वम् आभिमुख्येन[3] प्राप्ताः कृत्वा कर्माणि तैः कर्मभिः शोभनकर्मकरणेनैव सुकृतः ॥ ३ ॥

इन्द्रे॑ण याथ स॒रथं॑ सु॒ते सचाँ॒ अथो॒ वशा॑नां भवथा स॒ह श्रि॒या ।
न वः॑ प्रति॒मै सु॑कृ॒तानि॑ वाघत॒ः सौध॑न्वना ऋभवो वी॒र्या॑णि च ॥ ४ ॥

इन्द्रे॑ण । या॒थ॒ । स॒ऽरथ॑म् । सु॒ते । सचा॑ । अथो॒ इति॑ । वशा॑नाम् । भ॒व॒थ॒ । स॒ह । श्रि॒या ।
न । व॒ः । प्र॒ति॒ऽमै । सु॒ऽकृ॒तानि॑ । वा॒घ॒त॒ः । सौध॑न्वनाः । ऋ॒भ॒व॒ः । वी॒र्या॑णि । च॒ ॥ ४ ॥

**वेङ्कट०** इन्द्रेण सह गच्छथ[4] समानरथं यज्ञे । अपि च कामयमानानाम्[5] [6]श्रिया सह भवथ । न युष्माकं प्रतिमातुं शक्यानि सुकृतानि† हे वहनशीलाः![6] सौधन्वनाः ऋभवः! एवं वीर्याणि अपि ॥ ४ ॥

इन्द्र॑ ऋभु॒भि॑र्वाज॑वद्भिः॒ समु॑क्षितं सु॒तं सोम॒मा वृ॑षस्वा॒ गभ॑स्त्योः ।
धि॒येषि॒तो म॑घवन् दा॒शुषो॑ गृ॒हे सौ॑धन्व॒नेभि॑ः स॒ह म॑त्स्वा॒ नृभि॑ः ॥ ५ ॥

इन्द्र॑ । ऋ॒भु॒ऽभिः॑ । वाज॑वत्ऽभिः । सम्ऽउ॑क्षितम् । सु॒तम् । सोम॑म् । आ । वृ॒ष॒स्व॒ । गभ॑स्त्योः ।
धि॒या । इ॒षि॒तः । म॒घ॒ऽव॒न् । दा॒शुषः॑ । गृ॒हे । सौ॒ध॒न्व॒नेभिः॑ । स॒ह । म॒त्स्व॒ । नृऽभिः॑ ॥ ५ ॥

**वेङ्कट०** अवशिष्टानामिन्द्रश्च देवता। हे इन्द्र! वाजेन आत्रा तद्वद्भिः ऋभुभिः सह पात्रेषु[7] समुक्षितम् सुतम् इमम् सोमम् आसिञ्च स्वजठरे अध्वर्योर्बाहुभ्यामादाय। हे मघवन्! कर्मणा प्रेषितः यजमानस्य गृहे सुधन्वनः पुत्रैः सह मत्स्व मनुष्यैः ॥ ५ ॥

इन्द्र॑ ऋभु॒मान् वाज॑वान् मत्स्वे॒ह नो॒ऽस्मिन्त्सव॑ने॒ शच्या॑ पुरुष्टुत ।
इ॒मानि॒ तुभ्यं॒ स्वस॑राणि येमिरे व्र॒ता दे॒वानां॒ मनु॑षश्च॒ धर्म॑भिः ॥ ६ ॥

इन्द्र॑ । ऋ॒भु॒ऽमान् । वाज॑ऽवान् । म॒त्स्व॒ । इ॒ह । न॒ः । अ॒स्मिन् । सव॑ने । शच्या॑ । पु॒रु॒ऽस्तु॒त॒ ।
इ॒मानि॑ । तुभ्य॑म् । स्वस॑राणि । ये॒मि॒रे॒ । व्र॒ता । दे॒वाना॑म् । मनु॑षः । च॒ । धर्म॑ऽभिः ॥ ६ ॥

**वेङ्कट०** [1]हे इन्द्र! ऋभुणा युक्तः वाजेन च त्वम् मत्स्व अस्माकम् इह अस्मिन् यज्ञे[1] तृतीयसवने शच्या सह देव्या हे बहुभिः स्तुत!। तत्र प्रीत्यर्थमेवेन्द्रः इमानि अहानि मनुष्याणां कर्मभिः सह देवानाम् कर्माणि च यच्छन्ति यज्ञियानिति ॥ ६ ॥

---

१. इन्द्रेण वि[2] अ[1]; इन्द्रे वि[2] अ[1]. २-२. देवत्स° वि[2] अ[1]. ३. °मुखेन ल. ४. आग° वि[2] अ[1]. ५. °माना वि[2] अ[1]. ६-६. नास्ति वि[2] अ[1]. † नास्ति वि[1] लपं. ७. पात्रे वि[2] अ[1].

इन्द्र॑ ऋभुभि॑र्वा॒जिभि॑र्वा॒जय॑न्नि॒ह स्तोमं॑ जरि॒तुरुप॑ याहि य॒ज्ञिय॑म् ।
श॒तं केते॑भिरिषि॒रेभि॑रा॒यवे॑ स॒हस्र॑णीथो अध्व॒रस्य॒ होम॑नि ॥ ७ ॥

इन्द्र॑ । ऋभुऽभिः॑ । वा॒जिऽभिः॑ । वा॒जय॑न् । इ॒ह । स्तोम॑म् । ज॒रि॒तुः । उप॑ । या॒हि॒ । य॒ज्ञिय॑म् ।
श॒तम् । केते॑भिः । इ॒षि॒रेभिः॑ । आ॒यवे॑ । स॒हस्र॑ऽनीथः । अ॒ध्व॒रस्य॑ । होम॑नि ॥ ७ ॥

वेङ्कट० [1]हे इन्द्र![1] वाजेन तद्वद्भिः ऋभुभिः इह वाजं कुर्वन् स्तोमम् स्तोतुः[2] उप गच्छ यज्ञार्हं कल्याणम् । [3]शतेन विचिन्तितेन इष्टेन सह मनुष्याय बहुनयन.[3] भवसि त्वम् यज्ञस्य सम्बन्धिनि होमे ॥ ७ ॥

[4]इति तृतीयाष्टके चतुर्थाध्याये सप्तमो वर्गः[4] ॥

[ ६१ ]

[4]विश्वामित्रो गाथिन ऋषिः । उषा देवता । त्रिष्टुप् छन्दः[4] ।

उषो॒ वाजे॑न वाजिनि॒ प्रचे॑ताः॒ स्तोमं॑ जुषस्व गृण॒तो म॑घोनि ।
पु॒राणी दे॑वि युव॒तिः पुरं॑धि॒रनु॑ व्र॒तं च॑रसि विश्ववारे ॥ १ ॥

उष॑ः । वाजे॑न । वा॒जि॒नि॒ । प्रऽचे॑ताः । स्तोम॑म् । जु॒ष॒स्व॒ । गृ॒ण॒तः । म॒घो॒नि॒ ।
पु॒राणी । दे॒वि॒ । यु॒व॒तिः । पुर॑म्ऽधिः । अनु॑ । व्र॒तम् । च॒र॒सि॒ । वि॒श्व॒ऽवा॒रे॒ ॥ १ ॥

वेङ्कट० हे उषः! हविषा सह अस्य स्तोतुः स्तोमम् च सेवस्व सुमतिस्त्वम् [5]हे अन्नवति धनवति!। हे देवि! पुरातनी तरुणी† बहून्‡[5] धारयित्री त्वं हे विश्वैर्वरणीये! यज्ञं लक्षीकृत्य चरसि ॥ १ ॥

उषो॑ दे॒व्यम॑र्त्या॒ वि भा॑हि च॒न्द्ररथा सू॒नृता॑ ई॒रय॑न्ती ।
आ त्वा॑ वहन्तु सु॒यमा॑सो॒ अश्वा॒ हिर॑ण्यवर्णां पृथु॒पाज॑सो॒ ये ॥ २ ॥

उष॑ः । दे॒वि॒ । अम॑र्त्या । वि । भा॒हि॒ । च॒न्द्रऽर॑था । सू॒नृता॑ः । ई॒रय॑न्ती ।
आ । त्वा॒ । व॒ह॒न्तु॒ । सु॒ऽयमा॑सः । अश्वा॑ः । हिर॑ण्यऽवर्णाम् । पृ॒थु॒ऽपाज॑सः । ये ॥ २ ॥

वेङ्कट० हे उषः देवि! अमर्त्या त्वं व्युच्छ कान्तरथा [3]मनुष्याणां वयसां च वाचः प्रेरयन्ती । त्वाम् आ वहन्तु सुयमाः अश्वाः, हिरण्यसदृशवर्णाः[3] पृथुबलाः ये भवन्तीति ॥ २ ॥

उषः॑ प्रती॒ची भुव॑नानि॒ विश्वो॒र्ध्वा ति॑ष्ठस्य॒मृत॑स्य के॒तुः ।
स॒मा॒नमर्थं॑ चरणी॒यमा॑ना च॒क्रमि॑व नव्य॒स्या व॑वृत्स्व ॥ ३ ॥

---

१-१. इन्द्र हे वि[1] लपं. २. स्तोतुम् वि[2] अ[1] लपं. ३-३. नास्ति वि[2] अ[1]. ४-४. नास्ति मूको. ५-५. अन्न…बहून् वि[2] अ[1]. † °णा वि[1] ल लपं. ‡ नास्ति वि[1] लपं.

उषः । प्रतीची । भुवनानि । विश्वा । ऊर्ध्वा । तिष्ठसि । अमृतस्य । केतुः ।
समानम् । अर्थम् । चरणीयमाना । चक्रम्ऽइव । नव्यसि । आ । ववृत्स्व ॥ ३ ॥

वेङ्कट० हे उषः! त्वम् सर्वाण्येव भुवनानि [1]प्रतिमुखा भवन्ती उत्तिष्ठसि सुप्तानामुत्थापनात् । अमृतस्य प्रज्ञापयित्री सा त्वम् एकमेव[1] कार्यमुद्दिश्य जगद्रक्षणात्मकम् अन्वहं चरन्ती चक्रम् इव हे नवतरे! एकरूपा आ ववृत्स्व इति ॥ ३ ॥

अव स्यूमेव चिन्वती मघोन्युषा याति स्वसरस्य पत्नी ।
स्व१र्जनन्ती सुभगा सुदंसा आन्ताद् दिवः पप्रथ आ पृथिव्याः ॥ ४ ॥

अव । स्यूमऽइव । चिन्वती । मघोनी । उषाः । याति । स्वसरस्य । पत्नी ।
स्वः । जनन्ती । सुऽभगा । सुऽदंसाः । आ । अन्तात् । दिवः । पप्रथे । आ । पृथिव्याः ॥ ४ ॥

वेङ्कट० [1]प्रकाशसद्भावात् सर्वे सुखान्यभिलषितानि प्राप्नुवन्ति, तत उषाः सुखं मनुष्याणाम्[1] चिन्वानेव अधः प्राच्यां दिशि प्रादुर्भवति धनवती उषाः अह्नः पत्नी । तमसा तिरोहितं [2]सर्वमेव जनयन्ती सुधना शोभनकर्मा आ† दिवः अन्तात् प्रथिता भवति‡ आ च पृथिव्याः अन्तादिति[2] ॥ ४ ॥

अच्छा वो देवीमुषसं विभातीं प्र वो भरध्वं नमसा सुवृक्तिम् ।
ऊर्ध्वं मधुधा दिवि पाजो अश्रेत् प्र रोचना रुरुचे रण्वसंदृक् ॥ ५ ॥

अच्छ । वः । देवीम् । उषसम् । विऽभातीम् । प्र । वः । भरध्वम् । नमसा । सुवृक्तिम् ।
ऊर्ध्वम् । मधुधा । दिवि । पाजः । अश्रेत् । प्र । रोचना । रुरुचे । रण्वऽसंदृक् ॥ ५ ॥

वेङ्कट० व्युच्छन्तीम् उषसम् देवीम्[1] प्रति यूयं नमस्कारेण सह स्तुतिम् प्र भरध्वम् । पुनः वः इति पूरणम् । ऊर्ध्वम् [3]अश्रेत् †प्रादुरभूत् दिवि† मधुनो धारकं तेजः इत्युषसमाह । प्रादुर्भूतं च तत् रमणीयं दर्शयन् लोकान्[3] प्र रोचयति ॥ ५ ॥

ऋतावरी दिवो अर्कैरबोध्या रेवती रोदसी चित्रमस्थात् ।
आयतीमग्न उषसं विभातीं वाममेषि द्रविणं भिक्षमाणः ॥ ६ ॥

ऋतऽवरी । दिवः । अर्कैः । अबोधि । आ । रेवती । रोदसी इति । चित्रम् । अस्थात् ।
आऽयतीम् । अग्ने । उषसम् । विऽभातीम् । वामम् । एषि । द्रविणम् । भिक्षमाणः ॥ ६ ॥

---

१-१. नास्ति वि[2] अ[1]. † नास्ति वि[1]. ‡ °न्ती क; °ती वि[1] लपं. २. नास्ति मूको.
३-३. नास्ति वि[2] अ[1] †-† दिवि प्रादुरभूत् मूको.

**वेङ्कट०** वाग्भिर्युक्ता दिवः सकाशात् प्रातः प्रबुद्धानां स्तोतॄणां स्तुतिभिर्युक्ता [1]प्रबुध्यते ज्ञायते। ज्ञाता सती धनवतीयम् द्यावापृथिवी चित्रम् †आ तिष्ठति†[1]। तामिमाम् व्युच्छन्तीम् आगच्छन्तीम् हे अग्ने! त्वं वननीयम् अग्निहोत्राख्यं धनं याचमानः एषि ॥ ६ ॥

ऋतस्य॑ बु॒ध्न उ॒षसा॑मिष॒ण्यन् वृषा॑ म॒ही रोद॑सी॒ आ वि॑वेश ।
म॒ही मि॒त्रस्य॒ वरु॑णस्य मा॒या च॒न्द्रेव॑ भा॒नुं वि द॑धे पुरु॒त्रा ॥ ७ ॥

ऋ॒तस्य॑ । बु॒ध्ने । उ॒षसा॑म् । इ॒ष॒ण्यन् । वृषा॑ । म॒ही इति॑ । रोद॑सी॒ इति॑ । आ । वि॒वे॒श ।
म॒ही । मि॒त्रस्य॑ । वरु॑णस्य । मा॒या । च॒न्द्राऽइ॑व । भा॒नुम् । वि । द॒धे॒ । पु॒रु॒ऽत्रा ॥ ७ ॥

**वेङ्कट०** [2]उषसाम् मूले हविः इच्छन् अग्निः कामानां वर्षिता द्यावापृथिवी तेजसा व्याप्नोति[2], प्रज्वलयति उषसीत्यर्थः[3]। अपि वा अह्नः मूले उषसः इच्छन् अग्निः दीप्तः व्याप्नोति द्यावापृथिवी [2]इत्यर्थः। महती मित्रावरुणयोः प्रज्ञा। यथा[4] रात्रौ वरुणश्चन्द्रम् पुरुत्रा बहुषु देशेषु चकार तद्वदुषस्यागतायाम्[4] मित्रस्य माया सूर्यम् [2]अनेकेषु देशेषु वि दधे इति[2] ॥ ७ ॥

[5]इति तृतीयाष्टके चतुर्थाध्याये अष्टमो वर्गः[5] ॥

## [ ६२ ]

[6]विश्वामित्रो गाथिन ऋषिः, अन्त्यस्य तृचस्य जमदग्निर्वा। प्रथमस्य तृचस्य इन्द्रावरुणौ देवता, द्वितीयस्य बृहस्पतिः, तृतीयस्य पूषा, चतुर्थस्य सविता, पञ्चमस्य सोमः, षष्ठस्य मित्रावरुणौ। गायत्री छन्दः, आद्यास्तिस्रस्त्रिष्टुभः[6]।

इ॒मा उ॑ वां भृ॒मयो॒ मन्य॑माना यु॒वाव॑ते॒ न तुज्या॑ अभूवन् ।
क्व१॒॑ त्यदि॑न्द्रावरुणा॒ यशो॑ वां॒ येन॑ स्मा॒ सिनं॒ भर॑थः॒ सखि॑भ्यः ॥ १ ॥

इ॒माः । ऊँ॒ इति॑ । वा॒म् । भृ॒मयः॑ । मन्य॑मानाः । यु॒वाऽव॑ते । न । तुज्याः॑ । अ॒भू॒व॒न् ।
क्व॑ । त्यत् । इ॒न्द्रा॒व॒रु॒णा॒ । यशः॑ । वा॒म् । येन॑ । स्म॒ । सिन॑म् । भर॑थः । सखि॑ऽभ्यः ॥ १ ॥

**वेङ्कट०** [1]भ्रमणशीला अपि इमाः[1] प्रजाः वाम् अर्चन्त्यः अपि युवाभ्यां सदृशाय[6] धनाभावात् दानार्हाः न भवन्ति। [2]हे इन्द्रावरुणौ! क्व तत् यशः युवयोर्गतम्, येन यशसा सखिभ्यः[2] अन्नम् भरथः ॥ १ ॥

अ॒यमु॑ वां पुरु॒तमो॑ र॒यीयञ्छ॑श्वत्त॒मम॑व॑से जोहवीति ।
स॒जोषा॑विन्द्रावरुणा म॒रुद्भि॑र्दि॒वा पृ॑थि॒व्या शृ॑णुतं॒ हवं॑ मे ॥ २ ॥

---

१-१. नास्ति वि[२] अ[१]. †-† अतितिष्ठति वि[१] लपं. २-२ नास्ति वि[२] अ[१]. ३. उषतीत्यर्थः मूको. ४. °गच्छतां लपं ५-५. नास्ति मूको. ६. नास्ति लपं.

अयम् । ऊँ इति । वाम् । पुरुऽतमः । रयिऽयन् । शश्वत्ऽतमम् । अवसे । जोहवीति ।
सऽजोषौ । इन्द्रावरुणा । मरुत्ऽभिः । दिवा । पृथिव्या । शृणुतम् । हवम् । मे ॥ २ ॥

वेङ्कट० अयम् स्तोता रक्षार्थं सर्वदा वाम् आह्वयत्यत्यन्तम् पुरुतमः [1]बहुस्तुतिकः धनमिच्छन् । तथा सति हे इन्द्रावरुणौ![1] द्यावापृथिवीभ्याम् मरुद्भिः च सहितौ युवां मदीयम् आह्वानम् शृणुतम् इति ॥ २ ॥

अस्मे तदिन्द्रावरुणा वसु ष्यादस्मे रयिर्मरुतः सर्ववीरः ।
अस्मान् वरूत्रीः शरणैरवन्त्वस्मान् होत्रा भारती दक्षिणाभिः ॥ ३ ॥

अस्मे इति । तत् । इन्द्रावरुणा । वसु । स्यात् । अस्मे इति । रयिः । मरुतः । सर्वऽवीरः ।
अस्मान् । वरूत्रीः । शरणैः । अवन्तु । अस्मान् । होत्रा । भारती । दक्षिणाभिः ॥ ३ ॥

वेङ्कट० हे इन्द्रावरुणौ! [2]युवयोः तत् प्रसिद्धम् वसु अस्माकम् अस्तु । हे मरुतः![2] अस्माकमेव सर्वैर्वीरैः सहितः रयिः अस्तु । देवपत्न्यश्च अस्मान् एव गृहैः समृद्धधनैः अवन्तु, अस्मान् एव [3]होत्रा भारती च देव्यौ धनैरिति[3] ॥ ३ ॥

बृहस्पते जुषस्व नो हव्यानि विश्वदेव्य । रास्व रत्नानि दाशुषे ॥ ४ ॥

बृहस्पते । जुषस्व । नः । हव्यानि । विश्वऽदेव्य । रास्व । रत्नानि । दाशुषे ॥ ४ ॥

वेङ्कट० [4]हे बृहस्पते! सेवस्व अस्माकम् हव्यानि हे विश्वेभ्यो देवेभ्यो हित!। देहि† च धनानि प्रयच्छते मह्यम्[4] ॥ ४ ॥

शुचिमर्कैर्बृहस्पतिमध्वरेषु नमस्यत । अनाम्योज आ चके ॥ ५ ॥

शुचिम् । अर्कैः । बृहस्पतिम् । अध्वरेषु । नमस्यत । अनामि । ओजः । आ । चके ॥ ५ ॥

वेङ्कट० [5]शुचिम् बृहस्पतिम् दीप्तं हविर्भिः यज्ञेषु परिचरत, ‡तस्य अनमनशीलम्‡ बलम् कामये[5] ॥ ५ ॥

[6]इति तृतीयाष्टके चतुर्थाध्याये नवमो वर्गः[6] ॥

वृषभं चर्षणीनां विश्वरूपमदाभ्यम् । बृहस्पतिं वरेण्यम् ॥ ६ ॥

वृषभम् । चर्षणीनाम् । विश्वऽरूपम् । अदाभ्यम् । बृहस्पतिम् । वरेण्यम् ॥ ६ ॥

वेङ्कट० [1]वर्षितारम् मनुष्याणाम् बहुरूपम्[1] हिंसितुमशक्यम् बृहस्पतिम् वरणीयं नमस्यतेति ॥ ६ ॥

इयं ते पूषन्नाघृणे सुष्टुतिर्देव नव्यसी । अस्माभिस्तुभ्यं शस्यते ॥ ७ ॥

इयम् । ते । पूषन् । आघृणे । सुऽस्तुतिः । देव । नव्यसी । अस्माभिः । तुभ्यम् । शस्यते ॥ ७ ॥

---

१-१. नास्ति वि[२] अ[१]. २-२. त्रुटितम् वि[२] अ[१]. ३-३. नास्ति वि[२] अ[१]. † भेहि लपं. ४-४. नास्ति वि[२] अ[१]. ‡-‡ °स्यादहमान° मूको; तस्यानामशीलं ल प्रस्तावः. ५-५. नास्ति मूको. ६-६. नास्ति वि[१]; त्रुटितम् अ[१].

**वेङ्कट०** हे पूषन्! आगतदीप्ते! [1]देव! नवतरा[1] इयम् शोभना [2]स्तुतिः अस्माभिः त्वत्प्रीत्यर्थम् शस्यते ॥७॥

तां जु॑षस्व॒ गिरं॒ मम॑ वाज॒यन्ती॑मवा॒ धिय॑म् । व॒धू॒युरि॑व॒ योष॑णाम् ॥ ८ ॥

ताम् । जु॒ष॒स्व॒ । गिर॑म् । मम॑ । वा॒ज॒ऽयन्ती॑म् । अ॒व॒ । धिय॑म् । व॒धू॒युःऽइ॑व । योष॑णाम् ॥ ८ ॥

**वेङ्कट०** [2]ताम् मम गिरम्[2] सेवस्व । अन्नमिच्छन्तीम् मम बुद्धिम् अन्नप्रदानेन[3] तर्पय अभिगच्छ वा, वधूयुः वरः । 'सोमो वधूयुरभवत्' (ऋ १०,८५,९) इति मन्त्रः। स यथा योषितं युवतिमभिगच्छति ॥८॥

यो विश्वा॒भि वि॒पश्य॑ति॒ भुव॑ना॒ सं च॒ पश्य॑ति । स नः॑ पू॒षावि॒ता भु॑वत् ॥९॥

यः । विश्वा॑ । अ॒भि । वि॒ऽपश्य॑ति । भुव॑ना । सम् । च॒ । पश्य॑ति । सः । न॒ः । पू॒षा । अ॒वि॒ता । भु॒व॒त् ॥९॥

**वेङ्कट०** [4]यः पूषा सर्वाण्येव भुवनानि[4] अभि विपश्यति, [5]सह च† पश्यति[5] । प्रत्येकं च कामैर्मनुष्यान्[5] योजयति सर्वानपीत्यर्थः । सः पूषा अस्माकम् रक्षकः भवतु ॥ ९ ॥

तत् स॑वि॒तुर्वरे॑ण्यं॒ भर्गो॑ दे॒वस्य॑ धीमहि । धियो॒ यो नः॑ प्रचो॒दया॑त् ॥ १० ॥

तत् । स॒वि॒तुः । वरे॑ण्यम् । भर्गः॑ । दे॒वस्य॑ । धी॒म॒हि॒ । धियः॑ । यः । न॒ः । प्र॒ऽचो॒दया॑त् ॥१०॥

**वेङ्कट०** [7]तत् सवितुः देवस्य वरणीयं तेजः ध्यायेम, यः अस्माकम्[7] बुद्धिम् कर्मसु प्रचोदयति ॥ १० ॥

[6]इति तृतीयाष्टके चतुर्थाध्याये दशमो वर्गः[6] ॥

दे॒वस्य॑ सवि॒तुर्व॒यं वा॑ज॒यन्तः॒ पुरं॑ध्या । भग॑स्य रा॒तिमी॑महे ॥ ११ ॥

दे॒वस्य॑ । स॒वि॒तुः । व॒यम् । वा॒ज॒ऽयन्तः॑ । पुर॑म्ऽध्या । भग॑स्य । रा॒तिम् । ई॒म॒हे॒ ॥ ११ ॥

**वेङ्कट०** देवस्य सवितुः वयम् अन्नमिच्छन्तः प्रज्ञया धनस्य रातिम् याचामहे ॥ ११ ॥

दे॒वं नरः॑ सवि॒तारं॒ विप्रा॑ य॒ज्ञैः सु॑वृ॒क्तिभिः॑ । न॒म॒स्यन्ति॑ धि॒येषि॒ताः ॥ १२ ॥

दे॒वम् । नरः॑ । स॒वि॒तार॑म् । विप्राः॑ । य॒ज्ञैः । सु॒वृ॒क्तिऽभिः॑ । न॒म॒स्यन्ति॑ । धि॒या । इ॒षि॒ताः ॥१२॥

**वेङ्कट०** [8]देवम् विप्राः† मनुष्याः सवितारम् यज्ञैः शोभनस्तुतिभिः[8] परिचरन्ति प्रज्ञया[8] प्रेरिताः ॥ १२ ॥

सोमो॑ जिगाति गातु॒विद् दे॒वाना॑मेति निष्कृ॒तम् । ऋ॒तस्य॒ योनि॑मा॒सद॑म् ॥१३॥

सोमः॑ । जि॒गा॒ति॒ । गा॒तु॒ऽवित् । दे॒वाना॑म् । ए॒ति॒ । निः॒ऽकृ॒तम् । ऋ॒तस्य॑ । योनि॑म् । आ॒ऽसद॑म् ॥

**वेङ्कट०** सोमः गच्छति गमनवित्[9], देवानाम् प्राप्नोति संस्कृतस्थानम्, [10]इत्येतद् विशदमाह यज्ञस्य स्थानम् आसदम्† इति[10] ॥ १३ ॥

---

१-१. हे नवतरे वि[2] अ[1]. २-२. नास्ति वि[2] अ[1]. ३. °दानैः लपं; °दाने वि[1]. ४-४. नास्ति वि[1]. † नास्ति अ[1]. ५. कामेषु म° वि[2] लपं. ६-६. नास्ति मूको. ७-७. नास्ति वि[2] अ[1]. † नास्ति वि[1] लपं. ८. प्रज्ञा° वि[2] लपं. ९. संस्तुतः वि[1]; °स्कृतस्थो वि[2]; °तरथो...अ[1]. १०-१०. नास्ति वि[2] अ[1]. † आसनमिति मूको.

सोमो अस्मभ्यं द्विपदे चतुष्पदे च पशवे । अनमीवा इषस्करत् ॥ १४ ॥

सोमः । अस्मभ्यम् । द्विऽपदे । चतुःऽपदे । च । पशवे । अनमीवाः । इषः । करत् ॥ १४ ॥

वेङ्कट० सोमः अस्मभ्यम् आरोग्याणि अन्नानि करोतु, एवमन्यस्मै[1] द्विपदे चतुष्पदे च इति ॥ १४ ॥

अस्माकमायुर्वर्धयन्नभिमातीः सहमानः । सोमः सधस्थमासदत् ॥ १५ ॥

अस्माकम् । आयुः । वर्धयन् । अभिऽमातीः । सहमानः । सोमः । सधऽस्थम् । आ । असदत् ॥ १५ ॥

वेङ्कट० अस्माकम् [2]जीवितम् वर्धयन् शत्रून् अभिभवन् सोमः अग्रम् आ सीदतु[2] ॥ १५ ॥

आ नो मित्रावरुणा घृतैर्गव्यूतिमुक्षतम् । मध्वा रजांसि सुक्रतू ॥ १६ ॥

आ । नः । मित्रावरुणा । घृतैः । गव्यूतिम् । उक्षतम् । मध्वा । रजांसि । सुक्रतू इति सुऽक्रतू ॥

वेङ्कट० अन्त्यस्तृचो[3] जामदग्न्य इत्येकम्, वैश्वामित्र एवेत्यपरमिति । हे मित्रावरुणौ ! अस्माकम् गवां मार्गम् उदकैः[2] सिञ्चतम् । एवं सर्वानेव लोकान्[2] पार्थिवान् उदकेन सिञ्चतम् हे सुकर्माणौ ! इति ॥ १६ ॥

उरुशंसा नमोवृधा मह्ना दक्षस्य राजथः । द्राघिष्ठाभिः शुचिव्रता ॥ १७ ॥

उरुऽशंसा । नमःऽवृधा । मह्ना । दक्षस्य । राजथः । द्राघिष्ठाभिः । शुचिऽव्रता ॥ १७ ॥

वेङ्कट० बहुस्तुती वर्धयितारावन्नस्य बलस्य महत्त्वेन [4]राजथः दीर्घतमाभिरूतिभिर्युक्तौ† हे शुचिकर्माणौ ! इति[4] ॥ १७ ॥

गृणाना जमदग्निना योनावृतस्य सीदतम् । पातं सोममृतावृधा ॥ १८ ॥

गृणाना । जमत्ऽअग्निना । योनौ । ऋतस्य । सीदतम् । पातम् । सोमम् । ऋतऽवृधा ॥ १८ ॥

वेङ्कट० स्तूयमानौ[5] जमदग्निना यज्ञस्य योनौ वेद्याम् निषीदतम् । निषद्य च पिबतम् सोमम् यज्ञस्य [6]वर्धयितारम् । अथ यदा विश्वामित्र एव भवत्यृषिस्तदानीमयमर्थः—जमदग्निना पुरा स्तूयमानौ[6] युवाम् तस्य यज्ञ इति ॥ १८ ॥

[7]इति तृतीयाष्टके चतुर्थाध्याये एकादशो वर्गः[7] ॥

— ※ —

इति ऋग्वेदे सभाष्ये तृतीयं मण्डलं समाप्तम् ॥



---

१. °स्मै च वि[1,2] अ[1]. २-२. नास्ति वि[2] अ[1]. ३. अन्त्यमाह यज्ञस्य स्थानमासन्नमिति स्तृचो वि[1] लपं. ४-४. °थः ··· वि[2] अ[1]. † °क्तः वि[1] ल लपं. ५. नास्ति वि[2] अ[1]; °नः वि[1] ल लपं. ६-६. नास्ति अ[1]. ७-७. नास्ति मूको.

अथ

# ऋग्वेदे सभाष्ये

## चतुर्थं मण्डलम्

[ १ ]

[1]वामदेवो गौतम ऋषिः । अग्निर्देवता, द्वितीयाद्यानां चतसृणां वरुणो वा । त्रिष्टुप् छन्दः, प्रथमा अष्टिः, द्वितीया अतिजगती, तृतीया धृतिः[1] ।

**त्वां ह्यग्ने सदमित् समन्यवो देवासो देवमरतिं न्येरिर इति क्रत्वा न्येरिरे ।**
**अमर्त्यं यजत मर्त्येष्वा देवमादेवं जनत प्रचेतसं विश्वमादेवं जनत प्रचेतसम् ॥१॥**

त्वाम् । हि । अग्ने । सदम् । इत् । सऽमन्यवः । देवासः । देवम् । अरतिम् । निऽएरिरे । इति । क्रत्वा । निऽएरिरे । अमर्त्यम् । यजत । मर्त्येषु । आ । देवम् । आऽदेवम् । जनत । प्रऽचेतसम । विश्वम् । आऽदेवम् । जनत । प्रऽचेतसम् ॥ १ ॥

वेङ्कट० गौतमो वामदेवश्चतुर्थमण्डलमपश्यत् (तु. ऋअ २,४,१) । त्वाम् हि [2]अग्ने! सदा एव सकामाः देवाः देवम् गमनशीलम् न्येरिरे, मनुष्यलोकं प्रतीत्यर्थः, प्रज्ञया† कर्मणा[2] वा । पुनः न्येरिरे इत्यादिकं पूरणं पारुच्छेपवदिति । तमिमं [3]मर्त्येषु वर्तमानम् अमर्त्यम् देवम् यजत‡ । तमिमम् आदेवम् †आदीप्तं दीप्यमानारण्योः† जनयत प्रकृष्टज्ञानं[3] परिपूर्णमिति ॥ १ ॥

**स भ्रातरं वरुणमग्न आ ववृत्स्व देवाँ अच्छा सुमती यज्ञवनसं ज्येष्ठं यज्ञवनसम् ।**
**ऋतावानमादित्यं चर्षणीधृतं राजानं चर्षणीधृतम् ॥ २ ॥**

सः । भ्रातरम् । वरुणम् । अग्ने । आ । ववृत्स्व । देवान् । अच्छ । सुऽमती । यज्ञऽवनसम् । ज्येष्ठम् । यज्ञऽवनसम् । ऋतऽवानम् । आदित्यम् । चर्षणिऽधृतम् । राजानम् । चर्षणिऽधृतम् ॥२॥

वेङ्कट० आग्निवारुण्यश्चतस्रो भवन्ति । आग्नेय्य [4]इत्यपरमिति । सः त्वम् अग्ने! यज्ञियान् देवान् प्रति तव †भ्रातृस्थानीयं वरुणम्† अपि आवर्तय, आङ्पूर्वोऽन्तर्ण्यर्थः, स्तोतृविषयया सुमत्या सह । यज्ञस्य सम्भक्तारम्[4] प्रशस्यतमम् सत्यवन्तम् अदितेः पुत्रम् मनुष्याणां धारयितारम् राजानम् इति ॥ २ ॥

---

१-१. नास्ति मूको. २-२. अ···कर्मणा वि[2] अ[1]. † यज्ञिया मूको. ३. मर्त्येषु···ज्ञानम् वि[2] अ[1]. †-† आदीप्तस्य प्यमाना° मूको; आदीप्तादीप्यमाना° ल प्रस्तावः. ‡ तु. वैप १,२५३८ c. ४-४. °मिति ··· संभक्तारं वि[2] अ[1]. †-† °नीयव° वि[1] लपं. ५. मनुष्या···वि[2] अ[1].

सखे सखायमभ्या ववृत्स्वाशुं न चक्रं रथ्येव रंह्यास्मभ्यं दस्म रंह्या ।
अग्ने मृळीकं वरुणे सचा विदो मरुत्सु विश्वभानुषु ।
तोकाय तुजे शुशुचान शं कृध्यस्मभ्यं दस्म शं कृधि ॥ ३ ॥

सखे । सखायम् । अभि । आ । ववृत्स्व । आशुम् । न । चक्रम् । रथ्याऽइव । रंह्या । अस्मभ्यम् । दस्म । रंह्या ।
अग्ने । मृळीकम् । वरुणे । सचा । विदः । मरुत्ऽसु । विश्वऽभानुषु ।
तोकाय । तुजे । शुशुचान । शम् । कृधि । अस्मभ्यम् । दस्म । शम् । कृधि ॥ ३ ॥

वेङ्कट० [1]हे वरुणस्य सखे! त्वमस्मभ्यम् अभि आ वर्तय सखायम्[1] क्षिप्रगमनम् इव रथस्य चक्रम् रथ्ययेव रंहणयोग्यया[2] अस्मदर्थम् हे [3]दर्शनीय!। हे अग्ने! सुखकरं वरुणे सह स्थित्वा तेन सह जानीहि तथा मरुत्सु च पूर्णतेजस्केषु। स[3] त्वं [4]पुत्राय तत्पुत्राय[4] च सुखं कुरु हे दीपनशील! अस्मभ्यम् चेति ॥ ३ ॥

त्वं नो अग्ने वरुणस्य विद्वान् देवस्य हेळोऽव यासिसीष्ठाः ।
यजिष्ठो वह्नितमः शोशुचानो विश्वा द्वेषांसि प्र मुमुग्ध्यस्मत् ॥ ४ ॥

त्वम् । नः । अग्ने । वरुणस्य । विद्वान् । देवस्य । हेळः । अव । यासिसीष्ठाः ।
यजिष्ठः । वह्निऽतमः । शोशुचानः । विश्वा । द्वेषांसि । प्र । मुमुग्धि । अस्मत् ॥ ४ ॥

वेङ्कट० [5]त्वम् अस्माकम् हे अग्ने! वरुणस्य क्रोधम् यथारूपं †जानन् अव यजस्व†[5] । यष्टृतमः वोढृतमः दीप्यमानः सर्वाण्येव द्वेष्टॄणि पापानि अस्मत्तः प्र मुञ्च ॥ ४ ॥

स त्वं नो अग्नेऽवमो भवोती नेदिष्ठो अस्या उषसो व्युष्टौ ।
अव यक्ष्व नो वरुणं रराणो वीहि मृळीकं सुहवो न एधि ॥ ५ ॥

सः । त्वम् । नः । अग्ने । अवमः । भव । ऊती । नेदिष्ठः । अस्याः । उषसः । विऽउष्टौ ।
अव । यक्ष्व । नः । वरुणम् । रराणः । वीहि । मृळीकम् । सुऽहवः । नः । एधि ॥ ५ ॥

वेङ्कट० [6]सः त्वम्[6] [9]अस्माकम् हे अग्ने! आसन्नः भव रक्षणेन अस्याः[9] उषसः व्युच्छने[7] अन्तिकतमः। स त्वमस्माकम् अव यज वरुणम् शान्तहृदयं कुरु, रममाणः सुखतरं[8] हविश्च[9] भक्षय। स्वाह्वानैः अस्माकं भव ॥ ५ ॥

[10]इति तृतीयाष्टके चतुर्थाध्याये द्वादशो वर्गः[10] ॥

---

१-१. नास्ति वि[2] अ[1]. २. °योग्याया लपं. ३-३. °नीय…स वि[2] अ[2]. ४-४. तत्पुत्राय पुत्राय वि[2] लपं. ५-५. नास्ति वि[2] अ[1]. †-† जानन्नेव यजस्व मूको. ६-६. नास्ति वि[2]. ७. °न्ने वि[2] ल. ८. °करम् वि[2] ल. ९. नास्ति मूको. १०-१०. नास्ति मूको.

अस्य श्रेष्ठा सुभगस्य संदृग् देवस्य चित्रतमा मर्त्येषु ।
शुचि घृतं न तप्तमघ्न्यायाः स्पार्हा देवस्य मंहनेव धेनोः ॥ ६ ॥

अस्य । श्रेष्ठा । सुऽभगस्य । सम्ऽदृक् । देवस्य । चित्रऽतमा । मर्त्येषु ।
शुचि । घृतम् । न । तप्तम् । अघ्न्यायाः । स्पार्हा । देवस्य । मंहनाऽइव । धेनोः ॥ ६ ॥

**वेङ्कट०** अस्य[1] प्रशस्यतमा शोभमानधनस्य सन्दृष्टिः अनुग्रहात्मिका देवस्य पूज्यतमा स्तोतृषु मर्त्येषु । [2]दीप्तम् घृतम् इव लीनं गोः स्पृहणीया भवति संदृक्[†], तथा[2] धेनोः पूजेव[3] पयःप्रदानादिका स्पृहणीयेति ॥ ६ ॥

त्रिरस्य ता परमा सन्ति सत्या स्पार्हा देवस्य जनिमान्यग्नेः ।
अनन्ते अन्तः परिवीत आगाच्छुचिः शुक्रो अर्यो रोरुचानः ॥ ७ ॥

त्रिः । अस्य । ता । परमा । सन्ति । सत्या । स्पार्हा । देवस्य । जनिमानि । अग्नेः ।
अनन्ते । अन्तरिति । परिऽवीतः । आ । अगात् । शुचिः । शुक्रः । अर्यः । रोरुचानः ॥ ७ ॥

**वेङ्कट०** त्रीणि अस्य अग्नेः देवस्य तानि [4]पुरातनानि सत्यानि स्पृहणीयानि जन्मानि सन्ति । 'दिवस्परि प्रथमं जज्ञे अग्निः'[4] ( ऋ १०,४५,१ ) इति । सोऽयम् अपर्यन्तेऽन्तरिक्षे मध्ये ज्वालाभिः परिवीतः आ गच्छति शुद्धरूपः शुक्रः, 'शुक्रम्[5] [6]शोचतेर्ज्वलतिकर्मणः' ( या ८,११ ), सर्वस्यापि इनः भृशं दीप्यमानः[6] ॥ ७ ॥

स दूतो विश्वेदभि वष्टि सद्मा होता हिरण्यरथो रंसुजिह्वः ।
रोहिदश्वो वपुष्यो विभावा सदा रण्वः पितुमतीव संसत् ॥ ८ ॥

सः । दूतः । विश्वा । इत् । अभि । वष्टि । सद्म । होता । हिरण्यऽरथः । रम्ऽसुजिह्वः ।
रोहित्ऽअश्वः । वपुष्यः । विभाऽवा । सदा । रण्वः । पितुमतीऽइव । सम्ऽसत् ॥ ८ ॥

**वेङ्कट०** [1]सः देवानां दूतः सर्वान्[1] एव अभि कामयते गृहान् ह्वाता हिरण्मयरथः रमणीयशोभनज्वालाजिह्वः रोहिद्वर्णाश्वः वपुषे[7] हितः, विभेति[8] 'प्रकाशनाम, दीप्तिमान्[8] सदा रमणीयः अन्नवदिव गृहम् ॥ ८ ॥

स चेतयन्मनुषो यज्ञबन्धुः प्र तं मह्या रशनया नयन्ति ।
स क्षेत्यस्य दुर्यासु साधन् देवो मर्तस्य सधनित्वमाप ॥ ९ ॥

---

१. नास्ति वि[२] अ[१]. २-२. नास्ति वि[२] अ[१]. † नास्ति वि[२] अ[१] क. ३. पूजे च वि[१] अ[१]; पूजेव च वि[१] लपं. ४-४. पुरात…ग्निः वि[२] अ[१]. ५. नास्ति मूको. ६-६. ज्वलति…वि[१] अ[१]. ७. वपु वि[२] अ[१]. ८-८. °शनान् दीप्तिमाशान् वि[१] लपं.

सः । चेतयत् । मनुषः । यज्ञऽबन्धुः । प्र । तम् । मह्या । रशनया । नयन्ति ।
सः । क्षेति । अस्य । दुर्यासु । साधन् । देवः । मर्तस्य । सधनिऽत्वम् । आप ॥ ९ ॥

**वेङ्कट०** सः चेतयति मनुष्यान् यज्ञबन्धनः । प्र नयन्ति तम् पुरस्तात् वाचा मन्त्रात्मिकया रशनया । रशिर्नियमनकर्मा[1] । सः क्षेति वसति यजमानस्य अस्य गृहेषु कर्माणि साधयन् । किं चायम् देवः मर्त्यस्यार्थाय सधनित्वम् प्राप्नोति सधनो भवति, प्रयच्छतीत्यर्थः ॥ ९ ॥

स तू नो अग्निर्नयतु प्रजानन्नच्छा रत्नं देवभक्तं यदस्य ।
धिया यद् विश्वे अमृता अकृण्वन् द्यौष्पिता जनिता सत्यमुक्षन् ॥ १० ॥

सः । तु । नः । अग्निः । नयतु । प्रऽजानन् । अच्छ । रत्नम् । देवऽभक्तम् । यत् । अस्य ।
धिया । यत् । विश्वे । अमृताः । अकृण्वन् । द्यौः । पिता । जनिता । सत्यम् । उक्षन् ॥१०॥

**वेङ्कट०** सः क्षिप्रम् अस्मान् अग्निः नयतु प्रकर्षेण [2]जानन्, यत् अस्य अग्नेः देवैरपि सम्भक्तम् उत्तमम् रत्नम् तत्† प्रतीति । कर्मणा[2] यत् विश्वे देवाः अकृण्वन् उत्पादितवन्तः, सत्यभूतं तद् ब्रह्म, द्युप्रभृतयः स्वरसेनासिञ्चन् । तत्र पिता [3]इत्यन्तरिक्षलोकमाह । जनिता† इति पार्थिवम् अग्निम् । त्रयो लोका हविर्भिरुक्षन्तीत्यर्थः[3] ॥ १० ॥

[4]इति तृतीयाष्टके चतुर्थाध्याये त्रयोदशो वर्गः[4] ॥

स जायत प्रथमः पस्त्यासु महो बुध्ने रजसो अस्य योनौ ।
अपादशीर्षा गुहमानो अन्तायोयुवानो वृषभस्य नीळे ॥ ११ ॥

सः । जायत । प्रथमः । पस्त्यासु । महः । बुध्ने । रजसः । अस्य । योनौ ।
अपात् । अशीर्षा । गुहमानः । अन्ता । आऽयोयुवानः । वृषभस्य । नीळे ॥ ११ ॥

**वेङ्कट०** सः प्रादुरभूत् पूर्वम्, पस्त्या इति नदीनामधेयम् नदीषु 'पस्त्यासु चक्रे वरुणः सधस्थम्' ( मा १०,७ ) इति [5]मन्त्रः । महतः अन्तरिक्षस्य मूले अस्य पार्थिवस्य लोकस्य उत्पत्तिकारणे[5] पादरहितः शिरोवर्जितः पिण्डीभूतः[6] छादयन् तेजसा तानि पुनःपुनरात्मना मिश्रयन् पर्जन्यस्य मेघस्य वा नीळे अन्तरिक्षे । एभ्योऽग्निः प्रागजायतेत्यर्थः ॥ ११ ॥

प्र शर्ध आर्त प्रथमं विपन्याँ ऋतस्य योना वृषभस्य नीळे ।
स्पार्हो युवा वपुष्यो विभावा सप्त प्रियासोऽजनयन्त वृष्णे ॥ १२ ॥

---

१-१. °मनकर्मा···वा म° वि[2] अ[1]. २-२. नास्ति वि[2] अ[1]. † तं मूको. ३-३. °रिक्ष···वि[2] अ[1]. † जनयिता वि[1] लपं. ४-४. नास्ति मूको. ५-५. मन्त्रः···रणे वि[2] अ[1]. ६. °तं वि[1] लपं.

प्र । शर्धः । आर्त । प्रथमम् । विपन्या । ऋतस्य । योनां । वृषभस्य । नीळे ।
स्पार्हः । युवा । वपुष्यः । विभाऽवा । सप्त । प्रियासः । अजनयन्त । वृष्णे ॥ १२ ॥

**वेङ्कट०** वेगम् प्र गच्छति पुरातनं स्तोतॄणां स्तुत्या प्रीतः वर्षणार्थमुदकस्य योनौ पर्जन्यस्य [1]वासेऽन्तरिक्षे स्पृहणीयः युवा वपुषे हितः दीप्तिमान्[1]। तस्मै वृष्णे सप्त सिन्धवः प्रियाः अभवन्, अपि वा[2] सप्त सिन्धवः वृषाणमग्निम् अजनयन्। छन्दोऽनुविधानार्थो विभक्तिव्यत्ययः, यथा — 'उदूपथुरश्विना वन्दनाय' ( ऋ १,११७,५ ) इति ॥ १२ ॥

अस्माकमत्र पितरो मनुष्या अभि प्र सेदुर्ऋतमाशुषाणाः ।
अश्मव्रजाः सुदुघा वव्रे अन्तरुदुस्रा आजन्नुषसो हुवानाः ॥ १३ ॥

अस्माकम् । अत्र । पितरः । मनुष्याः । अभि । प्र । सेदुः । ऋतम् । आशुषाणाः ।
अश्मऽव्रजाः । सुऽदुघाः । वव्रे । अन्तः । उत् । उस्राः । आजन् । उषसः । हुवानाः ॥ १३ ॥

**वेङ्कट०** अस्माकम् अत्र पणिभिरपहृतानां गवां व्रजे पितरः मनुष्याः अङ्गिरसः अभि [3]प्र अगच्छन् सत्यभूतं गोधनम् अश्नुवानाः। ततः अश्मव्रजाः सुदोहाः वव्रे† अन्तः वर्तमानाः गाः[3] उत् आजन् अङ्गिरसः उषसः प्रति वत्सेच्छया शब्दायमानाः ॥ १३ ॥

ते मर्मृजत ददृवांसो अद्रिं तदेषामन्ये अभितो वि वोचन् ।
पश्वयन्त्रासो अभि कारमर्चन् विदन्त ज्योतिश्चकृपन्त धीभिः ॥ १४ ॥

ते । मर्मृजत । ददृऽवांसः । अद्रिम् । तत् । एषाम् । अन्ये । अभितः । वि । वोचन् ।
पश्वऽयन्त्रासः । अभि । कारम् । अर्चन् । विदन्त । ज्योतिः । चकृपन्त । धीभिः ॥ १४ ॥

**वेङ्कट०** ते अङ्गिरसः पणीन् परिमृष्टवन्तः 'गवामावरणं शिलोच्चयं दारितवन्तः। तत् इदम् अङ्गिरसाम्' अद्भुतं कर्म अन्ये ऋषयः मनुष्यान्[4] अभितः वि वोचन्। पशुहितयमनाः कारम् अभि अर्चन्। [5]अर्चतिरुच्चारणकर्मा, शङ्खमार्चन्† जयार्थं ध्मापितवन्तः‡। अग्निप्रसादादन्धकारं विनाशयन्तो[5] ज्योतिः च लब्धवन्तः। अथ कर्मभिः चकृपन्त[6] कल्पन्ते[7] स्म। सिद्धकर्माण आसन्नित्यर्थः ॥ १४ ॥

ते गव्यता मनसा दृध्रमुब्धं गा येमानं परि षन्तमद्रिम् ।
दृळ्हं नरो वचसा दैव्येन व्रजं गोमन्तमुशिजो वि वव्रुः ॥ १५ ॥

---

१-१. नास्ति वि[2] अ[1]. २. नास्ति लपं. ३-३. नास्ति वि[2] अ[1]; अभि…उदाजन वि[2] अ[1]. † वप्रे वि[1] लपं. ४. °ष्याणाम् मूको. ५-५. °रण…विना° वि[2] अ[1]. † °ङ्गमसृजन् वि[1] ल लपं ‡ भावित° वि[1]. ६. कृतवन्तः वि[1] लपं. ७. कल्पान्ते वि[1] लपं.

ते । गव्यता । मनसा । दृध्रम् । उब्धम् । गाः । येमानम् । परि । सन्तम् । अद्रिम् ।
दृळ्हम् । नरः । वचसा । दैव्येन । व्रजम् । गोऽमन्तम् । उशिजः । वि । वव्रुरिति वव्रुः ॥१५॥

**वेङ्कट०** [1]अङ्गिरसः पशूनिच्छता मनसा दृंहितं पूर्णं पशून् अन्तर्नियच्छन्तं परितः सन्तम्[1] अच्छिद्रम् अद्रिम् शिलोच्चयम् दृढम् मनुष्याः दैव्येन [2]देवसम्बन्धिन्या स्तुत्या[2] व्रजम् गोमन्तम् कामयमानाः [3]विवृतद्वारं कृतवन्तः। तदिदमङ्गिरोभिस्त्वया सह कृतमित्याग्नेयत्वम्। तथैव[3] मन्त्रः—'त्वया सह द्रविणमिच्छमाना व्रजं गोमन्तमुशिजो वि वव्रुः' ( ऋ १०,४५,११ ) इति ॥ १५ ॥

[1]इति तृतीयाष्टके चतुर्थाध्याये चतुर्दशो वर्गः[1] ॥

ते मन्वत प्रथमं नाम धेनोस्त्रिः सप्त मातुः परमाणि विन्दन् ।
तज्जानतीरभ्यनूषत व्रा आविर्भुवदरुणीर्यशसा गोः ॥ १६ ॥

ते । मन्वत । प्रथमम् । नाम । धेनोः । त्रिः । सप्त । मातुः । परमाणि । विन्दन् ।
तत् । जानतीः । अभि । अनूषत । व्राः । आविः । भुवत् । अरुणीः । यशसा । गोः ॥ १६ ॥

**वेङ्कट०** '[4]अहर्देवानामासीद् रात्रिरसुराणाम्। तेऽसुरा यद् देवानां वित्तं वेद्यमासीत् तेन सह[4] रात्रिं प्राविशन्। ते देवा हीना अमन्यन्त। तेऽपश्यन्—'आग्नेयी रात्रिः आग्नेयाः पशवः। इममेवाग्निं [5]स्तवाम†। स‡ नः स्तुतः पशून् पुनर्दास्यतीति। तेऽग्निमस्तुवन्। स एभ्यः[5] स्तुतो रात्रिया अध्यहरभि पशून् निरार्जत्' ( तै १,५,९,२;३ ) इति ब्राह्मणम्। तत्रेदमुच्यते—देवा अङ्गिरसः [6]पूर्वं रात्रिम् नाम अग्निं स्तुवन्तः अगदस्य मातुः[6] त्रिः सप्तसंख्यानि परमाणि रत्नानि अविन्दन्। तत्र [6]सप्त ग्राम्याः पशवः चतुर्दश ग्राम्यारण्याः अन्नानि‡ एवमेकविंशतिर्भवति। अथ तत् धनम् जानत्यः[6] प्रजा यदा[7] संवृण्वत्यः[8] [9]अभ्यस्तुवन् 'ममेयं गौः' 'ममायमश्वः' इति तत्र तेषां[9] साहाय्यं कर्तुमुषाः सूर्यस्य 'तेजसा सह आविरागमदिति' ॥ १६ ॥

नेशत् तमो दुधितं रोचत द्यौरुद् देव्या उषसो भानुरर्त ।
आ सूर्यो बृहतस्तिष्ठदज्राँ ऋजु मर्तेषु वृजिना च पश्यन् ॥ १७ ॥

नेशत् । तमः । दुधितम् । रोचत । द्यौः । उत् । देव्याः । उषसः । भानुः । अर्त ।
आ । सूर्यः । बृहतः । तिष्ठत् । अज्रान् । ऋजु । मर्तेषु । वृजिना । च । पश्यन् ॥ १७ ॥

**वेङ्कट०** ततोऽसुरैरुत्पादितं[10] रात्रिकृतं तमः दुर्निधानं नष्टमासीत्। ततश्च[11] तमसा तिरोहिता

१-१. नास्ति वि[2] अ[1]. २-२. °न्येन स्तुतिना मूको. ३-३. नास्ति मूको. ४-४. °वाना…सह वि[1] अ[1]. ५-५. नास्ति अ[1]. † स्तवामः वि[1,2] ल लपं. ‡ नास्ति वि[1] लपं. ६-६. नास्ति वि[2] अ[1]. † रात्रिं पूर्वं लपं. ‡ °ख्या अन्ना° मूको. ७. यथा मूको. ८. …ण्वत्यः वि[2] अ[1] ल. ९-९. अभ्यस्तुव…तेषां वि[2] अ[1]. १०. नास्ति वि[2] अ[1]. ११. नास्ति लपं.

द्यौः च अरोचत। उत् अगच्छत् देव्याः [1]उषसः च तेजः। तथा सूर्यः च गमनपरान् महतः रश्मीन् आ तिष्ठत् मनुष्येषु[1] ऋजूनि साधूनि[2] कर्माणि वृजिनानि पापानि च पश्यन् इति ॥ १७ ॥

आदित् पश्चा बुबुधाना व्यख्यन्नादिद् रत्नं धारयन्त द्युभक्तम्।
विश्वे विश्वासु दुर्यासु देवा मित्र धिये वरुण सत्यमस्तु ॥ १८ ॥

आत्। इत्। पश्चा। बुबुधानाः। वि। अख्यन्। आत्। इत्। रत्नम्। धारयन्त। द्युऽभक्तम्।
विश्वे। विश्वासु। दुर्यासु। देवाः। मित्र। धिये। वरुण। सत्यम्। अस्तु ॥ १८ ॥

**वेङ्कट०** अनन्तरम् एव उषस्यागतायां [3]बुध्यमानाः गवाश्वादिपदार्थान्† विविधम् अपश्यन्। तथा अनन्तरम् एव अह्नां[3] सम्भक्तम् रत्नम् च अधारयन्। तथा विश्वे [4]देवाः विश्वासु दुर्यासु यजमान-गृहेषु यज्ञसद्भावादागताः†, दिवा हि यज्ञो भवति न तु रात्रौ इति। सोऽयमेवंविधः[4] अहोरात्रविभागो हे मित्रावरुणौ! मनुष्याणां कर्मकरणाय सत्यम् भवतु। मित्रावरुणावहोरात्रयोरीश्वरौ [5]प्रसङ्गा-दाशास्त इति[5] ॥ १८ ॥

अच्छा वोचेय शुशुचानमग्निं होतारं विश्वभरसं यजिष्ठम्।
शुच्यूधो अतृणन्न गवामन्धो न पूतं परिषिक्तमंशोः ॥ १९ ॥

अच्छ। वोचेय। शुशुचानम्। अग्निम्। होतारम्। विश्वऽभरसम्। यजिष्ठम्।
शुचि। ऊधः। अतृणत्। न। गवाम्। अन्धः। न। पूतम्। परिऽसिक्तम्। अंशोः ॥ १९ ॥

**वेङ्कट०** [6]अभिप्रब्रवाणि‡ दीप्यमानम् अग्निम्[6] होतारम् सर्वस्य भर्तारं यष्टृतमम्। यथा गवाम् ऊधः कश्चित् शुचि पयः तृणत्ति, सोमलतायाः अभिषुतायाः रसम् इव [6]पूतम् पात्रेषु परितः सिक्तं पयः, एवं यजमानः† रात्रिम् अग्निम् अदुहद् रत्नानि इत्यवगन्तव्यमिति[6] ॥ १९ ॥

विश्वेषामदितिर्यज्ञियानां विश्वेषामतिथिर्मानुषाणाम्।
अग्निर्देवानामव आवृणानः सुमृळीको भवतु जातवेदाः ॥ २० ॥

विश्वेषाम्। अदितिः। यज्ञियानाम्। विश्वेषाम्। अतिथिः। मानुषाणाम्।
अग्निः। देवानाम्। अवः। आऽवृणानः। सुऽमृळीकः। भवतु। जातऽवेदाः ॥ २० ॥

**वेङ्कट०** विश्वेषाम् अपि यज्ञार्हाणाम् अक्षीणः तथा विश्वेषाम् अपि मानुषाणाम् अतिथिः भवति

---

१-१. उष…मनु° वि[२] अ[१]. २. °नि च वि[२] अ[१]. ३-३. नास्ति वि[२] अ[१]. † नोऽश्वान् पादार्थान् मूको. ४-४. नास्ति वि[२] अ[१]. † °वा आसत वि[२] लपं. ५-५. नास्ति वि[२] अ[१]. ‡ °ब्रुवा° मूको. ६-६. पूतं…वगन्त° वि[२] अ[१]. † नास्ति मू १ो.

[1]गृहेषु । सोऽयम् अग्निः देवानाम् रक्षणं यज्ञकरणात् आ वृणानः सुष्ठु[1] सुखयिता भवतु जातधनः ॥ २० ॥

[2]इति तृतीयाष्टके चतुर्थाध्याये पञ्चदशो वर्गः[2] ॥

## [२]

[1]वामदेवो गौतम ऋषिः । अग्निर्देवता । त्रिष्टुप् छन्दः[2] ।

यो मर्त्येष्वमृत ऋतावा देवो देवेष्वरतिर्निधायि ।
होता यजिष्ठो मह्ना शुचध्यै हव्यैरग्निर्मनुष ईरयध्यै ॥ १ ॥

यः । मर्त्येषु । अमृतः । ऋतऽवा । देवः । देवेषु । अरतिः । निऽधायि ।
होता । यजिष्ठः । मह्ना । शुचध्यै । हव्यैः । अग्निः । मनुषः । ईरयध्यै ॥ १ ॥

**वेङ्कट०** यः अमरणः देवः देवेषु हविरादाय गच्छन् [3]सत्यवान् मनुष्येषु निहितः, होता अग्निः यष्टृतमः अत्यन्तं ज्वलितुम् हव्यैः[3] सह यजमानस्य देवान् प्रति गन्तुं च ॥ १ ॥

इह त्वं सूनो सहसो नो अद्य जातो जाताँ उभयाँ अन्तरग्ने ।
दूत ईयसे युयुजान ऋष्व ऋजुमुष्कान् वृषणः शुक्रांश्च ॥ २ ॥

इह । त्वम् । सूनो इति । सहसः । नः । अद्य । जातः । जातान् । उभयान् । अन्तः । अग्ने ।
दूतः । ईयसे । युयुजानः । ऋष्व । ऋजुऽमुष्कान् । वृषणः । शुक्रान् । च ॥ २ ॥

**वेङ्कट०** हे सहसः पुत्र! अस्मिन्नह्नि जातः सन् [4]उभयान् अपि जातान् मध्येन अग्ने! दूतः भूत्वा गच्छसि हविर्वहन आत्मानम्[4] युयुजानः हे दर्शनीय! । कान् उभयान् इत्याह — ऋजुमुष्कान् यूनः[5] यजमानान् मनुष्यान् दीप्तान् [6]देवान् च[6] ॥ २ ॥

अत्या वृधस्नू रोहिता घृतस्नू ऋतस्य मन्ये मनसा जविष्ठा ।
अन्तरीयसे अरुषा युजानो युष्मांश्च देवान् विश आ च मर्तान् ॥ ३ ॥

अत्या । वृधस्नू इति वृधऽस्नू । रोहिता । घृतस्नू इति घृतऽस्नू । ऋतस्य । मन्ये । मनसा । जविष्ठा ।
अन्तः । ईयसे । अरुषा । युजानः । युष्मान् । च । देवान् । विशः । आ । च । मर्तान् ॥ ३ ॥

**वेङ्कट०** [7]अतनशीलौ वर्धमानान् प्रति गन्तारौ[7] रोहितवर्णौ घृतं प्रति गन्तारौ अग्नेः [8]अहम् मनसा[8] वेगवत्तमौ जानामि । तौ हि त्वं †स्वरथे युञ्जानः मध्येन गच्छसि आरोचमानौ । कांश्च[9] कांश्चान्तः इत्याह — युष्मान् इति । त्वत्सहितान्[9] देवान् आ विशसि मनुष्यान् च इति ॥ ३ ॥

---

१-१. नास्ति वि[1] अ[1]. २-२. नास्ति मूको. ३-३ सत्य…हव्यैः वि[2] अ[1]. ४-४. उभयान…त्मानं वि[2] अ[1]. ५. युवानः वि[2] ल लपं; युवान्यः वि[1] अ[1]. ६-६. देव…वि[2] अ[1]. ७-७. असं म॰ वि[2] अ[1]. ८-८. नास्ति वि[2] अ[1]. † सुरथे वि[1] लपं. ९. त्वं हिता वि[1] लपं.

अर्यमणं वरुणं मित्रमेषामिन्द्राविष्णू मरुतो अश्विनोत ।
स्वश्वो अग्ने सुरथः सुराधा एदु वह सुहविषे जनाय ॥ ४ ॥

अर्यमणम् । वरुणम् । मित्रम् । एषाम् । इन्द्राविष्णू इति । मरुतः । अश्विना । उत ।
सुऽअश्वः । अग्ने । सुऽरथः । सुऽराधाः । आ । इत् । ऊँ इति । वह । सुऽहविषे । जनाय ॥ ४ ॥

**वेङ्कट०** एषाम् [1]मनुष्याणां मध्ये शोभनहविष्काय यजमानाय अर्यमप्रभृतीन्[1] स्वश्वः सुरथः शोभनधनः त्वम् हे अग्ने[2] आ वह ॥ ४ ॥

गोमाँ अग्नेऽविमाँ अश्वी यज्ञो नृवत्सखा सदमिदप्रमृष्यः ।
इळावाँ एषो असुर प्रजावान् दीर्घो रयिः पृथुबुध्नः सभावान् ॥ ५॥

गोऽमान् । अग्ने । अविऽमान् । अश्वी । यज्ञः । नृवत्ऽसखा । सदम् । इत् । अप्रऽमृष्यः ।
इळाऽवान् । एषः । असुर । प्रजाऽवान् । दीर्घः । रयिः । पृथुऽबुध्नः । सभाऽवान् ॥ ५ ॥

**वेङ्कट०** अग्ने! अयं यज्ञः त्वयाऽधिष्ठितः गवादिहेतुर्भवति । नेतृपुरुषा [3]यस्य सखायः स† नृवत्सखा उक्तः । तादृशानपि साधयतीत्यर्थः । सदा एव अनभिभवनीयः[3] अन्नवान् एषः[1] हे प्राज्ञ! प्रजायुक्तः अविच्छिन्नः धनहेतुः पृथुमूलः परिषद्युक्त इति ॥ ५ ॥

[4]इति तृतीयाष्टके चतुर्थाध्याये षोडशो वर्गः[4] ॥

यस्त इध्मं जभरत् सिष्विदानो मूर्धानं वा ततपते त्वाया ।
भुवस्तस्य स्वतवाँ पायुरग्ने विश्वस्मात् सीमघायत उरुष्य ॥६ ॥

यः । ते । इध्मम् । जभरत् । सिस्विदानः । मूर्धानम् । वा । ततपते । त्वाऽया ।
भुवः । तस्य । स्वऽतवान् । पायुः । अग्ने । विश्वस्मात् । सीम् । अघऽयतः । उरुष्य ॥ ६ ॥

**वेङ्कट०** यः तुभ्यम् [5]इध्मम् भरति स्विद्यन्, मूर्धानम् च तापयति त्वत्कामनया†, भव त्वं तस्य स्वायत्तबलः रक्षकः[5] हे अग्ने! । सर्वस्मात् पापमिच्छतश्च[6] एनं रक्षेति ॥ ६ ॥

यस्ते भरादन्नियते चिदन्नं निशिषन्मन्द्रमतिथिमुदीरत् ।
आ देवयुरिनधते दुरोणे तस्मिन् रयिर्ध्रुवो अस्तु दास्वान् ॥ ७ ॥

यः । ते । भरात् । अन्निऽयते । चित् । अन्नम् । निऽशिषत् । मन्द्रम् । अतिथिम् । उत्ऽईरत् ।
आ । देवऽयुः । इनधते । दुरोणे । तस्मिन् । रयिः । ध्रुवः । अस्तु । दास्वान् ॥ ७ ॥

---

१-१. नास्ति वि[२] अ[१]. २. नास्ति मूको. ३-३. य···नीयः वि[२] अ[१]. † नास्ति मूको.
४-४. नास्ति मूको. ५-५. नास्ति वि[२] अ[१]. † [१]ना वि[२] लपं. ६. पादि[०] वि[२] अ[१].

वेङ्कट० यः तुभ्यं भरति अन्नमिच्छते अन्नम्, यो वा मदकरं [1]सोमं† नियमेन शास्ति, यो‡ वा अतिथिम् त्वाम् उदीरयति अरण्योरुत्पादयति, तथा देवान्[1] कामयमानः समिद्धं करोति गृहे, तस्मिन् रयिः नित्यः अस्तु दानवान् [2]अर्थिभ्यो दीयमानः[2] ॥ ७ ॥

**यस्त्वा॑ द॒ोषा य उ॒षसि॑ प्र॒शंसा॑त् प्रि॒यं वा॑ त्वा कृ॒णव॑ते ह॒विष्मा॑न् ।**
**अश्वो॒ न स्वे दम॒ आ हे॒म्यावा॒न् तमंह॑सः पीपरो दा॒श्वांस॑म् ॥ ८ ॥**

यः । त्वा॒ । दो॒षा । यः । उ॒षसि॑ । प्र॒ऽशंसा॑त् । प्रि॒यम् । वा॒ । त्वा॒ । कृ॒णव॑ते । ह॒विष्मा॑न् ।
अश्वः॑ । न । स्वे । दमे॑ । आ । हे॒म्याऽवा॑न् । तम् । अंह॑सः । पी॒प॒रः॒ । दा॒श्वांस॑म् ॥ ८ ॥

वेङ्कट० यः त्वां रात्रौ [3]स्तौति, यः वा उषसि, यो वा हविषा युक्तः त्वाम् प्रियम्† करोति[3], तम् यजमानं दारिद्र्यात् पारय, यथा अश्वः स्वगृहे स्थितः वेगवान् । आ-कारः सप्तम्यर्थं स्फुटीकरोति ॥ ८ ॥

**यस्तुभ्य॑मग्ने अ॒मृता॑य दा॒शद् दुव॒स्त्वे कृ॒णव॑ते य॒तस्रु॑क् ।**
**न स रा॒या श॑श॒मा॒नो वि यो॑ष॒न्नैन॒मंहः॒ परि॑ वरदघा॒योः ॥ ९ ॥**

यः । तुभ्य॑म् । अग्ने॑ । अ॒मृता॑य । दाश॑त् । दुवः॑ । त्वे इति॑ । कृ॒णव॑ते । य॒तऽस्रु॑क् ।
न । सः । रा॒या । श॒श॒मानः॑ । वि । यो॒ष॒त् । न । ए॒न॒म् । अंहः॑ । परि॑ । व॒र॒त् । अ॒घ॒ऽयोः ॥९॥

वेङ्कट० [4]यः तुभ्यम् हे अग्ने! अमृताय हविः प्रयच्छति, यश्च त्वयि परिचर्याम्[4] करोति यज्ञार्थं यतस्रुक्, न[5] सः[6] त्वां भजमानः धनेन वियुक्तो भवतु । न च एनम् अघमिच्छतः अंहः [7]परि वृणोतु[7] ॥ ९ ॥

**यस्य॒ त्वम॑ग्ने अध्व॒रं जुजो॑षो दे॒वो मर्त॑स्य॒ सुधि॑तं॒ ररा॑णः ।**
**प्री॒तेद॑स॒द्धोत्रा॒ सा य॑विष्ठा॒साम॒ यस्य॑ विध॒तो वृ॒धास॑ः ॥ १० ॥**

यस्य॑ । त्वम् । अग्ने॑ । अ॒ध्व॒रम् । जु॒जो॑षः । दे॒वः । मर्त॑स्य । सुऽधि॑तम् । ररा॑णः ।
प्री॒ता । इत् । अ॒स॒त् । होत्रा॑ । सा । य॒वि॒ष्ठ॒ । असा॑म । यस्य॑ । वि॒ध॒तः । वृ॒धास॑ः ॥ १० ॥

वेङ्कट० [8]यस्य त्वम् अग्ने! यज्ञं सेवसे देवः[8] मनुष्यस्य सुनिहितम् रममाणः[8] । प्रियः एव भवति यज्ञः[9] सः[10] हे युवतम! देवानाम् । स्याम च यस्य वयं परिचरन्तः वर्धकाः[11] ॥ १० ॥

[12]इति तृतीयाष्टके चतुर्थाध्याये सप्तदशो वर्गः[12] ॥

---

१-१. नास्ति वि[2] अ[1]. † स्तोमम् वि[1] लपं. ‡ नास्ति वि[1] लपं. २-२. °भ्यो धनं दीयमानं वि[1,2] अ[1]. ३-३. नास्ति वि[2] अ[1]. † गृहे वि[1] लपं. ४-४. नास्ति वि[2] अ[1]. ५. नास्ति वि[1] लपं. ६. नास्ति मूको. ७-७. परि···वि[2] अ[1]. ८. °माणम् वि[1] लपं. ९. °ज्ञम् वि[2] अ[1] लपं. १०. सु वि[1,2] अ[1] लपं. ११. नास्ति वि[2] अ[1]. १२-१२. नास्ति मूको.

चित्तिमचित्तिं चिनवद् वि विद्वान् पृष्ठेव वीता वृजिना च मर्तान् ।
राये च नः स्वपत्याय देव दितिं च रास्वादितिमुरुष्य ॥ ११ ॥

चित्तिम् । अचित्तिम् । चिनवत् । वि । विद्वान् । पृष्ठाऽइव । वीता । वृजिना । च । मर्तान् ।
राये । च । नः । सुऽअपत्याय । देव । दितिम् । च । रास्व । अदितिम् । उरुष्य ॥ ११ ॥

**वेङ्कट०** [1]ज्ञातव्यम् अज्ञातव्यं च विद्वान् अग्निः पृथक्[1] करोतु । पृष्ठं स्पृशतेः, पशव[2] उच्यन्ते । पशूनिव[3] विविक्तान् करोतु कान्तस्वभावान्[4] पापकृतः च [5]मनुष्यान् । एवं कृत्वा अस्मभ्यं शोभनापत्याय धनाय हे देव ! † देयकारणम् ‡[5] प्रयच्छ अदेयम्[6] च अस्मत्तः पृथक् कुरु इति ॥ ११ ॥

कविं शशासुः कवयोऽदब्धा निधारयन्तो दुर्यास्वायोः ।
अतस्त्वं दृश्याँ अग्न एतान् पड्भिः पश्येरद्भुताँ अर्य एवैः ॥ १२ ॥

कविम् । शशासुः । कवयः । अदब्धाः । निऽधारयन्तः । दुर्यासु । आयोः ।
अतः । त्वम् । दृश्यान् । अग्ने । एतान् । पट्ऽभिः । पश्येः । अद्भुतान् । अर्यः । एवैः ॥ १२ ॥

**वेङ्कट०** कविम् अग्निम् एतद् दातव्यम् एतत् कर्तव्यम् इति वदन्ति कवयः [1]अहिंसिताः नियमेन धारयन्तः गृहेषु यजमानस्य । तथा[1] सति त्वम् अनुग्राह्यान् अग्ने ! एतान् [7]यजमानान् अद्भुतान्[7] गमनस्वभावैः ज्वालाख्यैः पादैः द्रष्टुमर्हसि[8] स्वामी ॥ १२ ॥

त्वमग्ने वाघते सुप्रणीतिः सुतसोमाय विधते यविष्ठ ।
रत्नं भर शशमानाय घृष्वे पृथु श्चन्द्रमवसे चर्षणिप्राः ॥ १३ ॥

त्वम् । अग्ने । वाघते । सुऽप्रनीतिः । सुतऽसोमाय । विधते । यविष्ठ ।
रत्नम् । भर । शशमानाय । घृष्वे । पृथु । चन्द्रम् । अवसे । चर्षणिऽप्राः ॥ १३ ॥

**वेङ्कट०** [9]त्वम् अग्ने ! यज्ञस्य † वोढे सुप्रणयनः सुतसोमाय[9] देवान् परिचरते हे युवतम ! रत्नम् देहि भजमानाय हे घर्षणशील ![10] विस्तीर्णं ह्लादमकरं[11] रक्षणाय मनुष्याणां पूरयिता[12] ॥ १३ ॥

अधा ह यद् वयमग्ने त्वाया पड्भिर्हस्तेभिश्चकृमा तनूभिः ।
रथं न क्रन्तो अपसा भुरिजोरृतं येमुः सुध्य आशुषाणाः ॥ १४ ॥

---

१-१. नास्ति वि[2] अ[1]. २. पशवः वि[2] अ[1] ल. ३. पशून् वि[2] अ[1]. ४. क्रान्त° वि[2] अ[1]. ५-५. °ष्यान्…ऽणम् वि[2] अ[1]. †-† नास्ति मूको. ‡ देवं कारणं वि[2] ल लपं. ६. अदेवं वि[2] अ[1]. ७-७. °मानभूतान् लपं. ८. °र्हति वि[1]. ९-९. …सोमाय वि[2] अ[1]. † सर्वमेदेयं° वि° लपं. १०. वर्ष° वि[1,2] अ[1] लपं. ११. °दकरम् वि[1]. १२. नास्ति वि[2] अ[1].

अर्ध । ह । यत् । वयम् । अग्ने । त्वाऽया । पट्ऽभिः । हस्तैभिः । चकृम । तनूभिः ।
रथम् । न । क्रन्तः । अपसा । भुरिजोः । ऋतम् । येमुः । सुऽध्यः । आशुषाणाः ॥ १४ ॥

वेङ्कट० [1]अथ खलु यदा वयम् हे अग्ने! त्वत्कामनया पादैः हस्तैः[1] अङ्गैश्चान्यैः कर्म कृतवन्तः। रथम् इव कुर्वन्तः बाह्वोः वेगेन तदानीं यज्ञम् आत्मनि यच्छन्ति [2]शोभनाध्याना देवाः व्यापनशीलाः[2] ॥ १४ ॥

अधा मातुरुषसः सप्त विप्रा जायेमहि प्रथमा वेधसो नॄन् ।
दिवस्पुत्रा आङ्गिरसो भवेमाऽद्रिं रुजेम धनिनं शुचन्तः ॥ १५ ॥

अर्ध । मातुः । उषसः । सप्त । विप्राः । जायेमहि । प्रथमाः । वेधसः । नॄन् ।
दिवः । पुत्राः । अङ्गिरसः । भवेम । अद्रिम् । रुजेम । धनिनम् । शुचन्तः ॥ १५ ॥

वेङ्कट० [1]अग्निं सप्ताङ्गिरसः प्रार्थयन्ते। अथ[1] वयं नृणां मातुः उषसः सप्त विप्राः प्रथमाः स्रष्टारः मनुष्यान् सर्वान् जनयामः। तथा द्युलोकस्य पुत्राः च भवेम अङ्गिरसः, तथा शिलोच्चयं च रुजेम पणिभिरपहृतैर्गोभिस्तद्वन्तम् दीप्यमानाः ॥ १५ ॥

[3]इति तृतीयाष्टके चतुर्थाध्यायेऽष्टादशो वर्गः[3] ॥

अधा यथा नः पितरः परासः प्रत्नासो अग्न ऋतमाशुषाणाः ।
शुचीदयन् दीधितिमुक्थशासः क्षामा भिन्दन्तो अरुणीरप व्रन् ॥ १६ ॥

अर्ध । यथा । नः । पितरः । परासः । प्रत्नासः । अग्ने । ऋतम् । आशुषाणाः ।
शुचि । इत् । अयन् । दीधितिम् । उक्थऽशसः । क्षाम । भिन्दन्तः । अरुणीः । अप । व्रन् ॥१६॥

वेङ्कट० अथ यथा अस्माकं पितरः पूर्वे पूर्वतरे च अग्ने! यज्ञम्[4] अश्नुवाना आसन्, तथा शुचि एव तेजः [5]प्राप्नुवन् उक्थानां शंसितारः, तथा क्षयकरं शिलोच्चयम् अभिन्दन्, गाः च पणिभिः अपहृताः[†][5] अपावृण्वन्निति ॥ १६ ॥

सुकर्माणः सुरुचो देवयन्तोऽयो न देवा जनिमा धमन्तः ।
शुचन्तो अग्निं ववृधन्त इन्द्रमूर्वं गव्यं परिषदन्तो अग्मन् ॥ १७ ॥

सुऽकर्माणः । सुऽरुचः । देवऽयन्तः । अयः । न । देवाः । जनिम । धमन्तः ।
शुचन्तः । अग्निम् । ववृधन्तः । इन्द्रम् । ऊर्वम् । गव्यम् । परिऽसदन्तः । अग्मन् ॥१७॥

---

१-१. नास्ति वि[२] अ[१]. २-२. °ध्यान…वि[२] अ[१]. ३-३. नास्ति मूको. ४. °ज्ञाव वि[२] अ[१]. ५-५. °न्नु…पह° वि[२] अ[१]. † °ताश्च मूको.

वेङ्कट० शोभनकर्मदीप्तिकाः देवानिच्छन्तः लोहपिण्डम् इव असुरजातम्[1] अग्निना धमन्तः [2]देवाः अग्निम् दीपयन्तः वर्धयन्तः इन्द्रम् उरुम् गोसङ्घम्[2] परितः सीदन्तः लब्धवन्तः ॥ १७ ॥

आ यूथेव क्षुमति पश्वो अख्यद् देवानां यज्जनिमान्त्युग्र ।
मर्तानां चिदुर्वशीरकृप्रन् वृधे चिदर्य उपरस्यायोः ॥ १८ ॥

आ । यूथाऽइव । क्षुऽमति । पश्वः । अख्यत् । देवानाम् । यत् । जनिम । अन्ति । उग्र ।
मर्तानाम् । चित् । उर्वशीः । अकृप्रन् । वृधे । चित् । अर्यः । उपरस्य । आयोः ॥ १८ ॥

वेङ्कट० यथा कश्चित् क्षुधायुक्ते जने आभिक्षणार्थं[3] यूथानि चष्टे, एवं पशून् [4]आ अचष्ट यत् देवानाम् जनिम† जातिः पर्वतस्यान्तिकम्‡ आसीत् हे उग्र!, मनुष्येषु अमी[4] भवतां पशवः इत्यूचुः । अथ मर्त्यानां या ऊरुभ्यामश्नुवानाः[5] प्रजाः ताः पशुलाभात् क्लृप्ता [6]आसन्, तथा पशुलाभात् स्वामी च मनुष्यस्य उपरस्य बालजनस्य[6] वर्धनाय आसीदिति ॥ १८ ॥

अकर्म ते स्वपसो अभूम ऋतमवस्रन्नुषसो विभातीः ।
अनूनमग्निं पुरुधा सुश्चन्द्रं देवस्य मर्मृजतश्चारु चक्षुः ॥ १९ ॥

अकर्म । ते । सुऽअपसः । अभूम । ऋतम् । अवस्रन् । उषसः । विऽभातीः ।
अनूनम् । अग्निम् । पुरुधा । सुऽचन्द्रम् । देवस्य । मर्मृजतः । चारु । चक्षुः ॥ १९ ॥

वेङ्कट० कृतवन्तः तुभ्यं कर्म, सुकर्माणश्च अभूम फललाभात् । तेजः [7]सत्यभूतम् आच्छादयन्ति उषसः व्युच्छन्त्यः, उषस्सु च परिपूर्णम् अग्निम् शोभनकान्तिम्[7] बहुधा स्वतेजसा मर्मृजतः[8] देवस्य आदित्यस्य कल्याणम् तेजः ॥ १९ ॥

एता ते अग्न उचथानि वेधोऽवोचाम कवये ता जुषस्व ।
उच्छोचस्व कृणुहि वस्यसो नो महो रायः पुरुवार प्र यन्धि ॥ २० ॥

एता । ते । अग्ने । उचथानि । वेधः । अवोचाम । कवये । ता । जुषस्व ।
उत् । शोचस्व । कृणुहि । वस्यसः । नः । महः । रायः । पुरुऽवार । प्र । यन्धि ॥ २० ॥

वेङ्कट० एतानि तुभ्यम् [9]अग्ने! स्तोत्राणि हे सर्वस्य विधातः! वयम्† उक्तवन्तः क्रान्ताय‡, तानि[9] त्वं

---

१. सुर° लपं. २-२. नास्ति वि[2] अ[1]. ३. अभिक्ष° वि[1,2] अ[1] ल लपं. ४-४. आचष्ट…ष्वमी वि[2] अ[1]. † जन्म वि[1] लपं. ‡ पर्वस्य ल लपं. ५. ऊरु° वि[1] लपं. ६-६. आस…जनस्व वि[2] अ[1]. ७-७. °भूतमा…शोभन° वि[2] अ[1]. ८. ममृज्जते वि[2] अ[1]; ममृजते वि[1] लपं. ९-९. अग्ने…नि वि[2] अ[1]. † नास्ति मूको. ‡ कान्ताय मूको.

सेवस्व, उद्दीप्यस्व[1], कुरु च[2] अस्मान् श्रेयसः, तदर्थं हे बहुभिर्वरणीय! महान्ति धनानि प्र यच्छ ॥ २० ॥

[3]इति तृतीयाष्टके चतुर्थाध्याये एकोनविंशो वर्गः[3] ॥

[ ३ ]

[4]वामदेवो गौतम ऋषिः । अग्निर्देवता, प्रथमायां रुद्रः । त्रिष्टुप् छन्दः[3] ।

आ वो राजानमध्वरस्य रुद्रं होतारं सत्ययजं रोदस्योः ।
अग्निं पुरा तनयित्नोरचित्ताद्धिरण्यरूपमवसे कृणुध्वम् ॥ १ ॥

आ । वः । राजानम् । अध्वरस्य । रुद्रम् । होतारम् । सत्यऽयजम् । रोदस्योः ।
अग्निम् । पुरा । तनयित्नोः । अचित्तात् । हिरण्यऽरूपम् । अवसे । कृणुध्वम् ॥ १ ॥

वेङ्कट० [4]अभिमुखं यूयं कुरुध्वं यज्ञस्य स्वामिनं देवानां स्तोतारम्[4] प्रजानां ह्वातारं सत्येन द्यावापृथिव्योः पूजयितारम् अग्निम् प्रागेव अचिन्तितागमनात्[5] तनयित्नोः हिरण्यसरूपम् [6]रक्षणार्थम् । अन्यमर्थमाह — तनयित्नुरिति मेघशब्दवद् भयङ्कर इति[6] ॥ १ ॥

अयं योनिश्चकृमा यं वयं ते जायेव पत्य उशती सुवासाः ।
अर्वाचीनः परिवीतो नि षीदेमा उ ते स्वपाक प्रतीचीः ॥ २ ॥

अयम् । योनिः । चकृम । यम् । वयम् । ते । जायाऽइव । पत्ये । उशती । सुऽवासाः ।
अर्वाचीनः । परिऽवीतः । नि । सीद । इमाः । ऊँ इति । ते । सुऽअपाक । प्रतीचीः ॥ २ ॥

वेङ्कट० अयम्[7] योनिः वेदिरित्यर्थः, यम् योनिम् वयम्[8] कृतवन्तः तुभ्यम्, [9]यथा जाया भर्त्रे कामयमाना शोभनवस्त्रा स्वसमीपे स्थानं कल्पयति । तथा सति[9]† अस्मदभिमुखः ज्वालाभिः परिगतः[10] तस्मिन् नि सीद । इमाः स्तुतयः ते हे सुष्ठ्वपक्तव्यप्रज्ञ![11] प्रतिमुखगमनाः ॥ २ ॥

आशृण्वते अदृपिताय मन्म नृचक्षसे सुमृळीकाय वेधः
देवाय शस्तिममृताय शंस ग्रावेव सोता मधुषुद् यमीळे ॥ ३ ॥

आऽशृण्वते । अदृपिताय । मन्म । नृऽचक्षसे । सुऽमृळीकाय । वेधः ।
देवाय । शस्तिम् । अमृताय । शंस । ग्रावाऽइव । सोता । मधुऽसुत् । यम् । ईळे ॥ ३ ॥

---

१. °पयस्व मूको. २. वा वि[1,2] अ[1] लपं. ३-३. नास्ति मूको. ४-४. नास्ति वि[2] अ[1]. ५. अवचि° वि[1] अ[1]. ६-६. °ण्यस…वि[1]अ[1]. ७. योनिष्ट इन्द्र निषदे ( ऋ १, १०४,१ ) इति मन्त्रः अयम् वि[1,2] अ[1] लपं. ८. नास्ति वि[1]. ९-९. नास्ति वि[2] अ[1]. † स्थाने ल. १०. वृतः अ[1]. ११. °पवक्तव्य° मूको.

**वेङ्कट०** [1]स्तोतॄणामभिलषितमाभिमुख्येन शृण्वते दर्परहिताय†[1] मनुष्याणां द्रष्ट्रे सुष्ठु सुखयित्रे हे वेधः! देवाय [2]मन्म स्तोत्रम्[2] शस्तिम् शस्त्रम् अमरणाय शंस इति होतारमुद्गाताऽनुशास्ति[3]। [4]यथा ग्रावा अभिषवप्रवृत्तः मधुरसस्य सोता शब्दं करोति, एवमहं यम् अग्निम्[4] सामभिः स्तौमि ॥ ३ ॥

त्वं चिन्नः शम्या अग्ने अस्या ऋतस्य बोध्यृतचित् स्वाधीः ।
कदा त उक्था सधमाद्यानि कदा भवन्ति सख्या गृहे ते ॥ ४ ॥

त्वम् । चित् । नः । शम्यै । अग्ने । अस्याः । ऋतस्य । बोधि । ऋतऽचित् । सुऽआधीः ।
कदा । ते । उक्था । सधऽमाद्यानि । कदा । भवन्ति । सख्या । गृहे । ते ॥ ४ ॥

**वेङ्कट०** त्वम् एव अग्ने! अस्मान् यज्ञस्य अस्याः स्तुतेः कर्मणे समर्थान् कुरु। कृत्वा च तां [5]बुध्यस्व हे ऋतज्ञ! शोभनाध्यानः। कदा तव उक्थानि मदीयानि देवैः सह मदननिमित्तानि[5] भवन्ति। कदा[6] सख्यानि त्वदीयानि अस्माकम् गृहे ॥ ४ ॥

कथा ह तद् वरुणाय त्वमग्ने कथा दिवे गर्हसे कन्न आगः ।
कथा मित्राय मीळ्हुषे पृथिव्यै ब्रवः कदर्यम्णे कद् भगाय ॥ ५ ॥

कथा । ह । तत् । वरुणाय । त्वम् । अग्ने । कथा । दिवे । गर्हसे । कत् । नः । आगः ।
कथा । मित्राय । मीळ्हुषे । पृथिव्यै । ब्रवः । कत् । अर्यम्णे । कत् । भगाय ॥ ५ ॥

**वेङ्कट०** अग्ने! त्वम् अस्मदीयम् एनः कथम् वरुणाय गर्हसे, कथं [7]वा दिवे। एतैः† पापं कृतम् इति गर्हा। किं वा अस्माकम् एनः[7] कथं वा मित्राय कामानां सेक्त्रे पृथिव्यै च[8] अस्मान् ब्रूयाः, किं वा अर्यम्णे[9] भगाय वेति ॥ ५ ॥

[2]इति तृतीयाष्टके चतुर्थाध्याये विंशो वर्गः[2] ॥

कद् धिष्ण्यासु वृधसानो अग्ने कद् वाताय प्रतवसे शुभंये ।
परिज्मने नासत्याय क्षे ब्रवः कदग्ने रुद्राय नृघ्ने ॥ ६ ॥

कत् । धिष्ण्यासु । वृधसानः । अग्ने । कत् । वाताय । प्रऽतवसे । शुभम्ऽये ।
परिऽज्मने । नासत्याय । क्षे । ब्रवः । कत् । अग्ने । रुद्राय । नृऽघ्ने ॥ ६ ॥

**वेङ्कट०** [1]किम् आयतनेषु वर्धमानः त्वम् अग्ने! प्रकृष्टबलाय[1] कल्याणं गच्छते वाताय ब्रूयाः। कदिति पूरणमेकं पदम्। परितो गन्त्रे नासत्याय, [10]अश्विनोरन्यतरस्य संज्ञेयम्, क्षा† पृथिवी तस्यै, मनुष्याणां पापकृतां[10] निहन्त्रे रुद्राय चेति ॥ ६ ॥

---

१-१. नास्ति वि[2] अ[1]. † °ताय पूजनीय वि[1] ल लपं. २-२. नास्ति मूको. ३. होता तमुद्गा° वि[2] अ[1]. ४-४. यथा···ग्निं वि[2] अ[1]. ५-५. बुध्यस्व···निमित्तानि वि[2] अ[1]. ६. नास्ति मूको. ७-७. नास्ति वि[2] अ[1]. † नैतैः वि[1] लपं. ८. वा वि[2] अ[1]. ९. नास्ति वि[1] लपं. १०-१०. °न्यत···कृतां वि[2] अ[1]. † क्ष्मा ल लपं.

**वेङ्कट०** मा कस्य चित् सर्वदा एव धनम् अपहरतः पूजां गमः, [१]मा च[१] मनुष्यस्य हिंसतः, मा च अस्माकं बन्धोः। तथाऽस्माकं भ्रातुः अपि[२] अग्ने![३] कुटिलस्य ऋणम् हविः मा वेः। वेतिः कान्तिकर्मा। वयम्[३] मा[४] सख्युः शत्रोर्वा धनम् भुजेम[४], अपि तर्ह्यात्मीयमेव भुजेम। तदर्थमस्मास्वेवागच्छेति[६] ॥ १३ ॥

रक्षा णो अग्ने तव रक्षणेभी रारक्षाणः सुमख प्रीणानः ।
प्रति ष्फुर वि रुज वीड्वंहो जहि रक्षो महि चिद् वावृधानम् ॥ १४ ॥

रक्ष । नः । अग्ने । तव । रक्षणेभिः । ररक्षाणः । सुऽमख । प्रीणानः ।
प्रति । स्फुर । वि । रुज । वीळु । अंहः । जहि । रक्षः । महि । चित् । ववृधानम् ॥ १४ ॥

**वेङ्कट०** रक्ष अस्मान् अग्ने! त्वदीयैः रक्षणैः। रक्षणशीलस्त्वं[७] हे शोभनयज्ञ! प्रीयमाणः, प्रति गच्छ, भग्नं च [८]कुरु दृढम् हन्तृभूतम्[८]। एतदेवाह—नाशय रक्षः[९] महत् अपि वर्धमानम् इति[८] ॥ १४ ॥

एभिर्भव सुमना अग्ने अर्कैरिमान्त्स्पृश मन्मभिः शूर वाजान् ।
उत ब्रह्माण्यङ्गिरो जुषस्व सं ते शस्तिर्देववाता जरेत ॥ १५ ॥

एभिः । भव । सुऽमनाः । अग्ने । अर्कैः । इमान् । स्पृश । मन्मऽभिः । शूर । वाजान् ।
उत । ब्रह्माणि । अङ्गिरः । जुषस्व । सम् । ते । शस्तिः । देवऽवाता । जरेत ॥ १५ ॥

**वेङ्कट०** एभिः मन्त्रैः त्वम् अग्ने! सुमतिः[१०] भव। तथा शूर! इमानि हवींषि च स्पृश मननकुशलैः प्रज्ञापकैः [९]तेजोभिः। अपि च[९] शस्त्राणि हे अग्ने! सेवस्व। तैः सह [११]ते हे अग्ने![११] देवैर्भवद्गुणश्रवणपरैः प्रार्थिता स्तुतिश्च[१२] सम् जरेत भवद्गुणं स्तुयात्[१३] इति ॥ १५ ॥

एता विश्वा विदुषे तुभ्यं वेधो नीथान्यग्ने निण्या वचांसि ।
निवचना कवये काव्यान्यशंसिषं मतिभिर्विप्र उक्थैः ॥ १६ ॥

एता । विश्वा । विदुषे । तुभ्यम् । वेधः । नीथानि । अग्ने । निण्या । वचांसि ।
निऽवचना । कवये । काव्यानि । अशंसिषम् । मतिऽभिः । विप्रः । उक्थैः ॥ १६ ॥

**वेङ्कट०** एतानि विश्वानि [१४]विदुषे तुभ्यम् हे विधातः[१४] अग्ने![३] [१५]प्रशस्यानि अन्तर्हितभवद्गुणानि[१५] वचांसि

---

१-१. नास्ति वि[१]. २. [अग्ने] ल. ३. नास्ति मूको. ४-४. नास्ति वि[२] अ[१]. ५. भजेम ल. ६. °स्वेव ग° वि[२] अ[१]. ७. °ल त्वम् वि[२]. ८-८. कुरु···भूतं वि[२] अ[१]; °ढमहन्तृ° वि[१] लपं. ९. नास्ति ल लपं. १०. समतिः वि[१]. ११-११. तेने वि[२] अ[१]. १२. °तीश्च लपं. १३. स्तु° वि[१] लपं. १४-१४. विदुषे···तर्हि भव° वि[२] अ[१].

क्रान्तप्रज्ञाय तुभ्यम् आभिमुख्येन वचनीयानि काव्यानि कवेर्भवतः कर्माणि अहम् अशंसिषम् पूजनीयैः [1]सूक्तैः मेधावी[1] ॥ १६ ॥

[2]इति तृतीयाष्टके चतुर्थाध्याये द्वाविंशो वर्गः[2] ॥

## [ ४ ]

[2]वामदेवो गौतम ऋषिः। रक्षोहाऽग्निः देवता। त्रिष्टुप् छन्दः[2]।

कृणुष्व पाजः प्रसितिं न पृथ्वीं याहि राजेवामवाँ इभेन।
तृष्वीमनु प्रसितिं द्रूणानोऽस्तासि विध्य रक्षसस्तपिष्ठैः ॥ १ ॥

कृणुष्व। पाजः। प्रऽसितिम्। न। पृथ्वीम्। याहि। राजाऽइव। अमऽवान्। इभेन।
तृष्वीम्। अनु। प्रऽसितिम्। द्रूणानः। अस्ता। असि। विध्य। रक्षसः। तपिष्ठैः ॥ १ ॥

**वेङ्कट०** [1]विस्तारय ज्वालालक्षणं बलम्। तेज[2] एव वा पाजः[3]। प्रसितिः[4] प्रबन्धनात्, तन्तिर्वा[5] जालं वा मृगग्रहणाय, पृथ्वीम् प्रसितिम् इव याहि राजेव अमात्यवान् हस्तिना [6]क्षिप्रकारिणीम् प्रसितिम् राक्षसेषु अनु द्रूणानः। द्रूणातिर्विस्तारकर्मा[6]। निरसिता असि, राक्षसान् तप्तृतमैस्तेजोभिः[7] विध्य इति ॥ १ ॥

तव भ्रमास आशुया पतन्त्यनु स्पृश धृषता शोशुचानः।
तपूंष्यग्ने जुह्वा पतङ्गानसंदितो वि सृज विष्वगुल्काः ॥ २ ॥

तव। भ्रमासः। आशुऽया। पतन्ति। अनु। स्पृश। धृषता। शोशुचानः।
तपूंषि। अग्ने। जुह्वा। पतङ्गान्। असम्ऽदितः। वि। सृज। विष्वक्। उल्काः ॥ २ ॥

**वेङ्कट०** तव भ्रमणशीला रश्मयः आशवः पतन्ति। हे अग्ने! तेषामन्यतमेन धर्षणशीलेन [8]अनु स्पृश† दीप्यमानः तापयितॄणि[8] रक्षांसि[9] पतनशीलांश्चासुरान्[10] होमसाधनभूतेन। किं बहुना। दामभिरसम्बद्धः[11] त्वं सर्वतः [1]रक्षसां हननाय उल्काः वि सृज[1] ॥ २ ॥

प्रति स्पशो वि सृज तूर्णितमो भवा पायुर्विशो अस्या अदब्धः।
यो नो दूरे अघशंसो यो अन्त्यग्ने माकिष्टे व्यथिरा दधर्षीत् ॥ ३ ॥

प्रति। स्पशः। वि। सृज। तूर्णिऽतमः। भव। पायुः। विशः। अस्याः। अदब्धः।
यः। नः। दूरे। अघऽशंसः। यः। अन्ति। अग्ने। माकिः। ते। व्यथिः। आ। दधर्षीत् ॥ ३ ॥

---

१-१. नास्ति वि[२] अ[१]　२-२. नास्ति मूको.　३. वाजः वि[२] अ[१] लपं.　४. °सृतिः अ[१].　५. तन्तुर्वा या ६,१२.　६-६. क्षि···द्रुणा° वि[२] अ[१].　७. तप्तत° लपं.　८-८. नास्ति वि[२] अ[१].　† स्पृशति मूको; पृशेति ल प्रस्तावः.　९. °सि च वि[२] अ[१].　१०. तपनशी° मूको.　११. °म्बन्धः वि[२] अ[१].

वेङ्कट० [1]स्पशतिर्ज्ञानकर्मा। प्रति वि सृज ज्वालाः अतिशयेन शत्रून् तरन्। भव रक्षकः अस्याः विशः त्वं रक्षोभिः अहिंसितः[1]। यः अस्माकम् दूरे अघायुः यो वा अन्तिके अग्ने! स मा अस्मान् व्यथयिता[2] आ [1]धर्षयतु तव स्वभूतान्[1] ॥ ३ ॥

उदग्ने तिष्ठ प्रत्या तनुष्व न्य१मित्राँ ओषतात्तिग्महेते ।
यो नो अरातिं समिधान चक्रे नीचा तं धक्ष्यतसं न शुष्कम् ॥ ४ ॥

उत् । अग्ने । तिष्ठ । प्रति । आ । तनुष्व । नि । अमित्रान् । ओषतात् । तिग्मऽहेते ।
यः । नः । अरातिम् । सम्ऽइधान । चक्रे । नीचा । तम् । धक्षि । अतसम् । न । शुष्कम् ॥४॥

वेङ्कट० उत् तिष्ठ अग्ने!, प्रति विस्तारयाऽऽत्मानम्। अथ अमित्रान् आभिमुख्येन दह हे तिग्मदीप्त्यायुध!। यः अस्माकम् अरातित्वं करोति हे समिधान!, न्यग्भूतं कृत्वा तम् दह अतसम् इव शुष्कम्। अतसान् अनायासतो[3] दहत्यग्निरन्येभ्यः काष्ठेभ्यः ॥ ४ ॥

ऊर्ध्वो भव प्रति विध्याध्यस्मदाविष्कृणुष्व दैव्यान्यग्ने ।
अव स्थिरा तनुहि यातुजूनां जामिमजामिं प्र मृणीहि शत्रून् ॥ ५ ॥

ऊर्ध्वः । भव । प्रति । विध्य । अधि । अस्मत् । आविः । कृणुष्व । दैव्यानि । अग्ने ।
अव । स्थिरा । तनुहि । यातुऽजूनाम् । जामिम् । अजामिम् । प्र । मृणीहि । शत्रून् ॥ ५ ॥

वेङ्कट० ऊर्ध्वम्[4] उत्तिष्ठ। अस्मत्तः अधि[4] रक्षांसि च प्रति विध्य। आविः कुरु च दैव्यानि तेजांसि अग्ने!। पतितज्यानि च[5] कुरु धनूंषि हिंसार्थं जवं कुर्वतां राक्षसानाम्। ज्ञातिम्[6] अज्ञातिं[7] वा शत्रून् प्र मृणीहि विनाशयेति ॥ ५ ॥

[8]इति तृतीयाष्टके चतुर्थाध्याये त्रयोविंशो वर्गः ॥[8]

स ते जानाति सुमतिं यविष्ठ य ईवते ब्रह्मणे गातुमैरत् ।
विश्वान्यस्मै सुदिनानि रायो द्युम्नान्यर्यो वि दुरो अभि द्यौत् ॥ ६ ॥

सः । ते । जानाति । सुऽमतिम् । यविष्ठ । यः । ईवते । ब्रह्मणे । गातुम् । ऐरत् ।
विश्वानि । अस्मै । सुऽदिनानि । रायः । द्युम्नानि । अर्यः । वि । दुरः । अभि । द्यौत् ॥ ६ ॥

वेङ्कट० सः तव जानाति शोभनां मतिं हे युवतम!, यः [9]गमनवते ब्रह्मणे[9] तुभ्यं[10] स्तुतिं[11] प्रेरयति।

---

१-१. नास्ति वि[2] अ[1]. २. व्याधयिता वि[1] ल; व्यधयिता वि[2] अ[1]. ३. अनायादतः मूको. ४. नास्ति वि[1] लपं. ५. नास्ति अ[1]. ६. जातिं वि[1] लपं; जामिं अ[1]. ७. नास्ति वि[2] अ[1]. ८-८. नास्ति मूको. ९-९. °वत्वे न ये वि[2] अ[1]; °वत्वे न य वि[1] लपं. १०. नास्ति मूको. ११. °तीः अ[1].

[1]गातिः शब्दकर्मा[1]। तत्कथमित्याह — विश्वानि एव अस्मै सुदिनानि भवन्ति अहानि, धनानि च भवन्ति। तथाऽयम् ईश्वरो भूत्वा अन्नानि तद्द्वाराणि च लक्षीकृत्य वि द्योतते[2] ॥ ६ ॥

सेदग्ने अस्तु सुभगः सुदानुर्यस्त्वा नित्येन हविषा य उक्थैः ।
पिप्रीषति स्व आयुषि दुरोणे विश्वेदस्मै सुदिना सासदिष्टिः ॥ ७ ॥

सः । इत् । अग्ने । अस्तु । सुऽभगः । सुऽदानुः । यः । त्वा । नित्येन । हविषा । यः । उक्थैः ।
पिप्रीषति । स्वे । आयुषि । दुरोणे । विश्वा । इत् । अस्मै । सुऽदिना । सा । असत् । इष्टिः ॥

**वेङ्कट०** सः[3] एव अग्ने! अस्तु शोभनधनः शोभनदानश्च, यः[4] त्वाम् अनवरतेन[5] हविषा प्रीणयितुमिच्छति, यः च उक्थैः आत्मीये जीवनार्थम् गृहे। तथा विश्वानि एव अस्मै सुदिनानि। सा भवतु इष्टिः। इष्ट्युपसंहार[6] इत्थं फलप्रदो भवत्विति ॥ ७ ॥

अर्चामि ते सुमतिं घोष्यर्वाक् सं ते वावाता जरतामियं गीः ।
स्वश्वास्त्वा सुरथा मर्जयेमास्मे क्षत्राणि धारयेरनु द्यून् ॥ ८ ॥

अर्चामि । ते । सुऽमतिम् । घोषि । अर्वाक् । सम् । ते । वावाता । जरताम् । इयम् । गीः ।
सुऽअश्वाः । त्वा । सुऽरथाः । मर्जयेम । अस्मे इति । क्षत्राणि । धारयेः । अनु । द्यून् ॥ ८ ॥

**वेङ्कट०** उच्चारयामि तव सुमतिम् घोषयुक्तम् उच्चैः, यथा अर्वाक् सा[7] भवत्वस्मदभिमुखी। सम्[8] स्तौतु ते[9] प्रियतमा इयम् गीः त्वाम्। स्वश्वाः सुरथाः च सन्तो वयं तद्रक्षणार्थं परिचरेम त्वाम्। अस्मासु बलानि स्थापय[10] दिवसेषु ॥ ८ ॥

इह त्वा भूर्या चरेदुप त्मन् दोषावस्तर्दीदिवांसमनु द्यून् ।
क्रीळन्तस्त्वा सुमनसः सपेमाभि द्युम्ना तस्थिवांसो जनानाम् ॥ ९ ॥

इह । त्वा । भूरि । आ । चरेत् । उप । त्मन् । दोषाऽवस्तः । दीदिऽवांसम् । अनु । द्यून् ।
क्रीळन्तः । त्वा । सुऽमनसः । सपेम । अभि । द्युम्ना । तस्थिऽवांसः । जनानाम् ॥ ९ ॥

**वेङ्कट०** हे अग्ने![11] अस्मिन् लोके आत्मनि भूयिष्ठं प्राज्ञः त्वाम् उप आ चरति रात्रावह्नि च दीप्यमानं दिनेदिने। वयं च पुत्रैर्नप्तृभिश्च क्रीडन्तः सुमनसः मोदमानाः[12] त्वां भजेम शत्रुजनानाम् अन्नानि अभि तिष्ठन्तः ॥ ९ ॥

---

१-१. नास्ति वि[1] लपं. २. °ते कम् वि[1] लपं. ३. यः वि[2] अ[1]. ४. यत् वि[2] अ[1]. ५. °रतं तेन मूको. ६. इत्युपसंहार मूको. ७. स वि[1] लपं. ८. नास्ति वि[1] लपं. ९. नास्ति लपं. १०. स्थापयत मूको. ११. अग्ने वि[2] अ[1] लपं. १२. मदाम वि[1] लपं.

यस्त्वा स्वश्वः सुहिरण्यो अंग्न उपयाति वसुमता रथेन ।
तस्य त्राता भवसि तस्य सखा यस्त आतिथ्यमानुषग् जुजोषत् ॥ १० ॥

यः । त्वा । सुऽअश्वः । सुऽहिरण्यः । अग्ने । उपऽयाति । वसुऽमता । रथेन ।
तस्य । त्राता । भवसि । तस्य । सखा । यः । ते । आतिथ्यम । आनुषक् । जुजोषत् ॥ १० ॥

**वेङ्कट०** यः त्वाम् अग्ने! स्वश्वः सुहिरण्यः[1] वसुपूर्णेन[2] रथेन च युक्तः[3] तत्परिरक्षणार्थम् उपगच्छति, तस्य त्वम् त्राता भवसि सखा च। उपगमनप्रकारमाह—यः त्वदर्थम् आतिथ्यम् अनुषक्तम् सेवत इति ॥ १० ॥

[4]इति तृतीयाष्टके चतुर्थाध्याये चतुर्विंशो वर्गः[4] ॥

महो रुजामि बन्धुता वचोभिस्तन्मा पितुर्गोतमादन्वियाय ।
त्वं नो अस्य वचसश्चिकिद्धि होतर्यविष्ठ सुक्रतो दमूनाः ॥ ११ ॥

महः । रुजामि । बन्धुता । वचःऽभिः । तत् । मा । पितुः । गोतमात् । अनु । इयाय ।
त्वम् । नः । अस्य । वचसः । चिकिद्धि । होतः । यविष्ठ । सुक्रतो इति सुऽक्रतो । दमूनाः ॥ ११ ॥

**वेङ्कट०** महतोऽपि शत्रून् अहम् रुजामि । मम हि त्वया हे अग्ने! बान्धवमस्ति स्तुतिवचनैः । तत्[5] बान्धवं मम पितुः [6]गोतमात् माम् अनु इयाय[6] । मया पित्रा च तवास्ति बान्धवमित्यर्थः । तथा सति त्वम् अस्माकम् इदं वचनं[7] बुध्यस्व । हे होतः! युवतम! सुप्रज्ञ! रक्षसां दमनमनाः त्वमिति ॥११॥

अस्वप्नजस्तरणयः सुशेवा अतन्द्रासोवृका अश्रमिष्ठाः ।
ते पायवः सध्र्यञ्चो निषद्याग्ने तव नः पान्त्वमूर ॥ १२ ॥

अस्वप्नऽजः । तरणयः । सुऽशेवाः । अतन्द्रासः । अवृकाः । अश्रमिष्ठाः ।
ते । पायवः । सध्र्यञ्चः । निऽसद्य । अग्ने । तव । नः । पान्तु । अमूर ॥ १२ ॥

**वेङ्कट०** स्वापमकुर्वन्तः क्षिप्रगतयः सुसुखाः अनलसाः[8] स्तेनरहिताः अश्रान्ततमाः ते तव रश्मयः सहाञ्चन्तः निषद्य अग्ने! अस्मान् रक्षन्तु अमूढ! ॥ १२ ॥

ये पायवो मामतेयं ते अग्ने पश्यन्तो अन्धं दुरितादरक्षन् ।
ररक्ष तान्त्सुकृतो विश्ववेदा दिप्सन्त इद् रिपवो नाह देभुः ॥ १३ ॥

ये । पायवः । मामतेयम् । ते । अग्ने । पश्यन्तः । अन्धम् । दुःऽइतात् । अरक्षन् ।
ररक्ष । तान् । सुऽकृतः । विश्वऽवेदाः । दिप्सन्तः । इत् । रिपवः । न । अह । देभुः ॥ १३ ॥

---

१. सहिरण्यः वि[१] लपं. २. °र्णो वि[१] लपं. ३. युक्तम् वि[१] अ[१]. ४-४. नास्ति मूको. ५. त्वत् लपं. ६-६. °मानामन्वि° अ[१]. ७. नास्ति वि[१] लपं. ८. °सः ल.

**वेङ्कट०** ये रश्मयः समतायाः अपत्यं दीर्घतमसं तव अग्ने! [1]पश्यन्तः अन्धम्[1] दासैः पीड्यमानं तस्मात् दुःखात् अरक्षन्। परोक्षः शेषः। अयमग्निः विश्ववेदाः तान् रश्मीन् शोभनकर्मणः कर्तॄन् ररक्ष न परित्यजति। ततोऽस्मान्[2] दम्भितुमिच्छन्तः [3]एव शत्रवः[3] न एव[3] देभुः तत्सम्भवादिति[4] ॥ १३ ॥

त्वया व॒यं स॑ध॒न्य॑१॒स्त्वोता॒स्तव॒ प्रणी॑त्यश्याम॒ वाजा॑न् ।
उ॒भा शंसा॑ सूदय सत्यताते॒ऽनुष्ठु॒या कृ॑णुह्यह्रयाण ॥ १४ ॥

त्वया॑ । व॒यम् । स॒ऽध॒न्यः॑ । त्वाऽऊ॑ताः । तव॑ । प्रऽनी॑ती । अ॒श्याम॒ । वाजा॑न् ।
उ॒भा । शंसा॑ । सू॒द॒य॒ । स॒त्य॒ऽता॒ते॒ । अ॒नु॒ष्ठु॒या । कृ॒णु॒हि॒ । अ॒ह्र॒या॒ण॒ ॥ १४ ॥

**वेङ्कट०** त्वया वयम् हे अग्ने! सदा[5] सधन्यः, त्वया रक्षिताः तव प्रणयनेन भुञ्जीमहि[6] अन्नानि। स त्वं शत्रूणां प्रत्यक्षाभिशापं [7]परोक्षाभिशापं च विनाशय हे सत्यस्य विस्तारयितः![7] साध्वेवास्माकं कुरु हे अह्रीतगमन![8] कामप्रदानादिति ॥ १४ ॥

अ॒या ते॑ अग्ने स॒मिधा॑ विधेम॒ प्रति॒ स्तोमं॑ श॒स्यमा॑नं गृभाय ।
दहा॒शसो॑ र॒क्षसः॑ पा॒ह्य॑१॒स्मान् द्रु॒हो नि॒दो मि॑त्रमहो अव॒द्यात् ॥ १५ ॥

अ॒या । ते॒ । अ॒ग्ने॒ । स॒म्ऽइधा॑ । वि॒धे॒म॒ । प्रति॑ । स्तोम॑म् । श॒स्यमा॑नम् । गृ॒भा॒य॒ ।
दह॑ । अ॒शसः॑ । र॒क्षसः॑ । पा॒हि । अ॒स्मान् । द्रु॒हः । नि॒दः । मि॒त्र॒ऽम॒हः॒ । अ॒व॒द्यात् ॥ १५ ॥

**वेङ्कट०** अनया समिधा तुभ्यम् अग्ने! परिचरामः[9]। स्तोमम् च अस्माभिः शस्यमानम् [10]प्रति गृहाण, दह च अशनपरान् राक्षसान्†, पाहि[10] च अस्मान् द्रोग्धुः निन्दितुश्च अवद्यात् हे मित्राणां पूजक! इति ॥ १५ ॥

[11]इति तृतीयाष्टके चतुर्थाध्याये पञ्चविंशो वर्गः[11] ॥

व्याख्यच्चतुर्थमध्यायं तृतीयस्याष्टकस्य सः।
भवगोलकुले यस्य [12]मातुरासीत् समुद्भवः[12] ॥

[13]इति वेङ्कटमाधवाचार्यविरचिते ऋक्संहिताव्याख्याने तृतीयाष्टके चतुर्थोऽध्यायः[13] ॥

— ❀ —

इति ऋग्वेदे सभाष्ये तृतीयाष्टके चतुर्थोऽध्यायः ॥

---

१-१. नास्ति वि[2] अ[1]. २. ततोऽस्मान् वि[1,2] अ[1] लपं; ते नोऽस्मात् ल. ३. एवं वि[2] अ[1]. ४. कं भवामिति वि[1] लपं. ५. स्तदा वि[1] लपं. ६. भुक्षी° वि[2] अ[1]. ७-७. °क्षाभि···विस्तार° वि[2] अ[1]. ८. तु. या ५,१५. ९. °चरेन वि[1] लपं. १०-१०. प्रति···पाहि वि[2] अ[1]. † रक्षसः वि[1] लपं. ११-११. नास्ति मूको. १२-१२. नास्ति वि[1]. १३-१३. नास्ति वि[1] लपं; इति वेङ्कटमाधवाचार्यकृतौ ऋग्वेदभाष्ये तृतीये अष्टके चतुर्थोऽध्यायः समाप्तः वि[2] अ[1]; इति तृतीयाष्टके चतुर्थोऽध्यायः ल.

## अथ तृतीयाऽष्टके पञ्चमोऽध्यायः

वेङ्कट०

"[१]वैश्वानराय मीळ्हुषे"[१] व्याचिख्यासति माधवः ।
आदौ [२]प्रदर्शयन्नर्थमृचां या[२] हिभिरन्विताः ॥ १ ॥

वाक्यार्थस्य परार्थत्वे हिशब्दोऽयं प्रयुज्यते ।
[३]उद्गृह्णाति च वाक्यार्थम् 'इन्द्रवो वामुशन्ति हि'† ॥ २ ॥

उद्गृह्यमाणो[३] वाक्यार्थो न स्वस्मिन् पर्यवस्यति ।
कामयन्ते हि वां सोमास्तस्मादागच्छतं[४] युवाम् ॥ ३ ॥

'सुते हि त्वा हवामहे'[५], 'स हि नः प्रमतिर्मही'[६] ।
'नहि त्वा रोदसी [७]उभे'† सर्वेषूद्ग्रहणं[७] स्फुटम् ॥ ४ ॥

वाक्यान्तरेणान्वयार्थमप्ययं हिः[८] प्रयुज्यते ।
असत्यपि च हेतुत्वे तथैवोद्ग्रहणेऽसति[९] ॥ ५ ॥

'युक्ष्वा हि देवहूतमान्'[१०], 'उषो वाजं हि [११]वंस्व यः†'‡ ।
'नहि ते क्षत्रं न सहः'¶[११], 'उरुं हि राजा वरुणः'[१२] ॥ ६ ॥

अश्वान् रथे योजयित्वा तेनागत्य निषीद च ।
चित्रमन्नं प्रयच्छोषस्तेन यज्ञानुपावह[१३] ॥ ७ ॥

क्षत्रादीनि [१४]वयो† नापुर्नाप्यापो‡[१४] वेगवत्तमाः ।
विस्तीर्णमार्गकरणात् पादाऽकः[१५] प्रतिधातवे ॥ ८ ॥

आश्चर्ये हिः[१६] प्रसिद्ध्यां[१७] च तथौचित्ये च दृश्यते ।
अस्ति चोद्ग्रहणं तेषु[१८] सर्वेष्विति विनिश्चयः ॥ ९ ॥

'परा हि मे विमन्यवः'[१९], 'आ हि ष्मा सूनवे पिता'[२०] ।
'नहि वामस्ति दूरके'[२१] आश्चर्यार्थ[२२] इमे हयः ॥ १० ॥

---

१-१. नास्ति वि[२] अ[१]. २-२. °र्शय ··· भिर° वि[२] अ[१]; °यन् वृर्ति तिडां ये हिभि वेंकश. ३-३. ··· उद्गृह्य° वि[२] अ[१]. † ऋ १,२,४. ४. °माः स्वस्म[ा]° अ[१]; °मस्तस्मा° लपं; °स्मादगच्छत् वि[२]. ५. ऋ १,१६,४. ६. ऋ ६,४५,४. ७-७ नास्ति वि[२] अ[१]; °वुभे तिङर्थोऽत्र हिना स्फुटः वेंकश. † ऋ १,१०,८. ८. हि अ[१]. ९. °णे सति ल. १०. ऋ ८,७५,१. ११-११. नास्ति वि[२] अ[१]. † नास्ति वेंकश. ‡ ऋ १,४८,११. ¶ ऋ १,२४,६. १२. ऋ १,२४,८. १३. °ज्ञानुवाच ह वि[२] अ[१]; °ज्ञमुवाह च वेंकश. १४-१४. नास्ति वि[२] अ[१]. † वये वि[१] लपं. ‡ °पुर्नवा° वेंकश. १५. तु. ऋ १,२४,८; पादा कः ल. १६. हि वि[१] लपं. १७. °द्धौ अ[१]. १८. तेन वि[२] अ[१]; तेषां वेंकश. १९. ऋ १,२५,४. २०. ऋ १,२६,३. २१. ऋ १,२२,४. २२. °र्थाः ल.

'स हि श्रवस्युः'[1], 'त्वं ह्यग्ने'[2] प्रसिद्धयां[3] ही श्रुताविमौ ।
तथा[4] 'त्वां ह्यग्ने सदमित्'[5] बहवः सन्ति तादृशाः ॥ ११ ॥
'एवा ह्यस्य सूनृतें (ता'[6] इ)ति तृचे दृष्टा[7] हयस्त्रयः ।
औचित्यार्थां भवन्त्येते सन्त्यन्येऽपि च तादृशाः ॥ १२ ॥
समुच्चये च हिर्दृष्टः 'स मन्दस्वा ह्यन्धसः'[8] ।
तत्पुरश्चानुदात्तस्तिङ्[9] सन्त्यन्येऽपि च तादृशाः ॥ १३ ॥
हेरर्थं यो विजानाति न स मन्त्रेषु मुह्यति ।
तेन प्रदर्शितोऽस्माभिरर्थस्तस्य[10] प्रपञ्चतः[11] ॥ १४ ॥ इति ॥

## [ ५ ]

[12]वामदेवो गौतम ऋषिः । वैश्वानरोऽग्निर्देवता । त्रिष्टुप् छन्दः[12] ।

वैश्वानराय मीळ्हुषे सजोषाः कथा दाशेमाग्नये बृहद् भाः ।
अनूनेन बृहता वक्षथेनोप स्तभायदुपमिन्न रोधः ॥ १ ॥

वैश्वानराय । मीळ्हुषे । सऽजोषाः । कथा । दाशेम । अग्नये । बृहत् । भाः ।
अनूनेन । बृहता । वक्षथेन । उप । स्तभायत् । उपऽमित् । न । रोधः ॥ १ ॥

वेङ्कट० वामदेवः । वैश्वानराय अग्नये[13] सेक्त्रे सप्रीतयः कथं हविर्दद्याम । योऽत्यन्तं भासते, सोऽयम् अविकलेन महता वहनकुशलेन तेजसा रोधः द्याम् अधः स्थित्वा उप स्तभायत् यथा उपमित् स्थूणावंशम् इति ॥ १ ॥

मा निन्दत य इमां मह्यं रातिं देवो ददौ मर्त्याय स्वधावान् ।
पाकाय गृत्सो अमृतो विचेता वैश्वानरो नृतमो यह्वो अग्निः ॥ २ ॥

मा । निन्दत । यः । इमाम् । मह्यम् । रातिम् । देवः । ददौ । मर्त्याय । स्वधाऽवान् ।
पाकाय । गृत्सः । अमृतः । विऽचेताः । वैश्वानरः । नृऽतमः । यह्वः । अग्निः ॥ २ ॥

वेङ्कट० मा निन्दत[14] तम्[15], यः इमाम् मह्यम् रातिम् धनम् देवः ददौ[16] मर्त्याय अन्नवान् अपक्वप्रज्ञाय स्वयं मेधावी अमरणधर्मा विशिष्टचेताः वैश्वानरः नेतृतमः महान् अग्निः ॥ २ ॥

---

१. ऋ १,५५,६. २. ऋ १,१४४,६. ३. °द्धौ अ[1]. ४. तदा वि[1] लपं. ५. ऋ ४,१,१. ६. ऋ १,८,८. ७. दृष्टा वि[2]. ८. ऋ ३,४१,६. ९. तत्पर° लपं. १०. °भिर्हेरर्थश्च अ[1] वेंऋअ; °भिरर्थस्य वि[2]. ११. प्रपञ्चितः वि[1] वि[2] अ[1] ल. १२-१२. नास्ति मूको· १३. नास्ति मूको. १४. निन्द अ[1]. १५. नास्ति वि[2]. १६. ददे वि[2] अ[1].

साम॑ द्वि॒बर्हा॒ महि॑ ति॒ग्मभृ॑ष्टिः स॒हस्र॑रेता वृष॒भस्तुवि॑ष्मान् ।
प॒दं न गोरप॑गूळ्हं विवि॒द्वान॒ग्निर्मह्यं॒ प्रेदु॑ वोचन्मनी॒षाम् ॥ ३ ॥

साम॑ । द्वि॒ऽबर्हाः॑ । महि॑ । ति॒ग्मऽभृ॑ष्टिः । स॒हस्र॑ऽरेताः । वृ॒ष॒भः । तुवि॑ष्मान् ।
प॒दम् । न । गोः । अप॑ऽगूळ्हम् । वि॒वि॒द्वान् । अ॒ग्निः । मह्य॑म् । प्र । इत् । ऊँ इति॑ । वो॒च॒त् । म॒नी॒षाम् ॥३॥

**वेङ्कट०** ऋक्स्थं[1] साम द्वयोः परिवृळ्हः महत् ज्वालालक्षणतिग्मभृष्टिः[2], भृष्टिः भ्रंशयतीति, सहस्ररेताः नानाविधानां पशूनामुत्पादनात्, 'तद् वैश्वानरवत् प्रजननवत्तरमुपैति' ( तैब्रा १,३,१,६ ) इति ब्राह्मणम्, कामानां वर्षिता बहुधनः स्थानम् इव चोरैरपहृतस्य गोः निगूढं[3] याथात्म्येन जानन्[4] अग्निः मह्यम् प्र एव वोचत् मनीषाम्[5]। 'साम वै रक्षोहा' (तै ६,६,३,१) इति ब्राह्मणमिति ॥ ३ ॥

प्र ताँ अ॒ग्निर्ब॑भसत् ति॒ग्मज॑म्भ॒स्तपि॑ष्ठेन शो॒चिषा॒ यः सु॒राधाः॑ ।
प्र ये मि॒नन्ति॒ वरु॑णस्य॒ धाम॑ प्रि॒या मि॒त्रस्य॒ चेत॑तो ध्रु॒वाणि॑ ॥ ४ ॥

प्र । तान् । अ॒ग्निः । ब॒भ॒स॒त् । ति॒ग्मऽज॑म्भः । तपि॑ष्ठेन । शो॒चिषा॑ । यः । सु॒ऽराधाः॑ ।
प्र । ये । मि॒नन्ति॑ । वरु॑णस्य । धाम॑ । प्रि॒या । मि॒त्रस्य॑ । चेत॑तः । ध्रु॒वाणि॑ ॥ ४ ॥

**वेङ्कट०** प्र [6]भक्षयतु तान्[6] अग्निः तीक्ष्णदंष्ट्रः तप्तृतमेन तेजसा, यः अग्निः सुधनो भवति, ये राक्षसाः प्र मिनन्ति वरुणस्य स्थानानि, व्रतानीत्यर्थः, प्रियाणि मित्रस्य जानतः पुण्यपापानि मनुष्याणाम् स्थिराणि[7] ॥ ४ ॥

अ॒भ्रा॒तरो॒ न योष॑णो॒ व्यन्तः॑ पति॒रिपो॒ न जन॑यो दु॒रेवाः॑ ।
पा॒पासः॒ सन्तो॑ अनृ॒ता अ॑स॒त्या इ॒दं प॒दम॑जनता गभी॒रम् ॥ ५ ॥

अ॒भ्रा॒तरः॑ । न । योष॑णः । व्यन्तः॑ । प॒ति॒ऽरिपः॑ । न । जन॑यः । दुः॒ऽएवाः॑ ।
पा॒पासः॑ । सन्तः॑ । अ॒नृ॒ताः । अ॒स॒त्याः । इ॒दम् । प॒दम् । अ॒ज॒न॒त॒ । ग॒भी॒रम् ॥ ५ ॥

**वेङ्कट०** यथा [8]भ्रातृवर्जिताः स्त्रियः[8] पुंसः प्रतीच्यो गच्छन्ति एवं राक्षसा मां दृष्ट्वा व्यतिगच्छन्ति। यथा वा पतिलिप्ताः पतिव्रताः जायाः[9] परेषां दर्शनात् प्रतीच्यः कुटिलगमना भवन्ति। पापस्वभावाः सन्तः[10] राक्षसाः अनृतयुक्ताः। 'बहु वै राजन्योऽनृतं करोति। उपजाम्यै हरते। जिनाति ब्राह्मणम्। वदत्यनृतम्' ( तैब्रा १,७,२,६ ) इति ब्राह्मणम्। वाचिकमनृतमसत्यम्।

---

१. ऋक् वि[1] लपं. २. °ष्टि वि[1] लपं. ३. नरूढम् वि[1] अ[1] लपं. ४. नास्ति वि[1] अ[1]. ५. नास्ति मूको. ६-६. °य कृतान् वि[1] अ[1]. ७. ध्रुवाणि ल. ८-८. °तस्त्रि° वि[2]. ९. याः वि[1] लपं. १०. नास्ति लपं.

एवंविधाः इदम् मदीयं वैश्वानरस्य स्थानभूतं जानन्ति हिंसार्थमभिगच्छन्तो बुध्यन्ते[१] गम्भीरम्। [२]उत्तरत्र सम्बन्धः[२] ॥ ५ ॥

[३]इति तृतीयाष्टके पञ्चमाध्याये प्रथमो वर्गः[३] ॥

इदं मे अग्ने कियते पावकाऽमिनते गुरुं भारं न मन्म ।
बृहद् दधाथ धृषता गभीरं यह्वं पृष्ठं प्रयसा सप्तधातु ॥ ६ ॥

इदम् । मे । अग्ने । कियते । पावक । अमिनते । गुरुम् । भारम् । न । मन्म ।
बृहत् । दधाथ । धृषता । गभीरम् । यह्वम् । पृष्ठम । प्रयसा । सप्तऽधातु ॥ ६ ॥

**वेङ्कट०** [४]इदम् मह्यम् अग्ने! स्वल्पभूताय साधवे पावक! साधूनहिंसते गुरुम् इव भारम् मननीयं बृहत् धारय, धृष्टेन अन्नेन गम्भीरं महान्तं मदीयम् पृष्ठम्, †पृष्ठः[४] सप्तधातु च† शरीरवचनः। त्वक्चर्ममांसरुधिरमेदोऽस्थिमज्जानः सप्त धातव इति ॥ ६ ॥

तमिन्न्वे३व समना समानमभि क्रत्वा पुनती धीतिरश्याः ।
ससस्य चर्मन्नधि चारु पृश्नेरग्रे रुप आरुपितं जबारु ॥ ७ ॥

तम् । इत् । नु । एव । समना । समानम् । अभि । क्रत्वा । पुनती । धीतिः । अश्याः ।
ससस्य । चर्मन् । अधि । चारु । पृश्नेः । अग्रे । रुपः । अरुपितम् । जबारु ॥ ७ ॥

**वेङ्कट०** तम् एव सदृशी सदृशम्[५] अभि अश्नोति कर्मणा शोधयन्ती बुद्धिः। तस्यैव मतिः [६]कल्याणी भवतीत्यर्थः। प्रत्यक्षाग्निवत्[६] दहतीति वैश्वानरः स उच्यते। ससतिः स्वप्नकर्मा[७]। गौः पृश्निः। गोः अधि त्वचि। येन वैश्वानरस्य प्रातरेव रोपयति[८] शरीराणीति [९]वैश्वानरो रुब् उच्यते (?) तस्य आरोपितम् अभिषवार्थम्[९] जबारु जवेन रोहणशीलं[१०] जवहेतुर्वा[११] सोमांशुरिति ॥ ७ ॥

प्रवाच्यं वचसः किं मे अस्य गुहा हितमुप निणिग् वदन्ति ।
यदुस्रियाणामप वारिव व्रन् पाति प्रियं रुपो अग्रं पदं वेः ॥ ८ ॥

प्रऽवाच्यम् । वचसः । किम् । मे । अस्य । गुहा । हितम् । उप । निणिक् । वदन्ति ।
यत् । उस्रियाणाम् । अप । वाःऽइव । व्रन् । पाति । प्रियम् । रुपः । अग्रम् । पदम् । वेरिति वेः ॥ ८ ॥

**वेङ्कट०** गवां गुहायां निहितम्। निणिक् इति [१२]रूपनाम, निर्णेजनादिहेतुपयोवचनः। यत्† उस्रियाणाम् गुहायां निहितं[१२] मनुष्याः पय उदकमिव अप अवृण्वन्। दुग्धवन्त इत्यर्थः। तत्

१. यु° वि॰ लपं. २-२. नास्ति वि[२] अ[१]. ३-३. नास्ति मूको. ४-४. नास्ति वि[२] अ[१]. †-† नास्ति मूको. ५. नास्ति वि[२] अ[१]. ६-६. त्या···क्षामि वि[२] अ[१]. ७. स्वन° वि[२] अ[१]. ८. रोचय° वि[२] अ[१]. ९-९. °नर···रोपित° वि[२] अ[१]. १०. आरोह° वि[२] अ[१]. ११. °हेतु वा लपं. १२-१२ °नाम···निहि° वि[२] अ[१]. † यः मूको.

उप वदन्ति दुग्ध्वाऽऽदायाग्रतः स्थित्वा पानार्थं गृहाणेति वदन्ति। तस्य अस्य वचसः किम् मे प्रवाच्यम् प्रकर्षेण [1]वक्तव्यम्। एवंविधं प्रियवचनं[1] प्रतिवक्तुं युक्तं न दृश्यत इत्यर्थः। तद्धि वैश्वानरस्य कामयमानस्य प्रियम् उत्तमं[2] स्थानं शरीराख्यं रक्षतीति ॥ ८ ॥

इदमु त्यन्महि महामनीकं यदुस्रिया सचत पूर्व्यं गौः।
ऋतस्य पदे अधि दीद्यानं गुहा रघुष्यद् रघुयद् विवेद ॥ ९ ॥

इदम्। ऊँ इति। त्यत्। महि। महाम्। अनीकम्। यत्। उस्रिया। सचत। पूर्व्यम्। गौः।
ऋतस्य। पदे। अधि। दीद्यानम्। गुहा। रघुऽस्यत्। रघुऽयत्। विवेद ॥ ९ ॥

वेङ्कट० इदम् एव तत् महतां [3]देवानाम् महत् अनीकम्। अनीकशब्दः अग्रवचनः। पणीन् प्रति[†] गच्छतां[3] देवानामग्निर्वैश्वानरो मुखमासीदित्यर्थः। यत् अनीकम् उत्सारणार्हां[4] गौः अग्रे स्थितं सेवते स्म। तदेवाह—यज्ञस्य स्थाने धिष्ण्ये [5]दीप्यमानम् पर्वतस्य गुहायाम् लाघवेन[5] स्यन्दमानम् लघु[6] च[7] गच्छत् तदनीकं गौः[8] ज्ञातवती लब्धवती वेति ॥ ९ ॥

अध द्युतानः पित्रोः सचासामनुत गुह्यं चारु पृश्नेः।
मातुष्पदे परमे अन्ति षद् गोर्वृष्णः शोचिषः प्रयतस्य जिह्वा ॥ १० ॥

अध। द्युतानः। पित्रोः। सचा। आसा। अमनुत। गुह्यम्। चारु। पृश्नेः।
मातुः। पदे। परमे। अन्ति। सत्। गोः। वृष्णः। शोचिषः। प्रऽयतस्य। जिह्वा ॥ १० ॥

वेङ्कट० अथ दीप्यमानः द्यावापृथिव्योः सह आसनेन सहायभूतो वैश्वानरः पृश्नेः धेनोः गुहायां निहितं चारु पयः अमनुत। ममैतत् पातव्यमित्यर्थः। मातुः गोः पृथिव्या इत्यर्थः। तस्याः परमं पदमुत्तरवेदिस्तस्मिन् समीपे सीदन्त्यभवत् वर्षितुः दीप्यमानस्य निर्मलस्य[9] जिह्वा ज्वाला। घृतादिपानार्थम् उत्तरवेद्यामासीद् वैश्वानर इति ॥ १० ॥

[10]इति तृतीयाष्टके पञ्चमाध्याये द्वितीयो वर्गः[10]॥

ऋतं वोचे नमसा पृच्छ्यमानस्तवाशसा जातवेदो यदीदम्।
त्वमस्य क्षयसि यद्ध विश्वं दिवि यदु द्रविणं यत् पृथिव्याम् ॥ ११ ॥

ऋतम्। वोचे। नमसा। पृच्छ्यमानः। तव। आऽशसा। जातऽवेदः। यदि। इदम्।
त्वम्। अस्य। क्षयसि। यत्। ह। विश्वम्। दिवि। यत्। ऊँ इति। द्रविणम्। यत्। पृथिव्याम् ॥

---

१-१. नास्ति वि[2] अ[1]. † °नमिति वि[2] लपं. २. उक्तं वि[2] लपं. ३-३. नास्ति अ[1]. † नास्ति वि[1]. ४. °त्सर° वि[2] अ[1]. ५-५. दीप्य…लाघ° वि[2] अ[1]. ६. नास्ति लपं. ७. नास्ति वि[1]. ८. गोः मूको. ९. नास्ति वि[2] लपं. १०-१०. नास्ति मूको.

वेङ्कट० सत्यम् अहं ब्रवीमि जिज्ञासुभिर्नमस्कारेण पृच्छ्यमानः। तदुच्यमानम् यदि तव आशंसमाय भवति। किं तदिति चेत्। त्वम् अस्य ईश्वरो भवसि, यत् ह नाम जगति [1]सर्वं दृश्यते[1]। किञ्च यत् द्यावापृथिव्योः धनं तस्येशिषे ॥ ११

किं नो॑ अ॒स्य द्रवि॑णं॒ कद्ध॒ रत्नं॒ वि नो॑ वोचो जातवेदश्चिकि॒त्वान् ।
गुहाध्व॑नः पर॒मं यन्नो॑ अ॒स्य रेकु॑ प॒दं न नि॑दा॒ना अग॑न्म ॥ १२ ॥

किम् । नः॒ । अ॒स्य । द्रवि॑णम् । कत् । ह॒ । रत्न॑म् । वि । नः॒ । वो॒चः॒ । जात॒ऽवे॒दः॒ । चि॒कि॒त्वान् ।
गुहा॑ । अध्व॑नः । प॒रमम् । यत् । नः॒ । अ॒स्य । रेकु॑ । प॒दम् । न । नि॒दा॒नाः । अग॑न्म ॥१२॥

वेङ्कट० किम् नः अस्य स्तोत्रस्य धनम् किं वा रत्नम् त्वम् वि नः[2] वोचः हे जातवेदः! विद्वान्। विवचनं दास्यामीति विस्पष्टवचनम्। अस्य अन्तरिक्षस्य गुहायां निहितम् यत् उत्तमं तदस्माकमस्तु। येन रेचकम् सुखरहितं स्थानं मनसा निन्दन्तः न गच्छेमेति ॥ १२ ॥

का म॒र्यादा॑ व॒युना॒ कद्ध॑ वा॒मम॒च्छा॑ गमेम र॒घवो॒ न वाज॑म् ।
क॒दा नो॑ दे॒वीर॒मृत॑स्य॒ पत्नीः॒ सूरो॒ वर्णे॑न ततनन्नु॒षासः॑ ॥ १३ ॥

का । म॒र्यादा॑ । व॒युना॑ । कत् । ह॒ । वा॒मम् । अच्छ॑ । ग॒मे॒म॒ । र॒घवः॑ । न । वाज॑म् ।
क॒दा । नः॒ । दे॒वीः । अ॒मृत॑स्य । पत्नीः॑ । सूरः॑ । वर्णे॑न । त॒त॒न॒न् । उ॒षसः॑ ॥ १३ ॥

वेङ्कट० का[3] काष्ठा कान्ता, किम् वा वननीयम्, तद् वयं लघुशरीराः सङ्ग्रामम् इव अभिगच्छेम। कदा नः देव्यः [3]अमरणस्य सूर्यस्य[3] पत्न्यः उषसः सूर्यस्य तेजसा विस्तृता भवन्ति, व्युच्छन्तीत्यर्थः ॥ १३ ॥

अ॒नि॒रेण॒ वच॑सा फ॒ल्ग्वे॑न प्र॒तीत्ये॑न कृ॒धुना॑तृ॒पासः॑ ।
अधा॒ ते अ॑ग्ने॒ किमि॒हा व॑दन्त्यनायु॒धास॒ आस॑ता सचन्ताम् ॥ १४ ॥

अ॒नि॒रेण॑ । वच॑सा । फ॒ल्ग्वे॑न । प्र॒तीत्ये॑न । कृ॒धुना॑ । अ॒तृ॒पासः॑ ।
अध॑ । ते॒ । अ॒ग्ने॒ । किम् । इ॒ह । व॒द॒न्ति॒ । अ॒ना॒यु॒धासः॑ । अस॑ता । स॒च॒न्ता॒म् ॥ १४ ॥

वेङ्कट० अनन्नेना अहविष्केण[4] वचसा फल्गुना [5]प्रतिगन्तव्येन, आगतः[5] पुरुषो यच्छ्रुत्वा प्रतिगच्छति न शृणोति, कटुको[6] नूनं कृधुस्तादृशेन वचसा हे अग्ने! युद्धे समुपस्थिते किम् तव वदन्ति तृप्तिरहिता राक्षसाः। तथा सति ते अधुना आयुधवर्जिताः अनृतेन[7] संयुज्यन्तां प्रतिभवन्तु ॥ १४ ॥

---

१-१. संदृश्यते वि[1] लपं. २. नास्ति वि[1] लपं. ३-३. °रस्य सूर्य वि[1] लपं. ४. °ष्केन वि[1] लपं. ५-५. वगन्तव्यो ना° लपं. ६. करटको वि[1] लपं; कमतो ल. ७° अनायुधेन वि[1] लपं.

अस्य श्रिये समिधानस्य वृष्णो वसोरनीकं दम आ रुरोच ।
रुशद् वसानः सुदृशीकरूपः क्षितिर्न राया पुरुवारो अद्यौत् ॥ १५ ॥

अस्य । श्रिये । सम्ऽइधानस्य । वृष्णः । वसोः । अनीकम् । दमे । आ । रुरोच ।
रुशत् । वसानः । सुदृशीकऽरूपः । क्षितिः । न । राया । पुरुऽवारः । अद्यौत् ॥ १५ ॥

**वेङ्कट०** अस्य स्तोतुः अभ्युदयार्थं दीप्यमानस्य वर्षितुः [1]वासयितुः ज्वालाग्रम् यजमानगृहे आ रोचते। श्वेतं रूपम् वसानः सुतरां दर्शनीयरूपः सोऽयं †पृथिवीव धनेन†, सा यथा सर्वं धनमुत्पादयत्येवम् अयं बहुभिर्वरणीयः द्योतते[1] ॥ १५ ॥

[2]इति तृतीयाष्टके पञ्चमाध्याये तृतीयो वर्गः[2] ॥

## [ ६ ]

[3]वामदेवो गौतम ऋषिः । अग्निर्देवता । त्रिष्टुप् छन्दः[3] ।

ऊर्ध्व ऊ षु णो अध्वरस्य होतरग्ने तिष्ठ देवताता यजीयान् ।
त्वं हि विश्वमभ्यसि मन्म प्र वेधसश्चित्तिरसि मनीषाम् ॥ १ ॥

ऊर्ध्वः । ऊँ इति । सु । नः । अध्वरस्य । होतः । अग्ने । तिष्ठ । देवऽताता । यजीयान् ।
त्वम् । हि । विश्वम् । अभि । असि । मन्म । प्र । वेधसः । चित् । तिरसि । मनीषाम् ॥ १ ॥

**वेङ्कट०** [4]अग्ने! यष्टृतरः[4] त्वम् अस्माकं हे यज्ञस्य होतः! यस्मिन् काले देवास्तायन्त इज्यन्ते तत्र सुष्ठु त्वमुत्तिष्ठ । त्वम् हि विश्वम् मननीयमवगन्तव्यं जगत् अभि भवसि, तथा विधातुर्यजमानस्य अपि मनीषाम् वर्धयसि ॥ १ ॥

अमूरो होता न्यसादि विक्ष्वग्निर्मन्द्रो विदथेषु प्रचेताः ।
ऊर्ध्वं भानुं सवितेवाश्रेन्मेतेव धूमं स्तभायदुप द्याम् ॥ २ ॥

अमूरः । होता । नि । असादि । विक्षु । अग्निः । मन्द्रः । विदथेषु । प्रऽचेताः ।
ऊर्ध्वम् । भानुम् । सविताऽइव । अश्रेत् । मेताऽइव । धूमम् । स्तभायत् । उप । द्याम् ॥ २ ॥

**वेङ्कट०** अमूढः ह्वाता निषण्णः मनुष्येषु मदनशीलो यज्ञेषु प्रकृष्टज्ञानः अग्निः ऊर्ध्वम् च भानुम् तत्र सविता इव श्रयते[5] । सोऽयं यथा माता पुरुषः मानदण्डम् उपस्तभ्नाति एवं दिवं[5] प्रति आत्मीयम् धूमम् उप स्तभ्नाति ॥ २ ॥

---

१-१. वासयितु…वि[1] अ[1]. †-† °नीभवद् ध° मूको. २-२. नास्ति मूको. ३-३. नास्ति वि[2] अ[1]; °तर लपं. ४. नास्ति लपं.

यता सुजूर्णी रातिनी घृताची प्रदक्षिणिद् देवतातिमुराणः ।
उदु स्वरुर्नवजा नाक्रः पश्वो अनक्ति सुधितः सुमेकः ॥ ३ ॥

यता । सुऽजूर्णिः । रातिनी । घृताची । प्रऽदक्षिणित् । देवऽतातिम् । उराणः ।
उत् । ऊँ इति । स्वरुः । नवऽजाः । न । अक्रः । पश्वः । अनक्ति । सुऽधितः । सुऽमेकः ॥३॥

वेङ्कट० अध्वर्युणा[1] संयता सुष्ठ्वाहवनीयं प्रति जवनस्य कर्त्री हविर्दानवती जुहूः, घृताची इति स्रुङ्नाम । तथा प्रदक्षिणं गच्छति यज्ञम् उरु कुर्वाणः ॥ ३ ॥

स्तीर्णे बर्हिषि समिधाने अग्ना ऊर्ध्वो अध्वर्युर्जुजुषाणो अस्थात् ।
पर्यग्निः पशुपा न होता त्रिविष्ट्येति प्रदिव उराणः ॥ ४ ॥

स्तीर्णे । बर्हिषि । सम्ऽइधाने । अग्नौ । ऊर्ध्वः । अध्वर्युः । जुजुषाणः । अस्थात् ।
परि । अग्निः । पशुऽपाः । न । होता । त्रिऽविष्टि । एति । प्रऽदिवः । उराणः ॥ ४ ॥

वेङ्कट० यथा गोपालः पशून् परि एति तद्वदिति ॥ ४ ॥

परि त्मना मितद्रुरेति होताग्निर्मन्द्रो मधुवचा ऋतावा ।
द्रवन्त्यस्य वाजिनो न शोका भयन्ते विश्वा भुवना यदभ्राट् ॥ ५ ॥

परि । त्मना । मितऽद्रुः । एति । होता । अग्निः । मन्द्रः । मधुऽवचाः । ऋतऽवा ।
द्रवन्ति । अस्य । वाजिनः । न । शोकाः । भयन्ते । विश्वा । भुवना । यत् । अभ्राट् ॥ ५ ॥

वेङ्कट० परि गच्छति स्वयमेव मितगतिः ह्वाता अग्निः मदयिता मधुरसवचनः यज्ञवान् । द्रवन्ति अस्य अश्वाः इव शोचका रश्मयः । तस्मा अग्नये विश्वान्येव भुवनानि बिभ्यति, यदाऽसौ[2] भ्राजत इति ॥ ५ ॥

[3]इति तृतीयाष्टके पञ्चमाध्याये चतुर्थो वर्गः[3] ॥

भद्रा ते अग्ने स्वनीक संदृग् घोरस्य सतो विषुणस्य चारुः ।
न यत् ते शोचिस्तमसा वरन्त न ध्वस्मानस्तन्वी३ रेप आ धुः ॥ ६ ॥

भद्रा । ते । अग्ने । सुऽअनीक । सम्ऽदृक् । घोरस्य । सतः । विषुणस्य । चारुः ।
न । यत् । ते । शोचिः । तमसा । वरन्त । न । ध्वस्मानः । तन्वि । रेपः । आ । धुरिति धुः ॥६॥

वेङ्कट० भजनीया ते हे अग्ने! शोभनरश्म्यनीक! सन्दृष्टिः घोरस्य सतः विष्वगञ्चनस्य शोभना ।

---

१. °र्यूणाम् वि° लपं. २. यथा अ°. ३-३. नास्ति मूको.

यस्मात् ध्वंसनशीला राक्षसाः न तव तेजः तमसा आच्छादयन्ति, न चैते[1] तव शरीरे †रेपः पापं च आ दधुः, तस्मात्[2] शोभनेति ॥ ६ ॥

न यस्य॒ सातु॒र्जनि॑तो॒रवा॑रि॒ न मा॒तरा॑पि॒तरा॒ नू चि॑दि॒ष्टौ ।
अधा॑ मि॒त्रो न सुधि॑तः पाव॒को३॒॑ऽग्निर्दी॑दाय॒ मानु॑षीषु वि॒क्षु ॥ ७ ॥

न । यस्य॑ । सातुः॑ । जनि॑तोः । अवा॑रि । न । मा॒तरा॑पि॒तरा॑ । नु । चि॒त् । इ॒ष्टौ ।
अध॑ । मि॒त्रः । न । सुऽधि॑तः । पा॒व॒कः । अ॒ग्निः । दी॒दा॒य॒ । मानु॑षीषु । वि॒क्षु ॥ ७ ॥

**वेङ्कट०** यस्य ओषध्यादेः जनयितुर्दावरूपस्य समुच्छ्रितो रश्मिः[3] न वार्यते, न येन चारण्ये जातेन माता पिता वा[4] [5]भरणार्थमिष्यते। क्षिप्रम् एव[5] स्वयमेव वर्धत इत्यर्थः। सोऽयम् एवंविधः सखा इव सुष्ठु निहितः पावकः अग्निः दीप्यते मानुषीषु प्रजासु यज्ञपरासु ॥ ७ ॥

द्वि॒र्यं पञ्च॒ जीज॑नन्त्सं॒वसा॑नाः॒ स्वसा॑रो अ॒ग्निं मानु॑षीषु वि॒क्षु ।
उ॒ष॒र्बुध॑मथ॒र्यो॒३॒॑ न दन्तं॑ शु॒क्रं स्वासं॑ पर॒शुं न ति॒ग्मम् ॥ ८ ॥

द्विः । यम् । पञ्च॑ । जीज॑नन् । स॒म्ऽवसा॑नाः । स्वसा॑रः । अ॒ग्निम् । मानु॑षीषु । वि॒क्षु ।
उ॒षः॒ऽबुध॑म् । अ॒थ॒र्यः॑ । न । दन्त॑म् । शु॒क्रम् । सु॒ऽआस॑म् । प॒र॒शुम् । न । ति॒ग्मम् ॥ ८ ॥

**वेङ्कट०** द्विः पञ्च दश स्वसारः दिशः सर्वम् [6]आच्छादयन्त्यः मानुषीषु[6] प्रजासु यम् अग्निम् अजीजनन्। 'दशेमं त्वष्टुर्जनयन्त गर्भम्' (ऋ १,९५,२) इति मन्त्रः। उषसि प्रबुध्यमानम् अथर्यः स्त्रियः मैथुनेऽधरा भवन्तीति स्त्रियः इव दन्तम् दीप्तं [7]शोभनास्यम् परशुम् इव तीक्ष्णमिति[7] ॥ ८ ॥

तव॒ त्ये अ॑ग्ने ह॒रितो॑ घृत॒स्ना रोहि॑तास ऋ॒ज्वञ्चः॒ स्वञ्चः॑ ।
अ॒रु॒षासो॒ वृष॑ण ऋजुमु॒ष्का आ दे॒वता॑तिमह्वन्त द॒स्माः ॥ ९ ॥

तव॑ । त्ये । अ॒ग्ने॒ । ह॒रितः॑ । घृ॒त॒ऽस्नाः । रोहि॑तासः । ऋ॒जु॒ऽअञ्चः॑ । सु॒ऽअञ्चः॑ ।
अ॒रु॒षासः॑ । वृष॑णः । ऋ॒जु॒ऽमु॒ष्काः । आ । दे॒व॒ऽता॑तिम् । अ॒ह्व॒न्त॒ । द॒स्माः ॥ ९ ॥

**वेङ्कट०** [1]तव एव ते[1] अग्ने! अश्वाः घृतस्य सनितारः रोहितवर्णाः ऋजु शोभनं च गन्तारः आरोचनशीलाः[8] सेक्तारः अकुटिलवृषणाः यज्ञम् आह्वयन्ति यज्ञो यज्ञ इति [9]वदन्ति दर्शनीयाः[9] ॥ ९ ॥

---

१. च ते अ[1]. २-२. नास्ति वि[2] अ[1]. † रेतः ल लपं. ३. रश्मिम् वि[2] अ[1]. ४. नास्ति मूको. ५-५. °मिष्य…मेव वि[2]; भिष्य…अ[1]. ६-६. नास्ति वि[2] अ[1]. ७-७. शोभना…वि[2] अ[1]. ८. रोचनशी° वि[1] लपं. ९-९. कुटिलम् वि[2] अ[1].

ये ह त्ये ते सहमाना अयासस्त्वेषासो अग्ने अर्चयश्चरन्ति ।
श्येनासो न दुवसनासो अर्थं तुविष्वणसो मारुतं न शर्धः ॥ १० ॥

ये । ह । त्ये । ते । सहमानाः । अयासः । त्वेषासः । अग्ने । अर्चयः । चरन्ति ।
श्येनासः । न । दुवसनासः । अर्थम् । तुविऽस्वनसः । मारुतम् । न । शर्धः ॥ १० ॥

**वेङ्कट०** [1]'ये खलु अमी[1] शत्रूणामभिभवनशीलाः गमनशीलाः दीप्ताः अग्ने! अर्चयः चरन्ति। श्येनाः इव शीघ्रम् अभिलषितम् परिचरन्तः ते भवन्ति[2] तथा बहुशब्दाः ते मारुतः[3] इव वेगः[4] ॥ १० ॥

अकारि ब्रह्म समिधान तुभ्यं शंसात्युक्थं यजते व्यू धाः ।
होतारमग्निं मनुषो नि षेदुर्नमस्यन्त उशिजः शंसमायोः ॥ ११ ॥

अकारि । ब्रह्म । सम्ऽइधान । तुभ्यम् । शंसाति । उक्थम् । यजते । वि । ऊँ इति । धाः ।
होतारम् । अग्निम् । मनुषः । नि । सेदुः । नमस्यन्तः । उशिजः । शंसम् । आयोः ॥ ११ ॥

**वेङ्कट०** कृतम् स्तोत्रम् मया हे समिधान अग्ने! तुभ्यम् । कृत्वा च शंसति उक्थम् यजते चायं त्वाम्, तदिदं सर्वं विशेषेण धारय त्वम् अग्ने! । अवशिष्टः परोक्षः । ह्वातारम् अग्निम् मनुष्याः [5]नमस्यन्तः नि सेदुः कामयमानाः[5] शंसनीयम् उर्वशीपुत्रस्य आयोः[6] ॥ ११ ॥

[7]इति तृतीयाष्टके पञ्चमाध्याये पञ्चमो वर्गः[7] ॥

## [ ७ ]

[7]वामदेवो गौतम ऋषिः । अग्निर्देवता । आद्या जगती, द्वितीयाद्याः पञ्चानुष्टुभः, शिष्टास्त्रिष्टुभः[7] ।

अयमिह प्रथमो धायि धातृभिर्होता यजिष्ठो अध्वरेष्वीड्यः ।
यमप्नवानो भृगवो विरुरुचुर्वनेषु चित्रं विभ्वं विशेविशे ॥ १ ॥

अयम् । इह । प्रथमः । धायि । धातृऽभिः । होता । यजिष्ठः । अध्वरेषु । ईड्यः ।
यम् । अप्नवानः । भृगवः । विऽरुरुचुः । वनेषु । चित्रम् । विऽभ्वम् । विशेऽविशे ॥ १ ॥

**वेङ्कट०** अयम् इह यज्ञे प्रथममेव निधीयते यजमानैः धारयितृभिः ह्वाता यष्टृतमः यज्ञेषु स्तोतव्यः । यम् अप्नवानः[8] भृगवः च ऋषयः विरोचयामासुः अरण्येषु चित्ररूपम्[9] मनुष्याय मनुष्याय अनेकशरीरम् ॥ १ ॥

---

१-१. नास्ति वि[२] अ[१]. २. °न्ति दर्शनीयाः वि[२] अ[१]. ३. मरु° वि[२] अ[१]. ४. नास्ति वि[२]; °गः मया अ[१]. ५-५. मनस्यन्तः निषेदुः क्षयमेवानः वि[१] लपं; °मस्य…माना वि[२] अ[१]. ६. °योरिति वि[२] अ[१]. ७-७. नास्ति मूको. ८. वान वि[२] अ[१]. ९. चित्रवर्ण वि[२]; चित्रवर्णं रूपं अ[१].

अग्ने॑ क॒दा त॑ आनु॒षग्भुव॑द्दे॒वस्य॒ चेत॑नम् ।
अधा॒ हि त्वा॑ जगृ॒भ्रिरे॒ मर्ता॑सो वि॒क्ष्वीड्य॑म् ॥ २ ॥

अग्ने॑ । क॒दा । ते॒ । आ॒नु॒षक् । भुव॑त् । दे॒वस्य॑ । चेत॑नम् ।
अध॑ । हि । त्वा॒ । ज॒गृ॒भ्रिरे॑ । मर्ता॑सः । वि॒क्षु । ईड्य॑म् ॥ २ ॥

**वेङ्कट०** कदा हे अग्ने! देवस्य तव अनुषक्तं प्रज्ञापनं[1] तेजः भवतीति प्रश्नस्य प्रयोजनम् । अथ हि त्वाम् परिगृह्णन्ति मनुष्या यज्ञार्थं मनुष्येषु[2] स्तुत्यमिति[3] ॥ २ ॥

ऋ॒ताවා॑नं॒ विचे॑तसं॒ पश्य॑न्तो॒ द्यामि॑व॒ स्तृभिः॑ ।
विश्वे॑षामध्व॒राणां॑ हस्क॒र्तारं॒ दमे॑दमे ॥ ३ ॥

ऋ॒तऽवा॑नम् । विऽचे॑तसम् । पश्य॑न्तः । द्याम्ऽइ॑व । स्तृऽभिः॑ ।
विश्वे॑षाम् । अ॒ध्व॒राणा॑म् । ह॒स्क॒र्तार॑म् । दमे॑ऽदमे ॥ ३ ॥

**वेङ्कट०** [4]सत्यम् सुमतिम्[4] पश्यन्तः[5] द्याम् इव नक्षत्रैस्तेजोभिः व्याप्तं सर्वेषामेव यज्ञानां विकासस्य कर्तारम् यजमानगृहेषु । उत्तरत्र सम्बन्धः ॥ ३ ॥

आ॒शुं दू॒तं वि॒वस्व॑तो॒ विश्वा॒ यश्च॑र्ष॒णीर॒भि ।
आ ज॑भ्रुः के॒तुमा॒यवो॒ भृग॑वाणं वि॒शेवि॑शे ॥ ४ ॥

आ॒शुम् । दू॒तम् । वि॒वस्व॑तः । विश्वाः॑ । यः । च॒र्ष॒णीः । अ॒भि ।
आ । ज॒भ्रुः । के॒तुम् । आ॒यवः॑ । भृग॑वाणम् । वि॒शेऽवि॑शे ॥ ४ ॥

**वेङ्कट०** क्षिप्रम् दूतम् यजमानस्य विश्वाः प्रजाः यः अभि भवति तम् आहृतवन्तः [6]मनुष्याः यज्ञस्य[6] प्रज्ञापकम्[7] पचन्तम्[8] मनुष्याय[9] मनुष्याय । भृगुः पाको भृज्जतेः[10], तत्कुर्वाणमित्याहुः । भृगूणां रक्षकमित्यपरमिति ॥ ४ ॥

तमीं॒ होता॑रमानु॒षक्चि॑कि॒त्वांसं॒ नि षे॑दिरे ।
र॒ण्वं पा॑व॒कशो॑चिषं॒ यजि॑ष्ठं स॒प्त धाम॑भिः ॥ ५ ॥

तम् । ई॒म् । होता॑रम् । आ॒नु॒षक् । चि॒कि॒त्वांस॑म् । नि । से॒दि॒रे ।
र॒ण्वम् । पा॒व॒कऽशो॑चिषम् । यजि॑ष्ठम् । स॒प्त । धाम॑ऽभिः ॥ ५ ॥

---

१. ज्ञापं वि[1]; ज्ञापकं लपं. २. °नुषु वि[1] लपं. ३. तमिति वि[2] अ[1]. ४-४. नास्ति वि[2] अ[1]. ५. संप° वि[2] अ[1]. ६-६. मनुष्यय° वि[2] अ[1]. ७. प्रापकं अ[2]. ८. वमन्तम् वि[2] अ[1]. ९. नास्ति वि[2] अ[1]. १०. भजतेः वि[1]; भूतेः वि[2] अ[2]; भ्राजतेः ल लपं; भ्रस्जतेः ल प्रस्तावः.

वेङ्कट० तम् एनम् होतारम् अनुषक्तम्[1] प्राज्ञम्[2] प्रति नि सेदिरे रमणीयम् शोधकदीप्तिम् यष्टृतमम् सप्तभिः छन्दोभिः ॥ ५ ॥

[3]इति तृतीयाष्टके पञ्चमाध्याये षष्ठो वर्गः[3] ॥

तं शश्वंतीषु मातृषु वन आ वीतमश्रितम् ।
चित्रं सन्तं गुहा हितं सुवेदं कूचिदर्थिनम् ॥ ६ ॥

तम् । शश्वंतीषु । मातृषु । वनें । आ । वीतम् । अश्रितम् ।
चित्रम् । सन्तंम् । गुहा । हितम् । सुऽवेदम् । कूचित्ऽअर्थिनम् ॥ ६ ॥

वेङ्कट० तम् शश्वतीषु अग्नेः[4] मातृषु ओषधीषु वने गतम् आत्मन्यधिष्ठितम् चित्रम् सन्तम् गुहायाम्[5] निहितम् शोभनज्ञानम्, यः क्वाप्यर्थयते[6] स कूचिदर्थी, तं निषेदिरे देवा इति ॥ ६ ॥

ससस्य यद् वियुता सस्मिन्नूधन्नृतस्य धामन् रणयन्त देवाः ।
महाँ अग्निर्नमसा रातहव्यो वेरध्वराय सदमिदृतावा ॥ ७ ॥

ससस्यं । यत् । विऽयुता । सस्मिन् । ऊधन् । ऋतस्यं । धामन् । रणयन्त । देवाः ।
महान् । अग्निः । नमसा । रातऽहव्यः । वेः । अध्वरायं । सदम् । इत् । ऋतऽवा ॥ ७ ॥

वेङ्कट० [7]स्वप्नशीलस्य यदा वियुते सर्वस्मिन् ऊधनि आहवनीये यज्ञस्य आवासस्थाने रमन्ते देवाः, तदा महान् अग्निः नमस्कारेण देवेभ्यो दत्तहविष्कः सन् यज्ञाय गच्छति[7] [8]सदैव सत्यवान्[8] ॥ ७ ॥

वेरध्वरस्य दूत्यानि विद्वानुभे अन्ता रोदसी संचिकित्वान् ।
दूत ईयसे प्रदिव उराणो विदुष्टरो दिव आरोधनानि ॥ ८ ॥

वेः । अध्वरस्य । दूत्यानि । विद्वान् । उभे इति । अन्तरिति । रोदसी इति । सम्ऽचिकित्वान् ।
दूतः । ईयसे । प्रऽदिवः । उराणः । विदुःऽतरः । दिवः । आऽरोधनानि ॥ ८ ॥

वेङ्कट० कामयसे[8] यज्ञस्य दूत्यानि विद्वान्। अथ द्यावापृथिवी मध्येन ते उभे अपि[9] जानन् दूतो भूत्वा गच्छसि पुराणः[10] उरु कुर्वाणः विद्वत्तरः द्युलोकस्य आरोधनानि[11] रक्षांसि ॥ ८ ॥

---

१. °षक्तं होतारं वि[2] अ[1]. २. प्रा जज्ञं वि[1] अ[1]; प्रज्ञं वि[1]. ३-३. नास्ति मूको. ४. अग्ने लपं. ५. °हाम् वि[1]. ६. बहर्थ° वि[1] लपं; बहव्यर्थ वि[2] अ[1]; बहप्यर्थ ल. ७-७. नास्ति वि[2] अ[1]. ८. °यते ल लपं. ९. नास्ति वि[2] अ[1]. १०. °णपुराणा वि[1] अ[1]; °राण वि[1] लपं. ११. रोध° अ[1] लपं.

कृष्णं त एम रुशतः पुरो भाश्चरिष्ण्व१र्चिर्वपुषामिदेकम् ।
यदप्रवीता दधते ह गर्भं सद्यश्चिज्जातो भवसीदु दूतः ॥ ९ ॥

कृष्णम् । ते । एम । रुशतः । पुरः । भाः । चरिष्णु । अर्चिः । वपुषाम् । इत् । एकम् ।
यत् । अप्रऽवीता । दधते । ह । गर्भम् । सद्यः । चित् । जातः । भवसि । इत् । ऊँ इति । दूतः ॥९॥

वेङ्कट० कृष्णः तव गमनमार्गः श्वेतवर्णस्य, पुरः च दीप्तिः । उषानाम् सर्वेषाम् एव सञ्चरणशीलम्[1] [2]इदम् एकम्[2] तेजः । यस्मात् अनिषिक्तरेतांसि धारयन्ति ह गर्भम् उषान्योषध्यादीनि । [3]"तस्मादोषधयोऽनभ्यक्ता रेभन्ति"[3] ( तैब्रा ७ १,९,३ ) इति ब्राह्मणम् । किञ्च जातः त्वं तदानीम् एव भवसि देवानाम् दूतः ॥ ९ ॥

सद्यो जातस्य ददृशानमोजो यदस्य वातो अनुवाति शोचिः ।
वृणक्ति तिग्मामतसेषु जिह्वां स्थिरा चिदन्ना दयते वि जम्भैः ॥ १० ॥

सद्यः । जातस्य । ददृशानम् । ओजः । यत् । अस्य । वातः । अनुऽवाति । शोचिः ।
वृणक्ति । तिग्माम् । अतसेषु । जिह्वाम् । स्थिरा । चित् । अन्ना । दयते । वि । जम्भैः ॥१०॥

वेङ्कट० तदानीमेव जातस्य दृश्यमानम् बलम् भवति यदा अस्य जातस्य तेजः वातः अनुवाति प्रेरयति । वृजिश्छेदनकर्मा[4] । [5]तीक्ष्णां ज्वालाम् जिह्वाम्[5] अतसेषु छिनत्ति । एवमपि भवति प्रयोगः । तथा स्थिराणि अपि काष्ठादीन्यन्नानि दंष्ट्राभिः विशेषेण क्षपयति ॥ १० ॥

तृषु यदन्ना तृषुणा ववक्ष तृषुं दूतं कृणुते यह्वो अग्निः ।
वातस्य मेळिं सचते निजूर्वन्नाशुं न वाजयते हिन्वे अर्वा ॥ ११ ॥

तृषु । यत् । अन्ना । तृषुणा । ववक्ष । तृषुम् । दूतम् । कृणुते । यह्वः । अग्निः ।
वातस्य । मेळिम् । सचते । निऽजूर्वन् । आशुम् । न । वाजयते । हिन्वे । अर्वा ॥ ११ ॥

वेङ्कट० क्षिप्रं यदा अन्नानि[6] क्षिप्रेण तेजसा वहति[7], तदानीं क्षिप्रकारिणमात्मानम् दूतम् करोति महान् अग्निः, वातस्य च सम्पर्कम् सेवते नितरामरण्यं हिंसन्, अश्वम् इव चात्मानं प्रेरयति गमनाय गमनस्वभावः[8] ॥ ११ ॥

[9]इति तृतीयाष्टके पञ्चमाध्याये सप्तमो वर्गः[9] ॥

---

१. धरणशी° वि[1] लपं. २-२. नास्ति वि[1] लपं. ३-३. °क्तारो भवन्ति मूको. ४. व्रजि° वि[1] अ[1]; वृजिप्रछेद° वि[1] लपं. ५-५. तीक्ष्णज्वालाजि° वि[1] लपं; तीक्ष्णा ज्वाला जिह्वाम् वि[2]; तीक्ष्णा ज्वाला जिह्वा अ[1]. ६. मन्नादि वि[2] अ[1]. ७. वपति वि[1] लपं. ८. °स्वभात्र वि[1] लपं; स्वभावः वि[2]; स्वभाव इति अ[1]. ९-९. नास्ति मूको.

[ ८ ]

[1]वामदेवो गौतम ऋषिः। अग्निर्देवता। गायत्री छन्दः[1]।

दूतं वो विश्ववेदसं हव्यवाहममर्त्यम्। यजिष्ठमृञ्जसे गिरा ॥ १ ॥

दूतम्। वः। विश्वऽवेदसम्। हव्यऽवाहम्। अमर्त्यम्। यजिष्ठम्। ऋञ्जसे। गिरा ॥ १ ॥

वेङ्कट० होतः! त्वम् अध्वराणाम् दूतम् सर्ववेदसम्[2] हविषां वोढारम् अमर्त्यम् यष्टृतमम् प्रसाधयसि गिरा ॥ १ ॥

स हि वेदा वसुधितिं महाँ आरोधनं दिवः। स देवाँ एह वक्षति ॥ २ ॥

सः। हि। वेद। वसुऽधितिम्। महान्। आऽरोधनम्। दिवः। सः। देवान्। आ। इह। वक्षति ॥ २ ॥

वेङ्कट० सः हि अग्निः वसुनो निधानम् वेत्ति महान् दिवः च आरोधनम् वशीकरणम्। सः एव देवान् इह आ वहति ॥ २ ॥

स वेद देव आनमं देवाँ ऋतायते दमे। दाति प्रियाणि चिद् वसु ॥ ३ ॥

सः। वेद। देवः। आऽनमम्। देवान्। ऋतऽयते। दमे। दाति। प्रियाणि। चित्। वसु ॥ ३ ॥

वेङ्कट० सः वेत्ति देवः आनमयितुम् देवान् यज्ञमिच्छते गृहे प्रयच्छति [3]च प्रियाणि† धनानि[3] ॥ ३ ॥

स होता सेदु दूत्यं चिकित्वाँ अन्तरीयते। विद्वाँ आरोधनं दिवः ॥ ४ ॥

सः। होता। सः। इत्। ऊँ इति। दूत्यम्। चिकित्वान्। अन्तः। ईयते। विद्वान्। आऽरोधनम्। दिवः ॥

वेङ्कट० [4]सः ह्वाता, सः एव दूतकर्म जानन् द्यावापृथिव्योः अन्तः गच्छति जानन् दिवः आगमनप्रकारम्[4] ॥ ४ ॥

ते स्याम ये अग्नये ददाशुर्हव्यदातिभिः। य ईं पुष्यन्त इन्धते ॥ ५ ॥

ते। स्याम। ये। अग्नये। ददाशुः। हव्यदातिऽभिः। ये। ईम्। पुष्यन्तः। इन्धते ॥ ५ ॥

वेङ्कट० [5]वयमपि अग्नये ते स्याम, ये दत्तवन्तः तुभ्यं† हविषां दानैः, ये च एनं पोषयन्तः संदीपयन्ति[5] ॥ ५ ॥

ते राया ते सुवीर्यैः ससवांसो वि शृण्विरे। ये अग्ना दधिरे दुवः ॥ ६ ॥

---

१-१. नास्ति मूको. २. °संग वि[2]; संगम् अ[1]. ३-३. नास्ति वि[1] लपं. † निप्रि° वि[2] अ[1]. ४-४. नास्ति वि[1] लपं. ५-५. नास्ति वि[1] लपं. † ददस्तु° वि[2] अ[1].

ते । राया । ते । सुऽवीर्यैः । ससऽवांसः । वि । शृण्विरे । ये । अग्ना । दधिरे । दुवः ॥ ६ ॥

**वेङ्कट०** [1]ते त्वां भजमानाः धनेन सुवीर्यैः च विश्रुता भवन्ति ये अग्निनिमित्तं परिचर्यां धारयन्ति[1] ॥६॥

अस्मे रायो दिवेदिवे सं चरन्तु पुरुस्पृहः । अस्मे वाजास ईरताम् ॥ ७ ॥

अस्मे इति । रायः । दिवेऽदिवे । सम् । चरन्तु । पुरुऽस्पृहः । अस्मे इति । वाजासः । ईरताम् ॥७॥

**वेङ्कट०** [2]अस्मासु धनानि अन्वहम्[2] सम् चरन्तु[3] बहुभिः स्पृहणीयानि, अन्नानि च अस्मासु[4] उद्युक्तानि भवन्तु ॥ ७ ॥

स विप्रश्चर्षणीनां शवसा मानुषाणाम् । अति क्षिप्रेव विध्यति ॥ ८ ॥

सः । विप्रः । चर्षणीनाम् । शवसा । मानुषाणाम । अति । क्षिप्राऽइव । विध्यति ॥ ८ ॥

**वेङ्कट०** सः विप्रः मनुष्येषु पश्यत्सु बलेन शत्रून् [5]अति क्षिपति[5] धानुष्क इव क्षेप्ता शरान् इत्यग्नेः स्तोतारमाह[6] ॥ ८ ॥

[7]इति तृतीयाष्टके पञ्चमाध्यायेऽष्टमो वर्गः[7] ॥

## [ ९ ]

[7]वामदेवो गौतम ऋषिः । अग्निर्देवता । गायत्री छन्दः[7] ।

अग्ने मृळ महाँ असि य ईमा देवयुं जनम् । इयेथ बर्हिरासदम् ॥ १ ॥

अग्ने । मृळ । महान् । असि । यः । ईम् । आ । देवऽयुम् । जनम् । इयेथ । बर्हिः । आऽसदम् ॥ १ ॥

**वेङ्कट०** अग्ने! सुखय[8], महान् त्वम् असि, यः त्वम् इमम् [9]देवयुम् जनम्[9] रक्षितुम् आ गच्छसि आसन्नम् बर्हिः ॥ १ ॥

स मानुषीषु दूळभो विक्षु प्रावीरमर्त्यः । दूतो विश्वेषां भुवत् ॥ २ ॥

सः । मानुषीषु । दुःऽदभः । विक्षु । प्रऽअवीः । अमर्त्यः । दूतः । विश्वेषाम् । भुवत् ॥ २ ॥

**वेङ्कट०** सः मानुषीषु दुर्दभः[10] विक्षु प्रकर्षेण रक्षकः अमर्त्यः दूतः विश्वेषाम् देवानाम् अभवद् अग्निः ॥२॥

---

१-१. नास्ति वि[1] लपं. २-२. अस्मे⋯न्वहं वि[2] अ[1]. ३. °रन्ति वि[2] अ[1]. ४. अस्माकं वि[2]. ५-५. °धिक्षि° वि[2] अ[1]; °पि क्षपयति वि[1] लपं. ६. नास्ति वि[2] अ[1]. ७-७. नास्ति मूको. ८. मूळय वि[1] लपं ९-९. देवं जनम् वि[1] ल लपं; देवजनम् वि[2] अ[1]. १०. दुदुम्भो वि[2] अ[1].

स सद्म परि णीयते होता मन्द्रो दिविष्टिषु । उत पोता नि षीदति ॥ ३ ॥

सः । सद्म । परि । नीयते । होता । मन्द्रः । दिविष्टिषु । उत । पोता । नि । सीदति ॥३॥

**वेङ्कट०** 'सः सद्म' यज्ञभवनं परितो नीयते मोदमानः दिवः अन्वेषणेषु होता सन्[2] यजमानैः । अपि च पोता सन् नि सीदति ॥ ३ ॥

उत ग्ना अग्निरध्वर उतो गृहपतिर्दमे । उत ब्रह्मा नि षीदति ॥ ४ ॥

उत । ग्नाः । अग्निः । अध्वरे । उतो इति । गृहऽपतिः । दमे । उत । ब्रह्मा । नि । सीदति ॥४॥

**वेङ्कट०** अपि च अग्निः यज्ञे 'ग्नाः च' भवति[4] । देवपत्न्यो ग्ना उच्यन्ते । एवम् यज्ञगृहे यजमानश्च भूत्वा नि सीदति, ब्रह्मा च भवतीति ॥ ४ ॥

वेषि ह्यध्वरीयतामुपवक्ता जनानाम् । हव्या च मानुषाणाम् ॥ ५ ॥

वेषि । हि । अध्वरिऽयताम् । उपऽवक्ता । जनानाम् । हव्या । च । मानुषाणाम् ॥ ५ ॥

**वेङ्कट०** अध्वरमिच्छताम् जनानाम् उपवक्ता सन् गच्छसि । हव्यानि च मानुषाणाम् गच्छसि ॥ ५ ॥

वेषीद्वस्य दूत्यं१ यस्य जुजोषो अध्वरम् । हव्यं मर्तस्य वोळ्हवे ॥ ६ ॥

वेषि । इत् । ऊँ इति । अस्य । दूत्यम् । यस्य । जुजोषः । अध्वरम् । हव्यम् । मर्तस्य । वोळ्हवे ॥ ६ ॥

**वेङ्कट०** गच्छसि एव अस्य दूत्यम् यस्य भजसे यज्ञम् । हविः वोढुम् मनुष्यस्य दूत्यं वेषीति ॥ ६ ॥

अस्माकं जोष्यध्वरमस्माकं यज्ञमङ्गिरः । अस्माकं शृणुधी हवम् ॥ ७ ॥

अस्माकम् । जोषि । अध्वरम् । अस्माकम् । यज्ञम् । अङ्गिरः । अस्माकम् । शृणुधि । हवम् ॥७॥

**वेङ्कट०** निगदव्याख्याता ॥ ७ ॥

परि ते दूळभो रथोऽस्माँ अश्नोतु विश्वतः । येन रक्षसि दाशुषः ॥ ८ ॥

परि । ते । दुःऽदभः । रथः । अस्मान् । अश्नोतु । विश्वतः । येन । रक्षसि । दाशुषः ॥ ८ ॥

---

1-1. नास्ति वि[2] अ[1]. 2. अस्मद्य[0] वि[2] अ[1]. 3-3. नास्ता वि[2] अ[1]. 4. °न्ति वि[1] अ[1].

वेङ्कट० परि व्याप्नोतु[1] ते अन्यैर्हिंसितुमशक्यः रथः अस्मान्, सर्वत एव येन रथेन रक्षसि यजमानान् इति ॥ ८ ॥

[2]इति तृतीयाष्टके पञ्चमाध्याये नवमो वर्गः[2] ॥

[ १० ]

[2]वामदेवो गौतम ऋषिः। अग्निर्देवता। पदपङ्क्तिः छन्दः, चतुर्थीषष्ठीसप्तम्यः उष्णिहः, पदपङ्क्तयो वा, पञ्चमी महापदपङ्क्तिः, अष्टमी उष्णिक्[2]।

अग्ने॒ तम॒द्याश्वं॒ न स्तोमैः॒ क्रतुं॒ न भ॒द्रं हृ॑दि॒स्पृश॑म्। ऋ॒ध्यामा॑ त॒ ओहैः॑ ॥१॥

अग्ने॑। तम्। अ॒द्य। अश्व॑म्। न। स्तोमैः॑। क्रतु॑म्। न। भ॒द्रम्। हृ॒दि॒ऽस्पृश॑म्। ऋ॒ध्याम॑। ते॒। ओहैः॑ ॥

वेङ्कट० अग्ने! तम् त्वदीयम् भद्रम् स्तोतुः हृदिस्पृशम् कल्याणम् अद्य वयं वेगवन्तम् अश्वम् इव यज्ञम् इव चानेकैर्बहुशः निर्गच्छद्भिः स्तोमैः[3] समर्धयेम[4]। त्वदीयं कल्याणं कर्म स्तुम इति। 'यस्ते हृदिस्पृक्[5] स्तोमस्तं तऽऋध्यासमित्येतद्' ( माश ९,२,३,४१ ) इति वाजसनेयकम् ॥ १ ॥

अधा॒ ह्य॑ग्ने॒ क्रतो॑र्भ॒द्रस्य॒ दक्ष॑स्य सा॒धोः। र॒थीर्ऋ॒तस्य॑ बृह॒तो ब॒भूथ॑ ॥२॥

अध॑। हि। अ॒ग्ने॒। क्रतोः॑। भ॒द्रस्य॑। दक्ष॑स्य। सा॒धोः। र॒थीः। ऋ॒तस्य॑। बृ॒ह॒तः। ब॒भूथ॑ ॥ २ ॥

वेङ्कट० अथ त्वम् अग्ने! कर्मणः भजनीयस्य प्रवृद्धस्य साधयितुः सत्यभूतस्य महतः रथ इव हविषां वोढा भवसि ॥ २ ॥

ए॒भिर्नो॑ अ॒र्कैर्भवा॑ नो अ॒र्वाङ् स्व१॒र्ण ज्योतिः॑। अग्ने॒ विश्वे॑भिः सु॒मना॒ अनी॑कैः ॥

ए॒भिः। नः॒। अ॒र्कैः। भव॑। नः॒। अ॒र्वाङ्। स्वः॑। न। ज्योतिः॑। अग्ने॑। विश्वे॑भिः। सु॒ऽमनाः॑। अनी॑कैः ॥

वेङ्कट० एभिः अस्माकम् मन्त्रैः अस्मदभिमुखः भव। आदित्याख्यम् इव[6] ज्योतिः अग्ने![7] ते[8] सर्वैः तेजोभिः। 'तस्य रश्मयोऽनीकानि' ( तैब्रा १,६,६,२ ) इति ब्राह्मणम्। शोभनमनस्कः[9] ॥ ३ ॥

आ॒भिष्टे॑ अ॒द्य गी॒र्भिर्गृ॒णन्तोऽग्ने॒ दाशे॑म। प्र ते॑ दि॒वो न स्त॑नयन्ति॒ शुष्माः॑ ॥ ४ ॥

आ॒भिः। ते॒। अ॒द्य। गी॒ःऽभिः। गृ॒णन्तः॑। अग्ने॑। दाशे॑म। प्र। ते॒। दि॒वः। न। स्त॒नय॑न्ति। शुष्माः॑ ॥४॥

वेङ्कट० आभिः स्तुतिभिः गृणन्तः अद्य तुभ्यम् अग्ने! हवींषि ददाम। न प्र स्तनयन्ति तव शोषका रश्मयः दीप्तस्य स्तोतॄन्। पादादित्वात् पङ्क्तिष्वामन्त्रिततिङ्निघाताभावो[10] बोद्धव्यः। उत्तमश्च पादः सप्ताक्षर इति ॥ ४ ॥

---

१. °ति वि[2] अ[1]. २-२. नास्ति मूको. ३. सोमैः अ[1]. ४. °र्धयेम अ[1]; संवर्ध° लपं. ५. नास्ति मूको. ६. नास्ति लपं. ७. °ग्नेः वि[2] लपं ८. नास्ति वि[2] अ[1]. ९. नास्ति वि[2]. १०. °न्त्रितनिघा° वि[2] अ[1] क लपं.

तव॒ स्वादि॑ष्ठाग्ने॒ संदृ॑ष्टिरि॒दा चि॒दह्न॑ इ॒दा चि॑द॒क्तोः । श्रि॒ये रु॒क्मो न रो॑चत उपा॒के ॥५॥

तव॑ । स्वादि॑ष्ठा । अग्ने॑ । सम्ऽदृ॑ष्टिः । इ॒दा । चि॒त् । अह्नः॑ । इ॒दा । चि॒त् । अ॒क्तोः ।
श्रि॒ये । रु॒क्मः । न । रो॒च॒ते॒ । उ॒पा॒के ॥ ५ ॥

वेङ्कट० तव स्वादुतमा अग्ने! सन्दृष्टिः[१], यया ज्वालया सम्पश्यन्ति । इदाचिच्छब्दः कदाचिच्छब्दपर्यायः । सा[२] कदाचित् अह्नः श्रियै[३] दीप्यते कदाचित् रात्रेः मणिः इव तयोः समीपे ॥ ५ ॥

घृ॒तं न पू॒तं त॒नूर॑रे॒पाः शुचि॒ हिर॑ण्यम् । तत् ते॑ रु॒क्मो न रो॑चत स्वधावः ॥६॥

घृ॒तम् । न । पू॒तम् । त॒नूः । अ॒रे॒पाः । शुचि॑ । हिर॑ण्यम् । तत् । ते॒ । रु॒क्मः । न । रो॒च॒त॒ । स्व॒धा॒ऽव॒ः ॥ ६ ॥

वेङ्कट० घृतम् इव पवित्रभूतम् तव शरीरम् [४]निर्मलम् दीप्तम्[४] हिरण्यसदृशम् तत् तव रुक्मः इव[५] रोचते हे हविष्मन्! ॥ ६ ॥

कृ॒तं चि॒द्धि ष्मा॒ सने॑मि॒ द्वेषोऽग्न॑ इ॒नोषि॒ मर्ता॑त् । इ॒त्था यज॑मानादृतावः ॥७॥

कृ॒तम् । चि॒त् । हि । स्म॒ । सने॑मि । द्वेषः॑ । अग्ने॑ । इ॒नोषि॑ । मर्ता॑त् । इ॒त्था । यज॑मानात् । ऋ॒त॒ऽव॒ः ॥ ७ ॥

वेङ्कट० कृतम् पुराणम् पापमपि[६] शत्रूनिव द्वेष्टॄन् अग्ने! सत्यमेव यजमानात्[७] मनुष्यात्[८] त्वम् प्रेरयसि हे यज्ञवन्! इति ॥ ७ ॥

शि॒वा नः॑ स॒ख्या सन्तु॑ भ्रा॒त्राग्ने॑ दे॒वेषु॑ यु॒ष्मे । सा नो॒ नाभिः॒ सद॑ने॒ सस्मि॒न्नूध॑न् ॥८॥

शि॒वा । नः॒ । स॒ख्या । सन्तु॑ । भ्रा॒त्रा । अग्ने॑ । दे॒वेषु॑ । यु॒ष्मे इति॑ ।
सा । नः॒ । नाभिः॑ । सद॑ने । सस्मि॑न् । ऊध॑न् ॥ ८ ॥

वेङ्कट० शिवानि नः सख्यानि भवन्तु[९] भ्रात्रा त्वया हेतुना अग्ने! युष्मासु[१०] देवेषु हे देव! । सख्यं हि अस्माकम् नहनम् सर्वस्मिन् कामानामुत्पत्तिस्थाने ऊधनि ॥ ८ ॥

[११]इति तृतीयाष्टके पञ्चमाध्याये दशमो वर्गः[११] ॥

## [ ११ ]

[११]वामदेवो गौतम ऋषिः । अग्निर्देवता । त्रिष्टुप् छन्दः[११] ।

भ॒द्रं ते॑ अग्ने सहसि॒न्ननी॑कमुपा॒क आ रो॑चते॒ सूर्य॑स्य ।
रुश॑द् दृ॒शे द॑दृशे नक्त॒या चि॒दरू॑क्षितं दृ॒श आ रू॒पे अन्न॑म् ॥ १ ॥

---

१. नास्ति वि[१] लपं. २. नास्ति वि[२] अ[१]; स वि[१] ल लपं. ३. श्रियै वि[२] अ[१]. ४-४. °लः॰° लपं. ५. °विन्क् लप. ६. °मिव अ[१]. ७. नान्° अ[१]. ८. °ष्यान् अ[१] लपं. ९. सन्तु वि[१] लपं. १०. युष्माकन् मूको. ११-११. नास्ति मूको.

भद्रम् । ते । अग्ने । सहसिन् । अनीकम् । उपाके । आ । रोचते । सूर्यस्य ।
रुशत् । दृशे । ददृशे । नक्तऽया । चित् । अरूक्षितम् । दृशे । आ । रूपे । अन्नम् ॥ १ ॥

**वेङ्कट०** हे अग्ने बलवन्! कल्याणं तव रश्मीनाम् अनीकम् अह्नि सूर्यस्य समीपे दीप्यते[1] । तथा रात्र्या च सह सङ्गतम् श्वेतं वर्णं दर्शनाय भवति। किञ्च तत्र रूपे निहितम्[2] अन्नम् चक्षुं सन्द्रष्टुं[3] योग्यं भवति कल्याणम् इति ॥ १ ॥

वि षाह्यग्ने गृणते मनीषां खं वेपसा तुविजात स्तवानः ।
विश्वेभिर्यद् वावनः शुक्र देवैस्तन्नो रास्व सुमहो भूरि मन्म ॥ २ ॥

वि । साहि । अग्ने । गृणते । मनीषाम् । खम् । वेपसा । तुविऽजात । स्तवानः ।
विश्वेभिः । यत् । ववनः । शुक्र । देवैः । तत् । नः । रास्व । सुऽमहः । भूरि । मन्म ॥ २ ॥

**वेङ्कट०** वि षहस्व अग्ने! स्तुतिम् उच्चारयते छिद्रम् वेपकेन शत्रूणां बलेन हे बहुजनन! स्तूयमानः। हे दीप्त! सर्वैः देवैः सह यत्[4] त्वं भजसे। पञ्चम्यर्थे तृतीया। तत्[5] धनम् अस्मभ्यं देहि हे शोभनदान! प्रभूतं मननीयम् ॥ २ ॥

त्वदग्ने काव्या त्वन्मनीषास्त्वदुक्था जायन्ते राध्यानि ।
त्वदेति द्रविणं वीरपेशा इत्थाधिये दाशुषे मर्त्याय ॥ ३ ॥

त्वत् । अग्ने । काव्या । त्वत् । मनीषाः । त्वत् । उक्था । जायन्ते । राध्यानि ।
त्वत् । एति । द्रविणम् । वीरऽपेशाः । इत्थाऽधिये । दाशुषे । मर्त्याय ॥ ३ ॥

**वेङ्कट०** त्वत्तः अग्ने! कविकर्माणि स्तुतयः शस्त्राणि च सम्भावनीयानि यज्ञार्थं प्रादुर्भवन्ति। तथा त्वत्तः आगच्छति धनमपि वीररूपं वीरपरिवृतं सत्यकर्मणे प्रयच्छते मनुष्याय ॥ ३ ॥

त्वद् वाजी वाजंभरो विहाया अभिष्टिकृज्जायते सत्यशुष्मः ।
त्वद् रयिर्देवजूतो मयोभुस्त्वदाशुर्जूजुवाँ अग्ने अर्वा ॥ ४ ॥

त्वत् । वाजी । वाजम्ऽभरः । विऽहायाः । अभिष्टिऽकृत् । जायते । सत्यऽशुष्मः ।
त्वत् । रयिः । देवऽजूतः । मयःऽभुः । त्वत् । आशुः । जूजुऽवान् । अग्ने । अर्वा ॥ ४ ॥

**वेङ्कट०** त्वत्त एव अश्वः अन्नस्याहर्ता महान् शत्रूणामभ्येषणस्य कर्ता सत्यबलः, त्वत्त एव धनमपि जायते देवैः प्रेरितं सुखस्य भावयितृ, त्वत्त एव वेगवान् गमनपरः अग्ने! अश्वः ॥ ४ ॥

---

१. °प्यसे मूको. २. महितम् वि॰ ल॰प. ३. संद्रष्टम् वि॰ ल॰प. ४. यः वि॰ ल॰प. ५. तु वि॰ ल॰प.

त्वाम॑ग्ने प्रथ॒मं दे॑व॒यन्तो॑ दे॒वं मर्ता॑ अमृत म॒न्द्रजि॑ह्वम् ।
द्वे॒षो॒यु॒त॒मा वि॑वासन्ति धी॒भिर्दमू॑नसं गृ॒हप॑तिम॒मूर॑म् ॥ ५ ॥

त्वाम् । अ॒ग्ने॒ । प्र॒थ॒मम् । दे॒व॒ऽयन्तः॑ । दे॒वम् । मर्ताः॑ । अ॒मृ॒त॒ । म॒न्द्रऽजि॑ह्वम् ।
द्वे॒षः॒ऽयु॒त॑म् । आ । वि॒वा॒स॒न्ति॒ । धी॒भिः । दमू॑नसम् । गृ॒हऽप॑तिम् । अ॒मूर॑म् ॥ ५ ॥

**वेङ्कट०** त्वाम् अग्ने! प्रथमम् एव देवान् यष्टुमिच्छन्तः देवम्[1] मनुष्याः अमृत! मोदनवाचम्[2] राक्षसानां पृथक्कर्तारम् परिचरन्ति कर्मभिः दममनसम् गृहपतिम् अमूढम् ॥ ५ ॥

आ॒रे अ॒स्मदम॑तिमा॒रे अंह॑ आ॒रे विश्वां॑ दुर्म॒तिं यन्नि॒पासि॑ ।
दो॒षा शि॒वः स॑हसः सूनो अग्ने॒ यं दे॒व आ चि॒त् सच॑से स्व॒स्ति ॥ ६ ॥

आ॒रे । अ॒स्मत् । अम॑तिम् । आ॒रे । अंहः॑ । आ॒रे । विश्वा॑म् । दुः॒ऽम॒तिम् । यत् । नि॒ऽपासि॑ ।
दो॒षा । शि॒वः । स॒ह॒सः॒ । सू॒नो॒ इति॑ । अ॒ग्ने॒ । यम् । दे॒वः । आ । चि॒त् । सच॑से । स्व॒स्ति ॥६॥

**वेङ्कट०** आरे[3] अस्मत्तः मतिविपर्यासम् पापं[4] सर्वं दुर्ज्ञानम्[5] च यस्मात् त्वं नियमेन रक्षसि। यथाऽस्मान् नैतानि प्राप्नुवन्ति तथा करोषि। रात्रौ कल्याणः त्वम् हे सहसः सूनो अग्ने! यम्[6] च देवनशीलः त्वम् आ सेवसे सोऽविनाशं प्राप्नोति ॥ ६ ॥

[7]इति तृतीयाष्टके पञ्चमाध्याये एकादशो वर्गः[7] ॥

## [ १२ ]

[7]वामदेवो गौतम ऋषिः । अग्निर्देवता । त्रिष्टुप् छन्दः[7] ।

यस्त्वाम॑ग्न इ॒नध॑ते य॒तस्रु॑क् त्रिस्ते॒ अन्नं॑ कृ॒णव॒त् सस्मि॒न्नह॑न् ।
स सु द्यु॒म्नैर॒भ्य॑स्तु प्र॒सक्ष॒त् तव॒ क्रत्वा॑ जातवेदश्चिकि॒त्वान् ॥ १ ॥

यः । त्वाम् । अ॒ग्ने॒ । इ॒नध॑ते । य॒तऽस्रु॑क् । त्रिः । ते॒ । अन्न॑म् । कृ॒णव॑त् । सस्मि॑न् । अह॑न् ।
सः । सु । द्यु॒म्नैः । अ॒भि । अ॒स्तु॒ । प्र॒ऽसक्ष॑त् । तव॑ । क्रत्वा॑ । जा॒त॒ऽवे॒दः॒ । चि॒कि॒त्वान् ॥ १ ॥

**वेङ्कट०** यः त्वाम् अग्ने! हविर्भिरिन्धे संयतस्रुक्कः, यश्च समाने अहनि त्रिः तुभ्यं हविः कृणोति, सः जनः अन्नैः सुष्ठु अभि भवतु[8] शत्रून् प्रकर्षेण त्वां पूजयन् तव कर्मणा हे जातप्रज्ञ![9] प्राज्ञः[10] ॥ १ ॥

---

१-१. °वान् लपं. २. वाचं वि[2] अ[1]. ३. नास्ति वि[2]. ४. वाचम् वि[2] अ[1]. ५. नास्ति वि[1]. ६. ऽयम् वि[2]. ७-७. नास्ति मूको. ८. °ति वि[2] अ[1]. ९. °प्राज्ञः वि[1]; °प्राज्ञ लपं. १०. नास्ति वि[1]; प्राज्ञम् वि[2] अ[1]; प्राज्ञ ल लपं.

इध्मं यस्ते॑ जुभर॑च्छश्रमा॒णो म॒हो अ॑ग्ने॒ अनी॑क॒मा स॑प॒र्यन् ।
स इ॑धा॒नः प्रति॑ दो॒षामु॒षासं॒ पुष्य॑न् र॒यिं स॑चते॒ घ्नन्न॒मित्रा॑न् ॥ २ ॥

इ॒ध्मम् । यः । ते॒ । ज॒भर॑त् । शु॒श्र॒मा॒णः । म॒हः । अ॒ग्ने॒ । अनी॑कम् । आ । स॒प॒र्यन् ।
सः । इ॒धा॒नः । प्रति॑ । दो॒षाम् । उ॒षस॑म् । पुष्य॑न् । र॒यिम् । स॒च॒ते॒ । घ्नन् । अ॒मित्रा॑न् ॥ २ ॥

**वेङ्कट०** इध्मम् यः ते सम्भरति श्राम्यन् महतस्तव अग्ने! रश्मीनाम् अनीकम् परिचरन्, सः त्वाम् रात्रिम् उषसं च प्रति अहोरात्रयोः इन्धानः[1] प्रजाभिः पशुभिश्च पुष्यन् धनं सेवते घ्नन् शत्रून् ॥ २ ॥

अ॒ग्निरी॑शे बृह॒तः क्ष॒त्रिय॑स्या॒ग्निर्वाज॑स्य पर॒मस्य॑ रा॒यः ।
दधा॑ति॒ रत्नं॑ विध॒ते यवि॑ष्ठो॒ व्या॑नु॒षङ्मर्त्या॑य स्व॒धावा॑न् ॥ ३ ॥

अ॒ग्निः । ई॒शे॒ । बृ॒ह॒तः । क्ष॒त्रिय॑स्य । अ॒ग्निः । वाज॑स्य । प॒र॒मस्य॑ । रा॒यः ।
दधा॑ति । रत्न॑म् । वि॒ध॒ते । यवि॑ष्ठः । वि । आ॒नु॒षक् । मर्त्या॑य । स्व॒धाऽवा॑न् ॥ ३ ॥

**वेङ्कट०** अयम् अग्निः ईश्वरो भवति महतः क्षतात्त्राणसमर्थस्य[2] बलस्य, अग्निः अन्नस्य उत्तमस्य। स च धनस्येश्वरो भवति, वि दधाति च रत्नम् परिचरते युवतमः अनुषक्तम्[3] मनुष्याय[4] अन्नवान् ॥ ३ ॥

यच्चि॒द्धि ते॑ पुरुष॒त्रा य॑विष्ठाचि॑त्तिभिश्चकृ॒मा कच्चि॒दागः॑ ।
कृ॒धी ष्व१॒॑स्माँ अदि॑ते॒रना॑गा॒न् व्येनां॑सि शिश्रथो॒ विष्व॑गग्ने ॥ ४ ॥

यत् । चि॒त् । हि । ते॒ । पु॒रु॒ष॒ऽत्रा । य॒वि॒ष्ठ॒ । अचि॑त्तिऽभिः । च॒कृ॒म । कत् । चि॒त् । आगः॑ ।
कृ॒धि । सु । अ॒स्मान् । अदि॑तेः । अना॑गान् । वि । एनां॑सि । शि॒श्र॒थः॒ । विष्व॑क् । अ॒ग्ने॒ ॥४॥

**वेङ्कट०** मनुष्यमध्ये वयं[5] तव हे युवतम अग्ने! अज्ञानैः कृतवन्तः यत् किञ्चित् एनः, ततः अस्मान् [6]कुरु अस्याः[6] पृथिव्याः अनागस्कान्[7]। इयं हि पापकृतो न धारयति। तदर्थम् एनांसि विष्वक् वि श्लथय हे अग्ने! ॥ ४ ॥

म॒हश्चि॑दग्न॒ एन॑सो अ॒भीक॑ ऊ॒र्वाद्दे॒वाना॑मु॒त मर्त्या॑नाम् ।
मा ते॒ सखा॑यः॒ सद॒मिद्रि॑षाम॒ यच्छा॑ तो॒काय॒ तन॑याय॒ शं योः ॥ ५ ॥

म॒हः । चि॒त् । अ॒ग्ने॒ । एन॑सः । अ॒भीके॑ । ऊ॒र्वात् । दे॒वाना॑म् । उ॒त । मर्त्या॑नाम् ।
मा । ते॒ । सखा॑यः । सद॑म् । इत् । रि॒षा॒म॒ । यच्छ॑ । तो॒काय॑ । तन॑याय । शम् । योः ॥ ५ ॥

---

१. इन्धानम् वि॰ अ॰. २. क्षताश्रा॰ मूको. ३. नास्ति वि॰ लपं. ४. मनुष्य वि॰ लपं. ५. अयम् वि॰ अ॰. ६-६. नास्ति वि॰ अ॰. ७. अगस्कान् अ॰.

**वेङ्कट०** हे अग्ने! देवमनुष्यविषयस्य महतः विस्तीर्णस्य पापस्य समीपे वर्तमाना वयम् ते सखायः सदा एव मा रिषाम[1]। यच्छ पुत्राय तत्पुत्राय च शम् च योः च ॥ ५ ॥

यथा॑ ह॒ त्यद् व॑सवो गौ॒र्यं॑ चित् प॒दि षि॒ताममु॑ञ्चता यजत्राः।
ए॒वो ष्व१॒॑स्मन्मु॑ञ्चता॒ व्यंहः॒ प्र ता॑र्यग्ने प्रत॒रं न॒ आयुः॑ ॥ ६ ॥

यथा॑। ह॒। त्यत्। व॒स॒वः॒। गौ॒र्यम्। चि॒त्। प॒दि। सि॒ताम्। अमु॑ञ्चत। य॒ज॒त्राः॒।
ए॒वो इति॑। सु। अ॒स्मत्। मु॒ञ्च॒त॒। वि। अंहः॑। प्र। ता॒रि॒। अ॒ग्ने॒। प्र॒ऽत॒रम्। नः॒। आयुः॑ ॥६॥

**वेङ्कट०** हे वसवः! यथा पुरा एतदसुरैरन्यैर्वा पदि[2] बद्धां गाम् अमुञ्चत हे यजनीयाः![3]। एवमेव अस्मत्तश्च पापं सुष्ठु [4]वि मुञ्चत। अथ[4] हे अग्ने! त्वया च वसूनां प्रधानेन अस्माकम् आयुः प्रवर्ध्यताम्[5] ॥ ६ ॥

[6]इति तृतीयाष्टके पञ्चमाध्याये द्वादशो वर्गः[6] ॥

## [ १३ ]

[6]वामदेवो गौतम ऋषिः। अग्निर्देवता ( लिङ्गोक्तदेवता इत्येके )। त्रिष्टुप् छन्दः[6]।

प्रत्य॒ग्निरु॒षसा॒मग्र॑मख्यद् वि॒भा॒तीनां॑ सु॒मना॑ रत्न॒धेय॑म्।
या॒तम॑श्विना सु॒कृतो॑ दुरो॒णमुत् सूर्यो॒ ज्योति॑षा दे॒व ए॑ति ॥ १ ॥

प्रति॑। अ॒ग्निः। उ॒षसा॑म्। अग्र॑म्। अ॒ख्य॒त्। वि॒ऽभा॒तीना॑म्। सु॒ऽमनाः॑। र॒त्न॒ऽधेय॑म्।
या॒तम्। अ॒श्वि॒ना॒। सु॒ऽकृतः॑। दु॒रो॒णम्। उत्। सूर्यः॑। ज्योति॑षा। दे॒वः। ए॒ति॒ ॥ १ ॥

**वेङ्कट०** आग्नेयमेव सूक्तम्। लिङ्गोक्तदैवतमेके[7]। मनुष्याणां रत्नाधारभूतम् व्युच्छन्तीनाम् उषसाम् अग्रम् सुमनाः अग्निः प्रकाशयति। अस्मिन् काले हे अश्विनौ! यजमानस्य गृहं प्रति आगच्छतम्, उद् एति सूर्यः च देवः ज्योतिषा सह ॥ १ ॥

ऊ॒र्ध्वं भा॒नुं स॑वि॒ता दे॒वो अ॑श्रेद् द्र॒प्सं दवि॑ध्वद् गवि॒षो न सत्वा॑।
अनु॑ व्र॒तं वरु॑णो यन्ति मि॒त्रो यत् सूर्यं॑ दि॒व्या॑रो॒हय॑न्ति ॥ २ ॥

ऊ॒र्ध्वम्। भा॒नुम्। स॒वि॒ता। दे॒वः। अ॒श्रे॒त्। द्र॒प्सम्। दवि॑ध्वत्। गो॒ऽइ॒षः। न। सत्वा॑।
अनु॑। व्र॒तम्। वरु॑णः। य॒न्ति॒। मि॒त्रः। यत्। सूर्य॑म्। दि॒वि। आ॒ऽरो॒हय॑न्ति ॥ २ ॥

---

१. त…षाम वि[2]; त…अ[1]. २. वदि वि[1]; यदि अ[1] ल; पति लपं. ३. °नीय लपं. ४-४. °व्रतथाग्ने वि[1,2] अ[1] लपं. ५. प्रवध्यताम् वि[1,2] लपं; प्रवृध्यताम् अ[1]. ६-६. नास्ति मूको. ७. °क्तदेवमेके वि[2] अ[1]; °क्तदेवत वि[1]; तु. ऋअ २,४,१३.

वेङ्कट० ऊर्ध्वमुखं तेजः सविता देवः[1] श्रयति तेजसां केशं भृशं धूनयन्। यथा उदके वर्तमानं सत्त्वम् अपाम्[2] द्रप्सं दविध्वत् उच्चरति तद्वदिति। सवितुश्चोदयम् वरुणः मित्रः ये चान्ये सूर्यम् दिवि आरोहयन्ति, ते सर्वेऽनुगच्छन्ति ॥ २ ॥

यं सीमकृण्वन् तमसे विपृचे ध्रुवक्षेमा अनवस्यन्तो अर्थम्।
तं सूर्यं हरितः सप्त यह्वीः स्पशं विश्वस्य जगतो वहन्ति ॥ ३ ॥

यम्। सीम्। अकृण्वन्। तमसे। विऽपृचे। ध्रुवऽक्षेमाः। अनवऽस्यन्तः। अर्थम्।
तम्। सूर्यम्। हरितः। सप्त। यह्वीः। स्पशम्। विश्वस्य। जगतः। वहन्ति ॥ ३ ॥

वेङ्कट० सर्वतः तमसः वियोजनाय यम् अकृण्वन् स्थिरक्षेमाः जगद्रक्षणात्मकम् इदं[3] स्वकार्यम् असमापयन्तः[4] सर्वदाऽनुतिष्ठन्तः[5], तम् सूर्यम् अश्वाः सप्त महत्यः विश्वस्य जगतः कृताकृतस्य ज्ञातारम् वहन्ति ॥ ३ ॥

वहिष्ठेभिर्विहरन्यासि तन्तुमवव्ययन्नसितं देव वस्म।
दविध्वतो रश्मयः सूर्यस्य चर्मेवावाधुस्तमो अप्स्वन्तः ॥ ४ ॥

वहिष्ठेभिः। विऽहरन्। यासि। तन्तुम्। अवऽव्ययन्। असितम्। देव। वस्म।
दविध्वतः। रश्मयः। सूर्यस्य। चर्मऽइव। अव। अधुः। तमः। अप्ऽसु। अन्तरिति ॥ ४ ॥

वेङ्कट० हे देव सूर्य! वोढृतमैरश्वैः आत्मीयं सूत्रसदृशं[6] तेजः विविधं हरन् गच्छसि, तत् तमोलक्षणं वासः यथा[7] तस्य तन्तोरधस्ताद् भवति 'तथा अवव्ययन्'[8]। ततश्च भृशं विधुन्वन्तः रश्मयः सूर्यस्य नैशम् तमः चर्म इव अव अधुः[9] अन्तरिक्षस्य मध्ये ॥ ४ ॥

अनायतो अनिबद्धः कथायं न्यङ्ङुत्तानोऽव पद्यते न।
कया याति स्वधया को ददर्श दिवः स्कम्भः समृतः पाति नाकम् ॥ ५ ॥

अनायतः। अनिऽबद्धः। कथा। अयम्। न्यङ्। उत्तानः। अव। पद्यते। न।
कया। याति। स्वधया। कः। ददर्श। दिवः। स्कम्भः। सम्ऽऋतः। पाति। नाकम् ॥ ५ ॥

वेङ्कट० अयमूर्ध्वमाकृष्य न तत्र केनचिद् बद्धः नाप्यधः। तथाविधः अयम् कथम्[10] न्यङ् न अवपतति। कथं वोर्ध्वम् उद्गच्छतीत्यवगन्तव्यम्। केन वा अन्नेन ध्रियमाणोऽयम् अन्तरिक्षे गच्छति। कश्चैनं ददर्श। सोऽयं द्युलोकस्य स्तम्भयिता सन् तेन सङ्गतः नाकम् लोकं रक्षति ॥ ५ ॥

[11]इति तृतीयाष्टके पञ्चमाध्याये त्रयोदशो वर्गः[11] ॥

---

१. देव वि[१]. २-२. °नसत्त्व° वि[१]. ३. नास्ति वि[१] लपं. ४. समाप° वि[१] लपं. ५. वतिति° वि[१] लपं. ६. तं मूको. ७. नास्ति मूको. ८-८. तथाप्ययं वि[१२] अ[१]; यथाप्ययं ल. ९. °व वायुः मूको. १०. तथा वि[१] लपं. ११-११. नास्ति मूको.

[ १४ ]

[1]वामदेवो गौतम ऋषिः । अग्निर्देवता । त्रिष्टुप् छन्दः[1] ।

प्रत्य॒ग्निरु॒षसो॑ जा॒तवे॑दा॒ अख्य॑द् दे॒वो रोच॑माना॒ महो॑भिः ।
आ ना॑सत्योरुगा॒या रथे॑ने॒मं य॒ज्ञमुप॑ नो या॒तमच्छ॑ ॥ १ ॥

प्रति॑ । अ॒ग्निः । उ॒षसः॑ । जा॒तऽवे॑दाः । अख्य॑त् । दे॒वः । रोच॑मानाः । महः॑ऽभिः ।
आ । ना॒स॒त्या॒ । उ॒रु॒ऽगा॒या॒ । रथे॑न । इ॒मम् । य॒ज्ञम् । उप॑ । नः॒ । या॒तम् । अच्छ॑ ॥ १ ॥

वेङ्कट० प्रत्यग्निः[2] इति समानं पूर्वेण सूक्तेन । प्रकाशयति उषसः जातप्रज्ञः देवः तेजोभिः दीप्यमानाः । तथा सति इमम् नः यज्ञम् प्रति उप आ गच्छतम् रथेन बहुभिः स्तोतव्यौ हे अश्विनौ ! इति ॥ १ ॥

ऊ॒र्ध्वं के॒तुं स॑वि॒ता दे॒वो अ॑श्रे॒ज्ज्योति॒र्विश्व॑स्मै॒ भुव॑नाय कृ॒ण्वन् ।
आप्रा॒ द्यावा॑पृथि॒वी अ॒न्तरि॑क्षं॒ वि सूर्यो॑ र॒श्मिभि॒श्चेकि॑तानः ॥ २ ॥

ऊ॒र्ध्वम् । के॒तुम् । स॒वि॒ता । दे॒वः । अ॒श्रे॒त् । ज्योतिः॑ । विश्व॑स्मै । भुव॑नाय । कृ॒ण्वन् ।
आ । अ॒प्राः॒ । द्यावा॑पृथि॒वी इति॑ । अ॒न्तरि॑क्षम् । वि । सूर्यः॑ । र॒श्मिऽभिः॑ । चेकि॑तानः ॥ २ ॥

वेङ्कट० ऊर्ध्वम् तेजः सविता देवः[3] श्रयति सर्वस्मै लोकाय ज्योतिः कृण्वन् । आ पूरयति च त्रीन् लोकान् विविधम् सूर्यः[4] रश्मिभिः सर्वं जानन् इति ॥ २ ॥

आ॒वह॑न्त्यरु॒णीर्ज्योति॒षागा॑न्म॒ही चि॒त्रा र॒श्मिभि॒श्चेकि॑ताना ।
प्र॒बो॒धय॑न्ती सुवि॒ताय॑ दे॒व्यु१॒॑षा ई॑यते सु॒युजा॒ रथे॑न ॥ ३ ॥

आ॒ऽवह॑न्ती । अ॒रु॒णीः । ज्योति॑षा । आ । अ॒गा॒त् । म॒ही । चि॒त्रा । र॒श्मिऽभिः॑ । चेकि॑ताना ।
प्र॒ऽबो॒धय॑न्ती । सु॒वि॒ताय॑ । दे॒वी । उ॒षाः । ई॒य॒ते॒ । सु॒ऽयुजा॑ । रथे॑न ॥ ३ ॥

वेङ्कट० आत्मीया अरुणवर्णाः अश्वाः आवहन्ती ज्योतिषा सह आ गच्छति महती चित्ररूपा रश्मिभिः ज्ञायमाना[5] । सुखं जगत् प्रबोधयन्ती अभ्युदयाय देवी उषाः गच्छति सुष्ठु युक्तेन रथेन ॥ ३ ॥

आ वां॒ वहि॑ष्ठा इ॒ह ते व॑हन्तु॒ रथा॒ अश्वा॑स उ॒षसो॒ व्यु॑ष्टौ ।
इ॒मे हि वां॑ मधु॒पेया॑य॒ सोमा॑ अ॒स्मिन् य॒ज्ञे वृ॑षणा मादयेथाम् ॥ ४ ॥

---

१-१. नास्ति मूको. २. नास्ति कपं. ३. देव कपं. ४. सुवीर्यः वि॰ अ॰. ५. जाय॰ वि॰.

आ । वाम् । वहिष्ठाः । इह । ते । वहन्तु । रथाः । अश्वासः । उषसः । विऽउष्टौ ।
इमे । हि । वाम् । मधुऽपेयाय । सोमाः । अस्मिन् । यज्ञे । वृषणा । मादयेथाम् ॥ ४ ॥

**वेङ्कट०** आ वहन्तु वाम् वोढृतमाः अश्वाः ते अस्मिन् यज्ञे उषसः व्युच्छनवेलायाम् रथाः च। युवयोः मदकरस्य सोमस्य पानाय इमे सोमाः सम्भृताः। अस्मिन् यज्ञे हे वर्षितारौ! मादयेथाम्[1] ॥४॥

अनायतो अनिबद्धः कथायं न्यङ्ङुत्तानोऽव पद्यते न ।
कया याति स्वधया को ददर्श दिवः स्कम्भः समृतः पाति नाकम् ॥ ५ ॥

अनायतः । अनिऽबद्धः । कथा । अयम् । न्यङ् । उत्तानः । अव । पद्यते । न ।
कया । याति । स्वधया । कः । ददर्श । दिवः । स्कम्भः । सम्ऽऋतः । पाति । नाकम् ॥५॥

**वेङ्कट०** पूर्वं ( ४,१३,५ ) व्याख्याता ॥ ५ ॥

[2]इति तृतीयाष्टके पञ्चमाध्याये चतुर्दशो वर्गः[2] ॥

## [ १५ ]

[3]वामदेवो गौतम ऋषिः । अग्निर्देवता, सप्तम्यष्टम्योः सोमकः साहदेव्यः,
नवमीदशम्योः अश्विनौ । गायत्री छन्दः[3] ।

अग्निर्होता नो अध्वरे वाजी सन् परि णीयते । देवो देवेषु यज्ञियः ॥ १ ॥

अग्निः । होता । नः । अध्वरे । वाजी । सन् । परि । नीयते । देवः । देवेषु । यज्ञियः ॥ १ ॥

**वेङ्कट०** अग्निः होता अस्माकं यज्ञे [1]अश्वः भूतः[1] परितः नीयते पर्यग्निकरणे देवः देवानां मध्ये यज्ञियः ॥ १ ॥

परि त्रिविष्टयध्वरं यात्यग्नी रथीरिव । आ देवेषु प्रयो दधत् ॥ २ ॥

परि । त्रिऽविष्टि । अध्वरम् । याति । अग्निः । रथीःऽइव । आ । देवेषु । प्रयः । दधत् ॥ २ ॥

**वेङ्कट०** सारथिरिव परि याति अग्निः यज्ञं त्रिवेष्टनं त्रिरित्यर्थः, देवेषु अन्नम् आ दधत् इति ॥ २ ॥

परि वाजपतिः कविरग्निर्हव्यान्यक्रमीत् । दधद् रत्नानि दाशुषे ॥ ३ ॥

परि । वाजऽपतिः । कविः । अग्निः । हव्यानि । अक्रमीत् । दधत् । रत्नानि । दाशुषे ॥ ३ ॥

**वेङ्कट०** परि अक्रमीत् हवींषि अन्नपतिः कविः अग्निः, यजमानाय रत्नानि प्रयच्छन् इति ॥ ३ ॥

---

१. 'वामिति वि[2] अ[1]; 'थाम् लपं. २-२. नास्ति मूको. ३-३. अश्वभूतः वि[1] लपं.

अयं यः सृञ्जये पुरो दैववाते समिध्यते । द्युमाँ अमित्रदम्भनः ॥ ४ ॥

अयम् । यः । सृञ्जये । पुरः । दैवऽवाते । सम्ऽइध्यते । द्युऽमान् । अमित्रऽदम्भनः ॥ ४ ॥

वेङ्कट० अयम् सोऽग्निः, यः पूर्वम् सृञ्जये राजनि दैववाते[1] समिध्यते[2] स्म दीप्तिमान् अमित्राणां हिंसकः ॥४॥

अस्य घा वीर ईवतोऽग्नेरीशीत मर्त्यः । तिग्मजम्भस्य मीळ्हुषः ॥ ५ ॥

अस्य । घ । वीरः । ईवतः । अग्नेः । ईशीत । मर्त्यः । तिग्मऽजम्भस्य । मीळ्हुषः ॥ ५ ॥

वेङ्कट० एवं गमनवन्तम् अग्निम् तिग्मदंष्ट्रम् सेक्तारम् मनुष्यः वीरः भर्तुम् ईश्वरो भवेदिति[3] प्रश्नः ॥५॥

[4]इति तृतीयाष्टके पञ्चमाध्याये पञ्चदशो वर्गः[4] ॥

तमर्वन्तं न सानसिमरुषं न दिवः शिशुम् । मर्मृज्यन्ते दिवेदिवे ॥ ६ ॥

तम् । अर्वन्तम् । न । सानसिम् । अरुषम् । न । दिवः । शिशुम् । मर्मृज्यन्ते । दिवेऽदिवे ॥६॥

वेङ्कट० तम् अश्वम् इव सम्भजनीयम् आरोचमानम्[5] दिवः पुत्रम् इवादित्यम् परिचरन्ति अन्वहम् अर्थिनः ॥ ६ ॥

बोधद्यन्मा हरिभ्यां कुमारः साहदेव्यः । अच्छा न हूत उदरम् ॥ ७ ॥

बोधत् । यत् । मा । हरिऽभ्याम् । कुमारः । साहऽदेव्यः । अच्छ । न । हूतः । उत् । अरम् ॥ ७ ॥

वेङ्कट० वामदेवाय सहदेवपुत्रः प्रादादश्वौ रक्षसां जयाय । तत्राह—बोधत् इति । स एव द्वयोर्देवता भवति, बोधयामास मामुत्तिष्ठेति यदा अश्वाभ्याम् कुमारः सहदेवपुत्रः, तदानीमेवाहम् आभिमुख्येन आहूतः पुरुषः इव शत्रून् प्रति उद्गतवानस्मि ॥ ७ ॥

उत त्या यजता हरी कुमारात् साहदेव्यात् । प्रयता सद्य आ ददे ॥ ८ ॥

उत । त्या । यजता । हरी इति । कुमारात् । साहऽदेव्यात् । प्रऽयता । सद्यः । आ । ददे ॥८॥

वेङ्कट० अपि च इमौ पूजनीयौ हरी[6] कुमारात् सहदेवस्य[7] पुत्रात् शुद्धवर्णौ सद्यः एव अहं लब्धवानस्मि ॥८॥

एष वां देवावश्विना कुमारः साहदेव्यः । दीर्घायुरस्तु सोमकः ॥ ९ ॥

एषः । वाम् । देवौ । अश्विना । कुमारः । साहऽदेव्यः । दीर्घऽआयुः । अस्तु । सोमकः ॥ ९ ॥

वेङ्कट० अथैतदर्थमश्विनौ अनुध्यायति[8] '[9]एषः वाम्[9]' इति । हे देवौ अश्विनौ! युवयोः स्वभूतः अयमश्वप्रदः [4]कुमारः साहदेव्यः[4] सोमकः नाम दीर्घायुः अस्तु ॥ ९ ॥

१. देववाते वि[1]; दैवाते लपं. २. °ध्यति वि[2] अ[1]. ३. भव° वि[1] लपं. ४-४. नास्ति मूको. ५. °चनं वि[1,2] अ[1]. ६. नास्ति लपं. ७. °देव्यस्य वि[1]. ८. अनुधावति मूको. ९-९. एष वाद वि[2]; एषावाम् लपं.

तं युवं देवावश्विना कुमारं साहदेव्यम् । दीर्घायुषं कृणोतन ॥ १० ॥

तम् । युवम् । देवौ । अश्विना । कुमारम् । साहऽदेव्यम् । दीर्घऽआयुषम् । कृणोतन ॥ १० ॥

**वेङ्कट०** कृणोतन कुरुतम् । द्विवचनेऽपि तनबादेशो दृष्ट इति ॥ १० ॥

'इति तृतीयाष्टके पञ्चमाध्याये षोडशो वर्गः'[1] ॥

[ १६ ]

'वामदेवो गौतम ऋषिः । इन्द्रो देवता । त्रिष्टुप् छन्दः'[1] ।

आ सत्यो यातु मघवाँ ऋजीषी द्रवन्त्वस्य हरय उप नः ।
तस्मा इदन्धः सुषुमा सुदक्षमिहाभिपित्वं करते गृणानः ॥ १ ॥

आ । सत्यः । यातु । मघऽवान् । ऋजीषी । द्रवन्तु । अस्य । हरयः । उप । नः ।
तस्मै । इत् । अन्धः । सुसुम । सुऽदक्षम् । इह । अभिऽपित्वम् । करते । गृणानः ॥ १ ॥

**वेङ्कट०** आ यातु सत्यकर्मा मघवान् ऋजीषेण तद्वान् । अस्य अश्वाः अस्मान् उप आगच्छन्तु । तदर्थम् एवेदम् अन्धः सोमं सुतवन्तो वयं सुबलम् । इह अभिप्राप्तिं करोतीन्द्रः स्तूयमानः ॥ १ ॥

अव स्य शूराध्वनो नान्तेऽस्मिन् नो अद्य सवने मन्दध्यै ।
शंसात्युक्थमुशनेव वेधाश्चिकितुषे असुर्याय मन्म ॥ २ ॥

अव । स्य । शूर । अध्वनः । न । अन्ते । अस्मिन् । नः । अद्य । सवने । मन्दध्यै ।
शंसाति । उक्थम् । उशनाऽइव । वेधाः । चिकितुषे । असुर्याय । मन्म ॥ २ ॥

**वेङ्कट०** अध्वनः अन्ते यथा पथिको विश्रमायाऽऽस्त एवं हे शूर ! अद्य अस्मिन् नः माध्यन्दिने सवने सोमेन मदितुम् अव स्य । अवस्यतिरवसानार्थः । शंसति अयं शस्त्रम् उशना इव प्राज्ञः चिकितुषे जानते असुराणां हन्त्रे मननीयम्[2] तुभ्यमिति ॥ २ ॥

कविर्न निण्यं विदथानि साधन् वृषा यत् सेकं विपिपानो अर्चात् ।
दिव इत्था जीजनत् सप्त कारूनह्ना चिच्चक्रुर्वयुना गृणन्तः ॥ ३ ॥

कविः । न । निण्यम् । विदथानि । साधन् । वृषा । यत् । सेकम् । विऽपिपानः । अर्चात् ।
दिवः । इत्था । जीजनत् । सप्त । कारून् । अह्ना । चित् । चक्रुः । वयुना । गृणन्तः ॥ ३ ॥

---

१-१. नास्ति मूको. २. °यः वि° कपं.

वेङ्कट० उशना इव अन्तर्हितं स्तोमं करोति वामदेवश्च। कर्माणि साधयन् इन्द्रः यदा सोमस्य सेकम् विविधं पिबन् श्रद्धत्ते। यजमानो यज्ञार्थं दीक्षान् सप्त वषट्कर्तॄन् ऋत्विजः इत्थं परिक्रयेण जनयति। ते च झटिति कुर्वन्ति प्रज्ञानानि[1] इन्द्रं स्तुवन्तः ॥ ३ ॥

स्व१र्यद् वेदि॑ सु॒दृशी॑कम॒र्कैर्म॒हि ज्योती॑ रुरु॒चुर्यद्ध॒ वस्तोः॑ ।
अ॒न्धा तमां॑सि॒ दुधि॑ता वि॒चक्षे॒ नृभ्य॑श्चकार॒ नृत॑मो अ॒भिष्टौ॑ ॥ ४ ॥

स्व१रिति॑ । यत् । वेदि॑ । सु॒ऽदृशी॑कम् । अ॒र्कैः । म॒हि । ज्योतिः॑ । रु॒रु॒चुः । यत् । ह॒ । वस्तोः॑ ।
अ॒न्धा । तमां॑सि । दुधि॑ता । वि॒ऽचक्षे॑ । नृऽभ्यः॑ । च॒का॒र॒ । नृऽत॑मः । अ॒भिष्टौ॑ ॥ ४ ॥

वेङ्कट० स्वरित्यादित्यनाम (तु. निघ १,४)। अर्चनैः[2] रश्मिभिः सुदर्शनम् स्वः यदा ज्ञायते, यदा च महत् ज्योतिः रश्मयः रोचयन्ति अह्नि, तदानीम् अन्धीकरणानि तमांसि दुर्निहितानि मनुष्येभ्यः विशेषेण[3] दर्शनाय करोति नेतृतमः अभ्येषणे प्रार्थनायामिति ॥ ४ ॥

व॒वक्ष॒ इन्द्रो॒ अमि॑तमृजी॒ष्यु१॒भे आ प॑प्रौ॒ रोद॑सी महि॒त्वा ।
अत॑श्चिदस्य महि॒मा वि रे॑च्य॒भि यो विश्वा॒ भुव॑ना ब॒भूव॑ ॥ ५ ॥

व॒वक्षे॑ । इन्द्रः॑ । अमि॑तम् । ऋ॒जी॒षी । उ॒भे इति॑ । आ । प॒प्रौ॒ । रोद॑सी॒ इति॑ । म॒हि॒ऽत्वा ।
अतः॑ । चि॒त् । अ॒स्य॒ । म॒हि॒मा । वि । रे॒चि॒ । अ॒भि । यः । विश्वा॑ । भुव॑ना । ब॒भूव॑ ॥ ५ ॥

वेङ्कट० वहति इन्द्रः अमितम् स्थावरं जङ्गमं च ऋजीषेण तद्वान्। उभे च[3] द्यावापृथिवी महत्त्वेन आ पूरयति। योऽयं महिम्ना विश्वान्यपि भुवनानि अभि बभूव, तस्य महिमा [4]विश्वेभ्यः अपि भुवनेभ्यः विरिक्तो भवति बहिर्निश्चरति[4] ॥ ५ ॥

[5]इति तृतीयाष्टके पञ्चमाध्याये सप्तदशो वर्गः[5]।

विश्वा॑नि श॒क्रो नर्या॑णि वि॒द्वान॒पो रि॑रेच॒ सखि॑भि॒र्निका॑मैः ।
अश्मा॑नं चि॒द् ये बि॑भि॒दुर्वचो॑भिर्व्र॒जं गोम॑न्तमु॒शिजो॒ वि व॑व्रुः ॥ ६ ॥

विश्वा॑नि । श॒क्रः । नर्या॑णि । वि॒द्वान् । अ॒पः । रि॒रे॒च॒ । सखि॑ऽभिः । निऽका॑मैः ।
अश्मा॑नम् । चि॒त् । ये । बि॒भि॒दुः । वच॑ःऽभिः । व्र॒जम् । गोऽम॑न्तम् । उ॒शिजः॑ । वि । व॒व्रु॒रिति॑ वव्रुः ॥ ६ ॥

वेङ्कट० [6]सर्वाणि शक्रः नृहितानि† जानन् उदकानि निर्गमयति मरुद्भिः स्निग्धैः। ये मरुतः अस्य वचनैः प्रेषिताः शिलोच्चयं पूर्वम्‡ बिभिदुः, ते पर्वतस्यान्तः पणिभिः[6] अपहृतैर्गोभिर्युक्तं गोव्रजम् अपि विवृतवन्तः कामयमानाः ॥ ६ ॥

---

१. प्रजनानि वि[1]; प्रजानानि अ[1]; प्रजननानि वि[2] ल लपं. २. त्रुटितम् अ[1]; ···अनैः वि[2]. ३. नास्ति ल लपं. ४-४. नास्ति लपं. ५-५. नास्ति मूको. ६-६. ··· भिः लपं. † निहिता° वि[2] अ[1]. ‡ पूर्वे वि[2].

अपो वृत्रं वव्रिवांसं पराहन् प्रावत् ते वज्रं पृथिवी सचेताः ।
प्राणीसि समुद्रियाण्यैनोः पतिर्भवञ्छवसा शूर धृष्णो ॥ ७ ॥

अपः । वृत्रम् । वव्रिऽवांसम् । परा । अहन् । प्र । आवत् । ते । वज्रम् । पृथिवी । सऽचेताः ।
प्र । अर्णांसि । समुद्रियाणि । ऐनोः । पतिः । भवन् । शवसा । शूर । धृष्णो इति ॥ ७ ॥

**वेङ्कट०** [1]उदकानि वव्रिवांसम् अहिं यदा परा हतवानसि तदा समनस्का पृथिवी तव आयुधं प्रकर्षेण रक्षितवती । ततस्त्वम् अन्तरिक्षभवानि उदकानि प्र गमयसि स्वामी भवन् सर्वस्य बलेन हे शूर धृष्णो![1] ॥ ७ ॥

अपो यदद्रिं पुरुहूत दर्दराविर्भुवत् सरमा पूर्व्यं ते ।
स नो नेता वाजमा दर्षि भूरिं गोत्रा रुजन्नङ्गिरोभिर्गृणानः ॥ ८ ॥

अपः । यत् । अद्रिम् । पुरुऽहूत । दर्दः । आविः । भुवत् । सरमा । पूर्व्यम् । ते ।
सः । नः । नेता । वाजम् । आ । दर्षि । भूरिम् । गोत्रा । रुजन् । अङ्गिरःऽभिः । गृणानः ॥८॥

**वेङ्कट०** हे पुरुहूत! यदा त्वं देवानामनागमनार्थं शिलोच्चयं परिवेष्ट्य शयानं मेघम् उदकानि दारितवानसि । ततः प्रादुर्भूते पर्वते तव पुरातनं गोधनम् सरमा नाम शुनी पणिषु त्वया प्रेषिता पुनरागत्य त्वत्समीपे वर्तमाना दर्शयामास । अथ सः त्वम् नेता गवात्मकं बहु अन्नम् अस्मदर्थम् आ दारितवानसि शिलोच्चयान्[2] तदावरणान्[3] मेघान् भिन्दन् अङ्गिरोभिः स्तूयमानः ॥ ८॥

अच्छा कविं नृमणो गा अभिष्टौ स्वर्षाता मघवन्नाधमानम् ।
ऊतिभिस्तमिषणो द्युम्नहूतौ नि मायावानब्रह्मा दस्युरर्त ॥ ९ ॥

अच्छ । कविम् । नृऽमनः । गाः । अभिष्टौ । स्वःऽसाता । मघऽवन् । नाधमानम् ।
ऊतिऽभिः । तम् । इषणः । द्युम्नऽहूतौ । नि । मायाऽवान् । अब्रह्मा । दस्युः । अर्त ॥ ९ ॥

**वेङ्कट०** अभिगतवानसि कविम् कुत्सं हे नृमणः!, नृषु मनो यस्य स तथोक्तः । सर्वैः सम्भजनीये[4] सङ्ग्रामे मघवन्! याचमानं रक्षणैः सह तम् कुत्सम् ऐच्छः अन्नार्थे तस्याह्वाने सति । ततस्त्वय्यागते सति मायायुक्तः मन्त्रवर्जितः तस्य शत्रुरसुरः विपन्न आसीदिति[5] ॥ ९ ॥

आ दस्युघ्ना मनसा याह्यस्तं भुवत् ते कुत्सः सख्ये निकामः ।
स्वे योनौ नि षदतं सरूपा वि वां चिकित्सदृतचिद्ध नारी ॥ १० ॥

---

१-१. नास्ति वि[२] अ[१]. २. °च्चयं लपं. ३. नास्ति लपं. ४. °नीने वि[१] ल लपं.
५. °दति वि[२].

आ । दस्युऽघ्ना । मनसा । याहि । अस्तम् । भुवत् । ते । कुत्सः । सख्ये । निऽकामः ।
स्वे । योनौ । नि । सदतम् । सऽरूपा । वि । वाम् । चिकित्सत् । ऋतऽचित् । ह । नारी ॥

**वेङ्कट०** कुत्सस्य अस्तम् गृहम् आगतवानसि तस्य शत्रून् हन्तुमिच्छता मनसा । आगते च सति त्वयि[1] तव सख्ये कुत्सः श्रद्धानः अभवत् । तथास्त्वित्युक्ते त्वदीये आसने समान-शरीराकारौ कुत्सश्च त्वं च निषण्णौ । किञ्च रथे सदृशरूपौ स्थितौ वाम् ऋतचित् नाम इन्द्रस्य भार्या कः कुत्सः[2] क इन्द्र इति व्यचिकित्सत्[3] इति । अत्र शाट्यायनकम्— 'कुत्सो ह वा औरव इन्द्रस्योरोरधिनिर्मिन[4] आस । यादृश एवेन्द्रस्तादृशो[5] यथात्मनो निर्मितः [6]स्यादेवम् । तं सङ्ग्रहीतारं[6] चक्रे । तं ह जाययाभिजग्राह शच्या पौलोम्या । तां होवाच— कथेत्थमकरिति । सा होवाच न वां व्यज्ञासमिति । स होवाच खलतिं वा एनं करिष्यामि, तथा विजानीतात्' ( जैमि ३,१९९ ) इत्यादि ॥ १० ॥

[7]इति तृतीयाष्टके पञ्चमाध्यायेऽष्टादशो वर्गः[7] ॥

यासि कुत्सेन सरथमवस्युस्तोदो वातस्य हर्योरीशानः ।
ऋज्रा वाजं न गध्यं युयूषन् कविर्यदहन् पार्याय भूषात् ॥ ११ ॥

यासि । कुत्सेन । सऽरथम् । अवस्युः । तोदः । वातस्य । हर्योः । ईशानः ।
ऋज्रा । वाजम् । न । गध्यम् । युयूषन् । कविः । यत् । अहन् । पार्याय । भूषात् ॥ ११ ॥

**वेङ्कट०** कुत्सं रक्षितुमिच्छन् अस्य गृहादेकं रथमास्थाय गतवानसि [8]'वेगेन वातस्य'[8] प्रेरकः अश्वयोश्च ईश्वरो भवन् । ऋजुना मार्गेण अन्नम् इव मिश्रीभावार्हम् । 'गधिर्मिश्रीभावकर्मा' इति यास्कः ( ५, १५ ) । भोजनार्हमित्यर्थः । यौतिश्च मिश्रीभावकर्मा । सम्भक्तुमिच्छन्[9] जनेभ्यः शीघ्रं गच्छत्येवं गतवान् कुत्सः यस्मिन् अहनि पार्याय शत्रुभिर्युद्धकर्मणः समाप्तौ यदहर्भवति तदर्थम् अभवत् । तदहस्तस्य युद्धं संस्थितमासीदित्यर्थः ॥ ११ ॥

कुत्साय शुष्णमशुषं नि बर्हीः प्रपित्वे अह्नः कुयवं सहस्रा ।
सद्यो दस्यून् प्र मृण कुत्स्येन प्र सूरश्चक्रं वृहतादभीके ॥ १२ ॥

कुत्साय । शुष्णम् । अशुषम् । नि । बर्हीः । प्रऽपित्वे । अह्नः । कुयवम् । सहस्रा ।
सद्यः । दस्यून् । प्र । मृण । कुत्स्येन । प्र । सूरः । चक्रम् । वृहतात् । अभीके ॥ १२ ॥

**वेङ्कट०** कुत्सप्रीत्यर्थं शत्रुभिरशोष्यम् [10]शुष्णम् नामासुरम्[10] अमारयः । किं च अह्नः प्रपित्वे प्राप्तौ प्रातःकाले कुयवम् च [11]असुरम् नि बर्हीः[11] असुराणां सहस्रेण सह । स त्वम् इदानीम्

---

१. त्वया अ[1] वि[2].　२. नास्ति वि[1] लपं.　३. व्याचि° वि[2].　४. °स्योत्तरो° वि[1,2] अ[1] लपं.　५. °शौ वि[2] अ[1].　६-६. 'वं तं हं संगृ' वि[2] अ[1].　७-७. नास्ति मूको.　८-८. वेगवातस्य ल लपं; वेगतवानतस्य वि[2] अ[1].　९. °क्तमि° वि[1] लपं.　१०-१०. शुष्णना° वि[2].　११-११. नास्ति वि[1] लपं.

अस्माकमपि यथा कुत्साय हतवान् तेन प्रकारेण शत्रून् प्र मृण मारय। स त्वं सूर्यस्य चक्रम् युद्धे प्रवृहेति ॥ १२ ॥

त्वं पिप्रुं मृगयं शूशुवांसमृजिश्वने वैदथिनाय रन्धीः ।
पञ्चाशत् कृष्णा नि वपः सहस्रात्कं न पुरो जरिमा वि दर्दः ॥ १३ ॥

त्वम् । पिप्रुम् । मृगयम् । शूशुऽवांसम् । ऋजिश्वने । वैदथिनाय । रन्धीः ।
पञ्चाशत् । कृष्णा । नि । वपः । सहस्रा । अत्कम् । न । पुरः । जरिमा । वि । दर्दरिति दर्दः ॥ १३ ॥

वेङ्कट० [1]हे इन्द्र ![1] त्वम् पिप्रुम्[2] असुरम् मृगयम्[3] चासुरं वर्धमानं विदथिपुत्राय ऋजिश्वने वशं नीतवानसि । तथा कृष्णासुरसम्बद्धान्यसुराणां पञ्चाशतं सहस्राणि हत्वा पृथिव्याम् नि वपः । ततः कृष्णस्य[4] पुराणि च विविधं दारितवानसि । अत्क इति रूपनाम । यथा जरिमा अङ्गानां श्रियं विदारयत्येवमिति ॥ १३ ॥

सूर उपाके तन्वं१ दधानो वि यत् ते चेत्यमृतस्य वर्पः ।
मृगो न हस्ती तविषीमुषाणः सिंहो न भीम आयुधानि बिभ्रत् ॥ १४ ॥

सूरः । उपाके । तन्वम् । दधानः । वि । यत् । ते । चेति । अमृतस्य । वर्पः ।
मृगः । न । हस्ती । तविषीम् । उषाणः । सिंहः । न । भीमः । आयुधानि । बिभ्रत् ॥ १४ ॥

वेङ्कट० यत् तव अमृतस्य विज्ञायते उज्ज्वलं रूपं तेजस्वि[5] तस्य समीपे सूर्यश्च आत्मीयं शरीरं बिभ्रत् भवति। ततस्तस्य तेजो भवतीत्यर्थः। मार्गणशीलो मत्तः हस्ती इव त्वं भवसि शत्रुबलं दहन्। तथा सिंहः इव भयङ्करो भवसि[6] आयुधानि धारयन्निति ॥ १४ ॥

इन्द्रं कामा वसूयन्तो अग्मन्त्स्वर्मीळ्हे न सवने चकानाः ।
श्रवस्यवः शशमानास उक्थैरोको न रण्वा सुदृशीव पुष्टिः ॥ १५ ॥

इन्द्रम् । कामाः । वसुऽयन्तः । अग्मन् । स्वःऽमीळ्हे । न । सवने । चकानाः ।
श्रवस्यवः । शशमानासः । उक्थैः । ओकः । न । रण्वा । सुदृशीऽइव । पुष्टिः ॥ १५ ॥

वेङ्कट० इन्द्रम् कामयमानाः धनानीच्छन्तः अभ्यगच्छन्[7] युद्धे इव यज्ञे[8] च लब्धैर्धनैः दीप्यमानाः, अन्नमिच्छन्तः, उक्थैः इन्द्रमर्चन्तः। सोऽयमिन्द्रो गृहम् इव †रमयिता भवति† सुदर्शनेव च पुष्टिः इति ॥ १५ ॥

[1]इति तृतीयाष्टके पञ्चमाध्याये एकोनविंशो वर्गः[1] ॥

---

१-१. नास्ति मूको. २. विप्रुम् अ[1] लपं. ३. °युम् अ[1].४. °स्य च वि[1] अ[1]. ५. तेजः वि[1] ल लपं. ६. भवति मूको. ७. °भ्यागच्छन् वि[1] ल लपं. ८. नास्ति लपं. †-† रम···भवसीति वि[1] अ[1].

तमिद् व इन्द्रं सुहवं हुवेम यस्ता चकार नर्या पुरूणि ।
यो मावते जरित्रे गध्यं चिन्मक्षू वाजं भरति स्पार्हराधाः ॥ १६ ॥

तम् । इत् । वः । इन्द्रम् । सुऽहवम् । हुवेम । यः । ता । चकार । नर्या । पुरूणि ।
यः । माऽवते । जरित्रे । गध्यम् । चित् । मक्षु । वाजम् । भरति । स्पार्हऽराधाः ॥ १६ ॥

**वेङ्कट०** [1]तम् एव वयं युष्मदर्थं स्वाह्वानम्† आह्वयेम, यः तानि ‡चकार नृभ्यो हितानि‡ बहूनि[1], यः च मत्सदृशाय स्तोत्रे[2] भोजनयोग्यम् अन्नम् भरति क्षिप्रम् एव स्पृहणीयधनः ॥ १६ ॥

तिग्मा यदन्तरशनिः पताति कस्मिंश्चिच्छूर मुहुके जनानाम् ।
घोरा यदर्य समृतिर्भवात्यध स्मा नस्तन्वो बोधि गोपाः ॥ १७ ॥

तिग्मा । यत् । अन्तः । अशनिः । पताति । कस्मिन् । चित् । शूर । मुहुके । जनानाम् ।
घोरा । यत् । अर्य । समऽऋतिः । भवाति । अध । स्म । नः । तन्वः । बोधि । गोपाः ॥१७॥

**वेङ्कट०** तीक्ष्णा अशनिः यदा[3] मध्ये पतति कस्मिन् चित् हे शूर! जनानाम् मोहके सङ्ग्रामे। घोरश्च यदा[3] हे स्वामिन्! मनुष्याणां सङ्ग्रामः[4] भवति। समृतिशब्दः सङ्ग्रामवचनः। तदनन्तरमेव अस्माकं शरीराणि गोपायिता भवामीति बुध्यस्वेति ॥ १७ ॥

भुवोऽविता वामदेवस्य धीनां भुवः सखावृको वाजसातौ ।
त्वामनु प्रमतिमा जगन्मोरुशंसो जरित्रे विश्वध स्याः ॥ १८ ॥

भुवः । अविता । वामऽदेवस्य । धीनाम् । भुवः । सखा । अवृकः । वाजऽसातौ ।
त्वाम् । अनु । प्रऽमतिम् । आ । जगन्म । उरुऽशंसः । जरित्रे । विश्वध । स्याः ॥ १८ ॥

**वेङ्कट०** भव वामदेवस्य मम कर्मणां रक्षकः। भव च सखा रक्षोवर्जितः त्वं सङ्ग्रामे। त्वाम् प्रमतिम् वयम् अनु गच्छामः। त्वं चास्मै स्तोत्रे सर्वदा बह्वाशंसनः[5] स्याः इति ॥ १८ ॥

एभिर्नृभिरिन्द्र त्वायुभिष्ट्वा मघवद्भिर्मघवन् विश्व आजौ ।
द्यावो न द्युम्नैरभि सन्तो अर्यः क्षपो मदेम शरदश्च पूर्वीः ॥ १९ ॥

एभिः । नृऽभिः । इन्द्र । त्वायुऽभिः । त्वा । मघवत्ऽभिः । मघऽवन् । विश्वे । आजौ ।
द्यावः । न । द्युम्नैः । अभि । सन्तः । अर्यः । क्षपः । मदेम । शरदः । च । पूर्वीः ॥ १९ ॥

---

१-१. नास्ति लपं.　† साह्वानं मूको.　‡-‡ नास्ति अ[1].　२. चास्तोत्रे वि[2]; चस्तोत्रे अ[1].
३. यथा अ[1].　४. संगमः मूको.　५. °शंसन मूको.

वेङ्कट० एभिः मनुष्यैः हे इन्द्र मघवन्! त्वत्कामैः मघवद्भिः सह सर्वेऽपि वयं सङ्ग्रामे, दिवसाः इव तेजोभिः अन्धकारम्, अरीन् अभि भवन्तः त्वां रात्रीः संवत्सरान् च बहून् यज्ञैर्मादयेम ॥ १९ ॥

एवेदिन्द्राय वृषभाय वृष्णे ब्रह्माकर्म भृगवो न रथम् ।
नू चिद् यथा नः सख्या वियोषदसन्न उग्रोऽविता तनूपाः ॥ २० ॥

एव । इत् । इन्द्राय । वृषभाय । वृष्णे । ब्रह्म । अकर्म । भृगवः । न । रथम् ।
नु । चित् । यथा । नः । सख्या । विऽयोषत् । असत् । नः । उग्रः । अविता । तनूऽपाः ॥२०॥

वेङ्कट० एवम् एव इन्द्राय कामानां वर्षित्रे पुंसे स्तोत्रं कृतवन्तः भृगवः[1] इव स्तोतारः रथम् । इन्द्राय भृगवो रथमारोहणाय नूनं कृतवन्तः । अथवा भृगव इव रंहणं[2] स्तोत्रं कृतवन्त इति । क्षिप्रम् एव यथा अस्माकमिन्द्रः सख्यानि विमिश्रयति । भवेच्च अस्माकम् उद्गूर्णः रक्षिता अङ्गानां पालयितेति ॥ २० ॥

नू ष्टुत इन्द्र नू गृणान इषं जरित्रे नद्यो३ न पीपेः ।
अकारि ते हरिवो ब्रह्म नव्यं धिया स्याम रथ्यः सदासाः ॥ २१ ॥

नु । स्तुतः । इन्द्र । नु । गृणानः । इषम् । जरित्रे । नद्यः । न । पीपेरिति पीपेः ।
अकारि । ते । हरिऽवः । ब्रह्म । नव्यम् । धिया । स्याम । रथ्यः । सदाऽसाः ॥ २१ ॥

वेङ्कट० हे इन्द्र! क्षिप्रमेव पूर्वैः[3] स्तुतः क्षिप्रमेव सम्प्रतितनैः स्तूयमानः अन्नं स्तोत्रे पूरय अद्भिर्नदीः इव । हे हरिवः! अस्माभिस्तुभ्यं नूतनं स्तोत्रं कृतम् । तथा सति वयं रथयुक्ताः कर्मणा शत्रूणां सदा सम्भक्तारः स्याम ॥ २१ ॥

[4]इति तृतीयाष्टके पञ्चमाध्याये विंशो वर्गः[4] ॥

## [ १७ ]

[4]वामदेवो गौतम ऋषिः । इन्द्रो देवता । त्रिष्टुप् छन्दः, पञ्चदशी एकपदा विराट्[4] ।

त्वं महाँ इन्द्र तुभ्यं ह क्षा अनु क्षत्रं मंहना मन्यत द्यौः ।
त्वं वृत्रं शवसा जघन्वान्त्सृजः सिन्धूँरहिना जग्रसानान् ॥ १ ॥

त्वम् । महान् । इन्द्र । तुभ्यम् । ह । क्षाः । अनु । क्षत्रम् । मंहना । मन्यत । द्यौः ।
त्वम् । वृत्रम् । शवसा । जघन्वान् । सृजः । सिन्धून् । अहिना । जग्रसानान् ॥ १ ॥

वेङ्कट० त्वम् महान् असि हे इन्द्र! । तुभ्यम् ह पृथिवी बलम् अनु अमन्यत महती द्यौः च । त्वम् वृत्रम् बलेन हतवान् सन् अहिना ग्रस्यमानान् सिन्धून् अवासृजः । सिन्धूनवासृजः[5] सर्तवे[6] इति ॥ १ ॥

---

१. भृगः लपं. २. रंहुणम् वि[२] अ[१]. ३. पूर्वे लपं. ४-४. नास्ति मूको. ५. नास्ति अ[१]. ६. सर्वतः वि[२] ल.

तव॑ त्वि॒षो जनि॑मन् रेजत॒ द्यौ रेज॒द् भूमि॑र्भि॒यसा॒ स्वस्य॑ म॒न्योः ।
ऋ॒घाय॑न्त सु॒भ्व१ः पर्व॑तास॒ आर्द॒न् धन्वा॑नि स॒रय॑न्त॒ आप॑ः ॥ २ ॥

तव॑ । त्वि॒षः । जनि॑मन् । रे॒जत॒ । द्यौः । रेज॑त् । भूमि॑ः । भि॒यसा॑ । स्वस्य॑ । म॒न्योः ।
ऋ॒घाय॑न्त । सु॒ऽभ्व॑ः । पर्व॑तासः । आर्द॑न् । धन्वा॑नि । स॒रय॑न्ते । आप॑ः ॥ २ ॥

वेङ्कट० तव [1]तेजसः जन्मनि[1] द्यौः रेजत[2] कम्पते । भूमिः च अरेजत् त्वदीयस्य क्रोधस्य भयेन । तथा शिलोच्चयाः शोभनभवनाः ऋघायन्त अभिभवार्थम्[3] । ऋघायतिस्तिष्ठत्यर्थः[4] । तथा सपत्नान् धनूंषि हिंसन्ति । आपः च त्वद्भयात् गच्छन्तीति ॥ २ ॥

भि॒नद् गि॒रिं शव॑सा॒ वज्र॑मि॒ष्णन्ना॑वि॒ष्कृ॒ण्वा॒नः स॑ह॒सा॒न ओज॑ः ।
वधी॑द् वृ॒त्रं वज्रे॑ण मन्द॒सा॒नः सर॒न्नापो॒ जव॑सा ह॒तवृ॑ष्णीः ॥ ३ ॥

भि॒नत् । गि॒रिम् । शव॑सा । वज्र॑म् । इ॒ष्णन् । आ॒विः॒ऽकृ॒ण्वा॒नः । स॒ह॒सा॒नः । ओज॑ः ।
वधी॑त् । वृ॒त्रम् । वज्रे॑ण । म॒न्द॒सा॒नः । सर॑न् । आप॑ः । जव॑सा । ह॒तऽवृ॑ष्णीः ॥ ३ ॥

वेङ्कट० भिनत्[5] गिरिम्[6] बलेन आत्मीयम् वज्रम् प्रेरयन् आत्मीयम् ओजः प्रकाशयन् परेषामोजोऽभिभवन्[7] । सोऽयम् अवधीत् वृत्रं वज्रेण मोदमानः । [8]अथ आपः वेगेन असरन्† हतवृष्ण्यः‡ । वृत्रे हते ततो निर्जग्मुरित्यर्थः[8] ॥ ३ ॥

सु॒वीर॑स्ते जनि॒ता म॑न्यत॒ द्यौरिन्द्र॑स्य क॒र्ता स्व॒प॑स्तमो भूत् ।
य ईं॑ ज॒जान॑ स्व॒र्यं॑ सु॒वज्र॒मन॑पच्युतं॒ सद॑सो॒ न भूम॑ ॥ ४ ॥

सु॒ऽवीर॑ः । ते॒ । ज॒नि॒ता । म॒न्य॒त॒ । द्यौः । इन्द्र॑स्य । क॒र्ता । स्वप॑ःऽतमः । भू॒त् ।
यः । ई॒म् । ज॒जान॑ । स्व॒र्य॑म् । सु॒ऽवज्र॑म् । अन॑पऽच्युतम् । सद॑सः । न । भूम॑ ॥ ४ ॥

वेङ्कट० शोभनपुत्रः तव जनयिता द्यौः अमन्यत लौकिकैः । अथ परोक्षः । इन्द्रस्य कर्ता जनयिता अतिशयेन शोभनकर्मा अभवत् , यः एनम्[9] जजान सर्वहितम् सुवज्रम् अनपभ्रष्टं परिषदः इव भूमानमिति ॥ ४ ॥

य एक॒ इच्च्या॒वय॑ति॒ प्र भूमा॒ राजा॑ कृ॒ष्टीनां॑ पु॑रुहू॒त इन्द्रः॑ ।
स॒त्यमे॑न॒मनु॒ विश्वे॑ मदन्ति रा॒तिं दे॒वस्य॑ गृण॒तो म॒घोन॑ः ॥ ५ ॥

---

1-1. °जसो जनि मूको. 2. °जत् ल लपं. 3 °भिषवार्थम् अ[1]; °वार्थम् वि[1] लपं. 4. °ष्ठन्तीत्य° वि[1] अ[2] लपं. 5. नास्ति वि[2] लपं. 6. नास्ति वि[2]. 7. °षान्तेजो° वि[2] अ[1]. 8-8. वि[2] (तु. ऋ ४, २१,३ भाष्यम्). † अचर° अ[1]. ‡ गतवृ° वि[2] अ[1]. 9. एवम् वि[2].

यः । एकः । इत् । च्यवर्यति । प्र । भूम । राजा । कृष्टीनाम् । पुरुऽहूतः । इन्द्रः ।
सत्यम् । एनम् । अनु । विश्वे । मदन्ति । रातिम् । देवस्य । गृणतः । मघोनः ॥ ५ ॥

वेङ्कट० [1]यः एकः एव सन्[1] शत्रूणां भूमानम् प्र च्यावयति मनुष्याणाम् राजा बहुभिराहूतः इन्द्रः । तम् एनम् अच्छलेनैव [2]सर्वे देवाः[2] अनु मदन्ति स्तूयमानस्य मघवतः देवस्य हविषां दातारं मनुष्यम् ॥ ५ ॥

[3]इति तृतीयाष्टके पञ्चमाध्याये एकविंशो वर्गः[3] ॥

सत्रा सोमा अभवन्नस्य विश्वे सत्रा मदासो बृहतो मदिष्ठाः ।
सत्राभवो वसुपतिर्वसूनां दत्रे विश्वा अधिथा इन्द्र कृष्टीः ॥ ६ ॥

सत्रा । सोमाः । अभवन् । अस्य । विश्वे । सत्रा । मदासः । बृहतः । मदिष्ठाः ।
सत्रा । अभवः । वसुऽपतिः । वसूनाम् । दत्रे । विश्वाः । अधिथाः । इन्द्र । कृष्टीः ॥ ६ ॥

वेङ्कट० इन्द्रस्यैव सत्यमेव सर्वे सोमाः भवन्ति । एतदेव प्रकारान्तरेणाह—सत्यमेव[4] सोमाः मादयितृतमाः[5] महत इन्द्रस्य भवन्तीति । शेषः प्रत्यक्षः । सत्यमेव हे इन्द्र ! त्वम् वसूनाम् पतिः भवसि । स त्वम् हविषः प्रदातरि मयि सर्वाः[6] प्रजाः अधिधेहि ॥ ६ ॥

त्वमध प्रथमं जायमानोऽमे विश्वा अधिथा इन्द्र कृष्टीः ।
त्वं प्रति प्रवत आशयानमहिं वज्रेण मघवन् वि वृश्चः ॥ ७ ॥

त्वम् । अध । प्रथमम् । जायमानः । अमे । विश्वाः । अधिथाः । इन्द्र । कृष्टीः ।
त्वम् । प्रति । प्रऽवतः । आऽशयानम् । अहिम् । वज्रेण । मघऽवन् । वि । वृश्चः ॥ ७ ॥

वेङ्कट० हे इन्द्र ! त्वम् प्रातः सर्वेषाम्[7] देवानां पूर्वमेव जायमानः भये विश्वाः प्रजाः अधिथाः[8] । त्वम् निम्नान् प्रदेशान् लक्षीकृत्य आवृत्य शयानम् अहिम् इति स्पष्टम्[9] ॥ ७ ॥

सत्राहणं दाधृषिं तुम्रमिन्द्रं महामपारं वृषभं सुवज्रम् ।
हन्ता यो वृत्रं सनितोत वाजं दाता मघानि मघवा सुराधाः ॥ ८ ॥

सत्राऽहनम् । दधृषिम् । तुम्रम् । इन्द्रम् । महाम् । अपारम् । वृषभम् । सुऽवज्रम् ।
हन्ता । यः । वृत्रम् । सनिता । उत । वाजम् । दाता । मघानि । मघऽवा । सुऽराधाः ॥ ८ ॥

वेङ्कट० सत्यमेव शत्रूणां हन्तारम् अभिभवितारम् , तुमिः[10] प्रेरणकर्मा, शत्रूणां प्रेरयितारम् इन्द्रम्

---

१-१. नास्ति वि[1] लपं. २-२. सर्वदे[?] वि[1] लपं. ३-३. नास्ति मूको. ४. प्रत्यक्षमेव वि[2] लपं. ५ मद° वि[1]. ६ नास्ति अ[1]. ७. °षामेव ल लपं. ८. अधिभाः वि[1,2] अ[1] लपं ९. स्पष्टमिति वि[2] अ[1] ल. १० नास्ति वि[2] अ[1].

महान्तम् अदृष्टपर्यन्तम् वर्षितारम् सुवज्रम् अहं स्तौमि, यः स्तोतॄणामुपद्रवस्य ताच्छील्येन हन्ता भवति, अपि च दाता भवति[1] अन्नम्, प्रयच्छति धनम् मघवा शोभनधनः। सर्वत्र तृन्प्रत्ययः ॥ ८ ॥

अयं वृतश्चातयते समीचीर्य आजिषु मघवा शृण्व एकः।
अयं वाजं भरति यं सनोत्यस्य प्रियासः सख्ये स्याम ॥ ९ ॥

अयम्। वृतः। चातयते। सम्ऽईचीः। यः। आजिषु। मघऽवा। शृण्वे। एकः।
अयम्। वाजम्। भरति। यम्। सनोति। अस्य। प्रियासः। सख्ये। स्याम ॥ ९ ॥

**वेङ्कट०** सम्भूयागच्छन्तीः परिवृण्वतीः परसेनाः अयम् विनाशयति[2], यः सङ्ग्रामेषु मघवा असहाय एव कार्यंकरणः श्रूयते। अयम् अन्नं [3]तस्मै प्रयच्छति[3] यम्[4] स्तोतारं भजते। तस्य अस्य सख्ये वर्तमानाः प्रियाः स्याम अस्येति ॥ ९ ॥

अयं शृण्वे अध जयन्नुत घ्नन्नयमुत प्र कृणुते युधा गाः।
यदा सत्यं कृणुते मन्युमिन्द्रो विश्वं दृळ्हं भयत एजदस्मात् ॥ १० ॥

अयम्। शृण्वे। अध। जयन्। उत। घ्नन्। अयम्। उत। प्र। कृणुते। युधा। गाः।
यदा। सत्यम्। कृणुते। मन्युम्। इन्द्रः। विश्वम्। दृळ्हम्। भयते। एजत्। अस्मात् ॥ १० ॥

**वेङ्कट०** युद्धे[5] प्रविष्टः अयम् तदानीमेव शत्रून्[6] जयन् [7]घ्नन् च[7] श्रूयते[8]। अयम् अपि च[9] शत्रुभ्यः युद्धेन आत्मीयाः गाः प्रकाशयति[10]। यदा सत्यम् एव क्रोधं करोति इन्द्रः, सर्वमेव अस्मात् स्थावरं जङ्गमं च तदा बिभेति ॥ १० ॥

[11]इति तृतीयाष्टके पञ्चमाध्याये द्वाविंशो वर्गः[11] ॥

समिन्द्रो गा अजयत् सं हिरण्या समश्विया मघवा यो ह पूर्वीः।
एभिर्नृभिर्नृतमो अस्य शाकै रायो विभक्ता संभरश्च वस्वः ॥ ११ ॥

सम्। इन्द्रः। गाः। अजयत्। सम्। हिरण्या। सम्। अश्विया। मघऽवा। यः। ह। पूर्वीः।
एभिः। नृऽभिः। नृऽतमः। अस्य। शाकैः। रायः। विऽभक्ता। सम्ऽभरः। च। वस्वः ॥ ११ ॥

---

१. नास्ति वि[2] अ[1]. २. अपि ना° लपं. ३-३. प्रयच्छति तस्मै अ[1]. ४. यः वि[1] लपं ५. अयं युद्धे वि[2]. ६. °त्रुम् वि[1] अ[1] ७-७. नास्ति अ[1]. ८. °ते: यम् वि[1] लपं. ९. नास्ति लपं. १०. °कारयति वि[1,2] लपं. ११-११. नास्ति मूको.

वेङ्कट० यः[1] इन्द्रः पूर्वीः सेनाः जिगाय, स ताः सेनाः गोहिरण्याश्वसमूहान्[2] सम् अजयत्[3]। एभिः नेतृभिः मरुद्भिः सह नेतृतमः अस्य[4] इन्द्रस्य सहायैः[5] स्तोतृषु धनस्य विभागं कुर्वन् सम्भरणशीलः च धनस्य शत्रुभ्यः ॥ ११ ॥

कियत् स्विदिन्द्रो अध्येति मातुः कियत् पितुर्जनितुर्यो जजान ।
यो अस्य शुष्मं मुहुकैरियर्ति वातो न जूतः स्तनयद्भिरभ्रैः ॥ १२ ॥

कियत् । स्वित् । इन्द्रः । अधि । एति । मातुः । कियत् । पितुः । जनितुः । यः । जजान ।
यः । अस्य । शुष्मम् । मुहुकैः । इयर्ति । वातः । न । जूतः । स्तनयत्ऽभिः । अभ्रैः ॥ १२ ॥

वेङ्कट० 'कियात्या यत्समया भवाति[6]' ( ऋ १,११३,१० ) इत्यनेन समानार्थो मन्त्रोऽयम्। प्रातः प्रादुर्भवन् द्यावापृथिव्योः पर्यन्तात् प्रादुर्भवति। तत्रास्य पृथिवीं मातरमाह पितरं दिवम्[7]। अयम्[8] इन्द्रः पृथिव्याः कियत् स्वित् अधि गच्छति। स्वतेजसा कियन्तं[8] देशं प्रकाशयन् गच्छतीत्यर्थः। कियत् च पितुः जनयितुः, यः एनमिन्द्रम् जजान। यः इन्द्रस्य बलम् मुहुर्मुहुः प्रेरयति। दिवि हीन्द्रो वर्तमानो बलिष्ठो भवति। सोऽयम् वातः इव कृष्टो[9] भवति स्तनयद्भिः मेघैः ॥ १२ ॥

क्षियन्तं त्वमक्षियन्तं कृणोतीयर्ति रेणुं मघवा समोहम् ।
विभञ्जनुरशनिमाँ इव द्यौरुत स्तोतारं मघवा वसौ धात् ॥ १३ ॥

क्षियन्तम् । त्वम् । अक्षियन्तम् । कृणोति । इयर्ति । रेणुम् । मघऽवा । समऽओहम् ।
विऽभञ्जनुः । अशनिमान्ऽइव । द्यौः । उत । स्तोतारम् । मघऽवा । वसौ । धात् ॥ १३ ॥

वेङ्कट० निवसन्तमपि अनिवसन्तम् एकं करोति। उत्क्षिपति प्रेरयति च सङ्ग्रामोत्थम् रेणुम् समूह्य। शत्रूणां विभञ्जनशीलः यथा अशनिमान् द्यौः प्रजानां भञ्जनं करोति। सोऽयम् मघवा स्तोतारम् धने दधाति[10] ॥ १३ ॥

अयं चक्रमिषणत् सूर्यस्य न्येतशं रीरमत् ससृमाणम् ।
आ कृष्ण ईं जुहुराणो जिघर्ति त्वचो बुध्ने रजसो अस्य योनौ ॥ १४ ॥

अयम् । चक्रम् । इषणत् । सूर्यस्य । नि । एतशम् । रीरमत् । ससृमाणम् ।
आ । कृष्णः । ईम् । जुहुराणः । जिघर्ति । त्वचः । बुध्ने । रजसः । अस्य । योनौ ॥ १४ ॥

---

१. नास्ति वि[1] लपं. २. हिरण्या° वि[1] लपं. ३. °अयजत अ[1]. ४. यस्य वि[2] अ[1] ल लपं. ५. °याः मूको. ६. भवति वि[1] अ[1] लपं. ७. अयमहं वि[1] लपं. ८. किं तं वि[1] ल; कितं वि[1] अ[1]; किन्त लपं. ९. आकृष्टः वि[1] अ[1]. १०. ददाति वि[1] अ[1].

वेङ्कट० एकपदोत्तरा तयैकवाक्यम् । इषिः[1] प्रेरणकर्मा । सूर्यरथसम्बन्धि चक्रम् अयम् ततः इषणत् प्रावृहत् । अथ तेन चक्रेणैतशस्य शत्रुं हत्वा तम् एतशम् [2]शत्रुभयात्† पलायमानम्[2] नि रीरमत् रमयामास । 'प्रैतशं सूर्ये पस्पृधानम्' ( ऋ १,६१,१५ ) इति [3]मन्त्रः । तम् एतशम्† । त्वचिः संवरणकर्मा । तेज उच्यते । तस्य मूलभूते अस्य उदकस्य स्थानभूते वर्तमानम्[3] ॥ १४ ॥

असिंक्न्यां यजंमानो न होतां ॥ १५ ॥

असिंक्न्याम् । यजंमानः । न । होतां ॥ १५ ॥

वेङ्कट० ... ... ... ... ... ॥ १५ ॥

[4]इति तृतीयाष्टके पञ्चमाध्याये त्रयोविंशो वर्गः[4] ॥

गव्यन्त इन्द्रं सख्याय विप्रा अश्वायन्तो वृषणं वाजयन्तः ।
जनीयन्तो जनिदामक्षितोतिमा च्यावयामोऽवते न कोशम् ॥ १६ ॥

गव्यन्तः । इन्द्रम् । सख्याय । विप्राः । अश्वऽयन्तः । वृषणम् । वाजयन्तः ।
जनिऽयन्तः । जनिऽदाम् । अक्षितऽऊतिम् । आ । च्यवयामः । अवते । न । कोशम् ॥१६॥

वेङ्कट० [5]इन्द्रम् वृषणम् मेधाविनः गाः अश्वान् अन्नं चेच्छन्तः वयम् सख्याय आच्यावयामः, एवम् भार्यामिच्छन्तः जनीनां दातारम् †अक्षीणपरिरक्षणम् । यथा† कूपे दृतिमुदकाहरणार्थमाच्यावयन्ति । सरस्वतीतीरे कोशैरुदकमुद्धरन्ति न घटैः[5] ॥ १६ ॥

त्राता नो बोधि ददृशान आपिरभिख्याता मर्डिता सोम्यानाम् ।
सखा पिता पितृतमः पितॄणां कर्तेमु लोकमुशते वयोधाः ॥ १७ ॥

त्राता । नः । बोधि । ददृशानः । आपिः । अभिऽख्याता । मर्डिता । सोम्यानाम् ।
सखा । पिता । पितृऽतमः । पितॄणाम् । कर्ता । ईम् । ऊँ इति । लोकम् । उशते । वयःऽधाः ॥

वेङ्कट० [6]रक्षकः अस्माकं भवामीति[6] बुध्यस्व आपिः दृश्यमानः सोमार्हाणाम् अभिख्यानं[7] कुर्वन् सुखयंश्च तान् । सखा त्वं केषाञ्चित् पिता, पितृतमः च पितॄणाम् अतिशयेन पाता पितेत्यर्थः[8], कर्ता च इमम् लोकम्, कामयमानाय अन्नस्य [9]दाता चेति[9] ॥ १७ ॥

सखीयतामविता बोधि सखा गृणान इन्द्र स्तुवते वयो धाः ।
वयं ह्या ते चकृमा सबाध आभिः शमीभिर्महयन्त इन्द्र ॥ १८ ॥

---

१. नास्ति अ[1]. २-२. नास्ति ल. † °बलात् अ[1]. ३-३. नास्ति वि[1] लपं. † °शः मूको. ४-४. नास्ति मूको. ५-५. नास्ति वि[1] लपं. †-† °णं य वि[1] अ[1]. ६-६. नास्ति वि[1] लपं. ७. °ज्ञानं अ[1]. ८. °तैवे° वि[1] अ[1]. ९-९. ददातेति अ[1].

सखिऽयताम् । अविता । बोधि । सखा । गृणानः । इन्द्र । स्तुवते । वयः । धाः ।
वयम् । हि । आ । ते । चकृम । सऽबाधः । आभिः । शमीभिः । महयन्तः । इन्द्र ॥१८॥

वेङ्कट० सखित्वमिच्छतां रक्षकः सखा भवामीति बुध्यस्व। तथा स्तूयमानस्त्वम् हे इन्द्र! स्तुवते धेहि अन्नम्। वयम् हि तुभ्यम् एभिः कर्मभिः आ चकृम पूजां कुर्वन्तः बाधसहिताः ॥ १८ ॥

स्तुत इन्द्रो मघवा यद्ध वृत्रा भूरीण्येको अप्रतीनि हन्ति ।
अस्य प्रियो जरिता यस्य शर्मन्नकिर्देवा वारयन्ते न मर्ताः ॥ १९ ॥

स्तुतः । इन्द्रः । मघऽवा । यत् । ह । वृत्रा । भूरीणि । एकः । अप्रतीनि । हन्ति ।
अस्य । प्रियः । जरिता । यस्य । शर्मन् । नकिः । देवाः । वारयन्ते । न । मर्ताः ॥१९॥

वेङ्कट० स्तुतः इन्द्रः धनवान्, यस्मात् शत्रून् बहून् [१]एकः एव[१] अप्रतिगतान् हन्ति तस्मात्। अस्य प्रियः स्तोता। यस्य इन्द्रस्य प्रिये[२] स्तोत्रे क्रियमाणे स्तोतारम् देवाः च मनुष्याश्च न वारयन्ते अपि तर्हि शृण्वन्ति ॥ १९ ॥

एवा न इन्द्रो मघवा विरप्शी करत् सत्या चर्षणीधृदनर्वा ।
त्वं राजा जनुषां धेह्यस्मे अधि श्रवो माहिनं यज्जरित्रे ॥ २० ॥

एव । नः । इन्द्रः । मघऽवा । विऽरप्शी । करत् । सत्या । चर्षणिऽधृत् । अनर्वा ।
त्वम् । राजा । जनुषाम् । धेहि । अस्मे इति । अधि । श्रवः । माहिनम् । यत् । जरित्रे ॥२०॥

वेङ्कट० एवम् अस्मान् इन्द्रः धनवान् महान् करोतु सत्यान्[३] मनुष्याणां धर्ता शत्रुभिरप्रावृतः[४]। त्वम् हे इन्द्र! राजा जातानाम् अस्मासु अधि धेहि[५] श्रवः अन्नं धनं च, यत् जरित्रे प्रयच्छसि तदिति ॥ २० ॥

नू ष्टुत इन्द्र नू गृणान इषं जरित्रे नद्यो३ न पीपेः ।
अकारि ते हरिवो ब्रह्म नव्यं धिया स्याम रथ्यः सदासाः ॥ २१ ॥

नु । स्तुतः । इन्द्र । नु । गृणानः । इषम् । जरित्रे । नद्यः । न । पीपेरिति पीपेः ।
अकारि । ते । हरिऽवः । ब्रह्म । नव्यम् । धिया । स्याम । रथ्यः । सदाऽसाः ॥ २१ ॥

वेङ्कट० ऋ ४,१६,२१ द्र. ॥ २१ ॥

[६]इति तृतीयाष्टके पञ्चमाध्याये चतुर्विंशो वर्गः[६] ॥

---

१-१. एव एकः वि[२] अ[१]. २. प्रियस्तो° वि[१] लपं. ३. सत्यम् लपं. ४. °भिः प्रत्यृ° वि[२] अ[१]. ५. देहि वि[१]. ६-६. नास्ति मूको.

[ १८ ]

[1]वामदेवो गौतम ऋषिः, प्रथमाया इन्द्रः, चतुर्थ्या उत्तरार्धर्चस्य सप्तम्याश्च अदितिः। प्रथमायाश्चतुर्थ्या उत्तरार्धर्चस्य पञ्चमीषष्ठीसप्तमीनां च वामदेवो देवता, द्वितीयादिचतुर्थ्यन्तानाम् पूर्वार्धर्चानाम् अष्टम्यादित्रयोदश्यन्तानां च इन्द्रः। त्रिष्टुप् छन्दः[1]।

अयं पन्था अनुवित्तः पुराणो यतो देवा उदजायन्त विश्वे ।
अतश्चिदा जनिषीष्ट प्रवृद्धो मा मातरममुया पत्तवे कः ॥ १ ॥

अयम् । पन्थाः । अनुऽवित्तः । पुराणः । यतः । देवाः । उत्ऽअजायन्त । विश्वे ।
अतः । चित् । आ । जनिषीष्ट । प्रऽवृद्धः । मा । मातरम् । अमुया । पत्तवे । करिति कः ॥१॥

**वेङ्कट०** इन्द्राऽदितिवामदेवानां संवादः (तु. ऋअ २,४,१८)। तत्र दीर्घकालं वामदेवो गर्भे शिश्ये। तत इन्द्र आह— अयम् इति। अयम् योनिमार्गः सर्वैरेव जायमानैरनुक्रमेण लब्धः पुराणः। यतः पथः देवाः अपि उद् अजायन्त सर्वे। वामदेवश्चास्माद् एव मार्गाद् आजनितुमर्हति गर्भे एव प्रवृद्धशिराः मा मातरम् अमूम्, [2]द्वितीयायाः यादेशः[2], पतितुं कार्षीदिति। परोक्षेण वामदेवमाहेति ॥ १ ॥

नाहमतो निरया दुर्गहैतत् तिरश्चता पार्श्वान्निर्गमाणि ।
बहूनि मे अकृता कर्त्वानि युध्यै त्वेन सं त्वेन पृच्छै ॥ २ ॥

न । अहम् । अतः । निः । अय । दुःऽगहा । एतत् । तिरश्चता । पार्श्वात् । निः । गमानि ।
बहूनि । मे । अकृता । कर्त्वानि । युध्यै । त्वेन । सम् । त्वेन । पृच्छै ॥ २ ॥

**वेङ्कट०** गर्भे शयानस्य वामदेवस्य बुद्धिप्रकारं स्वयमेवाह— न अहम् अस्माद्योनिमार्गात् निर्गच्छामि। दुःखेन गाहितव्यं हि एतत् योन्याख्यं स्थानं सङ्कटम्। तस्मात् तिरश्चीनात् पार्श्वात् अहं निर्गच्छानि। तिर्यक्शब्दात् 'अपादाने चाहीयरुहोः' (पा ५,४,४५) इति तसिः, ततो विभक्तेः डादेशः[3]। बहूनि मे जातस्य अकृतानि जन्मान्तरे अस्मिन् जन्मनि कर्तव्यानि कार्याणि। केनचिद्राक्षसवर्गेण युद्धं करवाणि। सम् पृच्छै च केनचित् ब्रह्मविद्यामिति ॥ २ ॥

परायतीं मातरमन्वचष्ट न नानु गान्यनु नू गमानि ।
त्वष्टुर्गृहे अपिबत् सोममिन्द्रः शतधन्यं चम्वोः सुतस्य ॥ ३ ॥

पराऽयतीम् । मातरम् । अनु । अचष्ट । न । न । अनु । गानि । अनु । नु । गमानि ।
त्वष्टुः । गृहे । अपिबत् । सोमम् । इन्द्रः । शतऽधन्यम् । चम्वोः । सुतस्य ॥ ३ ॥

**वेङ्कट०** ममानिर्गमेनन मातरम् परागच्छन्तीं म्रियमाणाम् इन्द्रः अनु ब्रवीति। ततोऽहम् न न अनु गच्छामि अपि तर्हि क्षिप्रमेव [4]अनु गमानि[4] अधोमार्गेण गच्छामि। यथा वामदेवो गर्भे

---

१-१. नास्ति मूको. २-२. °याच्छोदेशं वि[2] अ[1]; °शादेशः क मूको ३ सादे° ल; ग्लादे° वि[1] अ[1].
४-४. अनुगमनानि वि[1,2] लपं.

चिरं शिश्ये तथेन्द्रश्चाऽदित्या उदरे शिश्ये[1]। तत् समृद्धमुताऽसमृद्धमिति सन्दिहान आह—त्वष्टुः इति। [2]अर्धर्चयोः अनन्तरयोरेको[2] वाक्यार्थः। त्वष्टुः गृहे सोमम् अनेकधनक्रीतं तं प्रसह्य अपिबत् अधिषवणफलकयोः सुतम्। छन्दोऽनुविधानार्थो[3] विभक्तिव्यत्ययः। तच्चैतद् अस्य व्यृद्धं कर्म ॥ ३ ॥

किं स ऋधक् कृणवद् यं सहस्रं मासो जभार शरदश्च पूर्वीः।
नही न्वस्य प्रतिमानमस्त्यन्तर्जातेषूत ये जनित्वाः ॥ ४ ॥

किम्। सः। ऋधक्। कृणवत्। यम्। सहस्रम्। मासः। जभार। शरदः। च। पूर्वीः।
नहि। नु। अस्य। प्रतिऽमानम्। अस्ति। अन्तः। जातेषु। उत। ये। जनिऽत्वाः ॥ ४ ॥

**वेङ्कट०** अथ किम् सः इन्द्रः ऋद्धं कर्म कृतवान्, यम् एनम् अनेकान् मासान् बह्वीः च शरदः मातोदरे बभारेति। अथेन्द्रमाताऽदितिराह—नहि इति। नहि अस्ति इन्द्रस्य प्रतिमानम् सदृशम् जातेषु भूतेषु[4] अन्तः, अपि च ये जनिष्यमाणाः तेषु च। तत्कथमित्याह—अवद्यम् इति[5] ॥ ४ ॥

अवद्यमिव मन्यमाना गुहाकरिन्द्रं माता वीर्येणा न्यृष्टम्।
अथोदस्थात् स्वयमत्कं वसान आ रोदसी अपृणाज्जायमानः ॥ ५ ॥

अवद्यम्ऽइव। मन्यमाना। गुहा। अकः। इन्द्रम्। माता। वीर्येण। निऽऋष्टम्।
अथ। उत्। अस्थात्। स्वयम्। अत्कम्। वसानः। आ। रोदसी इति। अपृणात्। जायमानः ॥५॥

**वेङ्कट०** गर्ह्यम् इव इन्द्रम् मन्यमाना गुहायां कृतवती माता वीर्येण न्यृष्टम्। यथा ह्रद ऊर्मिभिर्न्यृष्टो भवत्येवमिन्द्रो वीर्येण न्यृष्टः। सोऽयं सर्वान् हिंस्यादिति गुहायां करणम्। अथ अयम् उत् अस्थात् स्वयम् एव तेजोरूपम् आच्छादयन् आ अपूरयच्च द्यावापृथिवी तेजसा जायमानः ॥ ५ ॥

[6]इति तृतीयाष्टके पञ्चमाध्याये पञ्चविंशो वर्गः[6] ॥

एता अर्षन्त्यललाभवन्तीर्ऋतावरीरिव संक्रोशमानाः।
एता वि पृच्छ किमिदं भनन्ति कमापो अद्रिं परिधिं रुजन्ति ॥ ६ ॥

एताः। अर्षन्ति। अललाऽभवन्तीः। ऋतवरीःऽइव। सम्ऽक्रोशमानाः।
एताः। वि। पृच्छ। किम्। इदम्। भनन्ति। कम्। आपः। अद्रिम्। परिऽधिम्। रुजन्ति ॥

**वेङ्कट०** एता आपः समुद्रं प्रति गच्छन्ति अललाशब्दं कुर्वत्यः धेनव इव[7] सह शब्दायमानाः। हे[8] वामदेव! त्वम् एताः वि पृच्छ। किमेतासु प्रष्टव्यमिति चेत्, किम् इदम्[9] आपः शब्दायन्ते[10]।

---

१. नास्ति ल. २-२ 'चर्योरेको वि'' लपं. ३. छन्दोविधा' वि'. ४. नास्ति ल. ५ नास्ति ल वि''. ६-६. नास्ति मूको. ७. नास्ति लपं. ८. नास्ति वि' ल. ९. इम् ल. १०. शब्द° वि'.

भनिः शब्दकर्मा । भयादिन्द्रस्य शब्दायन्त इत्यभिप्रायः । कम्[1] च मेघम् अपां निवारकम् आत्मनो निर्गमनार्थं भजन्तीति[2] । स चेन्द्रहतो वृत्र इति ॥ ६ ॥

किमु ष्विदस्मै निविदो भनन्तेन्द्रस्यावद्यं दिधिषन्त आपः ।
ममैतान् पुत्रो महता वधेन वृत्रं जघन्वाँ असृजद् वि सिन्धून् ॥ ७ ॥

किम् । ऊँ इति । स्वित् । अस्मै । निऽविदः । भनन्त । इन्द्रस्य । अवद्यम् । दिधिषन्ते । आपः ।
मम । एतान् । पुत्रः । महता । वधेन । वृत्रम् । जघन्वान् । असृजत् । वि । सिन्धून् ॥ ७ ॥

**वेङ्कट०** 'निवित्' (निघ १,११) इति वाङ्नाम । लौकिकानां वाचः किम् अवद्यम् इन्द्राय वदन्ति । यच्च अस्य अवद्यं वृत्रवधादि, तदपि धारयन्ति आपः । तथा च श्लोकः— 'पाप्मानमिन्द्रस्य मही जलं च वृक्षाश्च कामं जगृहुः स्त्रियश्च' इति । एतान् मम पुत्रः वृत्रम् महता[3] वज्रेण हत्वा वि असृजत् सिन्धून् इति ॥ ७ ॥

ममच्चन त्वा युवतिः परास ममच्चन त्वा कुषवा जगार ।
ममच्चिदापः शिशवे ममृड्युर्ममच्चिदिन्द्रः सहसोदतिष्ठत् ॥ ८ ॥

ममत् । चन । त्वा । युवतिः । पराऽआस । ममत् । चन । त्वा । कुषवा । जगार ।
ममत् । चित् । आपः । शिशवे । ममृड्युः । ममत् । चित् । इन्द्रः । सहसा । उत् । अतिष्ठत् ॥

**वेङ्कट०** अथ सूक्तशेषेण वामदेव इन्द्रं स्तौति । माद्यन्ती[4] एव[1] त्वाम् युवतिः अदितिः स्वोदरात् परास्तवती[5] । तथा 'गर्भात् परास्तं त्वाम्† माद्यन्ती एव कुषवा†, कुषतिर्निष्कर्षकर्मा, निष्कृष्टोदरी‡ जगार । तथा माद्यन्त्य एव आपः च जाताय शिशवे स्नापनवेलायां सुखमुत्पादयाञ्चक्रुः । अथ परोक्षः । माद्यन्[6] एव इन्द्रः तदानीमेव बलेन उत् अतिष्ठत् इति ॥ ८ ॥

ममच्चन ते मघवन् व्यंसो निविविध्वाँ अप हनू जघान ।
अधा निविद्ध उत्तरो बभूवाञ्छिरो दासस्य सं पिणग्वधेन । ९ ॥

ममत् । चन । ते । मघऽवन् । विऽअंसः । निऽविविध्वान् । अप । हनू इति । जघान ।
अध । निऽविद्धः । उत्ऽतरः । बभूवान् । शिरः । दासस्य । सम् । पिणक् । वधेन ॥ ९ ॥

**वेङ्कट०** माद्यन् एव तव हे इन्द्र! व्यंसासुरः नितरां विध्यन् हनू अप जघान । अथ व्यंसेन न्यक् [7]विद्धः सन्[7] स्वबलेन व्यंसस्य उत्तरः भवन् तस्यासुरस्य शिरः त्वं वज्रेण [8]सम् पिणक्[8] चूर्णीकृतवानिति ॥ ९ ॥

---

१. किं वि[2] अ[1]. २. भजन्ती[°] मूको. ३. नास्ति मूको. ४. मादयन्ती वि[2] ल लपं. ५. परात् प[°] वि[1] लपं. ६-६. नास्ति लपं. † नास्ति मूको. ‡ निकृ[°] वि[1]. ७-७. नास्ति वि[2] अ[1]. ८-८. स विणक् वि[2]; स भिनत् अ[1].

गृष्टिः ससूव स्थविरं तवागामनाधृष्यं वृषभं तुम्रमिन्द्रम् ।
अरीळ्हं वत्सं चरथाय माता स्वयं गातुं तन्व इच्छमानम् ॥ १० ॥

गृष्टिः । ससूव । स्थविरम् । तवागाम् । अनाधृष्यम् । वृषभम् । तुम्रम् । इन्द्रम् ।
अरीळ्हम् । वत्सम् । चरथाय । माता । स्वयम् । गातुम् । तन्वे । इच्छमानम् ॥ १० ॥

**वेङ्कट०** 'यज्ञो दक्षिणामभ्यध्यायत् तां समभवत् तदिन्द्रोऽचायत्[1] सोऽमन्यत यो वा इतो जनिष्यते स इदं भविष्यतीति [2]तां प्राविशत् तस्या इन्द्र एवाजायत सोऽमन्यत यो वै मदितोऽपरो जनिष्यते स इदं भविष्यतीति[2] तस्या अनुमृश्य[3] योनिमाच्छिनत् सा सूतवशाऽभवत्[4]' ( तै ६,१,३,६ ) इति ब्राह्मणम् । सकृत्प्रसूता गौर्गृष्टिरित्युच्यते । सा सूतवती पुरातनम् वृद्धानामभिगन्तारम् अनाधृष्यम्[5] वृषभम् शत्रूणां प्रेरकम् इन्द्रम् । सोऽयं जातस्तदानीमेव गतः[6] तस्मात् मातुः जिह्वयाऽलीढः वत्स उच्यते, स्वैरमयं सञ्चरत्विति, स्वयम् एव परानपेक्षम् आत्मनः शरीराय गमनम् इच्छमानम् ॥ १० ॥

उत माता महिषमन्ववेनदमी त्वा जहति पुत्र देवाः ।
अथाब्रवीद् वृत्रमिन्द्रो हनिष्यन्त्सखे विष्णो वितरं वि क्रमस्व ॥ ११ ॥

उत । माता । महिषम् । अनु । अवेनत् । अमी इति । त्वा । जहति । पुत्र । देवाः ।
अथ । अब्रवीत् । वृत्रम् । इन्द्रः । हनिष्यन् । सखे । विष्णो इति । विऽतरम् । वि । क्रमस्व ॥

**वेङ्कट०** अपि च माता महान्तं पुत्रमभिलषितम् अनु अकामयत, अमी देवाः हे पुत्र! वृत्रेण[7] पीड्यमानाः त्वाम् परित्यजन्ति पतिमनिच्छन्तः, तस्माद् वृत्रं जहीति । अथ अब्रवीत् इन्द्रः वृत्रम् हनिष्यन् हे सखे विष्णो! अत्यन्तम् वि क्रमस्व, अहं वृत्रं हनिष्यामि मम[8] सहायो भवेति ॥ ११ ॥

कस्ते मातरं विधवामचक्रच्छयुं कस्त्वामजिघांसच्चरन्तम् ।
कस्ते देवो अधि मार्डीक आसीद् यत् प्राक्षिणाः पितरं पादगृह्य ॥ १२ ॥

कः । ते । मातरम् । विधवाम् । अचक्रत् । शयुम् । कः । त्वाम् । अजिघांसत् । चरन्तम् ।
कः । ते । देवः । अधि । मार्डीके । आसीत् । यत् । प्र । अक्षिणाः । पितरम् । पादऽगृह्य ॥

**वेङ्कट०** जातः सन्निन्द्रो दक्षिणाया गोर्योनिमनुमृश्याच्छिनत् । यज्ञं च पितरम् क्रोधात् पादेषु गृहीत्वा परिभ्रमय्य देशान्तरे प्राहिणोत्[9] । तत्रेदमाह– कस्ते इति । हे इन्द्र! कः त्वाम् ऋते

---

१. °न्द्रोऽयाचत् ल. २-२. नास्ति अ[1] लपं. ३. इन्द्रोनु° वि[1] ल लपं. ४-४. सासूत । वशा° ल. ५. °ष्यम् सः मूको. ६. नास्ति वि[1] अ[1]. ७. वृषेण वृ° अ[1]. ८. नास्ति वि[1],[2] अ[1] लपं. ९. प्राक्षिणोत् वि[1] ल लपं.

स्वमातरम् विधवाम् करोति। यश्च भवतो ऽमोऽयं यो वा इतो जनिष्यते स मां शयानं चरन्तम् वा हनिष्यति सर्वस्य च स्वामी भविष्यतीति। तत्राह शयुम् इति। एवंविधबलम् कः त्वाम् हन्तुमिच्छति। कः वा देवः अन्यः[1] [2]सुखयितृवर्गे अधि भवति[2], जगत्सुखयतीत्यर्थः॥१२॥

अर्वत्या शुनं आन्त्राणि पेचे न देवेषु विविदे मर्डितारम् ।
अपश्यं जायाममहीयमानामधा मे श्येनो मध्वा जभार ॥ १३ ॥

अर्वत्या । शुनः । आन्त्राणि । पेचे । न । देवेषु । विविदे । मर्डितारम् ।
अपश्यम् । जायाम् । अमहीयमानाम् । अध । मे । श्येनः । मधु । आ । जभार ॥ १३ ॥

वेङ्कट० अहं वृत्त्यभावात् शुनः आन्त्राणि पेचे भक्षणार्थम् । न च देवेषु लब्धवानस्मि सुखयितारम् । दृष्टवांश्चास्मि जायाम् अन्नाभावाद् अपूज्यमानाम् । अथेन्द्रचोदितः कश्चित् श्येनः मह्यम् मधु आ जभार ॥ १३ ॥

[3]इति तृतीयाष्टके पञ्चमाध्याये षड्विंशो वर्गः[3] ॥

व्याख्यत् पञ्चममध्यायं तृतीयस्याष्टकस्य सः ।
यज्ञनारायणकुले यस्य मातुः समुद्भवः ॥

[4]इति वेङ्कटमाधवाचार्यविरचिते ऋक्संहिताव्याख्याने तृतीयाष्टके पञ्चमोऽध्यायः[4] ॥

— ❀ —

इति ऋग्वेदे सभाष्ये तृतीयाष्टके पञ्चमोऽध्यायः ॥



१. °न्य सु° लपं. २-२. °वर्गो भवति वि[१] लपं; °र्गे अभिभवति ल. ३-३. नास्ति मूको.
४-४. नास्ति वि[१] लपं; इति वेङ्कटमाधवाचार्यस्य कृतौ ऋग्वेदभाष्ये तृतीयेऽष्टके पञ्चमोऽध्यायः समाप्तः अ[१].

## अथ तृतीयाऽष्टके षष्ठोऽध्यायः[1]

वेङ्कट०

अथै(थ 'ए)त्रा त्वामिन्द्र वज्रिन्' व्याचिख्यासति माधवः ।
निपातेष्वेव वक्तव्यं प्रागनुक्तं प्रदर्शयन् ॥ १ ॥

अथाऽधेति समानार्थौ तौ पठन्ति च बहूचाः ।
अवधानेन महता [2]ज्ञायेते† तौ यथा पृथक्[2] ॥ २ ॥

न गुरुत्वं लघुत्वं वा वर्णैर्मात्राभिरेव च ।
भवतः[3] छन्दसां किन्तु प्रयत्नैश्च पृथग्विधैः ॥ ३ ॥

यथा सर्षपमेयेषु[4] करोति गुरुलाघवम् ।
त्रसरेणुस्तथा वेदे प्रयत्नो वर्णगोचरः ॥ ४ ॥

एवं ह-घौ च पर्यायौ प्रसिद्धेः प्रतिपादकौ ।
पृथक्-पृथक् प्रयुज्येते बहूचैरवधानतः[5] ॥ ५ ॥

'परा ह यत् स्थिरं हथ'[6], 'यद्ध स्या ते पनीयसी'[7] ।
'आ घा गमद्यदि श्रवत्'[8], 'आ घा ये अग्निमिन्धते'[9] ॥ ६ ॥

'इयत्तिका शकुन्तिका'[10], 'सूर्यै विषमा संजामि'[11] ।
अनयोरुत्तरेऽर्धर्चे द्वैविध्यं दृश्यते पदे ॥ ७ ॥

अधीयते हि द्विविधं सो इत्यपि स[12] इत्यपि ।
न तत्र वासनामेके वक्तव्यां मन्वते जनाः ॥ ८ ॥

यथा(था 'अ)नु श्रुतामुमतिम्'[13], 'अर्कविहस्ता सुकृते'[14] ।
'वरुणेळास्वन्तः'[15] इति पदद्वैविध्यदर्शनम्[16] ॥ ९ ॥

न[11] तत्र दोषः पूर्वस्यां पृथङ् मित्रश्च कीर्त्यते ।
वरुणेति द्वितीयस्याम् एकेनोक्तावुभावपि ॥ १० ॥

---

१. षष्ठोऽध्यायः । श्रीरस्तु ऋग्वेदभाष्ये वेङ्कटमाधवाचार्यकृतौ तृतीयाष्टके षष्ठोऽध्यायः । आदौ संग्रहार्थकारिका अ[1]. २-२. ता यथा रतः पृथक् पृथक् वेंकश. † नास्ति वि[2] अ[1]. ३. नास्ति वि[1]. ४. °थात्सरिममे° वि[1]; °थामत्सरिमे° अ[1]; °था सरिममे° वि[1] लपं. ५. °रभिधा ल वि[1]. ६. ऋ १,३९,३. ७. ऋ ५,३,४. ८. ऋ १,३०,८. ९. ऋ ८,४०,१. १०. ऋ १,१९१,११. ११. ऋ १,१९१,१०. १२. नास्ति लपं. १३. ऋ ५,६२,७. १४. ऋ ५,६२,६. १५. °ने ल त्रि[1]. १६. नास्ति वि[1] लपं.

तस्मादत्रापि वक्तव्यं द्वैविध्यस्य प्रयोजनम् ।
तदुच्यते 'सा नो अमा'[1], 'सो चिन्नु भद्रा क्षुमती'[2] ॥ ११ ॥

"[3]सो चिन्नु वृष्टिर्यूथ्या'† च[3] त्रिषूकारः प्रदृश्यते ।
स्पष्टीकरोति स स्त्रीत्वमुरित्याहुर्विपश्चितः[4] ॥ १२ ॥

ननु नाम्नामनेकस्मिन् वृत्तिरर्थेऽपि युज्यते ।
तानि ह्याख्यातजान्याहुर्यथा गौर्गमनादिति ॥ १३ ॥

गमनात् पृथिवी गौः स्यादादित्यः पशुरेव च ।
[5]वाग् वा सा[5] गच्छति जलं निम्नं प्रत्येति सर्वदा ॥ १४ ॥

निपाता उपसर्गाश्च दृश्यन्ते केन[6] हेतुना ।
बहुष्वर्थेषु येष्वेते दृश्यन्त उपमादिषु ॥ १५ ॥

बहुष्वर्थेषु धातूनां वृत्तौ यत् कारणं भवेत् ।
तदेवात्रापि भवति सा च शक्तिरिति स्थितिः ॥ १६ ॥

## [ १९ ]

[7]वामदेवो गौतम ऋषिः । इन्द्रो देवता । त्रिष्टुप् छन्दः[7] ।

एवा त्वामिन्द्र वज्रिन्नत्र विश्वे देवासः सुहवास ऊमाः ।
महामुभे रोदसी वृद्धमृष्वं निरेकमिद् वृणते वृत्रहत्ये ॥१ ॥

एव । त्वाम् । इन्द्र । वज्रिन् । अत्र । विश्वे । देवासः । सुऽहवासः । ऊमाः ।
महाम् । उभे इति । रोदसी इति । वृद्धम । ऋष्वम् । निः । एकम् । इत् । वृणते । वृत्रऽहत्ये ॥१॥

वेङ्कट० वामदेवः । एवम् त्वाम् हे इन्द्र वज्रवन्! अस्मिन् वृत्रहनने सर्वे देवाः शोभनाह्वानाः[8] अवितारः उभे च[9] द्यावापृथिव्यौ महान्तम् वृद्धम् दर्शनीयम् एकम् एव आभिमुख्येन प्रार्थयन्ते ॥ १ ॥

अवासृजन्त जिव्रयो न देवा भुवः सम्राळिन्द्र सत्ययोनिः ।
अहन्नहिं परिशयानमर्णः प्र वर्तनीररदो विश्वधेनाः ॥ २ ॥

अव । असृजन्त । जिव्रयः । न । देवाः । भुवः । सम्ऽराट् । इन्द्र । सत्यऽयोनिः ।
अहन् । अहिम् । परिऽशयानम् । अर्णः । प्र । वर्तनीः । अरदः । विश्वऽधेनाः ॥ २ ॥

---

१. ऋ १०,६३,१६. २. ऋ १०,११,३. ३-३. नास्ति वि[२] अ[१]. † ऋ १०,२३,४. ४. °त्वमूडित्वा° ल वि[१]. ५-५. गौश्च स्याद् ल वि[१] लपं; वागा स्यात् वि[२] अ[१]. ६. नैव वि[१] लपं; तेन वि[२] अ[१] ल. ७-७. नास्ति मूको. ८. शोभनाः वि[१] लपं. ९. नास्ति वि[१] ल लपं.

वेङ्कट० यथा जीर्णाः पुत्रान् कार्येष्ववसृजन्ति[1] एवं त्वां देवाः वृत्रहत्ये अव सृष्टवन्तः। त्वं च वृत्रवधार्थं गच्छतां तेषां सम्राट् [2]इन्द्र! अभवः[2] कल्याणवासस्थानः। हतवानसि[3] अहिम्[4] उदकं परिवृत्य शयानम्। अथ मार्गान् विश्वस्य प्रीणयितॄन् प्राचीनान् व्यलिखः यैर्मार्गैर्नद्यो गच्छन्ति ॥ २ ॥

अतृ॑प्णुवन्तं॒ विय॑तमबु॒ध्यमबु॑ध्यमानं सुषुपा॒णमि॑न्द्र ।
स॒प्त प्रति॑ प्र॒वत॑ आ॒शया॑न॒महि॒ वज्रे॑ण॒ वि रि॑णा अप॒र्वन् ॥ ३ ॥

अतृ॑प्णुवन्तम् । विऽय॑तम् । अ॒बु॒ध्यम् । अबु॑ध्यमानम् । सु॒सु॒पा॒नम् । इ॒न्द्र॒ ।
स॒प्त । प्रति॑ । प्र॒ऽवत॑: । आ॒ऽशया॑नम् । अहि॑म् । वज्रे॑ण । वि । रि॒णाः॒ । अ॒प॒र्वन् ॥ ३ ॥

वेङ्कट० निन्द्रायाम् अनुपरतश्रद्धं विबद्धं पृथिव्यां विस्रस्तं गतबुद्धिम् अत एव अबुध्यमानम् स्वपन्तम्[5] इन्द्र! सप्त प्रवणयुक्ता नदीः आवृत्य शयानम् अहिम् [6]वज्रेण वि हिंसितवानसि[6] अकाण्डे निद्रामध्ये ॥ ३ ॥

अक्षो॑दय॒च्छव॑सा॒ क्षाम॑ बु॒ध्नं वार्ण वात॒स्तवि॑षीभि॒रिन्द्र॑: ।
दृ॒ळ्हान्यौ॑भ्नादु॒शमा॑न॒ ओजोऽवा॑भिनत् क॒कुभ॒: पर्व॑तानाम् ॥ ४ ॥

अक्षो॑दयत् । शव॑सा । क्षाम॑ । बु॒ध्नम् । वाः । न । वात॑: । तवि॑षीभिः । इन्द्र॑: ।
दृ॒ळ्हानि॑ । औ॒भ्ना॒त् । उ॒शमा॑नः । ओज॑: । अव॑ । अ॒भि॒न॒त् । क॒कुभ॑: । पर्व॑तानाम् ॥ ४ ॥

वेङ्कट० उदकमूलं मेघम् इन्द्रः अक्षोदयत् यथा[7] क्षीणोदको भवति बलेन। तत्रोपमानम्—उदकम् इव वायुः बलैरिति। बलं कामयमानः तत्प्रकाशनार्थं मेघस्य दृढानि स्थानानि हिंसितवानिति। एतदेवाह—अभिनदिति। मेघानाम् उदकनिःसरणदिशः[8] अधस्तात् अभिनत् इति ॥ ४ ॥

अ॒भि प्र द॑द्रु॒र्जन॑यो॒ न गर्भं॒ रथा॑ इव॒ प्र य॑युः सा॒कमद्र॑यः ।
अत॑र्पयो वि॒सृत॑ उ॒ब्ज ऊ॒र्मीन् त्वं वृ॒ताँ अ॑रिणा इन्द्र॒ सिन्धू॑न् ॥ ५ ॥

अ॒भि । प्र । द॒द्रुः॒ । जन॑यः । न । गर्भ॑म् । रथा॑:ऽइव । प्र । य॒युः॒ । सा॒कम् । अद्र॑यः ।
अत॑र्पयः । वि॒ऽसृत॑: । उ॒ब्जः । ऊ॒र्मीन् । त्वम् । वृ॒तान् । अ॒रि॒णाः॒ । इ॒न्द्र॒ । सिन्धू॑न् ॥ ५ ॥

वेङ्कट० अभि प्र दारितवन्तः प्रकाशितवन्तो मेघा उदकं जायाः इव गर्भम्, रथाः इव च प्र यान्ति साकम् मेघाः। इन्द्र! त्वम् विविधं गच्छतो मनुष्यादीन् अप्रीणयः, हतवानसि उदकोर्मीन्[9], ततश्च अहिना[10] परिवृतान् सप्त सिन्धून् अगमयः[11] ॥ ५ ॥

[12]इति तृतीयाष्टके षष्ठाध्याये प्रथमो वर्गः[12] ॥

---

१. °ष्वेव सृ° वि[2] अ[1]. २-२. इन्द्रो भवः वि[2] अ[1]. ३. गत° वि[1] लपं. ४. अहिमा अ[1]. ५. स्वतन्त्रम् वि[2] अ[1]. ६-६. वज्रेणहिं° वि[1]. ७. यदा वि[2]. ८. °कं निः° अ[1]. ९. °कोर्मि° वि[1] अ[1]. १०. महिना मूको. ११. आग° अ[1]. १२-१२. नास्ति मूको.

त्वं महीमवनिं विश्वधेनां तुर्वीतये वय्याय क्षरन्तीम् ।
अरमयो नमसैजदर्णः सुतरणाँ अकृणोरिन्द्र सिन्धून् ॥ ६ ॥

त्वम् । महीम् । अवनिम् । विश्वऽधेनाम् । तुर्वीतये । वय्याय । क्षरन्तीम् ।
अरमयः । नमसा । एजत् । अर्णः । सुऽतरणान् । अकृणोः । इन्द्र । सिन्धून् ॥ ६ ॥

**वेङ्कट०** त्वम् महतीं पृथिवीं[1] विश्वस्य प्रीणयित्रीम् तुर्वीतये वय्याय च क्षरन्तीम् हविषा रसेन उदकम् एजत् अरमयः इति द्विकर्मकः उदकौघं स्वल्पंस्वल्पं[2] कृत्वा तत्र पृथिवीं स्थापितवानसि । तदानीमुदकेनोपेतान् सिन्धून् च[2] हे इन्द्र! सुतरणान् कृतवानसीति ॥ ६ ॥

प्राग्रुवो नभन्वो३ न वक्वा ध्वस्रा अपिन्वद् युवतीर्ऋतज्ञाः ।
धन्वान्यज्राँ अपृणक् तृषाणाँ अधोगिन्द्रः स्तर्यो३ दंसुपत्नीः ॥ ७ ॥

प्र । अग्रुवः । नभन्वः । न । वक्वाः । ध्वस्राः । अपिन्वत् । युवतीः । ऋतऽज्ञाः ।
धन्वानि । अज्रान् । अपृणक् । तृषाणान् । अधोक् । इन्द्रः । स्तर्यः । दम्ऽसुपत्नीः ॥ ७ ॥

**वेङ्कट०** प्र अपिन्वत् नदीः, नभतिर्हिंसाकर्मा, सेनाः इव शब्दकारिणीः ध्वंसनशीलाः युवतीः सत्यज्ञाः । ततश्चायं निरुदकान् देशान् ये प्राप्नुवन्ति, तान् तृष्णार्तान् उदकेन प्रीणयति । मेघान् दुग्धवान् इन्द्रः गमनशीलाः अपः दंसुपत्नीः दमनपरा असुरा यासां शोभनाः पतयः ॥ ७ ॥

पूर्वीरुषसः शरदश्च गूर्ता वृत्रं जघन्वाँ असृजद् वि सिन्धून् ।
परिष्ठिता अतृणद् बद्बधानाः सीरा इन्द्रः स्रवितवे पृथिव्या ॥ ८ ॥

पूर्वीः । उषसः । शरदः । च । गूर्ताः । वृत्रम् । जघन्वान् । असृजत् । वि । सिन्धून् ।
परिऽस्थिताः । अतृणत् । बद्बधानाः । सीराः । इन्द्रः । स्रवितवे । पृथिव्या ॥ ८ ॥

**वेङ्कट०** अहर्मुखस्थोषसः शरदः च वृत्रेण[3] गूर्ताः भक्षिताः वृत्रम् जघन्वान् इन्द्रः [4]वि असृजत्[4], तथा सिन्धून् च । तथा परितः स्थिताः सर्वं देशं व्याप्य वर्तमानाः मनुष्यान् बाधमानाः नदीः वज्रेण समुद्रं प्रति स्रवितुम् अतृणत् पृथिव्याः । तया[5] हि सरन्त्यापः ॥ ८ ॥

वम्रीभिः पुत्रमग्रुवो अदानं निवेशनाद्धरिव आ जभर्थ ।
व्य१न्धो अख्यदहिमाददानो निर्भूदुखच्छित् समरन्त पर्व ॥ ९ ॥

वम्रीभिः । पुत्रम् । अग्रुवः । अदानम् । निऽवेशनात् । हरिऽवः । आ । जभर्थ ।
वि । अन्धः । अख्यत् । अहिम् । आऽददानः । निः । भूत् । उखऽछित् । सम् । अरन्त । पर्व ॥

---

१. नास्ति ल.　२. नास्ति वि' अ कपं.　३. वृत्रे ल.　४-४. अप्ययः वि' अ' लपं.　५. तथा ल.

वेङ्कट० अग्रुनाम्नः कस्यचित् पुत्रम् उपदीकाभिः[1] अद्यमानम् हे हरिवः! तस्माद् वल्मीकनिवेशनात् आ हृतवानसि। भवत्प्रसादाद्धस्तेन सर्पम् प्रमादात् [2]आददानः अग्रुवः[2] पुत्रः अन्धः सम् लब्धचक्षुस्तं सर्पम् वि अख्यत्। तथा स ऋषिः वल्मीकोत्थायाऽछेत्ता तस्मात् स्थानात् निः भूत् पृथग् भूतः। तस्य विश्लिष्टानि शरीरपर्वाणि च इन्द्रप्रसादात् सङ्गतान्यासन् ॥ ९ ॥

प्र ते॒ पूर्वा॑णि॒ कर॑णानि विप्रावि॒द्वाँ आ॑ह वि॒दुषे॒ करां॑सि।
यथा॑यथा॒ वृष्ण्या॑नि॒ स्वगू॒र्ताऽपां॑सि राज॒न् नर्याविवे॑षीः ॥ १० ॥

प्र। ते॒। पूर्वा॑णि। कर॑णानि। वि॒प्र॒। आऽवि॒द्वान्। आ॒ह॒। वि॒दुषे॑। करां॑सि।
यथा॑ऽयथा। वृष्ण्या॑नि। स्वऽगू॑र्ता। अपां॑सि। रा॒ज॒न्। नर्या॑। अवि॑वेषीः ॥ १० ॥

वेङ्कट० हे मेधाविन्निन्द्र! तव पुरातनानि क्रियमाणानि च कर्माणि आजानन् अयमृषिः विदुषे जनाय प्र ब्रवीति। यथायथा[3] त्वं वर्षणनिमित्तानि स्वभूतोद्यमनानि कर्माणि राजन्! नृहितानि प्राप्तवानसि ॥ १० ॥

नू ष्टु॒त इ॑न्द्र॒ नू गृ॑णा॒न इषं॑ जरि॒त्रे न॒द्यो॒३॒॑ न पी॑पेः।
अका॑रि ते हरिवो॒ ब्रह्म॒ नव्यं॑ धि॒या स्या॑म र॒थ्यः॑ सदा॒साः ॥ ११ ॥

नु। स्तु॒तः। इ॒न्द्र॒। नु। गृ॒णा॒नः। इष॑म्। ज॒रि॒त्रे। न॒द्यः॑। न। पीपे॒रिति॑ पीपेः।
अका॑रि। ते॒। ह॒रि॒ऽवः॒। ब्रह्म॑। नव्य॑म्। धि॒या। स्या॒म॒। र॒थ्यः॑। स॒दा॒ऽसाः ॥ ११ ॥

वेङ्कट० ऋ ४, १६, २१ द्र. ॥ ११ ॥

[4]इति तृतीयाष्टके षष्ठाध्याये द्वितीयो वर्गः[4] ॥

## [ २० ]

[6]वामदेवो गौतम ऋषिः। इन्द्रो देवता। त्रिष्टुप् छन्दः[6]।

आ न॒ इन्द्रो॑ दू॒रादा न॑ आ॒साद॑भिष्टि॒कृदव॑से यासदु॒ग्रः।
ओजि॑ष्ठेभिर्नृ॒पति॒र्वज्र॑बाहुः सं॒गे स॒मत्सु॑ तु॒र्वणिः॑ पृत॒न्यून् ॥ १ ॥

आ। नः॒। इन्द्रः॑। दू॒रात्। आ। नः॒। आ॒सात्। अ॒भि॒ष्टि॒ऽकृत्। अव॑से। या॒स॒त्। उ॒ग्रः।
ओजि॑ष्ठेभिः। नृ॒ऽपतिः॑। वज्र॑ऽबाहुः। स॒म्ऽगे। स॒मत्ऽसु॑। तु॒र्वणिः॑। पृ॒त॒न्यून् ॥ १ ॥

वेङ्कट० आ गच्छतु अस्मान् पृतनामिच्छतः इन्द्रः दूरात् तत्रस्थश्चेत्, अथान्तिकस्थश्चेत् ततः आ यातु अभिलषितानां[5] कर्ता रक्षणाय [6]उद्गूर्णः बलवत्तमैरश्वैः नृणां पालयिता वज्रबाहुः सङ्ग्रामेषु शत्रुभिः संगे सति तरणशीलः[6] ॥ १ ॥

---

१. अपदी° वि[1] लपं. २-२. 'दधानो° अ[1]. ३. यथा वि[1]; नास्ति लपं. ४-४. नास्ति मूको. ५. अमित्रर्षितानाम् लपं. ६-६. नास्ति वि[1] अ[1].

आ न इन्द्रो हरिभिर्यात्वच्छार्वाचीनोऽवसे राधसे च ।
तिष्ठाति वज्री मघवा विरप्शीमं यज्ञमनु नो वाजसातौ ॥ २ ॥

आ । नः । इन्द्रः । हरिऽभिः । यातु । अच्छ । अर्वाचीनः । अवसे । राधसे । च ।
तिष्ठाति । वज्री । मघऽवा । विऽरप्शी । इमम् । यज्ञम् । अनु । नः । वाजऽसातौ ॥ २ ॥

**वेङ्कट०** [1]आ यातु अस्मान् प्रति इन्द्रः अश्वैः इतोमुखः रक्षणाय[1] धनाय च । तिष्ठतु वज्री धनवान् महान् इमम् यज्ञम् अनु यज्ञस्य पश्चात् अस्मदर्थम् सङ्ग्रामे ॥ २ ॥

इमं यज्ञं त्वमस्माकमिन्द्र पुरो दधत् सनिष्यसि क्रतुं नः ।
श्वघ्नीव वज्रिन्त्सनये धनानां त्वया वयमर्य आजिं जयेम ॥ ३ ॥

इमम् । यज्ञम् । त्वम् । अस्माकम् । इन्द्र । पुरः । दधत् । सनिष्यसि । क्रतुम् । नः ।
श्वघ्नीऽइव । वज्रिन् । सनये । धनानाम् । त्वया । वयम् । अर्यः । आजिम् । जयेम ॥ ३ ॥

**वेङ्कट०** इन्द्र ! अस्मदीयम् इमम्[2] यज्ञम् त्वम् पुरस्तात् धारयन् अथास्माकं युद्धं सम्भजसि । यथा लुब्धकस्त्री पक्षिणो जयति एवम् वज्रिन् ! धनानाम् लाभाय त्वया वयम् अरेः[3] सङ्ग्रामम् जयेम ॥ ३ ॥

उशन्नु षु णः सुमना उपाके सोमस्य नु सुषुतस्य स्वधावः ।
पा इन्द्र प्रतिभृतस्य मध्वः समन्धसा ममदः पृष्ठ्येन ॥ ४ ॥

उशन् । ऊँ इति । सु । नः । सुऽमनाः । उपाके । सोमस्य । नु । सुऽसुतस्य । स्वधाऽवः ।
पाः । इन्द्र । प्रतिऽभृतस्य । मध्वः । सम् । अन्धसा । ममदः । पृष्ठ्येन ॥ ४ ॥

**वेङ्कट०** अस्माकम् अन्तिके सुष्ठु सुतं सोमम् हे बलवन् इन्द्र ! कामयमानः सुमनाः[2] त्वम् आहवनीयं [4]'प्रति हृतं'[4] सोममयं मधु सुष्ठु पिब, पीत्वा च पृष्ठस्य बलकरेण अन्धसा तेन सम्यक् मत्तो भव ॥ ४ ॥

वि यो ररप्श ऋषिभिर्नवेभिर्वृक्षो न पक्वः सृण्यो न जेता ।
मर्यो न योषामभि मन्यमानोऽच्छा विवक्मि पुरुहूतमिन्द्रम् ॥ ५ ॥

वि । यः । ररप्शे । ऋषिऽभिः । नवेभिः । वृक्षः । न । पक्वः । सृण्यः । न । जेता ।
मर्यः । न । योषाम् । अभि । मन्यमानः । अच्छ । विवक्मि । पुरुऽहूतम् । इन्द्रम् ॥ ५ ॥

**वेङ्कट०** यः इन्द्रः नवैः ऋषिभिः स्तूयते पक्वफलः वृक्षः इव भवन्, सृण्यः कुञ्जरः अङ्कुशेन

---

१-१. त्रुटितम् वि[२] अ[१]. २. नास्ति मूको. ३. अरे वि[२] अपं. ४-४. प्रतिहृतम् अ.

साध्यते स इव जेता, तम् पुरुहूतम् इन्द्रम् प्रति अहमपि विविधं वदामि, यथा मनुष्यः स्त्रियम् अभिगन्तुकामः[1] तामभिवदति ॥ ५ ॥

[2]इति तृतीयाष्टके षष्ठाध्याये तृतीयो वर्गः[2] ॥

गिरिर्न यः स्वतवाँ ऋष्व इन्द्रः सनादेव सहसे जात उग्रः ।
आदर्ता वज्रं स्थविरं न भीम उद्नेव कोशं वसुना न्यृष्टम् ॥ ६ ॥

गिरिः । न । यः । स्वऽतवान् । ऋष्वः । इन्द्रः । सनात् । एव । सहसे । जातः । उग्रः ।
आऽदर्ता । वज्रम् । स्थविरम् । न । भीमः । उद्नाऽइव । कोशम् । वसुना । निऽऋष्टम् ॥ ६ ॥

वेङ्कट० स्वायत्तबलः यः इन्द्रः[3] गिरिः इव महान् चिरात् एव आरभ्य शत्रुषु बलकरणाय जातः उद्गूर्णः, सः आदर्ता[4] वज्रम्[5], उदकेनेव मेघम् धनेन न्यृष्टम् परिवृतम् यथा स्थविरम् पर्वतादिकं भयङ्करो बलवान् मृगः ॥ ६ ॥

न यस्य वर्ता जनुषा न्वस्ति न राधस आमरीता मघस्य ।
उद्वावृषाणस्तविषीव उग्रास्मभ्यं दद्धि पुरुहूत रायः ॥ ७ ॥

न । यस्य । वर्ता । जनुषा । नु । अस्ति । न । राधसः । आऽमरीता । मघस्य ।
उत्ऽववृषाणः । तविषीऽवः । उग्र । अस्मभ्यम् । दद्धि । पुरुऽहूत । रायः ॥ ७ ॥

वेङ्कट० यस्य मंहनीयस्य[6] धनस्य जन्मना[7] अभिगन्ता न विद्यते आभिमुख्येन नाशयिता वा । स्तोतृभ्यो धनान्युत्सिञ्चन्[8] हे बलवन् उद्गूर्ण पुरुहूत! तद्[9] धनम् अस्मभ्यम् देहि ॥ ७ ॥

ईक्षे रायः क्षयस्य चर्षणीनामुत व्रजमपवर्तासि गोनाम् ।
शिक्षानरः समिथेषु प्रहावान् वस्वो राशिमभिनेतासि भूरिम् ॥ ८ ॥

ईक्षे । रायः । क्षयस्य । चर्षणीनाम् । उत । व्रजम् । अपऽवर्ता । असि । गोनाम् ।
शिक्षाऽनरः । समऽइथेषु । प्रहाऽवान् । वस्वः । राशिम् । अभिऽनेता । असि । भूरिम् ॥८॥

वेङ्कट० मनुष्याणां धनगृहयोः त्वम् ईशिषे, अपि च स्तोतृभ्यः प्रदानार्थम् अपावृणोषि गवाम् व्रजम् । शिक्षाया नेता सङ्ग्रामेषु उत्क्षेपणवान्[10] धनस्य महान्तम् राशिम् आभिमुख्येन प्रापयिता असि ॥ ८ ॥

---

१. अभिकामः वि[1] अ[1]. २-२. नास्ति मूको. ३. नास्ति वि[1] लपं. ४. आदत्ता मूको. ५. वज्रमायुधम् वि[2] अ[1]. ६. महनी[1] अ[1]. ७. जन्म मूको. ८. °न्युत्सृजन् अ[1]; °न्सुत्रयुन् वि[2]. ९. नास्ति वि[2]. १० क्षेपण° लपं; उषन् क्षेर° वि[1] अ[1].

कया तच्छृण्वे शच्या शचिष्ठो यया कृणोति मुहु का चिदृष्वः ।
पुरु दाशुषे विचयिष्ठो अंहोऽथा दधाति द्रविणं जरित्रे ॥ ९ ॥

कया । तत् । शृण्वे । शच्या । शचिष्ठः । यया । कृणोति । मुहु । का । चित् । ऋष्वः ।
पुरु । दाशुषे । विऽचयिष्ठः । अंहः । अथ । दधाति । द्रविणम् । जरित्रे ॥ ९ ॥

**वेङ्कट०** कया प्रज्ञया तत् निवेद्यमानं कार्यजातं शृणोति अतिशयेन प्राज्ञः[1]। यया प्रज्ञया स्तोत्रे मुहुर्मुहुः कानिचित् करोति महान् इन्द्रः । सोऽयं महदपि पापम् विचयिष्ठः अतिशयेन अपनेता दाशुषे, अनन्तरं प्रयच्छति धनम् जरित्रे ॥ ९ ॥

मा नो मर्धीरा भरा दद्धि तन्नः प्र दाशुषे दातवे भूरि यत् ते ।
नव्ये देष्णे शस्ते अस्मिन् त उक्थे प्र ब्रवाम वयमिन्द्र स्तुवन्तः ॥ १० ॥

मा । नः । मर्धीः । आ । भर । दद्धि । तत् । नः । प्र । दाशुषे । दातवे । भूरि । यत् । ते ।
नव्ये । देष्णे । शस्ते । अस्मिन् । ते । उक्थे । प्र । ब्रवाम । वयम् । इन्द्र । स्तुवन्तः ॥१०॥

**वेङ्कट०** मा अस्मान् हिंसीः। आ हर अस्मदर्थं धनम्। आहृत्य चास्मभ्यम् तत् प्रयच्छ यजमानाय प्र दातुम् यत् तव [2]बहु धनं[2] विद्यते। नवतरे दानकुशले शस्ते अस्मिन् तव उक्थे वयम् इन्द्र! त्वाम् स्तुवन्तः अभिलषितं तुभ्यम् प्र ब्रवाम इति ॥ १० ॥

नू ष्टुत इन्द्र नू गृणान इषं जरित्रे नद्यो३ न पीपेः ।
अकारि ते हरिवो ब्रह्म नव्यं धिया स्याम रथ्यः सदासाः ॥ ११ ॥

नु । स्तुतः । इन्द्र । नु । गृणानः । इषम् । जरित्रे । नद्यः । न । पीपेरिति पीपेः ।
अकारि । ते । हरिऽवः । ब्रह्म । नव्यम् । धिया । स्याम । रथ्यः । सदाऽसाः ॥ ११ ॥

**वेङ्कट०** पूर्वं (४, १६, २१) व्याख्याता ॥ ११ ॥

[3]इति तृतीयाष्टके षष्ठाध्याये चतुर्थो वर्गः[3] ॥

## [ २१ ]

[1]वामदेवो गौतम ऋषिः । इन्द्रो देवता । त्रिष्टुप् छन्दः[1] ।

आ यात्विन्द्रोऽवस उप न इह स्तुतः सधमादस्तु शूरः ।
वावृधानस्तविषीर्यस्य पूर्वीर्द्यौर्न क्षत्रमभिभूति पुष्यात् ॥ १ ॥

---

१. प्रज्ञः वि[२] अ[१]. २-२. [१]इतरम् अ[१]. ३-३ नास्ति मूको.

आ । यातु । इन्द्रः । अवसे । उप । नः । इह । स्तुतः । सधऽमात् । अस्तु । शूरः ।
वृधानः । तविषीः । यस्य । पूर्वीः । द्यौः । न । क्षत्रम् । अभिऽभूति । पुष्यात् ॥ १ ॥

वेङ्कट० उपागच्छतु रक्षणाय अस्मान् इन्द्रः। तथाऽस्मिन् यज्ञे अस्माभिः स्तुतः सन् अस्माभिः सह माद्यन् भवतु शूरः। यस्य पुरातनानि बलानि हविर्भिर्वर्धयन् पुरुषः अभिभावुकं[1] बलम् पुष्यति द्युलोक इव। स हि वीर्यवतां देवानामावासः सन् बलवान् भवति ॥ १ ॥

तस्येदिह स्तवथ वृष्ण्यानि तुविद्युम्नस्य तुविराधसो नॄन् ।
यस्य क्रतुर्विदथ्यो न सम्राट् साह्वान् तरुत्रो अभ्यस्ति कृष्टीः ॥ २ ॥

तस्य । इत् । इह । स्तवथ । वृष्ण्यानि । तुविऽद्युम्नस्य । तुविऽराधसः । नॄन् ।
यस्य । क्रतुः । विदथ्यः । न । सम्ऽराट् । सह्वान् । तरुत्रः । अभि । अस्ति । कृष्टीः ॥ २ ॥

वेङ्कट० तस्य एव कर्माणि स्तुत इह वर्षणनिमित्तानि[2] बहुहविष्कान् मनुष्यान् प्रति बह्वन्नस्येन्द्रस्य, यस्य कर्म नगरस्थितः राजा इव राजते, यश्च शत्रूणां सहनशीलः तारकः शत्रून् अभि भवति ॥ २ ॥

आ यात्विन्द्रो दिव आ पृथिव्या मक्षू समुद्रादुत वा पुरीषात् ।
स्वर्णरादवसे नो मरुत्वान् परावतो वा सदनादृतस्य ॥ ३ ॥

आ । यातु । इन्द्रः । दिवः । आ । पृथिव्याः । मक्षु । समुद्रात् । उत । वा । पुरीषात् ।
स्वःऽनरात् । अवसे । नः । मरुत्वान् । पराऽवतः । वा । सदनात् । ऋतस्य ॥ ३ ॥

वेङ्कट० आ गच्छतु इन्द्रः अस्मान् द्युलोकात्, अपि च पृथिव्याः, शीघ्रम् अन्तरिक्षात्, अपि वा उदकात्, अपि च सर्वमनुष्यात् रक्षणार्थम् अस्मान् मरुत्वान्। अपि च [3]अत्यन्तं दूरयुक्तात्[3] सत्यस्य स्थानाद् आगच्छत्विति[4] ॥३॥

स्थूरस्य रायो बृहतो य ईशे तमु ष्टवाम विदथेष्विन्द्रम् ।
यो वायुना जयति गोमतीषु प्र धृष्णुया नयति वस्यो अच्छ ॥ ४ ॥

स्थूरस्य । रायः । बृहतः । यः । ईशे । तम । ऊँ इति । स्तवाम । विदथेषु । इन्द्रम् ।
यः । वायुना । जयति । गोऽमतीषु । प्र । धृष्णुऽया । नयति । वस्यः । अच्छ ॥ ४ ॥

वेङ्कट० विस्तृतस्य महतः धनस्य यः ईश्वरो भवति, तम् एव स्तवाम यज्ञेषु इन्द्रम्। यः

---

१. भावुकम् वि[2] अ[1]. २. °त्तानि कर्माणि वि[2] लपं. ३-३. °न्तदू° वि[1]. ४. आगा ··· अ[1].

वायुना सह गत्वा पशुमतीषु शत्रुसेनासु जयति जेतव्यान्। यश्च प्र णयति धृष्णुः(?) इन्द्रः अभ्युदयम् प्रति ॥ ४ ॥

उप॒ यो नमो॒ नम॑सि स्तभा॒यन्निय॑र्ति॒ वाचं॑ ज॒नय॒न् यज॑ध्यै ।
ऋ॒ञ्ज॒सा॒नः पु॑रु॒वार॑ उ॒क्थैरेन्द्रं॑ कृण्वी॒त सद॑नेषु॒ होता॑ ॥ ५ ॥

उप॑ । यः । नमः॑ । नम॑सि । स्त॒भा॒यन् । इय॑र्ति । वाच॑म् । ज॒नय॑न् । यज॑ध्यै ।
ऋ॒ञ्ज॒सा॒नः । पु॒रु॒ऽवारः॑ । उ॒क्थैः । आ । इन्द्र॑म् । कृ॒ण्वी॒त । सद॑नेषु । होता॑ ॥ ५ ॥

वेङ्कट० यः अग्निः अन्नं नवं पुराणेऽन्नेऽनुस्यूतं स्तम्भयन्[1] मनुष्यान् यज्ञार्थम् उप[2] प्रेरयति मन्त्रात्मिकाम् वाचम् यज्ञाय जनयन्। स देवान् उक्थैः प्रसाधयन् बहुभिर्वरणीयोऽग्निः होता[3] इन्द्रम् अस्मद्गृहेषु आ कृणोतु ॥ ५ ॥

[4]इति तृतीयाष्टके षष्ठाध्याये पञ्चमो वर्गः[4] ॥

धि॒षा यदि॑ धिष॒ण्यन्तः॑ सर॒ण्यान्त्सद॑न्तो॒ अद्रि॑मौशि॒जस्य॒ गोहे॑ ।
आ दु॒रोषाः॑ पा॒स्त्यस्य॒ होता॒ यो नो॑ म॒हान्त्सं॒वर॑णेषु॒ वह्निः॑ ॥ ६ ॥

धि॒षा । यदि॑ । धि॒ष॒ण्यन्तः॑ । स॒र॒ण्यान् । सद॑न्तः । अद्रि॑म् । औ॒शि॒जस्य॑ । गोहे॑ ।
आ । दु॒रोषाः॑ । पा॒स्त्यस्य॑ । होता॑ । यः । नः॒ । म॒हान् । स॒म्ऽवर॑णेषु । वह्निः॑ ॥ ६ ॥

वेङ्कट० स्तुतिवाचा यदि स्तुतिवाचमिच्छन्तः सरणं पर्वतमार्गमिच्छन्ति आसीदन्तः शिलोच्चयम् औशिजस्य कक्षीवतः पर्वतमध्ये राक्षसैः संवरणे सति साहाय्यं कर्तुमेते वामदेवाः। ततस्त्वम् हे अग्ने! शीघ्रम् अस्मास्विन्द्रम् आवह राक्षसानां दुःखावहदहनः, पास्त्यस्य गृहस्थस्य यजमानस्य यस्त्वं देवानां ह्वाता भवसि, यः इन्द्रः अस्माकम् महान् राक्षसानाम् संवरणेषु सत्सु वोढा भवति ॥ ६ ॥

स॒त्रा यदीं॑ भार्व॒रस्य॒ वृष्णः॒ सिष॑क्ति॒ शुष्मः॑ स्तुव॒ते भरा॑य ।
गुहा॒ यदी॑मौशि॒जस्य॒ गोहे॒ प्र यद् धि॒ये प्राय॑से॒ मदा॑य ॥ ७ ॥

स॒त्रा । यत् । ई॒म् । भा॒र्व॒रस्य॑ । वृष्णः॑ । सिस॑क्ति । शुष्मः॑ । स्तु॒व॒ते । भरा॑य ।
गुहा॑ । यत् । ई॒म् । औ॒शि॒जस्य॑ । गोहे॑ । प्र । यत् । धि॒ये । प्र । अय॑से । मदा॑य ॥ ७ ॥

वेङ्कट० सङ्ग्रामार्थं स्तुवते वामदेवाय तत्प्रीत्यर्थं सत्यमेव एनमौशिजं भाभिः शत्रूणां वारकस्य इन्द्रस्य बलं सेवते। यदि च[5] पर्वतस्य गुहायाम् अस्य औशिजस्य वरणे सति तमेनं त्वम् हे अग्ने! कर्मणे प्र गच्छसि[6]। यदि वा तस्मिन् सोमेन[7] मदाय प्र गच्छसि। ततस्त्वमिन्द्रमाकृणुहीति शत्रुषु हतेष्वौशिजो यक्ष्यते। तदर्थं चेन्द्रमस्मा आवहेति। एको यच्छब्दः पूरणः[8] ॥ ७ ॥

---

१. स्तमायन् वि[१] अ[१]. २. अप वि[१] लपं. ३. नास्ति मूको. ४-४. नास्ति मूको. ५. नास्ति ल. ६. यच्छ० वि[२] अ[१]. ७. नास्ति वि[२] अ[१]. ८. पूरणम् वि[२] अ[१].

वि यद् वरांसि पर्वतस्य वृण्वे पयोभिर्जिन्वे अपां जवांसि ।
विदद् गौरस्य गवयस्य गोहे यदी वाजाय सुध्यो३ वहन्ति ॥ ८ ॥

वि । यत् । वरांसि । पर्वतस्य । वृण्वे । पयःऽभिः । जिन्वे । अपाम् । जवांसि ।
विदत् । गौरस्य । गवयस्य । गोहे । यदि । वाजाय । सुऽध्यः । वहन्ति ॥ ८ ॥

**वेङ्कट०** यदि इन्द्रः[1] पर्वतस्य वरांसि प्रवेशननिरोधनानि[2] द्वाराणि वि[3] वृणोतीत्यति मन्यसे, तथा अपाम् जवांसि खातानि वृष्ट्यभावात् निरुदकानि पयोभिः यदीन्द्रः[4] पूरयति, यदि च लभतां गौरगवयौ[5] पशू पर्वतमध्ये संवृताद् औशिजात्, तत्र हि तावेव भवतो न ग्राम्याः पशव इति[6], यदि चैनमिन्द्रं सङ्ग्रामार्थं सुकर्माणः युद्धं प्रति च वहन्ति, तत आवह तमिति ॥ ८ ॥

भद्रा ते हस्ता सुकृतोत पाणी प्रयन्तारा स्तुवते राध इन्द्र ।
का ते निषत्तिः किमु नो ममत्सि किं नोदुदु हर्षसे दातवा उ ॥ ९ ॥

भद्रा । ते । हस्ता । सुऽकृता । उत । पाणी इति । प्रऽयन्तारा । स्तुवते । राधः । इन्द्र ।
का । ते । निऽसत्तिः । किम् । ऊँ इति । नो इति । ममत्सि । किम् । न । उत्ऽउत् । ऊँ इति । हर्षसे । दातवै । ऊँ इति ॥ ९ ॥

**वेङ्कट०** इन्द्र ! भजनीयौ तव हस्तौ, बाहोरधस्ताद्धस्तो[7] मणिबन्धादूर्ध्वं पाणिः, अपि च सुकर्माणौ पाणी प्रयच्छन्तौ स्तुवते धनम् । तथा सति का ते इयं निषत्तिः निषदनम् अनागमनेनावस्थानम् । किम् वाऽस्मिन् यज्ञे न माद्यसि, किम् वाऽस्मभ्यं धनं दातुम्[8] न उत् हर्षसे ॥ ९ ॥

एवा वस्व इन्द्रः सत्यः सम्राड्ढन्ता वृत्रं वरिवः पूरवे कः ।
पुरुष्टुत क्रत्वा नः शग्धि रायो भक्षीय तेऽवसो दैव्यस्य ॥ १० ॥

एव । वस्वः । इन्द्रः । सत्यः । सम्ऽराट् । हन्ता । वृत्रम् । वरिवः । पूरवे । करिति कः ।
पुरुऽस्तुत । क्रत्वा । नः । शग्धि । रायः । भक्षीय । ते । अवसः । दैव्यस्य ॥ १० ॥

**वेङ्कट०** एवं धनस्य इन्द्रः सम्राट् सत्यमेव ईश्वरो भवति, वृत्रम् चाश्रितस्य हन्ति, धनं च मनुष्याय करोति । तथा सति त्वम् हे इन्द्र पुरुष्टुत! प्रज्ञया अस्मभ्यम् धनानि देहि । तव कल्याणं रक्षणं चाहं भक्षीय लभे ॥ १० ॥

नू ष्टुत इन्द्र नू गृणान इषं जरित्रे नद्यो३ न पीपेः ।
अकारि ते हरिवो ब्रह्म नव्यं धिया स्याम रथ्यः सदासाः ॥ ११ ॥

---

१. °न्द्रस्य वि[1] लपं; °द्र वि[1] अ[1] ल. २. °वेशनानि वि[1] लपं. ३. नास्ति मूको. ४. °न्द्र अ[1]. ५. °रवयौ वि[2] अ[1]. ६. इव वि[1] लपं. ७. बाहो[°] वि[2] अ[1]. ८. दातुः वि[2]; दातु वि[1] अ[1] लपं.

नु । स्तुतः । इन्द्र । नु । गृणानः । इषम् । जरित्रे । नद्यः । न । पीपेरिति पीपेः ।
अकारि । ते । हरिऽवः । ब्रह्म । नव्यम् । धिया । स्याम । रथ्यः । सदाऽसाः ॥ ११ ॥

वेङ्कट० ऋ ४, १६, २१ द्र. ॥ ११ ॥

[1]इति तृतीयाष्टके षष्ठाध्याये षष्ठो वर्गः[1] ॥

## [ २२ ]

[1]वामदेवो गौतम ऋषिः । इन्द्रो देवता । त्रिष्टुप् छन्दः[1] ।

यन्न इन्द्रो जुजुषे यच्च वष्टि तन्नो महान् करति शुष्म्या चित् ।
ब्रह्म स्तोमं मघवा सोममुक्था यो अश्मानं शवसा बिभ्रदेति ॥ १ ॥

यत् । नः । इन्द्रः । जुजुषे । यत् । च । वष्टि । तत् । नः । महान् । करति । शुष्मी । आ । चित् ।
ब्रह्म । स्तोमम् । मघऽवा । सोमम् । उक्था । यः । अश्मानम् । शवसा । बिभ्रत् । एति ॥ १ ॥

वेङ्कट० यदि अस्मान् इन्द्रः सेवते, यदि च अस्मान् कामयते, ततः अस्माकम् महान् कर्तव्यं करोति, तथास्मदर्थं बलयुक्तः च भवति । यः मघवा बलेन वज्रं धारयन् यज्ञं स्तोत्रशस्त्राणि सोमम् चाभिषुतं गच्छति ॥ १ ॥

वृषा वृषन्धिं चतुरश्रिमस्यन्नुग्रो बाहुभ्यां नृतमः शचीवान् ।
श्रिये परुष्णीमुषमाण ऊर्णां यस्याः पर्वाणि सख्याय विव्ये ॥ २ ॥

वृषा । वृषन्धिम् । चतुःऽअश्रिम् । अस्यन् । उग्रः । बाहुऽभ्याम् । नृऽतमः । शचीऽवान् ।
श्रिये । परुष्णीम् । उषमाणः । ऊर्णाम् । यस्याः । पर्वाणि । सख्याय । विव्ये ॥ २ ॥

वेङ्कट० वर्षिता इन्द्रः वर्षितॄणां धारकम् चतुष्कोटिम् वज्रम् बाहुभ्याम् प्रेरयन् उद्गूर्णः नेतृतमः कर्मवान् परुष्णीम् नदीम् उदकेन जगत् छादयन्तीम् आत्मीयैस्तेजोभिर्मनुष्याणां श्रयणार्थं शोषयन्[2] एतीति सम्बध्यते । [3]यस्याः नद्याः[3] पर्वाणि भिन्नान् प्रदेशान्, मनुष्यैर्नद्यास्तस्याः सख्यसिद्ध्यर्थम्, [4]विव्ये पिहितान्यकरोदिति[4] ॥ २ ॥

यो देवो देवतमो जायमानो महो वाजेभिर्महद्भिश्च शुष्मैः ।
दधानो वज्रं बाह्वोरुशन्तं द्याममेन रेजयत् प्र भूम ॥ ३ ॥

---

१-१. नास्ति मूको. २. शोमय° वि[१] अ[१] ळ. ३-३. यस्यां नद्यां वि[२] अ[१]. ४-४. °न्येऽपि° वि[१].

यः । देवः । देवऽतमः । जायमानः । महः । वाजेभिः । महत्ऽभिः । च । शुष्मैः ।
दधानः । वज्रम् । बाह्वोः । उशन्तम् । द्याम् । अमेन । रेजयत् । प्र । भूम ॥ ३ ॥

**वेङ्कट०** यः देवतमः जायमानः **एव महान् बलैः** महद्भिः च **शोषकैस्तेजोभिः सह प्रादुर्भवति धारयन्** बाह्वोः **वज्रम् शत्रून् कामयमानम्,** सः देवः **दिवं भूमिं च** अमेन **बलेन प्र कम्पयति** ॥ ३ ॥

विश्वा रोधांसि प्रवतश्च पूर्वीर्द्यौर्ऋष्वाज्जनिमन् रेजत क्षाः ।
आ मातरा भरति शुष्म्या गोर्नृवत् परिज्मन् नोनुवन्त वाताः ॥ ४ ॥

विश्वा । रोधांसि । प्रऽवतः । च । पूर्वीः । द्यौः । ऋष्वात् । जनिमन् । रेजत । क्षाः ।
आ । मातरा । भरति । शुष्मी । आ । गोः । नृऽवत् । परिऽज्मन् । नोनुवन्त । वाताः ॥ ४ ॥

**वेङ्कट०** विश्वानि रोधांसि **स्थलानि प्रवणानि च बहूनि** जायमाने **इन्द्रे महतस्तस्मात् अरेजन्त,** तथा[1] द्यौः **च अरेजत**[2] पृथिवी च। सोऽयं तेजस्वी सन् द्यावापृथिवी आ[3] बिभर्ति, आ[4] च पूरयति। **उदकस्य परितो गन्तरि तस्मिन्**[5] देवाः वायवः मनुष्यवत् **अत्यन्तं शब्दं कुर्वन्ति यथा राजानं परितो मनुष्या इति** ॥ ४ ॥

ता तू त इन्द्र महतो महानि विश्वेष्वित् सवनेषु प्रवाच्या ।
यच्छूर धृष्णो धृषता दधृष्वानहिं वज्रेण शवसाविवेषीः ॥ ५ ॥

ता । तु । ते । इन्द्र । महतः । महानि । विश्वेषु । इत् । सवनेषु । प्रऽवाच्या ।
यत् । शूर । धृष्णो इति । धृषता । दधृष्वान् । अहिम् । वज्रेण । शवसा । अविवेषीः ॥ ५ ॥

**वेङ्कट०** तानि[6] **क्षिप्रं तव** इन्द्र! महतः **महान्ति चरितानि अस्माभिः सर्वेषु एव** सवनेषु **प्रवाच्यानि**[7]। यत् हे शूर **धर्षितः! शत्रूणां धर्षणशीलेन** 'वज्रेण अहिम् **अभिभवन् बलेन**' त्वं[9] **व्याप्तवानसि,** ताद्दशानीति[10] ॥ ५ ॥

[11]इति तृतीयाष्टके षष्ठाध्याये सप्तमो वर्गः[11] ॥

ता तू ते सत्या तुविनृम्ण विश्वा प्र धेनवः सिस्रते वृष्ण ऊध्नः ।
अधा ह त्वद् वृषमणो भियानाः प्र सिन्धवो जवसा चक्रमन्त ॥ ६ ॥

ता । तु । ते । सत्या । तुविऽनृम्ण । विश्वा । प्र । धेनवः । सिस्रते । वृष्णः । ऊध्नः ।
अध । ह । त्वत् । वृषऽमनः । भियानाः । प्र । सिन्धवः । जवसा । चक्रमन्त ॥ ६ ॥

---

१. नास्ति लपं. २. अवेर° ल. ३. नास्ति मूको. ४. नास्ति वि[1] लपं. ५. °रिमन्निन्द्रे वि[2] अ[1]. ६. तानि तानि वि[1] ल लपं. ७. प्राप्यानि लपं; प्रवाप्यानि वि[2] अ[1]. ८-८. नास्ति वि[1] लपं. ९. तम् वि[1] अ[1] लपं. १०. °निति वि[2] अ[1]. ११-११. नास्ति मूको.

**वेङ्कट०** तानि क्षिप्रं तव सत्यानि हे बहुधन! चरितानि प्रवाच्यानि सर्वाणि। वर्षितुः तव[1] काश्चन[2] धेनवः ऊध्नः[3] आपः प्रसरन्ति। तदनन्तरम् एव हे वर्षितुमनस्क![4] त्वत्तः बिभ्यतः[5] सिन्धवः प्र क्रमन्ते वेगेनेति ॥ ६ ॥

अत्राहं ते हरिवस्ता उं देवीरवोभिरिन्द्र स्तवन्त स्वसारः।
यत् सीमनु प्र मुचो बद्बधाना दीर्घामनु प्रसितिं स्यन्दयध्यै ॥ ७ ॥

अत्रं। अहं। ते। हरिऽवः। ताः। ऊं इतिं। देवीः। अवःऽभिः। इन्द्र। स्तवन्त। स्वसारः।
यत्। सीम्। अनुं। प्र। मुचः। बद्बधानाः। दीर्घाम्। अनुं। प्रऽसितिम्। स्यन्दयध्यै॥ ७ ॥

**वेङ्कट०** अत्र एव क्षणे तव हे हरिवः इन्द्र! ताः देव्यः मनुष्याणां रक्षणैर्हेतुभिः स्तोतृभिः स्तुता आसन् स्वयं सरणशीला नद्यः, यदा सर्वतः [6]परिगृह्य अनुक्रमेण[6] प्र मुक्तवानसि बाधमानाः दीर्घमार्गं प्रति स्यन्दितुम् इति ॥ ७ ॥

पिपीळे अंशुर्मद्यो न सिन्धुरा त्वा शमी शशमानस्य शक्तिः।
अस्मद्र्यक् शुशुचानस्य यम्या आशुर्न रश्मिं तुव्योजसं गोः ॥ ८ ॥

पिपीळे। अंशुः। मद्यः। न। सिन्धुः। आ। त्वा। शमी। शशमानस्य। शक्तिः।
अस्मद्र्यक्। शुशुचानस्य। यम्याः। आशुः। न। रश्मिम्। तुविऽओजसम्। गोः॥ ८ ॥

**वेङ्कट०** पीडितः[7] सोमस्य अंशुः, तस्य च रसो मदकरः इव सिन्धुः महान्। अथ आ यच्छतु त्वां प्रवृद्धबलम् अस्मदभिमुखं स्तुतिकर्म शमनशीलं स्तुवतः दीप्यमानस्य अस्मदीयस्य होतुः[8], यथा क्षिप्रकारी पुरुषः गन्तुरश्वस्य रश्मिम् आयच्छत्येवमिति[9] ॥ ८ ॥

अस्मे वर्षिष्ठा कृणुहि ज्येष्ठा नृम्णानि सत्रा सहुरे सहांसि।
अस्मभ्यं वृत्रा सुहनानि रन्धि जहि वधर्वनुषो मर्त्यस्य ॥ ९ ॥

अस्मे इतिं। वर्षिष्ठा। कृणुहि। ज्येष्ठा। नृम्णानि। सत्रा। सहुरे। सहांसि।
अस्मभ्यम्। वृत्रा। सुऽहनानि। रन्धि। जहि। वधः। वनुषः। मर्त्यस्य ॥ ९ ॥

**वेङ्कट०** हे सहनशील! अस्माकं वृद्धतमानि प्रशस्यतमानि [10]च धनानि बलानि[10] च सत्यमेव कुरु। किञ्च अस्माकम् सुहनानि वृत्राणि शत्रून् वशं नय, जहि च आयुधम् अस्मान् घ्नतः मनुष्यस्य ॥ ९ ॥

---

१. °व ऊध्नः मूको. २. काश्च वि[1] अ[1] लपं. ३. नास्ति मूको. ४. °त मनस्क(°स्के लपं.) वि[2] अ[1] लपं. ५. बिभ्यन्तः मूको; बिभ्यतः वा ल प्रस्तावः. ६-६. °गृह्यानुग्रहानुक्र° वि[2] अ[1]. ७. पीलितः वि[2] अ[1]. ८. हेतुः मूको. ९. आगच्छ° लपं. १०-१०. नास्ति वि[1] लपं.

अस्माकमित् सु शृणुहि त्वमिन्द्रास्मभ्यं चित्राँ उप माहि वाजान् ।
अस्मभ्यं विश्वा इषणः पुरंधीरस्माकं सु मघवन् बोधि गोदाः ॥ १० ॥

अस्माकम् । इत् । सु । शृणुहि । त्वम् । इन्द्र । अस्मभ्यम् । चित्रान् । उप । माहि । वाजान् ।
अस्मभ्यम् । विश्वाः । इषणः । पुरम्ऽधीः । अस्माकम् । सु । मघऽवन् । बोधि । गोऽदाः ॥१०॥

**वेङ्कट०** अस्माकम् एव स्तोत्राणि त्वम् इन्द्र! सुष्ठु शृणुहि, तथा अस्मभ्यम् एव नानारूपाणि अन्नानि च उप आकुरु, तथा अस्मभ्यम् एव प्रेरय सर्वाः प्रजाः, तथा मघवन्! अस्माकम् सुष्ठु गवां दाता भवामीति बुध्यस्व ॥ १० ॥

नू ष्टुत इन्द्र नू गृणान इषं जरित्रे नद्यो३ न पीपेः ।
अकारि ते हरिवो ब्रह्म नव्यं धिया स्याम रथ्यः सदासाः ॥ ११ ॥

नु । स्तुतः । इन्द्र । नु । गृणानः । इषम् । जरित्रे । नद्यः । न । पीपेरिति पीपेः ।
अकारि । ते । हरिऽवः । ब्रह्म । नव्यम् । धिया । स्याम । रथ्यः । सदाऽसाः ॥ ११ ॥

**वेङ्कट०** ऋ ४, १६, २१ द्र. ॥ ११ ॥

[1]इति तृतीयाष्टके षष्ठाध्याये अष्टमो वर्गः[1] ॥

[ २३ ]

[1]वामदेवो गौतम ऋषिः । इन्द्रो देवता, अष्टम्यादिदशम्यन्तानाम् ऋतं वा । त्रिष्टुप् छन्दः[1] ।

कथा महामवृधत् कस्य होतुर्यज्ञं जुषाणो अभि सोममूधः ।
पिबन्नुशानो जुषमाणो अन्धो ववक्ष ऋष्वः शुचते धनाय ॥ १ ॥

कथा । महाम् । अवृधत् । कस्य । होतुः । यज्ञम् । जुषाणः । अभि । सोमम् । ऊधः ।
पिबन् । उशानः । जुषमाणः । अन्धः । ववक्षे । ऋष्वः । शुचते । धनाय ॥ १ ॥

**वेङ्कट०** कथमिन्द्रः पूजयितारं वर्धयति । कीदृशं पूजकमित्यर्थः । कस्य वा होतुः यज्ञम् सेवमानः सोमम् अभि गच्छति ऊधसि हविर्धाने स्थितम् । सोमम्[2] पिबन् कामयमानः सेवमानः सोऽयं[3] यजमानान् प्रति गच्छति दर्शनीयः यजमानानाम् दीप्यमानं[4] धनं दातुम् ॥ १ ॥

को अस्य वीरः सधमादमाप समानंश सुमतिभिः को अस्य ।
कदस्य चित्रं चिकिते कदूती वृधे भुवच्छशमानस्य यज्योः ॥ २ ॥

कः । अस्य । वीरः । सधऽमादम् । आप । सम् । आनंश । सुमतिऽभिः । कः । अस्य ।
कत् । अस्य । चित्रम् । चिकिते । कत् । ऊती । वृधे । भुवत् । शशमानस्य । यज्योः ॥ २ ॥

---

१-१. नास्ति मूको. २. सोऽयं वि[1] लपं. ३. सोमम् वि[1,2] लपं. ४. दीप्यमानाय मूको.

**वेङ्कट०** कः वीरः इन्द्रस्य सधमादम् आप। इन्द्रेण सह माद्यतीत्यर्थः। कः वा इन्द्रस्य सुमतिभिः सङ्गत आसीत्। कदा वा अस्य चित्रम् कर्म प्रज्ञायते। कदा वाऽयमिन्द्रः रक्षणेन वर्धनाय भवति यजमानस्य यज्योः ॥ २ ॥

कथा शृणोति हूयमानमिन्द्रः कथा शृण्वन्नवसामस्य वेद।
का अस्य पूर्वीरुपमातयो ह कथैनमाहुः पपुरिं जरित्रे ॥ ३ ॥

कथा। शृणोति। हूयमानम्। इन्द्रः। कथा। शृण्वन्। अवसाम्। अस्य। वेद।
काः। अस्य। पूर्वीः। उपऽमातयः। ह। कथा। एनम्। आहुः। पपुरिम्। जरित्रे ॥ ३ ॥

**वेङ्कट०** कथम् शृणोति हूयमानम् हविः इन्द्रः। कथं वा शृण्वन् अस्य स्तोतुः जानाति रक्षणानि। काः वा अस्य पुरातन्यः स्तुतयः। कथम्[1] वा एनम् आहुः यथाऽयं स्तोत्रे जनाय कामानां पूरयिता भवति ॥ ३ ॥

कथा सबाधः शशमानो अस्य नशदभि द्रविणं दीध्यानः।
देवो भुवन्नवेदा म ऋतानां नमो जगृभ्वाँ अभि यज्जुजोषत् ॥ ४ ॥

कथा। सऽबाधः। शशमानः। अस्य। नशत्। अभि। द्रविणम्। दीध्यानः।
देवः। भुवत्। नवेदाः। मे। ऋतानाम्। नमः। जगृभ्वान्। अभि। यत्। जुजोषत् ॥ ४ ॥

**वेङ्कट०** कथं पीडायुक्तः यजमानः इन्द्रस्य धनम् [2]अभि व्याप्नोति[2] दीप्यमानः। सोऽयं देवः भवेत् ज्ञाता मम सत्यानां वचसाम्। हविः गृहीतवान् सन् मां यदि सेवते ॥ ४ ॥

कथा कदस्या उषसो व्युष्टौ देवो मर्तस्य सख्यं जुजोष।
कथा कदस्य सख्यं सखिभ्यो ये अस्मिन् कामं सुयुजं ततस्रे ॥ ५ ॥

कथा। कत्। अस्याः। उषसः। विऽउष्टौ। देवः। मर्तस्य। सख्यम्। जुजोष।
कथा। कत्। अस्य। सख्यम्। सखिऽभ्यः। ये। अस्मिन्। कामम्। सुऽयुजम्। ततस्रे ॥ ५ ॥

**वेङ्कट०** केन प्रकारेण कदा च अस्याः उषसः व्युच्छने देवः मर्त्यस्य सख्यम् सेवते। कथं वा कदा वा अस्य सख्यम् भवति सखिभ्यः, ये सखायः इन्द्रे अभिलषितम् आत्मनः सुयुक्तम् अकुर्वन् ॥ ५ ॥

[3]इति तृतीयाष्टके षष्ठाध्याये नवमो वर्गः[3] ॥

---

१. कथा° वि[2] अ[1]. २-२. अपि व्या° वि[1]; अपि व्याप्नोतीति वि[1] अ[1]. ३-३. नास्ति मूको.

किमादमंत्रं सख्यं सखिभ्यः कदा नु ते भ्रात्रं प्र ब्रवाम ।
श्रिये सुदृशो वपुरस्य सर्गाः स्व१र्ण चित्रतममिष आ गोः ॥ ६ ॥

किम् । आत् । अमंत्रम् । सख्यम् । सखिऽभ्यः । कदा । नु । ते । भ्रात्रम् । प्र । ब्रवाम ।
श्रिये । सुऽदृशः । वपुः । अस्य । सर्गाः । स्वः । न । चित्रऽतमम् । इषे । आ । गोः ॥ ६ ॥

वेङ्कट० किम् तव आगमनशीलम् सख्यम् भवति सखिभ्यः । आत् इति पूरणः[1] । कदा नु ते वयं भ्रातृत्वम् प्र ब्रवाम । अस्य इन्द्रस्य वपुषः[2] सर्गाः शोभनदर्शनाः श्रियै भवन्ति । तथा स्वर्लोक इव [3]विचित्रतमम् अस्य[3] गन्तुः शरीरम् आभिमुख्येन स्तोतृभिरिष्यते ॥ ६ ॥

द्रुहं जिघांसन् ध्वरसमनिन्द्रां तेतिक्ते तिग्मा तुजसे अनीका ।
ऋणा चिद् यत्र ऋणया न उग्रो दूरे अज्ञाता उषसो बबाधे ॥ ७ ॥

द्रुहम् । जिघांसन् । ध्वरसम् । अनिन्द्राम् । तेतिक्ते । तिग्मा । तुजसे । अनीका ।
ऋणा । चित् । यत्र । ऋणऽयाः । नः । उग्रः । दूरे । अज्ञाताः । उषसः । बबाधे ॥ ७ ॥

वेङ्कट० द्रोग्ध्रीम् हिंसित्रीम्[4] इन्द्ररहितां सेनां हन्तुमिच्छन् अयमिन्द्रः तीक्ष्णीकरोति तिग्माः[5] सेनाः शत्रूणां हिंसायै, यदा अस्माकम् ऋणानीन्द्रः[6] ऋणानां यावयिता उद्गूर्णः प्रक्षिपति, यदा वै उषसः अस्माद्भः दूरे बाधते अज्ञाताः शत्रुसेना इति ॥ ७ ॥

ऋतस्य हि शुरुधः सन्ति पूर्वीर्ऋतस्य धीतिर्वृजिनानि हन्ति ।
ऋतस्य श्लोको बधिरा ततर्द कर्णा बुधानः शुचमान आयोः ॥ ८ ॥

ऋतस्य । हि । शुरुधः । सन्ति । पूर्वीः । ऋतस्य । धीतिः । वृजिनानि । हन्ति ।
ऋतस्य । श्लोकः । बधिरा । ततर्द । कर्णा । बुधानः । शुचमानः । आयोः ॥ ८ ॥

वेङ्कट० सत्यस्य हि अस्य शोकस्य रोधयित्र्यः बह्व्यः आपः सन्ति । ऋतस्य प्रज्ञा वर्जनीयानि हन्ति[7] । किंच ऋतस्य शब्दो महान् बधिरौ कर्णौ तृणत्ति श्रद्धया श्रवणात् बोधयन् दीप्यमानः मनुष्यस्य ॥ ८ ॥

ऋतस्य दृळ्हा धरुणानि सन्ति पुरूणि चन्द्रा वपुषे वपूंषि ।
ऋतेन दीर्घमिषणन्त पृक्ष ऋतेन गाव ऋतमा विवेशुः ॥ ९ ॥

ऋतस्य । दृळ्हा । धरुणानि । सन्ति । पुरूणि । चन्द्रा । वपुषे । वपूंषि ।
ऋतेन । दीर्घम् । इषणन्त । पृक्षः । ऋतेन । गावः । ऋतम् । आ । विवेशुः ॥ ९ ॥

---

१. °णम् ल. २. वपुः लपं. ३-३. विचित्रतमस्य वि[2] अ[1]. ४. नास्ति अ[1]. ५. अयं ति° मूको.
६. °णानिन्द्रः वि[1]; महानिन्द्रः वि[2]; मृडानीन्द्रः अ[1]. ७. नास्ति वि[1] लपं. ८. बाध° मूको.

वेङ्कट० ऋतस्य दृढान्युदकानि धारकाणि विद्यन्ते बहूनि आह्लादनानि निवपनाय[1] वपूंषि उदकानि। तथा ऋतेन अनुस्यूतम् अन्नं गच्छन्ति[2]। तथा ऋतेन एव रश्मयः उदकम् आ वेशयन्ति ॥ ९ ॥

ऋतं येमान ऋतमिद् वनोत्यृतस्य शुष्मस्तुरया उ गव्युः ।
ऋताय पृथ्वी बहुले गभीरे ऋताय धेनू परमे दुहाते ॥ १० ॥

ऋतम् । येमानः । ऋतम् । इत् । वनोति । ऋतस्य । शुष्मः । तुरऽयाः । ऊँ इति । गव्युः ।
ऋताय । पृथ्वी इति । बहुले इति । गभीरे इति । ऋताय । धेनू इति । परमे इति । दुहाते इति ॥१०॥

वेङ्कट० उदकम् नियच्छन् उदकम् एव प्रयच्छति। तथा ऋतस्य शुष्मः बलं तूर्णगतिः एव सन् गा इच्छन् भवति। तथा ऋताय द्यावापृथिव्यौ[3] विस्तीर्णे गम्भीरे च भवतः। तथा ऋताय एव द्यावापृथिवी उत्तमे पयः दुहाते[4] ॥ १० ॥

नू ष्टुत इन्द्र नू गृणान इषं जरित्रे नद्यो३ न पीपेः ।
अकारि ते हरिवो ब्रह्म नव्यं धिया स्याम रथ्यः सदासाः ॥ ११ ॥

नु । स्तुतः । इन्द्र । नु । गृणानः । इषम् । जरित्रे । नद्यः । न । पीपेरिति पीपेः ।
अकारि । ते । हरिऽवः । ब्रह्म । नव्यम् । धिया । स्याम । रथ्यः । सदाऽसाः ॥ ११ ॥

वेङ्कट० ऋ ४,१६,२१ द्र. ॥ ११ ॥

[5]इति तृतीयाष्टके षष्ठाध्याये दशमो वर्गः[5] ॥

[ २४ ]

[5]वामदेवो गौतम ऋषिः। इन्द्रो देवता। त्रिष्टुप् छन्दः, दशमी अनुष्टुप्[5]।

का सुष्टुतिः शवसः सूनुमिन्द्रमर्वाचीनं राधस आ ववर्तत् ।
ददिर्हि वीरो गृणते वसूनि स गोपतिर्निष्षिधां नो जनासः ॥ १ ॥

का । सुऽस्तुतिः । शवसः । सूनुम् । इन्द्रम् । अर्वाचीनम् । राधसे । आ । ववर्तत् ।
ददिः । हि । वीरः । गृणते । वसूनि । सः । गोऽपतिः । निःऽसिधाम् । नः । जनासः ॥१॥

वेङ्कट० का शोभना स्तुतिः[6] बलस्य पुत्रम् इन्द्रम् इतोमुखम् आवर्तयति[7] अन्नाय। ददिः[8] दानशीलः हि अयम् वीरः स्तुवते यजमानाय धनानि। सः हि अस्माकं सन्निरुन्धानानां हे जनाः![9] गवां पतिर्भवति ॥ १ ॥

---

१. वचनाय वि[1] अ[1]. २. गच्छति ल. ३. °थिवी वि[1] लपं. ४. °हते वि[1]. ५-५. नास्ति मूको. ६. नास्ति वि[1]. ७. °यन्ति मूको. ८. नास्ति मूको. ९. नास्ति वि[1] लपं.

स वृत्रहत्ये हव्यः स ईड्यः स सुष्टुत इन्द्रः सत्यराधाः ।
स यामन्ना मघवा मर्त्याय ब्रह्मण्यते सुष्वये वरिवो धात् ॥ २ ॥

सः । वृत्रऽहत्ये । हव्यः । सः । ईड्यः । सः । सुऽस्तुतः । इन्द्रः । सत्यऽराधाः ।
सः । यामन् । आ । मघऽवा । मर्त्याय । ब्रह्मण्यते । सुस्वये । वरिवः । धात् ॥ २ ॥

**वेङ्कट०** सः शत्रुहनने ह्वातव्यः । सः एव तत्र स्तुत्यः । सः[1] सुष्टुतः[2] इन्द्रः सत्यधनः । सः आगमने मघवा मर्त्याय स्तुतिमिच्छते सुन्वते च मर्त्याय धनम् आ दधाति ॥ २ ॥

तमिन्नरो वि ह्वयन्ते समीके रिरिक्वांसस्तन्वः कृण्वत त्राम् ।
मिथो यत् त्यागमुभयासो अग्मन् नरस्तोकस्य तनयस्य सातौ ॥ ३ ॥

तम् । इत् । नरः । वि । ह्वयन्ते । सम्ऽईके । रिरिक्वांसः । तन्वः । कृण्वत । त्राम् ।
मिथः । यत् । त्यागम् । उभयासः । अग्मन् । नरः । तोकस्य । तनयस्य । सातौ ॥ ३ ॥

**वेङ्कट०** तम् एव मनुष्याः [3]वि ह्वयन्ते[3] युद्धे । तथातिरिक्तबलाः[4] सन्तः शरीरस्य त्रातारमेनं कृण्वन्ति, मिथः यत् त्यागम् उभयेऽपि गच्छन्ति योद्धृभ्यो धनं परस्परं प्रयच्छन्ति, नरः तोकस्य[5] तनयस्य च[6] सम्भजननिमित्तम् अवधार्थं ह्वयन्त इति ॥ ३ ॥

क्रतूयन्ति क्षितयो योग उग्राशुषाणासो मिथो अर्णसातौ ।
सं यद् विशोऽववृत्रन्त युध्मा आदिन्नेम इन्द्रयन्ते अभीके ॥ ४ ॥

क्रतुऽयन्ति । क्षितयः । योगे । उग्र । आशुषाणासः । मिथः । अर्णऽसातौ ।
सम् । यत् । विशः । अववृत्रन्त । युध्माः । आत् । इत् । नेमे । इन्द्रयन्ते । अभीके ॥४॥

**वेङ्कट०** क्रतुं कर्म कर्तुमिच्छन्ति मनुष्याः धनयोगार्थं हे उग्र![7] परस्परं व्याप्नुवानाः युद्धे । यदा योद्धयः प्रजाः सङ्गच्छन्ते अनन्तरम् एव नेमे केचित् इन्द्रमिच्छन्ति युद्धे ॥ ४ ॥

आदिद्ध नेम इन्द्रियं यजन्त आदित् पक्तिः पुरोळाशं रिरिच्यात् ।
आदित् सोमो वि पपृच्यादसुष्वीनादिज्जुजोष वृषभं यजध्यै ॥ ५ ॥

आत् । इत् । ह । नेमे । इन्द्रियम् । यजन्ते । आत् । इत् । पक्तिः । पुरोळाशम् । रिरिच्यात् ।
आत् । इत् । सोमः । वि । पपृच्यात् । असुस्वीन् । आत् । इत् । जुजोष । वृषभम् । यजध्यै ॥

---

१. नास्ति वि[2] अ[1]. २. सस्तुतः अ[1]. ३-३. अपि ह्व० वि[2] अ[1]. ४. °था विक्त° वि[2] अ[1]. ५. लोकस्य ल. ६. नास्ति अ[1]. ७. नास्ति वि[1] लपं.

**वेङ्कट०** अनन्तरम् एव केचिदिन्द्रस्य इन्द्रियम्[1] यजन्ते । अथैकवदाह—अनन्तरम् एव पक्तिः पचन् [2]पक्तव्यान् चरुपुरोडाशादीन्[2] इन्द्रियाय प्रयच्छति । ततः सोऽयं सोमः सोता यजमानः अयजमानान् वि पपृच्याद् व्यर्धयति । अनन्तरम् एव सेवते वर्षितारम्[3] इन्द्रं यष्टुम् उपस्थिते[4] युद्धे । तृतीयः पादः फलमिति ॥ ५ ॥

[5]इति तृतीयाष्टके षष्ठाध्याये एकादशो वर्गः[5] ॥

कृणोत्यस्मै वरिवो य इत्थेन्द्राय सोममुशते सुनोति ।
सध्रीचीनेन मनसाविवेनं तमित् सखायं कृणुते समत्सु ॥ ६ ॥

कृणोति । अस्मै । वरिवः । यः । इत्था । इन्द्राय । सोमम् । उशते । सुनोति ।
सध्रीचीनेन । मनसा । अविऽवेनम् । तम् । इत् । सखायम् । कृणुते । समत्ऽसु ॥ ६ ॥

**वेङ्कट०** कृणोति अस्मै परिचर्याम्, यः इत्थम् इन्द्राय सोमम् च कामयमानाय सुनोति, इन्द्रेण सहाञ्चता मनसा तम् एवेन्द्रम् अविरूपम् सुष्ठु कामयमानम्[6] सखायम् कृणुते युद्धेषु ॥ ६ ॥

य इन्द्राय सुनवत् सोममद्य पचात् पक्तीरुत भृज्जाति धानाः ।
प्रति मनायोरुचथानि हर्यन् तस्मिन् दधद् वृषणं शुष्ममिन्द्रः ॥ ७ ॥

यः । इन्द्राय । सुनवत् । सोमम् । अद्य । पचात् । पक्तीः । उत । भृज्जाति । धानाः ।
प्रति । मनायोः । उचथानि । हर्यन् । तस्मिन् । दधत् । वृषणम् । शुष्मम् । इन्द्रः ॥७॥

**वेङ्कट०** यः एकस्मिन्नेव दिवसे सोमम् इन्द्राय सुनोति, पचति च[7] पक्तव्यानि पुरोडाशादीनि, धानाः च भृजति, इन्द्रमेव मनसेच्छतः स्तोत्राणि प्रेप्सन्, तस्मिन् [8]प्रति दधाति[8] वर्षितारम् शुष्मम्[9] इन्द्रः ॥ ७ ॥

यदा समर्यं व्यचेदृघावा दीर्घं यदाजिमभ्यख्यदर्यः ।
अचिक्रदद् वृषणं पत्न्यच्छा दुरोण आ निशितं सोमसुद्भिः ॥ ८ ॥

यदा । सऽमर्यम् । वि । अचेत् । ऋघावा । दीर्घम् । यत् । आजिम् । अभि । अख्यत् । अर्यः ।
अचिक्रदत् । वृषणम् । पत्नी । अच्छ । दुरोणे । आ । निऽशितम् । सोमसुत्ऽभिः ॥ ८ ॥

**वेङ्कट०** यदा सङ्ग्रामम् वि चिनोति हिंसावान्, यदा वा दीर्घम् आजिम् आभिमुख्येन प्रकाशयति स्वामी, तदानीं वर्षितारमिन्द्रं सेना क्रन्दयति स्वेस्वे गृहे[1] यजमानैः तीक्ष्णीकृतमिति ॥ ८ ॥

---

१. °यं च वि[2] अ[1]. २-२. °पक्तव्यचरु° वि[1] लपं. ३. नास्ति वि[1]. ४. °स्थितम् वि[1] लपं. ५-५. नास्ति मूको. ६. °मानः मूको. ७. नास्ति वि[1] लपं. ८-८. नास्ति वि[1] लपं. ९. नास्ति वि[2] अ[1].

भूयसा वस्नमचरत् कनीयोऽविक्रीतो अकानिषं पुनर्यन् ।
स भूयसा कनीयो नारिरेचीद् दीना दक्षा वि दुहन्ति प्र वाणम् ॥ ९ ॥

भूयसा । वस्नम् । अचरत् । कनीयः । अविऽक्रीतः । अकानिषम् । पुनः । यन् ।
सः । भूयसा । कनीयः । न । अरिरेचीत् । दीनाः । दक्षाः । वि । दुहन्ति । प्र । वाणम् ॥९॥

**वेङ्कट०** इह कश्चित् भूयसा महार्घेण वस्न्येन न्यूनमूल्यम् अचरत् व्यवहरति । पुनश्च अविक्रीतः अयं भूयात् अनुचितमूल्यत्वादिति क्रेतरि अकानिषम् कामयेऽहम् पुनः तस्मिन् गच्छन्निति मन्यमानः । सः च क्रेता भूयसा विक्रीतं प्रदाय आत्मना दत्तम् कनीयः पुनः न अरिरेचीत् नादत्त । एतस्मिन् विवादपदे निर्धनाः विक्रेतारः प्रवृद्धधनाः क्रेतारश्च वाणम् वि प्र दुहन्ति आत्मानं प्रतीतरेतरमाकृषन्ति ॥ ९ ॥

क इमं दशभिर्ममेन्द्रं क्रीणाति धेनुभिः । यदा वृत्राणि जङ्घनदथैनं मे पुनर्ददत् ॥१०॥

कः । इमम् । दशऽभिः । मम । इन्द्रम् । क्रीणाति । धेनुऽभिः ।
यदा । वृत्राणि । जङ्घनत् । अथ । एनम् । मे । पुनः । ददत् ॥ १० ॥

**वेङ्कट०** निगदसिद्धा ॥ १० ॥

नू ष्टुत इन्द्र नू गृणान इषं जरित्रे नद्यो३ न पीपेः ।
अकारि ते हरिवो ब्रह्म नव्यं धिया स्याम रथ्यः सदासाः ॥ ११ ॥

नु । स्तुतः । इन्द्र । नु । गृणानः । इषम् । जरित्रे । नद्यः । न । पीपेरिति पीपेः ।
अकारि । ते । हरिऽवः । ब्रह्म । नव्यम् । धिया । स्याम । रथ्यः । सदाऽसाः ॥ ११ ॥

**वेङ्कट०** ऋ ४,१६,२१ द्र. ॥ ११ ॥

[1]इति तृतीयाष्टके षष्ठाध्याये द्वादशो वर्गः[1] ॥

## [ २५ ]

[1]वामदेवो गौतम ऋषिः । इन्द्रो देवता । त्रिष्टुप् छन्दः[1] ।

को अद्य नर्यो देवकाम उशन्निन्द्रस्य सख्यं जुजोष ।
को वा महेऽवसे पार्याय समिद्धे अग्नौ सुतसोम ईट्टे ॥ १ ॥

कः । अद्य । नर्यः । देवऽकामः । उशन् । इन्द्रस्य । सख्यम् । जुजोष ।
कः । वा । महे । अवसे । पार्याय । सम्ऽइद्धे । अग्नौ । सुतऽसोमः । ईट्टे ॥ १ ॥

---

१-१. नास्ति मूको.

वेङ्कट० कः अद्य नरहितः देवान् कामयमानः इन्द्रस्य सख्यम् प्रेप्सन् सेवते । कः वा महते रक्षणाय[1] पारयितुं समर्थाय समिद्धे अग्नौ सुतसोमः सन् इन्द्र स्तौति ॥ १ ॥

को नानाम वचसा सोम्याय मनायुर्वा भवति वस्त उस्राः ।
क इन्द्रस्य युज्यं कः सखित्वं को भ्रात्रं वष्टि कवये क ऊती ॥ २ ॥

कः । ननाम । वचसा । सोम्याय । मनायुः । वा । भवति । वस्ते । उस्राः ।
कः । इन्द्रस्य । युज्यम् । कः । सखिऽत्वम् । कः । भ्रात्रम् । वष्टि । कवये । कः । ऊती ॥२॥

वेङ्कट० कः नमनं करोति स्तुत्या सोमार्हाय । कः वा मनायुः भवति । स [2]पशूनपि वस्ते[2] दीप्तीर्वा[3] आच्छादयति । कः इन्द्रसम्बन्धार्हताम्, कः वा सखित्वम् भ्रातृत्वं वा कामयते कवेरिन्द्रस्य, कः [4]वा अवनम् इति[4] ॥ २ ॥

को देवानामवो अद्या वृणीते क आदित्याँ अदितिं ज्योतिरीट्टे ।
कस्याश्विनाविन्द्रो अग्निः सुतस्यांशोः पिबन्ति मनसाविवेनम् ॥ ३ ॥

कः । देवानाम् । अवः । अद्य । वृणीते । कः । आदित्यान् । अदितिम् । ज्योतिः । ईट्टे ।
कस्य । अश्विनौ । इन्द्रः । अग्निः । सुतस्य । अंशोः । पिबन्ति । मनसा । अविऽवेनम् ॥३॥

वेङ्कट० कः देवानाम् रक्षणम् अद्य प्रार्थयते । कः वा आदित्यान् अदितिम् च[5] परम् ज्योतिः[6] स्तौति । कस्य वा सम्बन्धिनः सुतस्य अश्विनौ इन्द्रः अग्निः[7] च अंशोः पिबन्ति मनसा अविगतकामं यथा तथा[8] ॥ ३ ॥

तस्मा अग्निर्भारतः शर्म यंसज्ज्योक् पश्यात् सूर्यमुच्चरन्तम् ।
य इन्द्राय सुनवामेत्याह नरे नर्याय नृतमाय नृणाम् ॥ ४ ॥

तस्मै । अग्निः । भारतः । शर्म । यंसत् । ज्योक् । पश्यात् । सूर्यम् । उत्ऽचरन्तम् ।
यः । इन्द्राय । सुनवाम । इति । आह । नरे । नर्याय । नृऽतमाय । नृणाम् ॥ ४ ॥

वेङ्कट० तस्मै[9] अग्निः हविषो वोढा सुखं प्रयच्छति, तथा[8] स एव दीर्घं पश्यति सूर्यम् च उच्चरन्तम्, यः इन्द्राय सुनवाम इति आह नेत्रे नृहिताय नृणाम् अतिशयेन नेत्रे ॥ ४ ॥

न तं जिनन्ति बहवो न दभ्रा उर्वस्मा अदितिः शर्म यंसत् ।
प्रियः सुकृत् प्रिय इन्द्रे मनायुः प्रियः सुप्रावीः प्रियो अस्य सोमी ॥ ५ ॥

---

१. रणाय वि[1] लपं. २-२. °नधि (°पि वि[1].)वस्तेति वि[1,2] अ[1]. ३. °प्तिर्वा मूको. ४-४. वामिति मूको; अवम्, वासम् वा ल प्रस्तावः. ५. नास्ति वि[1] लपं. ६. नास्ति मूको. ७. वह्निः वि[1] लपं. ८. यथा वि[1] लपं. ९. अस्मै मूको.

न । तम् । जिनन्ति । बहवः । न । दभ्राः । उरु । अस्मै । अदितिः । शर्म । यंसत् ।
प्रियः । सुऽकृत् । प्रियः । इन्द्रे । मनायुः । प्रियः । सुप्रऽअवीः । प्रियः । अस्य । सोमी ॥५॥

वेङ्कट० [1]'न तम्'[1] हिंसन्ति बहवः, न अपि अल्पाः। तथा अस्मै बहु अदितिः शर्म यच्छति। प्रियः सुष्ठु कर्मणां[2] कर्ता भवति। प्रियः इन्द्रे मनायुः। प्रियः सुष्ठु प्रकर्षेण रक्ष्यमाणः। प्रियः अस्य[3] सोमवान् ॥ ५ ॥

[4]इति तृतीयाष्टके षष्ठाध्याये त्रयोदशो वर्गः[4] ॥

सुप्राव्यः प्राशुषाळेष वीरः सुष्वेः पक्तिं कृणुते केवलेन्द्रः ।
नासुष्वेरापिर्न सखा न जामिर्दुष्प्राव्योऽवहन्तेदवाचः ॥ ६ ॥

सुप्रऽअव्यः । प्राशुषाट् । एषः । वीरः । सुस्वेः । पक्तिम् । कृणुते । केवला । इन्द्रः ।
न । असुस्वेः । आपिः । न । सखा । न । जामिः । दुःप्रऽअव्यः । अवऽहन्ता । इत् । अवाचः ॥

वेङ्कट० सुष्ठु प्रकर्षेण रक्षणीयो भवति प्राशूनां[5] योद्धृणामभिभविता। एषः वीरः सोमं सुतवतो यजमानस्य चरुपुरोडाशादीनामेव केवलम् पक्तिम्[6] कुरुते[7] स्वीकुरुते। न असुष्वेः आपिः, न च सखा, न अपि जामिः। दुःखेन प्रतर्पणीयः अवहन्ता एव भवति अवाचीनस्य पराङ्मुखस्य ॥ ६ ॥

न रेवता पणिना सख्यमिन्द्रोऽसुन्वता सुतपाः सं गृणीते ।
आस्य वेदः खिदति हन्ति नग्नं वि सुष्वये पक्तये केवलो भूत् ॥ ७ ॥

न । रेवता । पणिना । सख्यम् । इन्द्रः । असुन्वता । सुतऽपाः । सम् । गृणीते ।
आ । अस्य । वेदः । खिदति । हन्ति । नग्नम् । वि । सुस्वये । पक्तये । केवलः । भूत् ॥ ७ ॥

वेङ्कट० न[8] धनवताऽपि पणिना सख्यम् इन्द्रः करोति। असुन्वता [9]'सुतपाः न'[9] सम्यक् सङ्गच्छते। अस्य धनम् आ अखिदत्। अनन्तरञ्च नग्नम् अधनं तम् हन्ति। वि भवति चेन्द्रः सुष्वये सोमस्य पक्त्रे चरुपुरोडाशस्य असाधारणः ॥ ७ ॥

इन्द्रं परेऽवरे मध्यमास इन्द्रं यान्तोऽवसितास इन्द्रम् ।
इन्द्रं क्षियन्त उत युध्यमाना इन्द्रं नरो वाजयन्तो हवन्ते ॥ ८ ॥

इन्द्रम् । परे । अवरे । मध्यमासः । इन्द्रम् । यान्तः । अवऽसितासः । इन्द्रम् ।
इन्द्रम् । क्षियन्तः । उत । युध्यमानाः । इन्द्रम् । नरः । वाजऽयन्तः । हवन्ते ॥ ८ ॥

---

१-१. नास्ति लपं. २. 'मैगः वि' लपं. ३. भस्तु मूको. ४-४. नास्ति मूको. ५. प्रांशू वि' अ'. ६. पङ्क्तिम् मूको. ७. नास्ति वि'. ८. नास्ति वि' लपं. ९-९. 'पाना वि' लपं; 'पानः क प्रस्तावः.

**वेङ्कट०** इन्द्रम् एव परे अवरे[1] मध्यमाश्च हवन्ते। इन्द्रम् एव गच्छन्तः[2], तथा युद्धभूमौ अवसिताः, ततस्तत्र निवसन्तश्च, अनन्तरमेव युध्यमानाः च। इन्द्रम् एव नरः वाजं कुर्वाणाः ॥ ८ ॥

[3]इति तृतीयाष्टके षष्ठाध्याये चतुर्दशो वर्गः[3] ॥

## [ २६ ]

[1]वामदेवो गौतम ऋषिः, आद्यानां तिसृणाम् इन्द्रो वा। आद्यानां तिसृणाम् इन्द्रः आत्मा वा देवता, शिष्टानां श्येनः। त्रिष्टुप् छन्दः[1]।

**अहं मनुरभवं सूर्यश्चाहं कक्षीवाँ ऋषिरस्मि विप्रः ।**
**अहं कुत्समार्जुनेयं न्यृञ्जेऽहं कविरुशना पश्यता मा ॥ १ ॥**

अहम्। मनुः। अभवम्। सूर्यः। च। अहम्। कक्षीवान्। ऋषिः। अस्मि। विप्रः।
अहम। कुत्सम्। आर्जुनेयम्। नि। ऋञ्जे। अहम। कविः। उशना। पश्यत। मा ॥ १ ॥

**वेङ्कट०** अहम् एव मन्वादिः अभवम्। अहम् अर्जुनीपुत्रम् कुत्सम् स्वकार्यसमर्थं करोमि। अहम् एव कविः उशना। माम् पश्यत इतीन्द्रस्य वामदेवस्य वा वचनम् ॥ १ ॥

**अहं भूमिमददामार्यायाहं वृष्टिं दाशुषे मर्त्याय ।**
**अहमपो अनयं वावशाना मम देवासो अनु केतमायन् ॥ २ ॥**

अहम्। भूमिम्। अददाम्। आर्याय। अहम्। वृष्टिम्। दाशुषे। मर्त्याय।
अहम्। अपः। अनयम्। वावशानाः। मम। देवासः। अनु। केतम्। आयन् ॥ २ ॥

**वेङ्कट०** अहम्[4] पण्डिताय[5] भूमिम् ददामि। अहम् एव प्रयच्छते मर्त्याय वृष्टिम्। अहम् एव अपः अनयम् भुवं प्रति कामयमानाः। मम आज्ञाम् देवाः अनु गच्छन्ति ॥ २ ॥

**अहं पुरो मन्दसानो व्यैरं नव साकं नवतीः शम्बरस्य ।**
**शततमं वेश्यं सर्वताता दिवोदासमतिथिग्वं यदावम् ॥ ३ ॥**

अहम्। पुरः। मन्दसानः। वि। ऐरम्। नव। साकम्। नवतीः। शम्बरस्य।
शतऽतमम्। वेश्यम्। सर्वऽताता। दिवःऽदासम्। अतिथिग्वम्। यत्। आवम् ॥ ३ ॥

**वेङ्कट०** अहम् पुरः मोदमानः विविधमितस्ततः प्रेरितवान् नव[6] नवतीः च[7] शम्बरस्य। अथ तत्र यच्छतस्य पूरणं नगरं सर्वैराश्चर्यैस्ततम् तत् वेश्यम् प्रवेश्यम् अभवत् मम। कदा। यदा दिवोदासनामानम् ऋषिम् अतिथीन् प्रति गन्तारम् अहम् अरक्षम् ॥ ३ ॥

---

१. नास्ति वि[1] लपं; अपरे मूको. २. °च्छन् मूको. ३-३. नास्ति मूको. ४. नास्ति वि[2] अ[1]. ५. पीडिताय ल. ६. नास्ति वि[2] अ[2]. ७. ...तिश्च अ[2].

प्र सु ष विभ्यो मरुतो विरस्तु प्र श्येनः श्येनेभ्य आशुपत्वा ।
अचक्रया यत् स्वधया सुपर्णो हव्यं भरन्मनवे देवजुष्टम् ॥ ४ ॥

प्र । सु । सः । विऽभ्यः । मरुतः । विः । अस्तु । प्र । श्येनः । श्येनेभ्यः । आशुऽपत्वा ।
अचक्रया । यत् । स्वधया । सुऽपर्णः । हव्यम् । भरत् । मनवे । देवऽजुष्टम् ॥ ४ ॥

**वेङ्कट०** शौनकः—'प्र सु ष[1] विभ्यो नवभिर्ऋग्भिः श्येनस्य[2] संस्तवः[3]' ( बृदे ४,१३६ ) इति । सः श्येनः विभ्यः गन्तृभ्योऽपि सुष्ठु हे मरुतः ! प्रगन्ता भवतु, श्येनेभ्यः अपि आशुपतन श्येनः[4] । चक्ररहितेन अन्नप्रभवेन बलेन यत् सुपर्णः[5] देवैः सेवितं सोमं मनुष्याय आजहार ॥ ४ ॥

भरद् यदि विरतो वेविजानः पथोरुणा मनोजवा असर्जि ।
तूयं ययौ मधुना सोम्येनोत श्रवो विविदे श्येनो अत्र ॥ ५ ॥

भरत् । यदि । विः । अतः । वेविजानः । पथा । उरुणा । मनःऽजवाः । असर्जि ।
तूयम् । ययौ । मधुना । सोम्येन । उत । श्रवः । विविदे । श्येनः । अत्र ॥ ५ ॥

**वेङ्कट०** भरति यदि पक्षी स्वर्गात् चलन्, पथा विस्तीर्णेन मनोवेगः सृष्टोऽभवत् उद्युक्तोऽभवत् । क्षिप्रम् अगच्छत् सोममयेन मधुना सह, अन्नम् अपि लेभे श्येनः स्वर्गे ॥ ५ ॥

ऋजीपी श्येनो ददमानो अंशुं परावतः शकुनो मन्द्रं मदम् ।
सोमं भरद् दादृहाणो देववान् दिवो अमुष्मादुत्तरादादाय ॥ ६ ॥

ऋजीपी । श्येनः । ददमानः । अंशुम् । पराऽवतः । शकुनः । मन्द्रम् । मदम् ।
सोमम् । भरत् । दादृहाणः । देवऽवान् । दिवः । अमुष्मात् । उत्ऽतरात् । आऽदाय ॥ ६ ॥

**वेङ्कट०** ऋजुगामी श्येनः धारयन् अंशुं परावतः शकुनशीलः मदकरम् मदम् सोमम् दिव आहृतवान् सोमपालान् पीडयन् देवैस्तद्वान् दिवः अमुष्मात् उद्गततरात् आदाय ॥ ६ ॥

आदाय श्येनो अभरत् सोमं सहस्रं सवाँ अयुतं च साकम् ।
अत्रा पुरंधिरजहादरातीर्मदे सोमस्य मूरा अमूरः ॥ ७ ॥

आऽदाय । श्येनः । अभरत् । सोमम् । सहस्रम् । सवान् । अयुतम् । च । साकम् ।
अत्र । पुरम्ऽधिः । अजहात् । अरातीः । मदे । सोमस्य । मूराः । अमूरः ॥ ७ ॥

---

१. नास्ति वि[2] अ[1]. २. °नश्च मूको. ३. °स्कृतः वि[2] अ[1]; संग्तुतः वि[1] ल लपं. ४. सौ वि[1] अ[1]; सेना वि[1] ल लपं. ५. सुब° लपं.

**वेङ्कट०** आदाय[1] श्येनः [2]आजभार सोमम्[2] सहस्रम् अयुतम् च सह[3] सोमयागान्। अत्र बहुप्रज्ञः[4] शत्रून् अत्यजत् सोममदे [5]मूढान् अमूढः[5] ॥ ७ ॥

[6]इति तृतीयाष्टके षष्ठाध्याये पञ्चदशो वर्गः[6] ॥

## [ २७ ]

[1]वामदेवो गौतम ऋषिः। इन्द्रो देवता। त्रिष्टुप् छन्दः[1]।

**गर्भे॒ नु सन्नन्वे॑षामवेदम॒हं दे॒वानां॒ जनि॑मानि॒ विश्वा॑ ।**
**श॒तं मा॒ पुर॒ आय॑सीररक्ष॒न्नध॑ श्ये॒नो ज॒वसा॒ निर॑दीयम् ॥ १ ॥**

गर्भे॑ । नु । सन् । अनु॑ । ए॒षाम् । अ॒वे॒द॒म् । अ॒हम् । दे॒वाना॑म् । जनि॑मानि । विश्वा॑ ।
श॒तम् । मा॒ । पुरः॑ । आय॑सीः । अ॒र॒क्ष॒न् । अध॑ । श्ये॒नः । ज॒वसा॑ । निः । अ॒दी॒य॒म् ॥ १ ॥

**वेङ्कट०** गर्भे एव सन् अहम् एषाम् देवानाम् दिवि स्थितानां सर्वाणि जन्मानि अनुक्रमेण ज्ञातवानस्मि। शतम् मा पुरः अयसा निर्मिताः सोममाजिहीर्षन्तम् अरक्षन्। अथ अहं जवेन[7] प्रविश्य सोममादाय निर्गतोऽस्मि ॥ १ ॥

**न घा॒ स मामप॒ जोषं॑ जभारा॒भीमा॑स॒ त्वक्ष॑सा वी॒र्ये॑ण ।**
**ई॒र्मा पुर॑न्धिरजहा॒दरा॑तीरु॒त वाताँ॑ अतर॒च्छूशु॑वानः ॥ २ ॥**

न । घ॒ । सः । माम् । अप॑ । जोष॑म् । ज॒भा॒र॒ । अ॒भि । ई॒म् । आ॒स॒ । त्वक्ष॑सा । वी॒र्ये॑ण ।
ई॒र्मा । पुर॑म्ऽधिः । अ॒ज॒हा॒त् । अरा॑तीः । उ॒त । वाता॑न् । अ॒त॒र॒त् । शूशु॑वानः ॥ २ ॥

**वेङ्कट०** न एव खलु सः सोमरक्षी सेवमानं मां बलेन अपहृतवान्। अहं[3] पुनरेव अभ्यभवं तनूकर्तृणा बलेन। परोक्षः[8] शेषः। ईरणकुशलः बहुप्रज्ञः शत्रुसेनास्ताः अत्यक्रामत्। अपि च आगतान् सोमपालान् अतरत् दीप्यमानः ॥ २ ॥

**अ॒व॒ यच्छ्ये॒नो अस्व॑नी॒दध॒ द्योर्वि यद्य॒दि वात॑ ऊ॒हुः पुर॑न्धिम् ।**
**सृ॒जद्य॒द॑स्मा॒ अव॑ ह क्षि॒पज्ज्यां कृ॒शानु॒रस्ता॒ मन॑सा भु॒रण्यन् ॥ ३ ॥**

अव॑ । यत् । श्ये॒नः । अस्व॑नीत् । अध॑ । द्योः । वि । यत् । यदि॑ । वा॒ । अतः॑ । ऊ॒हुः । पुर॑म्ऽधिम् ।
सृ॒जत् । यत् । अ॒स्मै॒ । अव॑ । ह॒ । क्षि॒पत् । ज्याम् । कृ॒शानुः॑ । अस्ता॑ । मन॑सा । भु॒र॒ण्यन् ॥३॥

---

१. नास्ति लपं. २. °र द्यावापृथिव्योरन्तः पपात पतनशीलस्य सोमं लपं. ३. नास्ति वि[1] लपं.
४. °प्रज्ञा वि[1] लपं. ५-५. मूढाः। नमू° ल ६-६. नास्ति मूको. ७. बलेन वि[1?2] अ[1]. ८. °क्ष वि[1] अ[1] लपं; °क्षा वि[2]; °क्षं ल.

वेङ्कट० अनन्तरं दीप्यमानः श्येनः यदा अव अरवनीत्, यदा वा[1] अस्मात् सोमस्थानात् पुरन्धिम् श्येनं विविधमपनीतवन्तः सोमपालाः, यदा वा अस्मै कृशानुः इषुम् अत्र असृजत् ज्याम् विक्षिपन्। नुमभावश्छान्दसः। कृशानुः वेद्धा मनसा तुल्यवेगं[2] गच्छन् भरमाणो वेषुम्[3] ॥ ३ ॥

ऋजिप्य ईमिन्द्रावतो न भुज्युं श्येनो जभार बृहतो अधि ष्णोः।
अन्तः पतत् पतत्र्यस्य पर्णमध यामनि प्रसितस्य तद् वेः ॥ ४ ॥

ऋजिप्यः। ईम्। इन्द्रऽवतः। न। भुज्युम्। श्येनः। जभार। बृहतः। अधि। स्नोः।
अन्तरिति। पतत्। पतत्रि। अस्य। पर्णम्। अध। यामनि। प्रऽसितस्य। तत्। वेरिति वेः ॥४॥

वेङ्कट० ऋजुगामी श्येनः सोमम् इन्द्रवतः[4] यजमानस्य भोजनम् बृहतः सानोः अधि आजभार। द्यावापृथिव्योः अन्तः पपात पतनशीलम् अस्य पर्णम्[5] तदानीं गमने[6] प्रसक्तस्य पक्षिणः ॥ ४ ॥

अध श्वेतं कलशं गोभिरक्तमापिप्यानं मघवा शुक्रमन्धः।
अध्वर्युभिः प्रयतं मध्वो अग्रमिन्द्रो मदाय प्रति धत् पिबध्यै शूरो मदाय प्रति धत् पिबध्यै ।५।

अध। श्वेतम्। कलशम्। गोभिः। अक्तम्। आऽपिप्यानम्। मघऽवा। शुक्रम्। अन्धः।
अध्वर्युऽभिः। प्रऽयतम्। मध्वः। अग्रम्। इन्द्रः। मदाय। प्रति। धत्। पिबध्यै। शूरः। मदाय। प्रति।
धत्। पिबध्यै ॥ ५ ॥

वेङ्कट० अथ सोमाक्तम् श्वेतम् कलशम् गोविकारैर्दध्यादिभिः अक्तम् उपर्युपरि वर्धमानम् मघवा निर्मलम् मदनीयम् अध्वर्युभिः प्रयतम् मधुरस्य[7] अग्रभूतम् इन्द्रः मदाय पातुं ओष्ठयोः प्रति अदधात् शूरः ॥ ५ ॥

[8]इति तृतीयाष्टके षष्ठाध्याये षोडशो वर्गः[8] ॥

## [ २८ ]

[8]वामदेवो गौतम ऋषिः। इन्द्रो देवता। त्रिष्टुप् छन्दः[8]।

त्वा युजा तव तत् सोम सख्य इन्द्रो अपो मनवे सस्रुतस्कः।
अहन्नहिमरिणात् सप्त सिन्धूनपावृणोदपिहितेव खानि ॥ १ ॥

त्वा। युजा। तव। तत्। सोम। सख्ये। इन्द्रः। अपः। मनवे। सऽस्रुतः। करिति कः।
अहन्। अहिम्। अरिणात्। सप्त। सिन्धून्। अप। अवृणोत्। अपिहिताऽइव। खानि ॥१॥

वेङ्कट० त्वया सहायेन तव सख्ये सोम! तदानीम् इन्द्रः अपः[9] मनुष्याय सस्यन्दनाः[9] अकरोत्।

---

१. नास्ति वि[1]. २. °ल्यं वे° वि[1] लपं. ३. वेषम् मूको. ४. इन्द्रावतश्च वि[2] अ[1]. ५ वर्णं मूको. ६ नास्ति वि[2] लपं. ७. °धुरत° वि[2] अ[1] ल; मेधरस्य लपं. ८-८. नास्ति मूको. ९ °न्दाः ल.

अहन् अहिम्, अगमयच्च सप्त नदीः, अप अवृणोत् अपिहितानीव द्वाराणि नदीनां निःसरणमार्गान् ॥ १ ॥

त्वा युजा नि खिदत् सूर्यस्येन्द्रश्चक्रं सहसा सद्य इन्दो।
अधि ष्णुना बृहता वर्तमानं महो द्रुहो अप विश्वायु धायि ॥ २ ॥

त्वा । युजा । नि । खिदत् । सूर्यस्य । इन्द्रः । चक्रम् । सहसा । सद्यः । इन्दो इति ।
अधि । स्नुना । बृहता । वर्तमानम् । महः । द्रुहः । अप । विश्वऽआयु । धायि ॥ २ ॥

वेङ्कट० त्वया सहायेन प्रावृहत् इन्द्रः सूर्यस्य चक्रम् बलेन सद्यः एव हे सोम!। तत्[1] महता समुच्छ्रितेन पर्वतेन[2] गच्छत्[3] सर्वगं महतः द्रोग्धुः सूर्यात् अधि इन्द्रेण [4]अप अधायि[4] ॥ २ ॥

अहन्निन्द्रो अदहदग्निरिन्दो पुरा दस्यून् मध्यंदिनादभीके।
दुर्गे दुरोणे क्रत्वा न यातां पुरू सहस्रा शर्वा नि बर्हीत् ॥ ३ ॥

अहन् । इन्द्रः । अदहत् । अग्निः । इन्दो इति । पुरा । दस्यून् । मध्यंदिनात् । अभीके ।
दुःऽगे । दुरोणे । क्रत्वा । न । याताम् । पुरु । सहस्रा । शर्वा । नि । बर्हीत् ॥ ३ ॥

वेङ्कट० तदानीम् इन्द्रः दस्यून् अहन्, अग्निः[5] च तान् अदहत् हे सोम! मध्यंदिनात् प्रागेव सङ्ग्रामे। दुर्गे देशे पर्वतादौ कार्यार्थम् इव गच्छतां पथिकानां[1] पुरूणि सहस्राण्यसुराणां सार्थवत् सङ्गतानि हिंसक इन्द्रः नि बर्हीत् ॥ ३ ॥

विश्वस्मात् सीमधमाँ इन्द्र दस्यून् विशो दासीरकृणोरप्रशस्ताः।
अबाधेथाममृणतं नि शत्रूनविन्देथामपचितिं वधत्रैः ॥ ४ ॥

विश्वस्मात् । सीम् । अधमान् । इन्द्र । दस्यून् । विशः । दासीः । अकृणोः । अप्रऽशस्ताः ।
अबाधेथाम् । अमृणतम् । नि । शत्रून् । अविन्देथाम् । अपऽचितिम् । वधत्रैः ॥ ४ ॥

वेङ्कट० सर्वस्मात् लोकात् अधमान्[6] इन्द्र! सर्वान् दस्यून् अकृणोः, तथा उपक्षपयित्रीश्च विशः अधनाः कृतवान्। त्वं च सोमश्च शत्रून्[7] नितरां बाधितवन्तौ मारितवन्तौ च, अलभेथाम् च पूजाम् शत्रूणां वधैः ॥ ४ ॥

एवा सत्यं मघवाना युवं तदिन्द्रश्च सोमोर्वमश्व्यं गोः।
आदर्दृतमपिहितान्यश्ना रिरिचथुः क्षाश्चित्ततृदाना ॥ ५ ॥

---

१. नास्ति मूको. २. नास्ति वि[२] लपं. ३. °च्छन् ल. ४-४. अवाधायि वि[२] अ[१]. ५. °ग्निम् मूको. ६. अस्मान् वि[२] लपं. ७. शत्रुम् वि[२] अ[१].

एव । सत्यम् । मघऽवाना । युवम् । तत् । इन्द्रः । च । सोम । ऊर्वम् । अश्व्यम् । गोः ।
आ । अदर्दृतम् । अपिऽहितानि । अश्ना । रिरिचथुः । क्षाः । चित् । ततृदाना ॥ ५ ॥

वेङ्कट० एवम् सत्यम् धनवन्तौ! युवां तत् इदम् कृतवन्तौ इन्द्रः च सोम! [1]त्वं च[1] गोः अपि अश्वसङ्घम् गन्तारम्, आ अर्दर्दतम् च अपिहितद्वारान् मेघान्। तदानीं सर्वां[2] पृथिवीं [3]महत्तया रिरिचथुः[3] मेघान् विध्यन्तौ ॥ ५ ॥

[1]इति तृतीयाष्टके षष्ठाध्याये सप्तदशो वर्गः[1] ॥

## [ २९ ]

[1]वामदेवो गौतम ऋषिः। इन्द्रो देवता। त्रिष्टुप् छन्दः[1]।

आ नः स्तुत उप वाजेभिरूती इन्द्र याहि हरिभिर्मन्दसानः।
तिरश्चिदर्यः सवना पुरूण्याङ्गूषेभिर्गृणानः सत्यराधाः ॥ १ ॥

आ । नः । स्तुतः । उप । वाजेभिः । ऊती । इन्द्र । याहि । हरिऽभिः । मन्दसानः ।
तिरः । चित् । अर्यः । सवना । पुरूणि । आङ्गूषेभिः । गृणानः । सत्यऽराधाः ॥ १ ॥

वेङ्कट० [4]उप आयाहि[4] अश्वैः मोदमानः स्तुतः अस्माकम् अन्नैः सह रक्षणार्थम्, तिरः इति प्राप्तकालनाम[5] (तु या ३,२०), प्राप्तकालानि सवनानि सर्वाणि स्वामी स्तोमैः स्तूयमानः सत्यधनः ॥ १ ॥

आ हि ष्मा याति नर्यश्चिकित्वान् हूयमानः सोतृभिरुप यज्ञम् ।
स्वश्वो यो अभीरुर्मन्यमानः सुष्वाणेभिर्मदति सं ह वीरैः ॥ २ ॥

आ । हि । स्म । याति । नर्यः । चिकित्वान् । हूयमानः । सोतृऽभिः । उप । यज्ञम् ।
सुऽअश्वः । यः । अभीरुः । मन्यमानः । सुस्वानेभिः । मदति । सम् । ह । वीरैः ॥ २ ॥

वेङ्कट० आ हि स्म गच्छति नृहितः प्राज्ञः सोतृभिः[6] हूयमानः यज्ञम् उप। स्वश्वः यः निर्भयः मन्यमानः सोमसुद्भिः वीरैः सह मदति ॥ २ ॥

श्रावयेदस्य कर्णा वाजयध्यै जुष्टामनु प्र दिशं मन्दयध्यै ।
उद्वावृषाणो राधसे तुविष्मान् करन्न इन्द्रः सुतीर्थाभयं च ॥ ३ ॥

श्रवय । इत् । अस्य । कर्णा । वाजयध्यै । जुष्टाम् । अनु । प्र । दिशम् । मन्दयध्यै ।
उत्ऽववृषाणः । राधसे । तुविष्मान् । करत् । नः । इन्द्रः । सुऽतीर्था । अभयम् । च ॥ ३ ॥

---

१-१. नास्ति मूको. २. सर्वाः वि[२] अ[१]. ३-३. °भातिरिरिचतुः वि[२] अ[१]; °चतुः ल. ४-४. °पयाहि वि[१] लर्ब. ५. °सनाम वि[२] अ[१]. ६. सात्[°] वि[१] कपं; स्तोतृ° वि[२] अ[१] क.

**वेङ्कट०** श्रावय एव इन्द्रस्य कर्णौ बलिनं कर्तुम् । हे स्तोतः! त्वया सेविताम् दिशम् मादयितुं प्रकर्षेण अनु श्रावय। सोऽयम् उद्गातृत्राणः अन्नाय बलवान् करोतु अस्मान् इन्द्रः शोभनस्थानान्, अभयम् च करोतु ॥ ३ ॥

अच्छा यो गन्ता नाधमानमूती इत्था विप्रं हवमानं गृणन्तम् ।
उप त्मनि दधानो धुर्या३शून्त्सहस्राणि शतानि वज्रबाहुः ॥ ४ ॥

अच्छ । यः । गन्ता । नाधमानम् । ऊती । इत्था । विप्रम् । हवमानम् । गृणन्तम् ।
उप । त्मनि । दधानः । धुरि । आशून् । सहस्राणि । शतानि । वज्रऽबाहुः ॥ ४ ॥

**वेङ्कट०** अभि गन्ता यः याचमानं रक्षणार्थम् इत्थं मेधाविनं ह्वयन्तं स्तुवन्तं च। उप नयति आत्मनि स्वरथधुरि अश्वान् नियुञ्जन्[1] धनानाम् सहस्राणि शतानि च वज्रबाहुः[2] ॥ ४ ॥

त्वोतासो मघवन्निन्द्र विप्रा वयं ते स्याम सूरयो गृणन्तः ।
भेजानासो बृहद्दिवस्य राय आकाय्यस्य दावने पुरुक्षोः ॥ ५ ॥

त्वाऽऊतासः । मघऽवन् । इन्द्र । विप्राः । वयम् । ते । स्याम । सूरयः । गृणन्तः ।
भेजानासः । बृहत्ऽदिवस्य । रायः । आऽकाय्यस्य । दावने । पुरुऽक्षोः ॥ ५ ॥

**वेङ्कट०** त्वया रक्षिताः[3] हे मघवन् इन्द्र! विप्राः वयम् च त्वदीयाः स्याम प्राज्ञाः[4] स्तुवन्तः भजमानाः महादीप्तिम् धनम् सर्वतः शब्दनीयम् दानाय बहुभिः शब्दितम् ॥ ५ ॥

[5]इति तृतीयाष्टके षष्ठाध्याये अष्टादशो वर्गः[5] ॥

## [ ३० ]

[5]वामदेवो गौतम ऋषिः। इन्द्रो देवता, नवमीदशम्येकादशीनाम् इन्द्रोषसौ।
गायत्री छन्दः, अष्टमीचतुर्विंश्यौ त्रिष्टुभौ[5]।

नकिरिन्द्र त्वदुत्तरो न ज्यायाँ अस्ति वृत्रहन् । नकिरेवा यथा त्वम् ॥ १ ॥

नकिः । इन्द्र । त्वत् । उत्ऽतरः । न । ज्यायान् । अस्ति । वृत्रऽहन् । नकिः । एव । यथा । त्वम् ॥

**वेङ्कट०** न कश्चित् हे वृत्रहन्[6] इन्द्र! त्वत्तः उत्तरकालीनः विद्यते, न च पूर्वकालीनः[7] विद्यते, नापि समः ॥ १ ॥

सत्रा ते अनु कृष्टयो विश्वा चक्रेव वावृतुः । सत्रा महाँ असि श्रुतः ॥ २ ॥

---

१. °युज्य लपं. २. यज्ञबा° वि° लपं. ३. °ता च वि° लपं. ४. प्रज्ञाः लपं. ५-५. नास्ति मूको. ६. नास्ति मूको. ७. नास्ति वि° ल लपं; °लीनो विद्यते न च पूर्वकालीनः वि° अ°.

सत्रा । ते । अनु । कृष्टयः । विश्वा । चक्राऽइव । ववृतुः । सत्रा । महान् । असि । श्रुतः ॥ २ ॥

**वेङ्कट०** सत्यमेव तव प्रजाः विश्वानि च भूतानि अनुवर्तनं कुर्वन्ति चक्राणीव रथम्। सत्यमेव महान् असि विश्रुतः ॥ २ ॥

विश्वे चनेदना त्वा देवास इन्द्र युयुधुः । यदहा नक्तमातिरः ॥ ३ ॥

विश्वे । चन । इत् । अना । त्वा । देवासः । इन्द्र । युयुधुः । यत् । अहा । नक्तम् । आ । अतिरः ॥ ३ ॥

**वेङ्कट०** 'सर्वे हि एव[1] देवाः प्राणनेन[2] बलेन हे इन्द्र! त्वां योधयाञ्चक्रुः, यदा[3] त्वं सूर्यस्य चक्राहरणेन गमनं निरुन्धानः अहानि रात्रीः[4] च आ अतिरः विनाशितवानसि। [5]सूर्यानुदये ह्येकरूपं[5] भवति सर्वम्[6] ॥ ३ ॥

यत्रोत बाधितेभ्यश्चक्रं कुत्साय युध्यते । मुषाय इन्द्र सूर्यम् ॥ ४ ॥

यत्र । उत । बाधितेभ्यः । चक्रम् । कुत्साय । युध्यते । मुषायः । इन्द्र । सूर्यम् ॥ ४ ॥

**वेङ्कट०** यत्र बाधितेभ्यः कुत्ससैनिकेभ्यः कुत्साय च युध्यते रक्षणाय हे इन्द्र! सूर्यम् चक्रम् अमुष्णाः ॥४॥

यत्र देवाँ ऋघायतो विश्वाँ अयुध्य एक इत् । त्वमिन्द्र वनूँरहन् ॥ ५ ॥

यत्र । देवान् । ऋघायतः । विश्वान् । अयुध्यः । एकः । इत् । त्वम् । इन्द्र । वनून् । अहन् ॥ ५ ॥

**वेङ्कट०** यस्मिन् युद्धे देवान् बाधमानान् सर्वान् एकः एव अयुध्यः, त्वम् इन्द्र! यत्र हिंसितॄंश्च हतवानसि ॥ ५ ॥

[7]इति तृतीयाष्टके षष्ठाध्याये एकोनविंशो वर्गः[7] ॥

यत्रोत मर्त्याय कमरिणा इन्द्र सूर्यम् । प्रावः शचीभिरेतशम् ॥ ६ ॥

यत्र । उत । मर्त्याय । कम् । अरिणाः । इन्द्र । सूर्यम् । प्र । आवः । शचीभिः । एतशम् ॥६॥

**वेङ्कट०** हे इन्द्र! यस्मिन् अपि युद्धे मर्ताय सूर्यम् बाधितवानसि, यत्र च प्रकर्षेण[8] रक्षितवानसि कर्मभिः एतशम् ऋषिम्, तदानीं च युयुत्सुः ॥ ६ ॥

किमादुतासि वृत्रहन् मघवन् मन्युमत्तमः । अत्राह दानुमातिरः ॥ ७ ॥

किम् । आत् । उत । असि । वृत्रऽहन् । मघऽवन् । मन्युमत्ऽतमः । अत्र । अह । दानुम् । आ । अतिरः ॥

---

१-१. °वेंऽप्येवम् वि[1] अ[1]. २. °णेन लप. ३. यथा अ[1]. ४. °त्रि वि[1,2] अ[1] ल. ५-५. °येऽप्येक° वि[2]; °येऽप्येक° वि[1]. ६. सर्वत्र वि[1]. ७-७. नास्ति मूको. ८. नास्ति वि[1] लपं.

वेङ्कट० हे वृत्रहन् मघवन्! यदि त्वं मन्युमान् भवसि क्रुध्यसि, तदानीम् एव असुरं विनाशयसीति समुदायार्थः। किम् इति प्रश्नविशेषार्थः ॥ ७ ॥

एतद् घेदुत वीर्य१मिन्द्र चकर्थ पौंस्यम्। स्त्रियं यद् दुर्हणायुवं वधीर्दुहितरं दिवः ॥८॥

एतत्। घ। इत्। उत। वीर्यम्। इन्द्र। चकर्थ। पौंस्यम्।
स्त्रियम्। यत्। दुःऽहनायुवम्। वधीः। दुहितरम्। दिवः ॥ ८ ॥

वेङ्कट० एतत् खलु अपि च वीर्यम् इन्द्र! कृतवानसि पुंस्त्वावहम्, स्त्रियम् यत् त्वं दुर्हणं प्रजापतिमिच्छन्तीम् उषसम् अवधीः ॥ ८ ॥

दिवश्चिद् घा दुहितरं महान् महीयमानाम्। उषासमिन्द्र सं पिणक् ॥ ९ ॥

दिवः। चित्। घ। दुहितरम्। महान्। महीयमानाम। उषसम्। इन्द्र। सम्। पिणक् ॥ ९ ॥

वेङ्कट० दिवः खलु दुहितरम् महान् त्वम् महीयमानाम् जनैः उषसम् इन्द्र! सम् चूर्णितवानसि ॥ ९ ॥

अपोषा अनसः सरत् संपिष्टादह बिभ्युषी। नि यत् सीं शिश्नथद् वृषा ॥ १० ॥

अप। उषाः। अनसः। सरत्। सम्ऽपिष्टात्। अह। बिभ्युषी। नि। यत्। सीम्। शिश्नथत्। वृषा ॥१०॥

वेङ्कट० अप असरत् उषाः इन्द्रेण सम्पिष्टात्[1] शकटात् बिभ्युषी। यदा एनम्[2] इन्द्रः परिगृह्य नितराम् शिश्नथत् ॥ १० ॥

[3]इति तृतीयाष्टके षष्ठाध्याये विंशो वर्गः[3] ॥

एतदस्या अनः शये सुसंपिष्टं विपाश्या। ससार सीं परावतः ॥ ११ ॥

एतत्। अस्याः। अनः। शये। सुऽसंपिष्टम्। विऽपाशि। आ। ससार। सीम्। पराऽवतः ॥ ११ ॥

वेङ्कट० [4]एतत् अस्याः[4] विशीर्णम् अनः शेते सुष्ठु चूर्णितम् पाशिभिर्बन्धकैर्विरहितं च। तदिदं दूराद् देशात् प्रवणं प्रति आ ससार। सीम् इति पूरणम्। अत्र यास्कः—'अपासरदुषाः। अनसः सम्पिष्टान्मेघाद् बिभ्युषी। अनो वायुरनितेः। अपि वोपमार्थे स्यात्। अनस इव शकटादिव[5]। अनः शकटम्। आनद्धमस्मिंश्चीवरम्। अनितेर्वा स्यात् जीवनकर्मणः। उपजीवन्त्येनत्[6]। मेघोऽप्यन एतस्मादेव। यन्निरशिश्नथत्। वृषा वर्षिता मध्यमः। तस्या एषापरा भवति ×××। एतदस्या अन आशेते [7]सुसंपिष्टम्। इतरदिव[7]। विपाशि विमुक्तपाशि' ( या ११,४७-४८ ) इति ॥ ११ ॥

---

१. सम्पिष्ठा मूको. २. एनाम् वि[1] अ[1]. ३-३. नास्ति मूको. ४-४. एतस्याः वि[1] लपं. ५. °दिति मूको. ६. °नम् वि[1'2] अ[1] लपं. ७-७. °ष्टमिव मूको.

उत सिन्धुं विबाल्यं वितस्थानामधि क्षमि । परि ष्ठा इन्द्र मायया ॥ १२ ॥

उत । सिन्धुम् । विऽबाल्यम् । विऽतस्थानाम् । अधि । क्षमि । परि । स्थाः । इन्द्र । मायया ॥१२॥

**वेङ्कट०** अपि[1] च[2] सिन्धुं विबाल्यम् परुष्णीं[3] पृथिव्यां सर्वतः वितिष्ठमानां पारितवानसि[4] इन्द्र ! कर्मणा ॥ १२ ॥

उत शुष्णस्य धृष्णुया प्र मृक्षो अभि वेदनम् । पुरो यदस्य संपिणक् ॥ १३ ॥

उत । शुष्णस्य । धृष्णुऽया । प्र । मृक्षः । अभि । वेदनम् । पुरः । यत् । अस्य । सम्ऽपिणक् ॥१३॥

**वेङ्कट०** [5]अपि च[5] शुष्णस्य[6] धर्षणशीलं ज्ञानं प्रकर्षेणाभिभूतवानसि । [7]यत् अस्य[7] पुरः सम्चूर्णितवानसि ॥ १३ ॥

उत दासं कौलितरं बृहतः पर्वतादधि । अवाहन्निन्द्र शम्बरम् ॥ १४ ॥

उत । दासम् । कौलिऽतरम् । बृहतः । पर्वतात् । अधि । अव । अहन् । इन्द्र । शम्बरम् ॥ १४ ॥

**वेङ्कट०** अपि च दासम् अत्यन्तकुलीनम्[8] महतः पर्वतात् अधि अधः ततः अपनीतवानसि इन्द्र ! शम्बरम् ॥ १४ ॥

उत दासस्य वर्चिनः सहस्राणि शताऽवधीः । अधि पञ्च प्रधींरिव ॥ १५ ॥

उत । दासस्य । वर्चिनः । सहस्राणि । शता । अवधीः । अधि । पञ्च । प्रधीन्ऽइव ॥ १५ ॥

**वेङ्कट०** अपि च असुरस्य वर्चिनाम्नः[9] सहस्राणि शतानि चानुचरान् अवधीः पञ्च च प्रधीनिव परिगतान् ॥ १५ ॥

[10]इति तृतीयाष्टके षष्ठाध्याये एकविंशो वर्गः[10] ॥

उत त्यं पुत्रमग्रुवः परावृक्तं शतक्रतुः । उक्थेष्विन्द्र आभजत् ॥ १६ ॥

उत । त्यम् । पुत्रम् । अग्रुवः । पराऽवृक्तम् । शतऽक्रतुः । उक्थेषु । इन्द्रः । आ । अभजत् ॥ १६ ॥

**वेङ्कट०** अपि च तम् पुत्रम् अग्रुवः परावृक्तम् नाम शतक्रतुः इन्द्रः उक्थेषु आ अभजत् । परावृगेव परावृक्तः ॥ १६ ॥

उत त्या तुर्वशायदू अस्नातारा शचीपतिः । इन्द्रो विद्वाँ अपारयत् ॥ १७॥

---

१. नास्ति लपं. २. नास्ति वि[2]. ३. °ष्णियाम् वि[1] ल लपं; °ष्णीयाम् वि[2] अ[1]. ४. वारि° वि[2] अ[1]. ५-५. नास्ति वि[2] अ[1]. ६. नास्ति वि[2]. ७-७. यस्य वि[1]. ८. °न्तकलीलनम् वि[2] अ[1]; °कुलीलं वि[1] ल लपं. ९. चर्चिना° वि[1] लपं; पर्चिना° वि[2] अ[1] ल. १०-१०. नास्ति मूको.

उत । त्या । तुर्वशायदू इति । अस्नातारा । शचीऽइऽपतिः । इन्द्रः । विद्वान् । अपारयत ॥ १७ ॥

वेङ्कट० अपि च तौ तुर्वशं यदुं च अनभिषिक्तौ पितृशापात् शचीपतिः इन्द्रः जानन् अपारयत् कृतवान् राज्यार्हाविति ॥ १७ ॥

उत त्या सद्य आर्या सरयोरिन्द्र पारतः । अर्णाचित्ररथावधीः ॥ १८ ॥

उत । त्या । सद्यः । आर्या । सरयोः । इन्द्र । पारतः । अर्णाचित्ररथा । अवधीः ॥ १८ ॥

वेङ्कट० अपि च[1] तौ इन्द्र![2] सद्यः एव राजानौ सरयोः नद्याः पारे अर्णं चित्ररथं च हतवानसि ॥ १८ ॥

अनु द्वा जहिता नयोऽन्धं श्रोणं च वृत्रहन् । न तत् ते सुम्नमष्टवे ॥ १९ ॥

अनु । द्वा । जहिता । नयः । अन्धम् । श्रोणम् । च । वृत्रऽहन् । न । तत् । ते । सुम्नम् । अष्टवे ॥१९॥

वेङ्कट० [3]हे वृत्रहन्![3] [4]अनु अनयः[4] द्वौ वृद्धौ अन्धम् ऋज्राश्वम् श्रोणम् परावृजम् च । न तत् तव सुखम् अन्येनाप्तुं शक्यं देवेन स्तुतेन ॥ १९ ॥

शतमश्मन्मयीनां पुरामिन्द्रो व्यास्यत् । दिवोदासाय दाशुषे ॥ २० ॥

शतम् । अश्मन्ऽमयीनाम् । पुराम् । इन्द्रः । वि । आस्यत् । दिवःऽदासाय । दाशुषे ॥ २० ॥

वेङ्कट० शिलामयीनाम् पुराम् शतम् इन्द्रः व्यस्तवान् दिवोदासाय यजमानाय तत्प्रीतये[5] ॥ २० ॥

[3]इति तृतीयाष्टके षष्ठाध्याये द्वाविंशो वर्गः[3] ॥

अस्वापयद् दभीतये सहस्रा त्रिंशतं हथैः । दासानामिन्द्रो मायया ॥ २१ ॥

अस्वापयत् । दभीतये । सहस्रा । त्रिंशतम् । हथैः । दासानाम् । इन्द्रः । मायया ॥ २१ ॥

वेङ्कट० दभीतिप्रीतये असुराणाम् त्रिंशतम् सहस्राणि हननैः भूमावशाययत् इन्द्रः कर्मणा ॥ २१ ॥

स घेदुतासि वृत्रहन्त्समान इन्द्र गोपतिः । यस्ता विश्वानि चिच्युषे ॥ २२ ॥

सः । घ । इत् । उत । असि । वृत्रऽहन् । समानः । इन्द्र । गोऽपतिः । यः । ता । विश्वानि । चिच्युषे ॥२२॥

वेङ्कट० सः खलु असि वृत्रहन् इन्द्र! सर्वेषां साधारणः गोपतिः, यः त्वं तानि विश्वानि असुरपुराणि च्यावयसि ॥ २२ ॥

उत नूनं यदिन्द्रियं करिष्या इन्द्र पौंस्यम् । अद्या नकिष्टदा मिनत् ॥ २३ ॥

---

१. नास्ति वि[1] लपं. २. नास्ति मूको. ३-३. नास्ति मूको. ४-४. अन्वद्वयो मूको; अन्वनयद्वभौ ल प्रस्तावः. ५. तत्पीत° मूको.

उत । नूनम् । यत् । इन्द्रियम् । करिष्याः । इन्द्र । पौंस्यम् । अद्य । नकिः । तत् । आ । मिनत् ॥२३॥

**वेङ्कट०** अपि च पुरा यत् वीर्यं पुंस्त्वावहं कृतवानसि इन्द्र![1], तत् अद्य[2] न कश्चित् आ[1] हिनस्ति, इन्द्रसृष्टानि व्रतानि तथानुवर्तन्ते ॥ २३ ॥

वामंवामं त आदुरे देवो ददात्वर्यमा । वामं पूषा वामं भगो वामं देवः करूळती ॥२४॥

वामम्ऽवामम् । ते । आऽदुरे । देवः । ददातु । अर्यमा ।
वामम् । पूषा । वामम् । भगः । वामम् । देवः । करूळती ॥ २४ ॥

**वेङ्कट०** वननीयं[3] धनं तव आदरणे(?)[4] सति अर्यमादिः देवः अस्मभ्यम् ददातु । कृत्तदन्तः पूषा करूळती । पुनर्वचनं विशेषणसमर्पणायेति[5] ॥ २४ ॥

[6]इति तृतीयाष्टके षष्ठाध्याये त्रयोविंशो वर्गः[6] ।

## [ ३१ ]

[1]वामदेवो गौतम ऋषिः । इन्द्रो देवता । गायत्री छन्दः, तृतीया पादनिचृत्[1] ।

कया नश्चित्र आ भुवदूती सदावृधः सखा । कया शचिष्ठया वृता ॥ १ ॥

कया । नः । चित्रः । आ । भुवत् । ऊती । सदाऽवृधः । सखा । कया । शचिष्ठया । वृता ॥१॥

**वेङ्कट०** केन अस्मान् रक्षणेन पूजनीयः इन्द्रः आभिमुख्येन प्राप्नुयात् अस्माकं सदा वर्धयिता सखा, केन च अतिशयेन कर्मवता भजनेन ॥ १ ॥

कस्त्वा सत्यो मदानां मंहिष्ठो मत्सदन्धसः । दृळहा चिदारुजे वसु ॥ २ ॥

कः । त्वा । सत्यः । मदानाम् । मंहिष्ठः । मत्सत् । अन्धसः । दृळहा । चित् । आऽरुजे । वसु ॥२॥

**वेङ्कट०** कः त्वां मदहेतुभूतानां मध्ये सत्यभूतः अतिशयेन महान् मादयेत् । अन्नस्य सम्बन्धिनां दृढानि अपि धनानि स्तोतृभ्यो दानाय आरोक्तुं भङ्क्तुम् मत्सत् इति ॥ २ ॥

अभी षु णः सखीनामविता जरितॄणाम् । शतं भवास्यूतिभिः ॥ ३ ॥

अभि । सु । नः । सखीनाम् । अविता । जरितॄणाम् । शतम् । भवासि । ऊतिऽभिः ॥ ३ ॥

**वेङ्कट०** "अभि भवसि" सुष्ठु अस्माकं तव सखीनां रक्षकः स्तोतॄणां रक्षणप्रकारैः शत्रूणाम् शतम् ॥३॥

---

१. नास्ति मूको. २. अन्यः वि[2] अ[1]; अन्यः लपं. ३. वामं वन° अ[1]. ४. वैप १,६४८ j द्र. ५. विशेषण सं° वि[2] ल लपं; विशेषसम° वि[2] अ[1]. ६-६. नास्ति मूको. ७. आमिम° ल लपं.

अभी न आ ववृत्स्व चक्रं न वृत्तमर्वतः । नियुद्भिश्चर्षणीनाम् ॥ ४ ॥

अभि । नः । आ । ववृत्स्व । चक्रम् । न । वृत्तम् । अर्वतः । नियुत्ऽभिः । चर्षणीनाम् ॥ ४ ॥

**वेङ्कट०** अभि आ ववृत्स्व अस्मान् चक्रम् इव परिवृत्तम् अश्वान् मनुष्यान् प्रत्यागमनार्थैरश्वैः ॥ ४ ॥

प्रवता हि क्रतूनामा हा पदेव गच्छसि । अभक्षि सूर्ये सचा ॥ ५ ॥

प्रऽवता । हि । क्रतूनाम् । आ । ह । पदाऽइव । गच्छसि । अभक्षि । सूर्ये । सचा ॥ ५ ॥

**वेङ्कट०** आरम्भेण हि कर्मणाम्[1] आगच्छतीन्द्रः मार्गेणेव । सेव्यते सूर्ये उदिते सह प्रातः ॥ ५ ॥

[2]इति तृतीयाष्टके षष्ठाध्याये चतुर्विंशो वर्गः[2] ॥

सं यत् त इन्द्र मन्यवः सं चक्राणि दधन्विरे । अध त्वे अध सूर्ये ॥ ६ ॥

सम् । यत् । ते । इन्द्र । मन्यवः । सम् । चक्राणि । दधन्विरे । अध । त्वे इति । अध । सूर्ये ॥६॥

**वेङ्कट०** यत्[3] तव इन्द्र! क्रोधाः तेजः सन्दधिरे, यच्च बलानि, तत्त्वयि वा विद्यते सूर्ये वा ॥ ६ ॥

उत स्मा हि त्वामाहुरिन्मघवानं शचीपते । दातारमविदीधयुम् ॥ ७ ॥

उत । स्म । हि । त्वाम् । आहुः । इत् । मघऽवानम् । शचीऽपते । दातारम् । अविऽदीधयुम् ॥

**वेङ्कट०** अपि च स्म हि त्वाम् आहुः धनिनम् शचीपते! दातारम् दीप्यमानम् ॥ ७ ॥

उत स्मा सद्य इत् परि शशमानाय सुन्वते । पुरू चिन्मंहसे वसु ॥ ८ ॥

उत । स्म । सद्यः । इत् । परि । शशमानाय । सुन्वते । पुरु । चित् । मंहसे । वसु ॥ ८ ॥

**वेङ्कट०** अपि च स्म सद्यः एव[2] भजमानाय सुन्वते । बहु एव धनं प्रयच्छसि ॥ ८ ॥

नहि ष्मा ते शतं चन राधो वरन्त आमुरः । न च्यौत्नानि करिष्यतः ॥ ९ ॥

नहि । स्म । ते । शतम् । चन । राधः । वरन्ते । आऽमुरः । न । च्यौत्नानि । करिष्यतः ॥९॥

**वेङ्कट०** न खलु स्म तव धनं सर्वतो मूढाः शतम् अपि पुरुषाः वारयन्ति, न च बलानि करिष्यतः ॥ ९ ॥

अस्माँ अवन्तु ते शतमस्मान्त्सहस्रमूतयः । अस्मान् विश्वा अभिष्टयः ॥ १० ॥

अस्मान् । अवन्तु । ते । शतम् । अस्मान् । सहस्रम् । ऊतयः । अस्मान् । विश्वाः । अभिष्टयः ॥

---

१. °र्मणा वि[२] अ[१]. २-२. नास्ति मूको. ३. नास्ति वि[२] अ[१].

**वेङ्कट०** अस्मान् रक्षन्तु तव शतं सहस्रम् च रक्षणानि, तथा विश्वानि अभ्येषणानि च ॥ १० ॥

[1]इति तृतीयाष्टके षष्ठाध्याये पञ्चविंशो वर्गः[1] ॥

**अस्माँ इहा वृणीष्व सख्याय स्वस्तये । महो राये दिवित्मते ॥ ११ ॥**

अस्मान् । इह । वृणीष्व । सख्याय । स्वस्तये । महः । राये । दिवित्मते ॥ ११ ॥

**वेङ्कट०** अस्मान् इह आवृणीष्व सख्याय अविनाशाय च[2] महान् धनाय च दीप्तिमते ॥ ११ ॥

**अस्माँ अविड्ढि विश्वहेन्द्र राया परीणसा । अस्मान् विश्वाभिरूतिभिः ॥१२॥**

अस्मान् । अविड्ढि । विश्वहा । इन्द्र । राया । परीणसा । अस्मान् । विश्वाभिः । ऊतिऽभिः ॥

**वेङ्कट०** अस्मान् रक्ष सर्वदा इन्द्र! धनेन परितो नद्धेन विश्वैश्च रक्षणैः ॥ १२ ॥

**अस्मभ्यं ताँ अपा वृधि व्रजाँ अस्तेव गोमतः । नवाभिरिन्द्रोतिभिः ॥ १३ ॥**

अस्मभ्यम् । तान् । अप । वृधि । व्रजान् । अस्ताऽइव । गोऽमतः । नवाभिः । इन्द्र । ऊतिऽभिः ॥

**वेङ्कट०** अस्मदर्थम् तान् गोभिः सहितान् व्रजान् अप वृधि शरान् इव अस्ता नवैः इन्द्र! मरुद्भिः सह ॥ १३ ॥

**अस्माकं धृष्णुया रथो द्युमाँ इन्द्रानपच्युतः । गव्युरश्वयुरीयते ॥ १४ ॥**

अस्माकम् । धृष्णुऽया । रथः । द्युऽमान् । इन्द्र । अनपऽच्युतः । गव्युः । अश्वऽयुः । ईयते ॥१४॥

**वेङ्कट०** अस्माकम् धृष्णुः रथः दीप्तिमान् इन्द्र! शत्रुभिः अनपच्युतः गाः अश्वांश्चेच्छन् गच्छति ॥ १४ ॥

**अस्माकमुत्तमं कृधि श्रवो देवेषु सूर्य । वर्षिष्ठं द्यामिवोपरि ॥ १५ ॥**

अस्माकम् । उत्ऽतमम् । कृधि । श्रवः । देवेषु । सूर्य । वर्षिष्ठम् । द्याम्ऽइव । उपरि ॥१५॥

**वेङ्कट०** अस्माकम् उत्तमम्[3] अन्नम् कृधि देवेषु हे सुवीर्य! वृद्धतमम् द्युलोकम् इव उपरि स्थितम् ॥ १५ ॥

[1]इति तृतीयाष्टके षष्ठाध्याये षड्विंशो वर्गः[1] ॥

## [ ३२ ]

[1]वामदेवो गौतम ऋषिः । इन्द्रो देवता, अन्त्ययोरिन्द्राश्वौ । गायत्री छन्दः[1] ।

**आ तू न इन्द्र वृत्रहन्नस्माकमर्धमा गहि । महान् महीभिरूतिभिः ॥ १ ॥**

आ । तु । नः । इन्द्र । वृत्रऽहन् । अस्माकम् । अर्धम् । आ । गहि । महान् । महीभिः । ऊतिऽभिः ॥१॥

---

१-१. नास्ति मूको. २. नास्ति लपं. ३. उत्तरम् वि[1] लपं.

**वेङ्कट०** आ **गच्छ क्षिप्रम् अस्माकम्** हे इन्द्र वृत्रहन्! [1]वेदेः रक्षणैः[1] अर्धम् **महद्भिः**। अस्माकम् **इति** पूरणम् ॥ १ ॥

**भृमिश्चिद् घासि तूतुजिरा चित्र चित्रिणीष्वा। चित्रं कृणोष्यूतये ॥ २ ॥**

भृमिः। चित्। घ। असि। तूतुजिः। आ। चित्र। चित्रिणीषु। आ। चित्रम। कृणोषि। ऊतये ॥२॥

**वेङ्कट०** भ्रमणशीलः खलु असि हिंसकः, स त्वम् चित्र! चित्रिणीषु प्रजासु[2] चित्रम् **धनम्** आ कृणोषि रक्षणाय ॥ २ ॥

**दभ्रेभिश्चिच्छशीयांसं हंसि व्राधन्तमोजसा। सखिभिर्ये त्वे सचा ॥ ३ ॥**

दभ्रेभिः। चित्। शशीयांसम्। हंसि। व्राधन्तम्। ओजसा। सखिऽभिः। ये। त्वे इति। सचा ॥३॥

**वेङ्कट०** क्षुद्रैः अपि त्वम् अभिभवन्तम् हंसि वर्धमानं बलेन मरुद्भिः[3], ये च त्वयि सह वसन्ति ॥ ३ ॥

**वयमिन्द्र त्वे सचा वयं त्वाभि नोनुमः। अस्माँअस्माँ इदुदव ॥ ४ ॥**

वयम्। इन्द्र। त्वे इति। सचा। वयम्। त्वा। अभि। नोनुमः। अस्मान्ऽअस्मान्। इत्। उत्। अव ॥

**वेङ्कट०** वयम् हे इन्द्र! त्वयि समवेताः, वयम् त्वाम् अभि स्तुमः, अस्मान् एव त्वं सर्वदा रक्ष ॥ ४ ॥

**स नश्चित्राभिरद्रिवोऽनवद्याभिरूतिभिः। अनाधृष्टाभिरा गहि ॥ ५ ॥**

सः। नः। चित्राभिः। अद्रिऽवः। अनवद्याभिः। ऊतिऽभिः। अनाधृष्टाभिः। आ। गहि ॥५॥

**वेङ्कट०** सः अस्मान् चित्रैः मरुद्भिः अवद्यरहितैः शत्रुभिरनाधृष्टैः आ गच्छ हे वज्रिन्! ॥ ५ ॥

[4]इति तृतीयाष्टके षष्ठाध्याये सप्तविंशो वर्गः[4] ॥

**भूयामो षु त्वावतः सखाय इन्द्र गोमतः। युजो वाजाय घृष्वये ॥ ६ ॥**

भूयामो इति। सु। त्वाऽवतः। सखायः। इन्द्र। गोऽमतः। युजः। वाजाय। घृष्वये ॥ ६ ॥

**वेङ्कट०** हे इन्द्र! त्वत्सदृशस्य गोमतः सुष्ठु सखायः भूयाम[5] सङ्गताः अन्नाय शत्रूणां धर्षणशीलाय ॥ ६ ॥

**त्वं ह्येक ईशिष इन्द्र वाजस्य गोमतः। स नो यन्धि महीमिषम् ॥ ७ ॥**

त्वम्। हि। एकः। ईशिषे। इन्द्र। वाजस्य। गोऽमतः। सः। नः। यन्धि। महीम। इषम् ॥

**वेङ्कट०** निगदसिद्धा ॥ ७ ॥

---

१-१. वेदेरश्वरक्ष° वि[2] लपं; वेदे° वि[2] अ[1]; वेदः रक्ष° ल. २. पूजा° वि[2] अ[1] ल लपं. ३. नास्ति वि[2]. ४-४. नास्ति मूको. ५. भूयास्म ल प्रस्तावः.

न त्वा वरन्ते अन्यथा यद् दित्ससि स्तुतो मघम् । स्तोतृभ्य इन्द्र गिर्वणः ॥८॥

न । त्वा । वरन्ते । अन्यथा । यत् । दित्ससि । स्तुतः । मघम् । स्तोतृऽभ्यः । इन्द्र । गिर्वणः ॥

**वेङ्कट०** न त्वां[1] वारयन्ति[2] अन्यथा कर्तुम्, यदा त्वं दित्ससि स्तुतः धनम् स्तोतृभ्यः हे इन्द्र गिर्वणः! ॥८॥

अभि त्वा गोतमा गिरानूषत प्र दावने । इन्द्र वाजाय घृष्वये ॥ ९ ॥

अभि । त्वा । गोतमाः । गिरा । अनूषत । प्र । दावने । इन्द्र । वाजाय । घृष्वये ॥ ९ ॥

**वेङ्कट०** अभि अस्तुवन् प्रकर्षेण त्वाम् गोतमाः स्तोत्रेण इन्द्र! दानाय अन्नाय च घर्षणशीलाय ॥ ९ ॥

प्र ते वोचाम वीर्या या मन्दसान आरुजः । पुरो दासीरभीत्य ॥ १० ॥

प्र । ते । वोचाम । वीर्या । याः । मन्दसानः । आ । अरुजः । पुरः । दासीः । अभिऽइत्य ॥१०॥

**वेङ्कट०** प्र वोचाम तव वीर्याणि, याः पुरः मोदमानः सर्वतो भग्नवानसि दाससम्बन्धिनीः[3] अभिगम्य, तद्विषयाणि ॥ १० ॥

[4]इति तृतीयाष्टके षष्ठाध्याये अष्टाविंशो वर्गः[4] ॥

ता ते गृणन्ति वेधसो यानि चकर्थ पौंस्या । सुतेष्विन्द्र गिर्वणः ॥ ११ ॥

ता । ते । गृणन्ति । वेधसः । यानि । चकर्थ । पौंस्या । सुतेषु । इन्द्र । गिर्वणः ॥ ११ ॥

**वेङ्कट०** तानि ते गृणन्ति स्तोतारः यानि कृतवानसि वीर्याणि यज्ञेषु हे इन्द्र गिर्वणः! ॥ ११ ॥

अवीवृधन्त गोतमा इन्द्र त्वे स्तोमवाहसः । एषु धा वीरवद् यशः ॥१२॥

अवीवृधन्त । गोतमाः । इन्द्र । त्वे इति । स्तोमऽवाहसः । आ । एषु । धाः । वीरऽवत् । यशः ॥

**वेङ्कट०** वर्धयन्तु गोतमाः हे इन्द्र! त्वयि स्तोमानां वोढारः । आ धेहि गोतमेषु वीरवत् अन्नम् ॥ १२ ॥

यच्चिद्धि शश्वतामसीन्द्र साधारणस्त्वम् । तं त्वा वयं हवामहे ॥ १३ ॥

यत् । चित् । हि । शश्वताम् । असि । इन्द्र । साधारणः । त्वम् । तम् । त्वा । वयम् । हवामहे ॥१३॥

**वेङ्कट०** यत् चित् हि बहूनाम् असि इन्द्र! साधारणः त्वम् , तम् त्वा वयम् हवामहे ॥ १३ ॥

अर्वाचीनो वसो भवास्मे सु मत्स्वान्धसः । सोमानामिन्द्र सोमपाः ॥ १४ ॥

अर्वाचीनः । वसो इति । भव । अस्मे इति । सु । मत्स्व । अन्धसः । सोमानाम् । इन्द्र । सोमऽपाः ॥

---

१. त्वा वि[1] लपं. २. पारय° वि[2] अ[1]. ३. दानसम्बन्धिनीभिः वि[2] अ[1]. ४-४. नास्ति मूको.

**वेङ्कट०** इतोमुखः भव हे वासयितः! अस्मासु। सुष्ठु तृप्यस्व सोमेन हे सोमस्य पातः इन्द्र! ॥ १४ ॥

अस्माकं त्वा मतीनामा स्तोम इन्द्र यच्छतु। अर्वागा वर्तया हरी ॥१५॥

अस्माकम्। त्वा। मतीनाम्। आ। स्तोमः। इन्द्र। यच्छतु। अर्वाक्। आ। वर्तय। हरी इति ॥१५॥

**वेङ्कट०** अस्माकम् स्तुतीनाम् स्तोमः त्वाम् इन्द्र! आ यच्छतु। इतोमुखम् आ वर्तय अश्वौ ॥ १५ ॥

पुरोळाशं च नो घसो जोषयासे गिरश्च नः। वधूयुरिव योषणाम् ॥ १६ ॥

पुरोळाशम्। च। नः। घसः। जोषयासे। गिरः। च। नः। वधूयुऽइव। योषणाम् ॥ १६ ॥

**वेङ्कट०** पूर्वम् (ऋ ३,५२,३) गता ॥ १६ ॥

इति तृतीयाष्टके षष्ठाध्याये एकोनत्रिंशो वर्गः ॥

सहस्रं व्यतीनां युक्तानामिन्द्रमीमहे। शतं सोमस्य खार्यः ॥ १७ ॥

सहस्रम्। व्यतीनाम्। युक्तानाम्। इन्द्रम्। ईमहे। शतम्। सोमस्य। खार्यः ॥ १७ ॥

**वेङ्कट०** युक्तानाम् अश्वानाम् सहस्रम् इन्द्रम् याचामहे। शतम् इमाः सोमस्य खार्यः पानायेन्द्रस्येति ॥ १७ ॥

सहस्रा ते शता वयं गवामा च्यावयामसि। अस्मत्रा राध एतु ते ॥ १८ ॥

सहस्रा। ते। शता। वयम्। गवाम्। आ। च्यवयामसि। अस्मऽत्रा। राधः। एतु। ते ॥१८॥

**वेङ्कट०** त्वत्तः वयम् गवाम् सहस्राणि शतानि च आ च्यावयामः[1]। अस्मासु[2] धनम्[3] आगच्छतु तव ॥ १८ ॥

दश ते कलशानां हिरण्यानामधीमहि। भूरिदा असि वृत्रहन् ॥ १९ ॥

दश। ते। कलशानाम्। हिरण्यानाम्। अधीमहि। भूरिऽदाः। असि। वृत्रऽहन् ॥ १९ ॥

**वेङ्कट०** हिरण्यपूर्णान्[4] दश कलशान् त्वत्तः धारयेम। भूरिदाः असि हि वृत्रहन्! ॥ १९ ॥

भूरिदा भूरि देहि नो मा दभ्रं भूर्या भर। भूरि घेदिन्द्र दित्ससि ॥ २० ॥

भूरिऽदाः। भूरि। देहि। नः। मा। दभ्रम्। भूरि। आ। भर। भूरि। घ। इत्। इन्द्र। दित्ससि ॥२०॥

**वेङ्कट०** निगदसिद्धा ॥ २० ॥

भूरिदा ह्यसि श्रुतः पुरुत्रा शूर वृत्रहन्। आ नो भजस्व राधसि ॥ २१ ॥

भूरिऽदाः। हि। असि। श्रुतः। पुरुऽत्रा। शूर। वृत्रऽहन्। आ। नः। भजस्व। राधसि ॥२१॥

---

१. च्यव° वि[1]. २. अस्मान् वि[1]. ३. सुधनम् वि[1]. ४ °पूर्णकलशान् वि[1] लपं.

वेङ्कट० बहुनो दाता असि त्वम् हे शूर वृत्रहन्! पुरुषु देशेषु श्रुतः। अस्मान् आ भज धने ॥ २१ ॥

प्र ते॑ बभ्रू विचक्षण शंसा॑मि गोषणो नपात्। माभ्यां गा अनु॑ शिश्रथः ॥ २२ ॥

प्र। ते। बभ्रू इति॑। वि॒ऽचक्षण। शंसा॑मि। गोऽसनः। नपात्। मा। आभ्याम्। गाः। अनु॑। शिश्रथः ॥

वेङ्कट० प्र शंसामि तव बभ्रुवर्णावश्वौ हे प्राज्ञ! दिव उदकस्य दातुः पुत्र!। मा आभ्याम् अश्वाभ्यां पशून् अनु शिश्रथः। श्रथतिर्भेदनकर्मा ॥ २२ ॥

कनीनकेव विद्रधे नवे द्रुपदे अर्भके। बभ्रू यामेषु शोभेते ॥ २३ ॥

कनीनकाऽइव। विद्रधे। नवे। द्रुऽपदे। अर्भके। बभ्रू इति। यामेषु। शोभेते इति ॥ २३ ॥

वेङ्कट० कन्यके[1] इव सिद्धे नवे पादुके स्वल्पे स्थिते[2] बभ्रू इन्द्रस्याश्वे गमनेषु शोभेते सशफे[3]। निरुक्तं ( या ४,१५ ) द्रष्टव्यम् ॥ २३ ॥

अरं म उस्रयाम्णेऽरमनुस्रयाम्णे। बभ्रू यामेष्वस्रिधा ॥ २४ ॥

अरम्। मे। उस्रऽयाम्ने। अरम्। अनुस्रऽयाम्ने। बभ्रू इति। यामेषु। अस्रिधा ॥ २४ ॥

वेङ्कट० वामदेवस्य द्वावुस्रौ स्तः, ताभ्यां गच्छते मह्यमिन्द्रस्य बभ्रू अश्वौ गमनेषु अक्षीणौ[3] धनं पर्याप्तमाहरताम्। एवं पादाभ्यां गच्छते।

[4]इति तृतीयाष्टके षष्ठाध्याये त्रिंशो वर्गः[4] ॥

व्याकरोत् षष्ठमध्यायं तृतीयस्याष्टकस्य सः।
दुहिता भवगोलस्य सुन्दरी यमजीजनत् ॥

इति वेङ्कटमाधवाचार्यविरचिते ऋक्संहिताव्याख्याने तृतीयाष्टके षष्ठोऽध्यायः ॥

— ❀ —

इति ऋग्वेदे सभाष्ये तृतीयाष्टके षष्ठोऽध्यायः ॥



१. कन्याके वि[२] अ[१]. २. अवस्थिते वि[२] अ[१]. ३. स्वपक्षि॰ वि[१] लपं; अस्वाक्षि॰ वि[२] अ[१].
४-४. नास्ति मूको.

[१]अथ तृतीयाऽष्टके सप्तमोऽध्यायः[१]

वेङ्कट०

'प्र ऋभुभ्यो दूतमिव' व्याचिख्यासति माधवः।
उपसर्गेषु वक्तव्यमादितः सम्प्रदर्शयन् ॥ १ ॥

अन्वयव्यतिरेकाभ्यां प्रकृतेः प्रत्ययस्य च।
पृथगर्थपरिज्ञानमिति शाब्दिकनिर्णयः ॥ २ ॥

उपसर्गेष्वपि तथा भवेदिति विनिश्चयः।
तदेतद्धातुसंज्ञायां स्पष्टमाह पतञ्जलिः ॥ ३ ॥

वदन्ति वाचकानेक उपसर्गान् विपश्चितः।
[२]अर्थानां धातुलीनानां[२] द्योतकास्ते[३] पतञ्जलेः ॥ ४ ॥

प्रतिष्ठते तिष्ठतीति गमनं स्थानमेव च।
उभयं तिष्ठतेरर्थः प्रस्तत्र द्योतको गतेः ॥ ५ ॥

[४]बीजानि वपतीत्यत्र निवापे दृश्यते वपिः।
'अधि पेशांसि वपते'† छेदने तत्र वर्तते ॥ ६ ॥

एवमन्येऽपि दृश्यन्ते बहुष्वर्थेषु धातवः।
द्योत्यन्त उपसर्गैश्च धात्वर्था इति निर्णयः[४] ॥ ७ ॥

'प्र यांतु शीभंमाशुभिः'[५] 'प्र वो भ्रियन्त इन्दवः'[६]।
प्रारम्भे प्रोऽनयोर्दृष्टः प्रकर्षे चापि दृश्यते ॥ ८ ॥

'अर्चत प्रार्चत'[७] (त' इ)त्यत्र वैस्पष्ट्ये चापि दृश्यते।
'अस्येदु प्र ब्रूहि पूर्व्याणि'[८][९] बहवः सन्ति तादृशाः ॥ ९ ॥

प्रभुः प्रार्थयते कन्याम् प्रशान्तः प्राञ्जलिस्तथा।
प्रसन्नमुदकं चेति भिन्नार्थाः प्रा इमे मताः ॥ १० ॥

आज्ञाभिमुख्यं वदति प्रपरौ तद्विपर्ययम्।
'परां याहि मघवन्ना'[१०], 'परा हि मे विमन्यवः'[११] ॥ ११ ॥

---

१-१. नास्ति लपं; °ध्यायः प्रारभ्यते अ[१]. २-२. °नां तु निली° वेंऋअ; °नां तु···ली° वि[२] अ[१]; °नान्धतुलि° वि[१] लपं. ३. °कास्तु वि[१]. ४-४. नास्ति वि[१] लपं. † ऋ १,९२,४. ५. ऋ १,३७,१४. ६. ऋ १,१४,४. ७. ऋ ८,६९,८. ८. °र्व्याणि वि[१] लपं. ९ ऋ १,६१,१३. १०. ऋ ३,५३,५. ११. ऋ १,२५,४.

समेकीभाववचनः पृथग्भावे[1] व्यपौ स्मृतौ ।
'यत्रा नरः सं च वि च'[2], 'अप द्वेषो अप ह्वरः'[3] ॥ १२ ॥

अनुः सादृश्यवचनः पश्चाद्भावे च वर्तते ।
उद्वर्तत उद्गमने न्यवौ नीचीनवृत्तिनौ ॥ १३ ॥

सुं पूजावचनं प्राहुर्विपरीतौ च निर्दुरौ ।
[4]अधेरुपरिभावार्थम् आभिमुख्यमभेर्विदुः[4] ॥ १४ ॥

अतेरर्थोऽतिक्रमणं प्रातिलोम्ये प्रतिः स्मृतः ।
अपिः संसर्गवचन उपश्लोपजने स्मृतः ॥ १५ ॥

वर्जने सर्वतोभावे परिं प्राहुर्विपश्चितः ।
एषामिमे प्रायिकार्था इत्थं यास्केन दर्शिताः ॥ १६ ॥

पाणिनिश्चाह भगवानर्थानेषां बहूंस्तथा ।
उदाहरणमेतेषां बहुत्वान्न प्रदर्शितम् ॥ १७ ॥ इति ॥

[ ३३ ]

[5]वामदेवो गौतम ऋषिः । ऋभवो देवता । त्रिष्टुप् छन्दः[5] ।

प्र ऋभुभ्यो दूतमिव वाचमिष्य उपस्तिरे श्वैतरीं धेनुमीळे ।
ये वातजूतास्तरणिभिरेवैः परि द्यां सद्यो अपसो बभूवुः ॥ १ ॥

प्र । ऋभुऽभ्यः । दूतम्ऽइव । वाचम् । इष्ये । उपऽस्तिरे । श्वैतरीम् । धेनुम् । ईळे ।
ये । वातऽजूताः । तरणिऽभिः । एवैः । परि । द्याम् । सद्यः । अपसः । बभूवुः ॥ १ ॥

**वेङ्कट०** वामदेवः । प्र ईरयामि ऋभुभ्यः दूतम् इव स्तुतिम् । ऋभूणामुपस्तरणाय श्वेतवर्णयुक्तां निर्मलां स्तुतिवाचं याचे[6] । ये वातप्रेरिताः तारकैः गमनैः द्याम्[7] परि बभूवुः सद्यः एव वेगवन्तः ॥ १ ॥

यदारमक्रन्नृभवः पितृभ्यां परिविष्टी वेषणा दंसनाभिः ।
आदिद् देवानामुप सख्यमायन् धीरासः पुष्टिमवहन् मनायै ॥ २ ॥

---

१. °भाव्ये वि[2]. २. ऋ ६,७५,११. ३. ऋ ५,२०,२. ४-४. °रिभवोर्थमाभि° वि[1]; °रिमावोर्थ आभि° ल प्रस्तावः; °रिमावोर्थमाभि° वि[2] अ[1] ल लपं. ५-५. नास्ति मूको. ६. याच° वि[1] अ[1] ल; याचै वि[2] लपं. ७. नास्ति मूको.

यदा । अरम् । अक्रन् । ऋभवः । पितृऽभ्याम् । परिऽविष्टी । वेषणा । दंसनाभिः ।
आत् । इत् । देवानाम् । उप । सख्यम् । आयन् । धीरासः । पुष्टिम् । अवहन् । मनायै ॥२॥

**वेङ्कट०** यदा अलञ्चक्रुः पितृभ्याम् ऋभवः **भोजनेन व्याप्त्या कर्मभिश्च, अनन्तरम् एव** देवानाम् सख्यम् उप आयन् प्राज्ञाः, पुष्टिम् **च** अवहन् **स्तुत्यर्थं स्तोतुः** ॥ २ ॥

**पुनर्ये चक्रुः पितरा युवाना सना यूपेव जरणा शयाना ।**
**ते वाजो विभ्वाँ ऋभुरिन्द्रवन्तो मधुप्सरसो नोऽवन्तु यज्ञम् ॥ ३ ॥**

पुनः । ये । चक्रुः । पितरा । युवाना । सना । यूपाऽइव । जरणा । शयाना ।
ते । वाजः । विऽभ्वा । ऋभुः । इन्द्रऽवन्तः । मधुऽप्सरसः । नः । अवन्तु । यज्ञम् ॥ ३ ॥

**वेङ्कट०** पुनः ये कृतवन्तः पितरौ युवानौ सनातनौ यूपाविव जीर्णौ शयानौ, ते **वाजादयः इन्द्रवन्तः सोमं प्रति सरन्तः अस्माकम्** यज्ञम् **आगच्छन्तु** ॥ ३ ॥

**यत् संवत्सम्ृभवो गामरक्षन् यत् संवत्सम्ृभवो मा अपिंशन् ।**
**यत् संवत्समभरन् भासो अस्यास्ताभिः शमीभिरमृतत्वमाशुः ॥ ४ ॥**

यत् । सम्ऽवत्सम् । ऋभवः । गाम् । अरक्षन् । यत् । सम्ऽवत्सम् । ऋभवः । माः । अपिंशन् ।
यत् । सम्ऽवत्सम । अभरन् । भासः । अस्याः । ताभिः । शमीभिः । अमृतऽत्वम् । आशुः ॥४॥

**वेङ्कट०** यत् सहवासयुक्तम्, **सह वसन्त इत्यर्थः**, पित्रोः गाम् अरक्षन्, यत् **च** संवत्सम्[1] **पित्रोर्व्यञ्जनार्थं मांसम्** अपिंशन्, यत् च संवत्सम् अस्याः गोः भासः बहिर्गृहम् अभरन्, **तैः कर्मभिः** अमृतत्वम् प्रापन्। 'श्रोणामेक उदकम्' (ऋ १,१६१,१०) **इत्युक्तम्** ॥ ४ ॥

**ज्येष्ठ आह चमसा द्वा करेति कनीयान् त्रीन् कृणवामेत्याह ।**
**कनिष्ठ आह चतुरस्करेति त्वष्ट ऋभवस्तत् पनयद् वचो वः ॥ ५ ॥**

ज्येष्ठः । आह । चमसा । द्वा । कर । इति । कनीयान् । त्रीन् । कृणवाम । इति । आह ।
कनिष्ठः । आह । चतुरः । कर । इति । त्वष्टा । ऋभवः । तत् । पनयत् । वचः । वः ॥ ५ ॥

**वेङ्कट०** ऋभुः आह **एकं चमसम् द्वौ करोमि** इति, **मध्यमः** आह[2] त्रीन् **करोमि**[2] इति, **तृतीयः** आह[2] **चतुरः करोमि**[2] इति । हे ऋभवः! त्वष्टा तत् **युष्मद्वचनम् अपूजयत्** ॥ ५ ॥

[3]इति तृतीयाष्टके सप्तमाध्याये प्रथमो वर्गः[3] ॥

---

१. नास्ति लपं. २. नास्ति मूको. ३-३. नास्ति मूको.

सत्यमूचुर्नर एवा हि चक्रुरनु स्वधामृभवो जग्मुरेताम् ।
विभ्राजमानांश्चमसाँ अहेवाऽवेनत् त्वष्टा चतुरो ददृश्वान् ॥ ६ ॥

सत्यम् । ऊचुः । नरः । एव । हि । चक्रुः । अनु । स्वधाम् । ऋभवः । जग्मुः । एताम् ।
विऽभ्राजमानान् । चमसान् । अहाऽइव । अवेनत् । त्वष्टा । चतुरः । ददृश्वान् ॥ ६ ॥

वेङ्कट० तदिदं[1] नेतारोऽमी सत्यम्[2] ऊचुः । उक्तम् हि तथा अनुष्ठितवन्तः । पश्चात् एताम् स्वधाम् सोमम् ऋभवः अनु अगच्छन् । देवेषु दीप्यमानान् चतुरः चमसान् दिवसानिव अकामयत त्वष्टा पश्यन् ॥ ६ ॥

द्वादश द्यून् यदगोह्यस्यातिथ्ये रणन्नृभवः ससन्तः ।
सुक्षेत्राकृण्वन्ननयन्त सिन्धून् धन्वातिष्ठन्नोषधीर्निम्नमापः ॥ ७ ॥

द्वादश । द्यून् । यत् । अगोह्यस्य । आतिथ्ये । रणन् । ऋभवः । ससन्तः ।
सुऽक्षेत्रा । अकृण्वन् । अनयन्त । सिन्धून् । धन्व । आ । अतिष्ठन् । ओषधीः । निम्नम् । आपः ॥

वेङ्कट० द्वादश दिवसान् यदा गूहितुमशक्यस्य सवितुः आतिथ्ये अरमन्त[3] स्वपन्तः ऋभवः, तदानीं सवित्रे शोभनानि क्षेत्राणि अकृण्वन्, नदीश्च अनयन्[4], तदानीं स्थलम्[5] ओषध्यः आ अतिष्ठन् प्रवणम् आपः । 'उद्वत्स्वस्मा अकृणोतन' ( ऋ १,१६१,११ ) इत्युक्तम् ॥ ७ ॥

रथं ये चक्रुः सुवृतं नरेष्ठां ये धेनुं विश्वजुवं विश्वरूपाम् ।
त आ तक्षन्त्वृभवो रयिं नः स्ववसः स्वपसः सुहस्ताः ॥ ८ ॥

रथम् । ये । चक्रुः । सुऽवृतम् । नरेऽस्थाम् । ये । धेनुम् । विश्वऽजुवम् । विश्वऽरूपाम् ।
ते । आ । तक्षन्तु । ऋभवः । रयिम् । नः । सुऽअवसः । सुऽअपसः । सुऽहस्ताः ॥ ८ ॥

वेङ्कट० रथम् ये चक्रुः सुवर्तनं नेतरीन्द्रे स्थितम्, ये च धेनुम् विश्ववेगां नानारूपां बृहस्पतये । ते आ कुर्वन्तु[6] ऋभवः रयिम् अस्माकम् सुरक्षणाः सुकर्माणः सुहस्ताः ॥ ८ ॥

अपो ह्येषामजुषन्त देवा अभि क्रत्वा मनसा दीध्यानाः ।
वाजो देवानामभवत् सुकर्मेन्द्रस्य ऋभुक्षा वरुणस्य विभ्वा ॥ ९ ॥

अपः । हि । एषाम् । अजुषन्त । देवाः । अभि । क्रत्वा । मनसा । दीध्यानाः ।
वाजः । देवानाम् । अभवत् । सुऽकर्मा । इन्द्रस्य । ऋभुक्षाः । वरुणस्य । विऽभ्वा ॥ ९ ॥

---

१. सदि° वि[1] लपं. २. तत् स° वि[2] लपं. ३. रमन्तः वि[2]. ४. °यन्त वि[2] ५. नास्ति वि[2] लपं. ६. अकुर्वन् लपं.

**वेङ्कट०** कर्म हि एषाम् अजुषन्त देवाः दीप्यमानाः प्रज्ञया मनसा च[1]। तत्र वाजः सर्वेषां देवानाम् सुकर्मा अभवत्, इन्द्रस्य ज्येष्ठः, वरुणस्य मध्यमः ॥ ९ ॥

ये हरी॑ मे॒धयो॒क्था मद॑न्त॒ इन्द्रा॑य च॒क्रुः सु॒युजा॒ ये अश्वा॑ ।
ते रा॒यस्पोषं॒ द्रवि॑णान्य॒स्मे ध॒त्त ऋ॑भवः क्षेम॒यन्तो॒ न मि॒त्रम् ॥ १० ॥

ये । हरी॒ इति॑ । मे॒धया॑ । उ॒क्था । मद॑न्तः । इन्द्रा॑य । च॒क्रुः । सु॒ऽयुजा॑ । ये । अश्वा॑ ।
ते । रा॒यः । पोष॑म् । द्रवि॑णानि । अ॒स्मे इति॑ । ध॒त्त । ऋ॒भ॒वः॒ । क्षे॒म॒ऽयन्तः॑ । न । मि॒त्रम् ॥१०॥

**वेङ्कट०** ये इन्द्राय अश्वौ प्रज्ञया उक्थैः मदन्तः चक्रुः ये च तावश्वौ रथे संयुक्तौ, ते यूयम् हे ऋभवः![2] रायः पोषम् द्रविणानि च अस्मभ्यम् धत्त क्षेमं कुर्वन्तः मित्रम् इव ॥ १० ॥

इ॒दाह्नः॑ पी॒तिमु॒त वो॒ मदं॑ धु॒र्न ऋ॒ते श्रा॒न्तस्य॑ स॒ख्याय॑ दे॒वाः ।
ते नू॒नम॒स्मे ऋ॑भवो॒ वसू॑नि तृ॒तीये॑ अ॒स्मिन्त्सव॑ने दधात ॥ ११ ॥

इ॒दा । अह्नः॑ । पी॒तिम् । उ॒त । वः॒ । मद॑म् । धुः॒ । न । ऋ॒ते । श्रा॒न्तस्य॑ । स॒ख्याय॑ । दे॒वाः ।
ते । नू॒नम् । अ॒स्मे इति॑ । ऋ॒भ॒वः॒ । वसू॑नि । तृ॒तीये॑ । अ॒स्मिन् । सव॑ने । द॒धा॒त ॥ ११ ॥

**वेङ्कट०** इदानीम् अह्नः [3]तृतीये सवने[3] सोमपीतिं च मदम् च दत्तवन्तः। न हि देवाः तपसः सख्याय ऋते भवन्ति। प्रयच्छन्ति श्रान्तस्य फलम्, न मृषा श्रान्तं भवति। ते सम्प्रति अस्मभ्यम् हे ऋभवः! वसूनि अस्मिन् तृतीयसवने प्रयच्छत ॥ ११ ॥

[4]इति तृतीयाष्टके सप्तमाध्याये द्वितीयो वर्गः[4] ॥

## [ ३४ ]

[4]वामदेवो गौतम ऋषिः। ऋभवो देवता। त्रिष्टुप् छन्दः[4]।

ऋ॒भुर्विभ्वा॒ वाज॒ इन्द्रो॑ नो॒ अच्छे॒मं य॒ज्ञं र॑त्न॒धेयोप॑ यात ।
इ॒दा हि वो॑ धि॒षणा॑ दे॒व्यह्ना॒मधा॑त् पी॒तिं सं मदा॑ अग्मता वः ॥ १ ॥

ऋ॒भुः । वि॒ऽभ्वा॑ । वाजः॑ । इन्द्रः॑ । नः॒ । अच्छ॑ । इ॒मम् । य॒ज्ञम् । र॒त्न॒ऽधेया॑ । उप॑ । या॒त॒ ।
इ॒दा । हि । वः॒ । धि॒षणा॑ । दे॒वी । अह्ना॑म् । अधा॑त् । पी॒तिम् । सम् । मदाः॑ । अ॒ग्म॒त॒ । वः॒ ॥ १ ॥

**वेङ्कट०** ऋभ्वादयः[5] इन्द्रः च अस्माकम् इमम् यज्ञम् अभ्यागच्छत रत्नदानाय। इदानीम् हि वः तृतीयसवने[6] देवी स्तुतिवाक् अह्नाम् विदधाति सोमपानम्। देवैः सम् अग्मत वः मदाः ॥ १ ॥

---

१. वा वि[1] लपं. २. नास्ति मूको. ३-३. °तीयस° वि[1]. ४-४. नास्ति मूको. ५. °यश्च वि[1] अ[1]. ६. °तीये स° वि[1] लपं.

विदानासो जन्मनो वाजरत्ना उत ऋतुभिर्ऋभवो मादयध्वम् ।
सं वो मदा अग्मत सं पुरंधिः सुवीरामस्मे रयिमेरयध्वम् ॥ २ ॥

विदानासः । जन्मनः । वाजऽरत्नाः । उत । ऋतुऽभिः । ऋभवः । मादयध्वम् ।
सम् । वः । मदाः । अग्मत । सम् । पुरम्ऽधिः । सुऽवीराम् । अस्मे इति । रयिम् । आ । ईरयध्वम् ॥२॥

वेङ्कट० जानन्तः [1]प्रादुर्भावकालं हे रमणीयान्नाः[1] ऋभवः! ऋतुभिः[2] सहास्मिन् सवने मादयध्वम् । युष्माकं सोमाः प्रज्ञा च देवैः सम् अग्मत । ते अस्मासु सुपुत्रम्[3] धनम् आभिमुख्येन[4] प्रेरयत ॥ २ ॥

अयं वो यज्ञ ऋभवोऽकारि यमा मनुष्वत् प्रदिवो दधिध्वे ।
प्र वोऽच्छा जुजुषाणासो अस्थुरभूत विश्वे अग्रियोत वाजाः ॥ ३ ॥

अयम् । वः । यज्ञः । ऋभवः । अकारि । यम् । आ । मनुष्वत् । प्रऽदिवः । दधिध्वे ।
प्र । वः । अच्छ । जुजुषाणासः । अस्थुः । अभूत । विश्वे । अग्रियाः । उत । वाजाः ॥ ३ ॥

वेङ्कट० हे ऋभवः! युष्माकम् अयम्[5] अस्माभिः यज्ञः अकारि । [6]यम् पुराणम्[6] यूयमात्मनि आ दधिध्वे मनाविव मनुष्येषु इव[7] वा । युष्मान् सेवमाना ऋत्विजः अभि प्र तस्थुः । हे वाजाः! यूयं भवत[8] सर्वे प्रथमपायिनः ॥ ३ ॥

अभूदु वो विधते रत्नधेयमिदा नरो दाशुषे मर्त्याय ।
पिबत वाजा ऋभवो ददे वो महि तृतीयं सवनं मदाय ॥ ४ ॥

अभूत् । ऊँ इति । वः । विधते । रत्नऽधेयम् । इदा । नरः । दाशुषे । मर्त्याय ।
पिबत । वाजाः । ऋभवः । ददे । वः । महि । तृतीयम् । सवनम् । मदाय ॥ ४ ॥

वेङ्कट० अभूत् युष्माकं परिचरते रत्नधानं तृतीयसवने हे नेतारः! दाशुषे[9] मनुष्याय । पिबत सोमं [10]हे ऋभवः! हे वाजाः!, दीयते युष्मभ्यं महत् तृतीयम् सवनम् मदाय[10] ॥ ४ ॥

आ वाजा यातोप न ऋभुक्षा महो नरो द्रविणसो गृणानाः ।
आ वः पीतयोऽभिपित्वे अह्नामिमा अस्तं नवस्वइव ग्मन् ॥ ५ ॥

आ । वाजाः । यात । उप । नः । ऋभुक्षाः । महः । नरः । द्रविणसः । गृणानाः ।
आ । वः । पीतयः । अभिऽपित्वे । अह्नाम् । इमाः । अस्तम् । नवस्वः॑ऽइव । ग्मन् ॥ ५ ॥

---

१-१. °काल ··· वि[1] अ[1]. २. ऋमुभिः वि[1] लपं. ३. पुत्र वि[1] लपं. ४. नास्ति ल. ५. नास्ति लपं. ६-६. नास्ति वि[1] अ[1]. ७. नास्ति मूको. ८. अभवत वि[1?2] अ[1]. ९ नास्ति वि[1]. १०-१०. नास्ति वि[1] लपं.

**वेङ्कट०** [1]हे वाजाः! हे ऋभवः! अस्मान् उप आ यात हे नेतारः! महत् धनं वाचा गृणानाः। समग्मत युष्माकं सोमाः† अपराह्णे गृहम् इव नवप्रसूता गावः[1] ॥ ५ ॥

[2]इति तृतीयाष्टके सप्तमाध्याये तृतीयो वर्गः[2] ॥

आ नपातः शवसो यातनोपेमं यज्ञं नमसा हूयमानाः।
सजोषसः सूरयो यस्य च स्थ मध्वः पात रत्नधा इन्द्रवन्तः ॥ ६ ॥

आ । नपातः । शवसः । यातन । उप । इमम् । यज्ञम् । नमसा । हूयमानाः ।
सऽजोषसः । सूरयः । यस्य । च । स्थ । मध्वः । पात । रत्नऽधाः । इन्द्रऽवन्तः ॥ ६ ॥

**वेङ्कट०** [3]उप आ गच्छत हे शवसः पुत्राः! इमम् यज्ञम् हविषा हूयमानाः। सङ्गताः हे सूरयः! यस्य च भवथ सोमस्य, तं सोमं पिबत इन्द्रेण सहिताः रत्नानां दातारः[3] ॥ ६ ॥

सजोषा इन्द्र वरुणेन सोमं सजोषाः पाहि गिर्वणो मरुद्भिः।
अग्रेपाभिर्ऋतुपाभिः सजोषा ग्नास्पत्नीभी रत्नधाभिः सजोषाः ॥ ७ ॥

सऽजोषाः । इन्द्र । वरुणेन । सोमम् । सऽजोषाः । पाहि । गिर्वणः । मरुत्ऽभिः ।
अग्रेऽपाभिः । ऋतुऽपाभिः । सऽजोषाः । ग्नाःपत्नीभिः । रत्नऽधाभिः । सऽजोषाः ॥ ७ ॥

**वेङ्कट०** [4]वरुणेन मरुद्भिः च सह त्वम् हे इन्द्र गीर्भिर्वननीय! पिब सोमम्, तव †अग्रेपाभिः स्वकाले† पिबद्भिश्च देवैः सङ्गतः तथा ग्नासंज्ञिताभिर्देवपत्नीभिश्च रत्नानां धात्रीभिः[4] ॥ ७ ॥

सजोषस आदित्यैर्मादयध्वं सजोषस ऋभवः पर्वतेभिः।
सजोषसो दैव्येना सवित्रा सजोषसः सिन्धुभी रत्नधेभिः ॥ ८ ॥

सऽजोषसः । आदित्यैः । मादयध्वम् । सऽजोषसः । ऋभवः । पर्वतेभिः ।
सऽजोषसः । दैव्येन । सवित्रा । सऽजोषसः । सिन्धुऽभिः । रत्नऽधेभिः ॥ ८ ॥

**वेङ्कट०** [1]पर्वताः शिलोच्चयास्तेषां नदीनां च तृतीये सवनेऽस्त्यन्वयः[1] ॥ ८ ॥

ये अश्विना ये पितरा य ऊती धेनुं ततक्षुर्ऋभवो ये अश्वा।
ये अंसत्रा य ऋधग्रोदसी ये विभ्वो नरः स्वपत्यानि चक्रुः ॥ ९ ॥

ये । अश्विना । ये । पितरा । ये । ऊती । धेनुम् । ततक्षुः । ऋभवः । ये । अश्वा ।
ये । अंसत्रा । ये । ऋधक् । रोदसी इति । ये । विऽभ्वः । नरः । सुऽअपत्यानि । चक्रुः ॥९॥

---

१-१. नास्ति वि[१] लपं. † सोमः ल लपं. २-२. नास्ति मूको. ३-३. नास्ति वि[१] लपं. ४-४. नास्ति वि[१] लपं. †-† °ग्रे वाभिषवकाले ल.

वेङ्कट० [1]ये ऋभवः अश्विनौ रथकरणेन[1] प्रीतावकुर्वन्, ये जीर्णौ पितरौ युवानौ[2] सञ्चक्रुः, ये रक्षणार्थं बृहस्पतये धेनुम् ततक्षुः, ये वा देवानाम् अश्वा बडवाः ततक्षुः, ये च देवाना-मिन्द्रस्य अंसत्रौ अकुर्वन्, ये च [3]द्यावापृथिव्यौ ऋद्धं[3] कुर्वन्ति, ये च महान्तः नेतारः शोभनानि कर्माणि रथकरणादीनि चक्रुः[2] ॥ ९ ॥

ये गोमन्तं वाजवन्तं सुवीरं रयिं धत्थ वसुमन्तं पुरुक्षुम् ।
ते अग्रेपा ऋभवो मन्दसाना अस्मे धत्त ये च रातिं गृणन्ति ॥ १० ॥

ये । गोऽमन्तम् । वाजऽवन्तम् । सुऽवीरम् । रयिम् । धत्थ । वसुऽमन्तम् । पुरुऽक्षुम् ।
ते । अग्रेऽपाः । ऋभवः । मन्दसानाः । अस्मे इति । धत्त । ये । च । रातिम् । गृणन्ति ॥१०॥

वेङ्कट० ये यूयं गवादियुक्तं धनं प्रयच्छथ वासयितृपुरुषयुक्तम् बहुशब्दम्, ते अग्रे पातारः हे ऋभवः! मोदमानाः अस्मभ्यं प्रयच्छत[4] । ये च अन्ये देवाः धनम् उच्चारयन्ति ॥ १० ॥

नापाभूत न वोऽतीतृषामानिःशस्ता ऋभवो यज्ञे अस्मिन् ।
समिन्द्रेण मदथ सं मरुद्भिः सं राजभी रत्नधेयाय देवाः ॥ ११ ॥

न । अप । अभूत । न । वः । अतीतृषाम । अनिःऽशस्ताः । ऋभवः । यज्ञे । अस्मिन् ।
सम् । इन्द्रेण । मदथ । सम् । मरुत्ऽभिः । सम् । राजऽभिः । रत्नऽधेयाय । देवाः ॥ ११ ॥

वेङ्कट० न अप[5] भवत, न वयं युष्मान् तृषितान् कुर्मः। न यूयम् ऋभवः! अस्मिन् यज्ञे निःशस्ताः[6], अपि त्वन्तर्भूता एव । तथा सति इन्द्रेण मरुद्भिः च सम् मदथ आदित्यैश्च रत्नानि दातुम् हे देवाः!॥ ११ ॥

[7]इति तृतीयाष्टके सप्तमाध्याये चतुर्थो वर्गः[7] ॥

## [ ३५ ]

[7]वामदेवो गौतम ऋषिः । ऋभवो देवता । त्रिष्टुप् छन्दः[7] ।

इहोप यात शवसो नपातः सौधन्वना ऋभवो माप भूत ।
अस्मिन् हि वः सवने रत्नधेयं गमन्त्विन्द्रमनु वो मदासः ॥ १ ॥

इह । उप । यात । शवसः । नपातः । सौधन्वनाः । ऋभवः । मा । अप । भूत ।
अस्मिन् । हि । वः । सवने । रत्नऽधेयम् । गमन्तु । इन्द्रम् । अनु । वः । मदासः ॥ १ ॥

वेङ्कट० इह उप गच्छत हे शवसः पुत्राः! इति बलवत्तयाऽऽह । हे सुधन्वनः पुत्राः ऋभवः! मा च

---

१-१. नास्ति वि[1] लपं. २. नास्ति मूको. ३-३. °थिवी अर्वद्धं वि[1] लपं; °थिवी व्यावृद्धं वि[2]. ४. प्रयच्छथः वि[2] ल लपं. ५. अव वि[1] लपं. ६. निशस्ताः ल. ७-७. नास्ति मूको.

अप गच्छत[1]। अस्मिन् हि तृतीयसवने वः रत्नदानं स्तोतृभ्यः। युष्माकं सोमाः[2] इन्द्रम् अनु गच्छन्तु ॥ १ ॥

आगन्नृभूणामिह रत्नधेयमभूत् सोमस्य सुषुतस्य पीतिः।
सुकृत्यया यत् स्वपस्यया चँ एकं विचक्र चमसं चतुर्धा ॥ २ ॥

आ। अगन्। ऋभूणाम्। इह। रत्नऽधेयम्। अभूत्। सोमस्य। सुऽसुतस्य। पीतिः।
सुऽकृत्यया। यत्। सुऽअपस्यया। च। एकम्। विऽचक्र। चमसम्। चतुःऽधा ॥ २ ॥

वेङ्कट० आ गच्छतु[3] ऋभूणाम् तृतीयसवने रत्नदानम्। भवतु च सोमस्य सुष्ठु सुतस्य पीतिः। यस्माद् यूयं सुकर्मणा शोभनकरणेच्छया[4] च एकम् सन्तम् चमसम् विकृतवन्तः स्थ चतुर्धा ॥ २ ॥

व्यकृणोत चमसं चतुर्धा सखे वि शिक्षेत्यब्रवीत।
अथैत वाजा अमृतस्य पन्थां गणं देवानामृभवः सुहस्ताः ॥ ३ ॥

वि। अकृणोत। चमसम्। चतुःऽधा। सखे। वि। शिक्ष। इति। अब्रवीत।
अथ। ऐत। वाजाः। अमृतस्य। पन्थाम्। गणम्। देवानाम्। ऋभवः। सुऽहस्ताः ॥ ३ ॥

वेङ्कट० [5]वि अकृणोत एकम् चमसम् चतुर्धा[5], अग्ने! सखे! देवेभ्यश्चमसमिमम् वि देहि इति अब्रवीत। अथ प्राप्तवन्तः स्थ हे वाजाः! अमृतत्वप्राप्तेः पन्थानम् देवगणम् ऋभवः! सुहस्ताः! ॥ ३ ॥

किंमयः स्विच्चमस एष आस यं काव्येन चतुरो विचक्र।
अथा सुनुध्वं सवनं मदाय पात ऋभवो मधुनः सोम्यस्य ॥ ४ ॥

किम्ऽमयः। स्वित्। चमसः। एषः। आस। यम्। काव्येन। चतुरः। विऽचक्र।
अथ। सुनुध्वम्। सवनम्। मदाय। पात। ऋभवः। मधुनः। सोम्यस्य ॥ ४ ॥

वेङ्कट० किंनिमितः[6] स्वित् एषः चमसः अभूत्, यम् कविकर्मणा चतुरः विचक्र[7]। अपि च सम्प्रति सुनुध्वम् ऋभूणाम् मदाय तृतीयम् सवनम्। पिबत यूयं च हे ऋभवः! सोममयं मधु ॥ ४ ॥

शच्याकर्त पितरा युवाना शच्याकर्त चमसं देवपानम्।
शच्या हरी धनुतरावतष्टेन्द्रवाहावृभवो वाजरत्नाः ॥ ५ ॥

---

१. गच्छ° लपं. अवग वि[२] अ[१] ल. २. °मम् वि[१] लपं; °मः वि[२] अ[१] ल. ३. °च्छन्तु मूको.
४. °नेच्छया वि[१] लपं. ५. नास्ति वि[१] लपं. ६. केन निर्मितः वि[२]. ७. नास्ति वि[१,२] अ[१] ल; चमसः लपं.

शच्या॑ । अ॒कर्त॒ । पि॒तरा॑ । यु॒वा॑ना । शच्या॑ । अ॒कर्त॒ । च॒म॒सम् । दे॒व॒ऽपान॑म् ।
शच्या॑ । हरी॒ इति॑ । धनु॑ऽतरौ । अ॒त॒ष्ट॒ । इ॒न्द्र॒ऽवाहौ॑ । ऋ॒भ॒वः॒ । वा॒ज॒ऽर॒त्नाः॒ ॥ ५ ॥

वेङ्कट० प्रज्ञया कृतवन्तः पितरौ युवानौ जीर्णौ, तथा चमसम् च बहुविधं देवानां सोमपानसाधनम् । अश्वौ च गन्तृतरौ इन्द्राय कृतवन्तः स्थ हे ऋभवः रमणीयान्नाः ! ॥ ५ ॥

'इति तृतीयाष्टके सप्तमाध्याये पञ्चमो वर्गः' ॥

यो वः॑ सु॒नोत्य॑भिपि॒त्वे अह्नां॑ ती॒व्रं वा॑जासः॒ सव॑नं॒ मदा॑य ।
तस्मै॑ र॒यिमृ॑भवः॒ सर्व॑वीर॒मा त॑क्षत वृषणो मन्द॒साना॑ः ॥ ६ ॥

यः । वः॒ । सु॒नोति॑ । अ॒भि॒ऽपि॒त्वे । अह्ना॑म् । ती॒व्रम् । वा॒जा॒सः॒ । सव॑नम् । मदा॑य ।
तस्मै॑ । र॒यिम् । ऋ॒भ॒वः॒ । सर्व॑ऽवीरम् । आ । त॒क्ष॒त॒ । वृ॒ष॒णः॒ । म॒न्द॒सा॒नाः॒ ॥ ६ ॥

वेङ्कट० यः वः सुनोति अपराह्णे तीव्ररसं सोमं हे वाजाः ! मदाय । तस्मै इति स्पष्टम् ॥ ६ ॥

प्रा॒तः सु॒तम॑पिबो हर्यश्व॒ माध्यं॑दिनं॒ सव॑नं॒ केव॑लं ते ।
समृ॒भुभिः॑ पिबस्व रत्न॒धेभिः॒ सखीँ॒र्याँ इ॑न्द्र चकृ॒षे सु॑कृ॒त्या ॥ ७ ॥

प्रा॒तरिति॑ । सु॒तम् । अ॒पि॒बः॒ । ह॒रि॒ऽअ॒श्व॒ । माध्यं॑दिनम् । सव॑नम् । केव॑लम् । ते॒ ।
सम् । ऋ॒भु॒ऽभिः॑ । पि॒ब॒स्व॒ । र॒त्न॒ऽधेभिः॑ । सखी॑न् । यान् । इ॒न्द्र॒ । च॒कृ॒षे । सु॒ऽकृ॒त्या ॥ ७ ॥

वेङ्कट० चकृषे कृतवानसि । शिष्टं स्पष्टम् ॥ ७ ॥

ये दे॒वासो॒ अभ॑वता सुकृ॒त्या श्ये॒ना इ॒वेदधि॑ दि॒वि नि॑षे॒द ।
ते रत्नं॑ धात शवसो नपातः॒ सौध॑न्वना॒ अभ॑वता॒मृता॑सः ॥ ८ ॥

ये । दे॒वासः॑ । अभ॑वत । सु॒ऽकृ॒त्या । श्ये॒नाःऽइ॑व । इत् । अधि॑ । दि॒वि । नि॒ऽसे॒द ।
ते । रत्न॑म् । धा॒त॒ । श॒व॒सः॒ । न॒पा॒तः॒ । सौध॑न्वनाः । अभ॑वत । अ॒मृता॑सः ॥ ८ ॥

वेङ्कट० श्येनाः इव शीघ्रगतयः सन्तः स्वर्गस्य उपरि निषण्णाः स्थ । अमृताश्च अभवत लब्ध-सोमाः । शिष्टं स्पष्टम् ॥ ८ ॥

यत् तृ॒तीयं॒ सव॑नं रत्न॒धेय॒मकृ॑णुध्वं स्वप॒स्या सु॑हस्ताः ।
तदृ॑भवः॒ परि॑षिक्तं व ए॒तत् सं मदे॑भिरिन्द्रि॒येभिः॑ पिबध्वम् ॥ ९ ॥

---

१-१. नास्ति मूको.

यत् । तृतीयम् । सवनम् । रत्नऽधेयम् । अकृणुध्वम् । सुऽअपस्या । सुऽहस्ताः ।
तत् । ऋभवः । परिऽसिक्तम् । वः । एतत् । सम् । मदेभिः । इन्द्रियेभिः । पिबध्वम् ॥ ९ ॥

**वेङ्कट०** यत् यूयम् तृतीयम्[1] सवनम् रत्ननिधानम् अकृणुध्वम् सोमपाने शोभनेन कर्मणा हे सुहस्ताः!, तत् तृतीयं सवनम् ऋभवः! युष्माकं मदाय परितः सिक्तम्। यूयम् इन्द्रजुष्टैः सोमैः सह पानं कुरुत ॥ ९ ॥

[2]इति तृतीयाष्टके सप्तमाध्याये षष्ठो वर्गः[2] ॥

[ ३६ ]

[2]वामदेवो गौतम ऋषिः। ऋभवो देवता। जगती छन्दः, नवमी त्रिष्टुप्[2]।

अनश्वो जातो अनभीशुरुक्थ्यो३ रथस्त्रिचक्रः परि वर्तते रजः।
महत् तद् वो देव्यस्य प्रवाचनं द्यामृभवः पृथिवीं यच्च पुष्यथ ॥ १ ॥

अनश्वः । जातः । अनभीशुः । उक्थ्यः । रथः । त्रिऽचक्रः । परि । वर्तते । रजः ।
महत् । तत् । वः । देव्यस्य । प्रऽवाचनम् । द्याम् । ऋभवः । पृथिवीम् । यत् । च । पुष्यथ ॥

**वेङ्कट०** अश्वप्रग्रहाभ्यां वर्जितः सः रथः [3]जातः स्तुत्यः[3], यः[4] त्रिभिश्चक्रैर्युक्तः सन् परि वर्तते लोकम् अश्विभ्यां भवद्भिः कृतः। महत् च तत् वः देवत्वस्य प्रवचनीयं कर्म, यत् द्याम् च पृथिवीम् च उदकैस्तेजोभिर्वा पुष्यथ हे ऋभवः! ॥ १ ॥

रथं ये चक्रुः सुवृतं सुचेतसोऽविह्वरन्तं मनसस्परि ध्यया।
ताँ ऊ न्व१स्य सवनस्य पीतय आ वो वाजा ऋभवो वेदयामसि ॥ २ ॥

रथम् । ये । चक्रुः । सुऽवृतम् । सुऽचेतसः । अविऽह्वरन्तम् । मनसः । परि । ध्यया ।
तान् । ऊँ इति । नु । अस्य । सवनस्य । पीतये । आ । वः । वाजाः । ऋभवः । वेदयामसि ॥ २ ॥

**वेङ्कट०** [5]रथम् ये[5] चक्रुः सुवर्तनं सुज्ञानाः भारमहत्त्वेऽप्यकुटिलीभवन्तम् मनसः ध्यानेन। परिः पञ्चम्यर्थं स्फुटीकरोति। तान् क्षिप्रम् अस्य सवनस्य पानाय वः आ वेदयामः पिबध्वमिति हे वाजेन ऋभुणा च संयुक्ताः! ॥ २ ॥

तद् वो वाजा ऋभवः सुप्रवाचनं देवेषु विभ्वो अभवन्महित्वनम्।
जिव्री यत् सन्ता पितरा सनाजुरा पुनर्युवाना चरथाय तक्षथ ॥ ३ ॥

---

१. नास्ति वि[1] लपं.　२-२. नास्ति मूको.　३. जातस्तुत्यं मूको.　४. नास्ति वि[2] अ[2].
५-५. नास्ति वि[2].

तत् । वः । वाजाः । ऋभवः । सुऽप्रवाचनम् । देवेषु । विऽभ्वः । अभवत् । महिऽत्वनम् ।
जिव्री इति । यत् । सन्ता । पितरा । सनाऽजुरा । पुनः । युवाना । चरथाय । तक्षथ ॥ ३ ॥

**वेङ्कट०** तत् वः हे वाजाः![1] हे ऋभवः! सुष्ठु प्रवचनीयम् देवेषु अभवत् महत्त्वम् हे विभ्वः!, जीर्णौ[1] यत् सन्तौ पितरौ दीर्घकालजीर्णौ पुनः युवानौ चरणार्थं कृतवन्तः स्थ ॥ ३ ॥

एकं वि चक्र चमसं चतुर्वयं निश्चर्मणो गामरिणीत धीतिभिः ।
अथा देवेष्वमृतत्वमानश श्रुष्टी वाजा ऋभवस्तद् व उक्थ्यम् ॥ ४ ॥

एकम् । वि । चक्र । चमसम् । चतुःऽवयम् । निः । चर्मणः । गाम् । अरिणीत । धीतिऽभिः ।
अथ । देवेषु । अमृतऽत्वम् । आनश । श्रुष्टी । वाजाः । ऋभवः । तत् । वः । उक्थ्यम् ॥४॥

**वेङ्कट०** एकम् वि चक्र चमसम् चतुर्व्यूहम् । चर्मणः च गाम् निष्कृतवन्तः कर्मभिः । अथ देवेषु अमृतत्वम् आनशिध्वे । हे वाजाः! हे ऋभवः! तत् वः क्षिप्रं स्तोतव्यम् ॥ ४ ॥

ऋभुतो रयिः प्रथमश्रवस्तमो वाजश्रुतासो यमजीजनन् नरः ।
विभ्वतष्टो विदथेषु प्रवाच्यो यं देवासोऽवथा स विचर्षणिः ॥ ५ ॥

ऋभुतः । रयिः । प्रथमश्रवःऽतमः । वाजऽश्रुतासः । यम् । अजीजनन् । नरः ।
विभ्वऽतष्टः । विदथेषु । प्रऽवाच्यः । यम् । देवासः । अवथ । सः । विऽचर्षणिः ॥ ५ ॥

**वेङ्कट०** ऋभुतः लब्धं धनं जनेऽतिशयेन[2] प्रथमं श्रूयते । तथा वाजेन श्रूयमाणा ऋभवः नेतारः यम्[3] रयिम् जनयन्ति, स च तथा विभ्वयुक्तैः कृतो रयिः विदथेषु प्रवचनीयः । यम् हे ऋभवः! रक्षथ, सः [4]विद्रष्टा भवति पुरुषः[4] ॥ ५ ॥

[5]इति तृतीयाष्टके सप्तमाध्याये सप्तमो वर्गः[5] ॥

स वाज्यर्वा स ऋषिर्वचस्यया स शूरो अस्ता पृतनासु दुष्टरः ।
स रायस्पोषं स सुवीर्यं दधे यं वाजो विभ्वाँ ऋभवो यमाविषुः ॥ ६ ॥

सः । वाजी । अर्वा । सः । ऋषिः । वचस्यया । सः । शूरः । अस्ता । पृतनासु । दुस्तरः ।
सः । रायः । पोषम् । सः । सुऽवीर्यम् । दधे । यम् । वाजः । विऽभ्वा । ऋभवः । यम् । आविषुः ॥

**वेङ्कट०** सः अश्वः गन्ता, सः ऋषिः भवति स्तोत्रेण, सः शूरः इषूणाम् अस्ता पृतनासु दुष्टरः भवति, सः रायः पोषम् सुवीर्यम् च धत्ते, यम् वाजः विभ्वा च रक्षतः, यम् च सर्वे ऋभवः ॥ ६ ॥

---

१. °जा च वि[१] लपं. २. शीर्णौ अ[१]. ३. जनोऽति° ल. ४. नास्ति वि[२] अ[१]. ५-५. नास्ति वि[१] लपं. ६-६. नास्ति मूको.

श्रेष्ठं वः पेशो अधि धायि दर्शतं स्तोमो वाजा ऋभवस्तं जुजुष्टन ।
धीरासो हि ष्ठा कवयो विपश्चितस्तान् व एना ब्रह्मणा वेदयामसि ॥ ७ ॥

श्रेष्ठम् । वः । पेशः । अधि । धायि । दर्शतम् । स्तोमः । वाजाः । ऋभवः । तम् । जुजुष्टन ।
धीरासः । हि । स्थ । कवयः । विपःऽचितः । तान् । वः । एना । ब्रह्मणा । आ । वेदयामसि ॥

**वेङ्कट०** प्रशस्यतमं दर्शनीयं रूपम् वः शरीरेषु अधि अधायि, स्तोमः चायं युष्माकं क्रियते, हे वाजाः! ऋभवः! तम् सेवध्वम्। धृष्टाः हि भवथ यूयं [1]क्रान्तप्रज्ञाः प्राज्ञाः[1]। तान् युष्मान् अनेन स्तोत्रेण प्रज्ञापयामः ॥ ७ ॥

यूयमस्मभ्यं धिषणाभ्यस्परि विद्वांसो विश्वा नर्याणि भोजना ।
द्युमन्तं वाजं वृषशुष्ममुत्तममा नो रयिमृभवस्तक्षता वयः ॥ ८ ॥

यूयम् । अस्मभ्यम् । धिषणाभ्यः । परि । विद्वांसः । विश्वा । नर्याणि । भोजना ।
द्युऽमन्तम् । वाजम् । वृषऽशुष्मम् । उत्ऽतमम । आ । नः । रयिम् । ऋभवः । तक्षत । आ । वयः ॥

**वेङ्कट०** यूयम् अस्मभ्यम् स्तोत्रेभ्यः अनन्तरं जानन्तः विश्वानि नृहितानि भोजनानि कुरुत । दीप्तिमद् अन्नम् वृष्यमाणबलम् उत्तमम् रयिम् च अस्मभ्यम् हे ऋभवः! आ तक्षत आयुश्च ॥ ८ ॥

इह प्रजामिह रयिं रराणा इह श्रवो वीरवत् तक्षता नः ।
येन वयं चितयेमात्यन्यान् तं वाजं चित्रमृभवो ददा नः ॥ ९ ॥

इह । प्रऽजाम् । इह । रयिम् । रराणाः । इह । श्रवः । वीरऽवत् । तक्षत । नः ।
येन । वयम् । चितयेम । अति । अन्यान् । तम् । वाजम् । चित्रम् । ऋभवः । दद । नः ॥ ९ ॥

**वेङ्कट०** रममाणाः यूयम् अस्मिन् यज्ञे प्रजाम् रयिम् वीरवत् अन्नं च कुरुत । येन अन्नेन वयम् अन्यान् अति[2] ज्ञायेमहि । तम् वाजम् चायनीयम् हे ऋभवः! दत्त नः ॥ ९ ॥

[3]इति तृतीयाष्टके सप्तमाध्याये अष्टमो वर्गः[3] ॥

[ ३७ ]

[3]वामदेवो गौतम ऋषिः । ऋभवो देवता । त्रिष्टुप् छन्दः, अन्त्याश्चतस्रोऽनुष्टुभः[3] ।

उप नो वाजा अध्वरमृभुक्षा देवा यात पथिभिर्देवयानैः ।
यथा यज्ञं मनुषो विक्ष्वा३सु दधिध्वे रण्वाः सुदिनेष्वह्नाम् ॥ १ ॥

१-१. क्रान्तप्रज्ञाः ल. २. अपि वि[2] अ[1]; अनि वि[1] लपं. ३-३. नास्ति मूको.

उप । नः । वाजाः । अध्वरम् । ऋभुक्षाः । देवाः । यात । पथिऽभिः । देवऽयानैः ।
यथा । यज्ञम् । मनुषः । विक्षु । आसु । दधिध्वे । रण्वाः । सुऽदिनेषु । अह्नाम् ॥ १ ॥

वेङ्कट० उप [1]यात अस्मद्यज्ञम्[1] हे[2] वाजाः ! देवाः ! ऋभवः ! पथिभिः देवयानैः । यथा यज्ञम् मनोः प्रजापतेः स्वभूतासु आसु प्रजासु धारयथ हे रमणीयाः ! अह्नाम् सुदिनत्वे सति । शोभनत्वं कर्माधिकरणत्वात् । एवमिमं च यज्ञं धारयथेति ॥ १ ॥

ते वो हृदे मनसे सन्तु यज्ञा जुष्टासो अद्य घृतनिर्णिजो गुः ।
प्र वः सुतासो हरयन्त पूर्णाः क्रत्वे दक्षाय हर्षयन्त पीताः ॥ २ ॥

ते । वः । हृदे । मनसे । सन्तु । यज्ञाः । जुष्टासः । अद्य । घृतऽनिर्निजः । गुः ।
प्र । वः । सुतासः । हरयन्त । पूर्णाः । क्रत्वे । दक्षाय । हर्षयन्त । पीताः ॥ २ ॥

वेङ्कट० ते युष्माकम् यज्ञाः मनसे हृदयाय च प्रियाः सन्तु पर्याप्ताः । अद्य क्षरद्रूपाः ऋभवः आगच्छन्तु । प्र ह्रियन्ते युष्मभ्यं सोमाः पूर्णाः प्रज्ञानाय बलाय च[3] । पीताः युष्मान् हर्षयन्ताम् ॥ २ ॥

त्र्युदायं देवहितं यथा वः स्तोमो वाजा ऋभुक्षणो ददे वः ।
जुह्वे मनुष्वदुपरासु विक्षु युष्मे सचा बृहद्दिवेषु सोमम् ॥ ३ ॥

त्रिऽउदायम् । देवऽहितम् । यथा । वः । स्तोमः । वाजाः । ऋभुक्षणः । ददे । वः ।
जुह्वे । मनुष्वत् । उपरासु । विक्षु । युष्मे इति । सचा । बृहत्ऽदिवेषु । सोमम् ॥ ३ ॥

वेङ्कट० तृतीयसवने[4] उद्गतमन्नम् यथा वः देवैर्निहितम्, यथा च हे वाजाः ! ऋभवः ! स्तोमः दत्तः, तथाहम् जुह्वे युष्मासु सोमम् बृहद्दीप्तिषु सहायभूतः । यथा मनुः उप्तासु प्रजासु अन्नं निहितवान् तद्वदिति ॥३॥

पीवोअश्वाः शुचद्रथा हि भूतायःशिप्रा वाजिनः सुनिष्काः ।
इन्द्रस्य सूनो शवसो नपातोऽनु वश्चेत्यग्रियं मदाय ॥ ४ ॥

पीवःऽअश्वाः । शुचत्ऽरथाः । हि । भूत । अयःऽशिप्राः । वाजिनः । सुऽनिष्काः ।
इन्द्रस्य । सूनो इति । शवसः । नपातः । अनु । वः । चेति । अग्रियम् । मदाय ॥ ४ ॥

वेङ्कट० मांसलाश्वाः[5] दीप्तरथाः हि भवत[6] हिरण्मयशिरस्त्राणाः हे वाजिनः ! शोभननिष्काः । निष्कः[2] कण्ठाभरणम् । हे इन्द्रस्य सूनो ! शवसः नपातः ! इति बलवत्तया सम्बोधयति । गणापेक्षयैकवचनम् । युष्माकं मुख्यं हविः अनु अज्ञायि देवैः मदाय ॥ ४ ॥

ऋभुमृभुक्षणो रयिं वाजे वाजिन्तमं युजम् । इन्द्रस्वन्तं हवामहे सदासातममश्विनम् ॥५॥

---

१-१. आयाताद्यज्ञं वि[2] लपं; आयातास्मभ्यं वि[2] अ[1] ल. २. नास्ति वि[2] अ[1]. ३. नास्ति मूको. ४. °तीये स° वि[2] अ[1]. ५. °लाश्वाश्वाः वि[2] अ[1] ल. ६. भवथ वि[1].

ऋभुम् । ऋभुक्षणः । रयिम् । वाजे । वाजिन्ऽतमम् । युजम् ।
इन्द्रस्वन्तम् । हवामहे । सदाऽसातमम् । अश्विनम् ॥ ५ ॥

**वेङ्कट०** दीप्तम्[1] हे ऋभवः! धनम् हवामहे । वाजे च सौधन्वने अतिशयेन च अश्ववन्तं सहायभूतम् इन्द्रेण सहितं हवामहे सर्वदातिशयेन दीयमानम् ऋभुभिः[2] अश्ववन्तम् ॥ ५ ॥

[3]इति तृतीयाष्टके सप्तमाध्याये नवमो वर्गः[3] ॥

**सेदृभवो यमवथ यूयमिन्द्रश्च मर्त्यम् । स धीभिरस्तु सनिता मेधसाता सो अर्वता ॥ ६ ॥**

सः । इत् । ऋभवः । यम् । अवथ । यूयम् । इन्द्रः । च । मर्त्यम् ।
सः । धीभिः । अस्तु । सनिता । मेधऽसाता । सः । अर्वता ॥ ६ ॥

**वेङ्कट०** सः एव भवति हे ऋभवः!, यम् रक्षथ मर्त्यम् यूयम् इन्द्रः च । सः[4] कर्मभिः अस्तु सम्भक्ता शत्रूणां मर्त्यः हविषो दाता, अश्वेन च ॥ ६ ॥

**वि नो वाजा ऋभुक्षणः पथश्चितन यष्टवे ।**
**अस्मभ्यं सूरयः स्तुता विश्वा आशास्तरीषणि ॥ ७ ॥**

वि । नः । वाजाः । ऋभुक्षणः । पथः । चितन । यष्टवे ।
अस्मभ्यम् । सूरयः । स्तुताः । विश्वाः । आशाः । तरीषणि ॥ ७ ॥

**वेङ्कट०** हे वाजाः! ऋभवः! अस्माकं यागाय मार्गान् वि चिनुत । अस्मभ्यम्[5] हे प्राज्ञाः[6] ऋभवः! स्तुताः सर्वाः आशाः तरणनिमित्तं कुर्वन्तु ॥ ७ ॥

**तं नो वाजा ऋभुक्षण इन्द्र नासत्या रयिम् ।**
**समश्वं चर्षणिभ्य आ पुरु शस्त मघत्तये ॥ ८ ॥**

तम् । नः । वाजाः । ऋभुक्षणः । इन्द्र । नासत्या । रयिम् ।
सम् । अश्वम् । चर्षणिऽभ्यः । आ । पुरु । शस्त । मघत्तये ॥ ८ ॥

**वेङ्कट०** हे वाजादयः! अस्मभ्यम् तम् रयिम् सम्प्रयच्छत । तथा धनदानाय आभ्यः प्रजाभ्यः यूयम् अश्वम् सम् शंसत अत्यन्तम् ॥ ८ ॥

[3]इति तृतीयाष्टके सप्तमाध्याये दशमो वर्गः[3] ॥

## [ ३८ ]

[1]वामदेवो गौतम ऋषिः । दधिक्रा देवता, आद्याया द्यावापृथिवी । त्रिष्टुप् छन्दः[1] ॥

**उतो हि वां दात्रा सन्ति पूर्वा या पूरुभ्यस्त्रसदस्युर्नितोशे ।**
**क्षेत्रासां ददथुरुर्वरासां घनं दस्युभ्यो अभिभूतिमुग्रम् ॥ १ ॥**

---

१. ऋभुं दी° वि°. २. दय° वि° लपं. ३-३. नास्ति मूको. ४. नास्ति लपं. ५. अस्माकं वि° लपं. ६. प्राज्ञ मूको.

उतो इति । हि । वाम् । दात्रा । सन्ति । पूर्वा । या । पुरुऽभ्यः । त्रसदस्युः । निऽतोशे ।
क्षेत्रऽसाम् । ददथुः । उर्वराऽसाम् । घनम् । दस्युऽभ्यः । अभिऽभूतिम् । उग्रम् ॥ १ ॥

वेङ्कट० अपि च हे द्यावापृथिवी ! युवयोः दानानिसन्ति पूर्वाणि, यानि लेभे दुर्भिक्षे मनुष्येभ्यः त्रसदस्युः। निबाधायां[1] तस्मै युवां क्षेत्रदानम् ददथुः, एवम् उर्वरादानं च, तथाऽऽयुधम् शत्रुभ्यः अभिभावुकम् उद्गूर्णम् ॥ १ ॥

उत वाजिनं पुरुनिष्षिध्वानं दधिक्रामु ददथुर्विश्वकृष्टिम् ।
ऋजिप्यं श्येनं प्रुषितप्सुमाशुं चर्कृत्यमर्यो नृपतिं न शूरम् ॥ २ ॥

उत । वाजिनम् । पुरुनिःऽसिध्वानम् । दधिऽक्राम् । ऊँ इति । ददथुः । विश्वऽकृष्टिम् ।
ऋजिप्यम् । श्येनम् । प्रुषितऽप्सुम् । आशुम् । चर्कृत्यम् । अर्यः । नृऽपतिम् । न । शूरम् ॥२॥

वेङ्कट० अपि च वाजिनम् बहूनां निषेद्धारम् यः पदानि दधत् क्रामति[2] तम् ददथुः विश्वस्य कर्मणः कर्तारम् ऋजुगामिनम् गन्तारम् प्रुषद्वर्णम् व्यापकम् पुनःपुनः प्रयोज्यम् । राजा यथा शूरम् नृणां पतिं राष्ट्राय प्रयच्छति ॥ २ ॥

यं सीमनु प्रवतेव द्रवन्तं विश्वः पूरुर्मदति हर्षमाणः ।
पड्भिर्गृध्यन्तं मेधयुं न शूरं रथतुरं वातमिव ध्रजन्तम् ॥ ३ ॥

यम् । सीम् । अनु । प्रवताऽइव । द्रवन्तम् । विश्वः । पूरुः । मदति । हर्षमाणः ।
पट्ऽभिः । गृध्यन्तम् । मेधऽयुम् । न । शूरम् । रथऽतुरम् । वातम्ऽइव । ध्रजन्तम् ॥ ३ ॥

वेङ्कट० यम् अनु मदति प्रवणेनोदकमिव द्रवन्तम् सर्वः हृष्यन् मनुष्यः पादैः शत्रूनभिकाङ्क्षन्तम् सङ्ग्रामेच्छुम् इव शूरम् रथम् त्वरयन्तम् वातम् इव गच्छन्तम् ॥ ३ ॥

यः स्मारुन्धानो गध्या समत्सु सनुतरश्चरति गोषु गच्छन् ।
आविर्ऋजीको विदथा निचिक्यत् तिरो अरतिं पर्याप आयोः ॥ ४ ॥

यः । स्म । आऽरुन्धानः । गध्या । समत्ऽसु । सनुऽतरः । चरति । गोषु । गच्छन् ।
आविःऽऋजीकः । विदथा । निऽचिक्यत् । तिरः । अरतिम् । परि । आपः । आयोः ॥ ४ ॥

वेङ्कट० यः खलु सङ्ग्रामेषु सर्वतो निरुन्धन् अभिकाङ्क्ष्याणि सम्भक्तृतरः चरति गोनिमित्तम् गच्छन्, आविर्भूताकुटिलगतिः[3] ज्ञातव्यानि नियमेन जानन् [4]मनुष्यस्य अरतिम्[4] परि तिरः करोति गच्छन् ॥ ४ ॥

---

१. निर्बा° ल. २. क्रम° वि' ल लपं. ३. °भूनः कुटि° लपं. ४-४. मनुष्यारतिं वि' ल लपं.

उत स्मैनं वस्त्रमथिं न तायुमनु क्रोशन्ति क्षितयो भरेषु ।
नीचायमानं जसुरिं न श्येनं श्रवश्चाच्छा पशुमच्च यूथम् ॥ ५ ॥

उत । स्म । एनम् । वस्त्रऽमथिम् । न । तायुम् । अनु । क्रोशन्ति । क्षितयः । भरेषु ।
नीचा । अयमानम् । जसुरिम् । न । श्येनम् । श्रवः । च । अच्छ । पशुऽमत् । च । यूथम् ॥५॥

वेङ्कट० 'अपि च स्म एनम्'[1] वस्त्रमाथिनम् ( तु. या ४,२४ ) इव स्तेनम् अनु क्रोशन्ति क्षितयः सङ्ग्रामेषु, नीचैः अयमानम् क्षुधा हिंसितम् इव श्येनम्, धनम् पशुमत् यूथम् च प्रति ॥ ५ ॥

[2]इति तृतीयाष्टके सप्तमाध्ये एकादशो वर्गः[2] ।

उत स्मासु प्रथमः सरिष्यन् नि वेवेति श्रेणिभी रथानाम् ।
स्रजं कृण्वानो जन्यो न शुभ्वा रेणुं रेरिहत् किरणं ददश्वान् ॥ ६ ॥

उत । स्म । आसु । प्रथमः । सरिष्यन् । नि । वेवेति । श्रेणिऽभिः । रथानाम् ।
स्रजम् । कृण्वानः । जन्यः । न । शुभ्वा । रेणुम् । रेरिहत् । किरणम् । ददश्वान् ॥ ६ ॥

वेङ्कट० अपि च स्म आसु सेनासु अग्रतः सरिष्यन् रथानाम् सङ्घैः सह न्यङ्[3] गच्छति पार्श्वयोर्मनुष्याणां श्रेणिम्[4] कुर्वन् राजा इव शोभनः सङ्ग्रामोत्थम्[5] रेणुम्[6] लिहन् विशन् दीप्तिम् प्रयच्छन् ॥ ६ ॥

उत स्य वाजी सहुरिर्ऋतावा शुश्रूषमाणस्तन्वा समर्ये ।
तुरं यतीषु तुरयन्नृजिप्योऽधि भ्रुवोः किरते रेणुमृञ्जन् ॥ ७ ॥

उत । स्यः । वाजी । सहुरिः । ऋतऽवा । शुश्रूषमाणः । तन्वा । सऽमर्ये ।
तुरम् । यतीषु । तुरयन् । ऋजिप्यः । अधि । भ्रुवोः । किरते । रेणुम् । ऋञ्जन् ॥ ७ ॥

वेङ्कट० अपि च सः वाजी सहनवान् सत्यकर्मा मनुष्यान् चरेण सङ्ग्रामे[7] शुश्रूषमाणः तूर्णम् गच्छन्तीषु सेनासु त्वरयन् ऋजुगामी मनुष्यान् भ्रुवोः अधि रेणुम् उत्किरति शत्रून् प्रसाधयन्[8] ॥ ७ ॥

उत स्मास्य तन्यतोरिव द्योर्ऋघायतो अभियुजो भयन्ते ।
यदा सहस्रमभि षीमयोधीद् दुर्वर्तुः स्मा भवति भीम ऋञ्जन् ॥ ८ ॥

उत । स्म । अस्य । तन्यतोःऽइव । द्योः । ऋघायतः । अभिऽयुजः । भयन्ते ।
यदा । सहस्रम् । अभि । सीम् । अयोधीत् । दुःऽवर्तुः । स्म । भवति । भीमः । ऋञ्जन् ॥ ८ ॥

---

१. नास्ति वि[1] लपं. २-२. नास्ति मूको. ३. स्वङ् वि[2] अ[1]. ४. °णीम् वि[2] लपं. ५. °मार्थं वि[1] लपं. ६. करणं वि[2] अ[1]. ७. नास्ति ल लपं. ८. साध° वि[2] अ[1].

**वेङ्कट०** अपि च अस्य अशनेः इव दीप्तस्य हिंसतः [1]अभियोक्तुः बिभ्यति[1]। यदा सहस्रम् भटानां सर्वतः अयोधीत्[2] दुर्वारोऽयम् भवति तदा भीमः प्रसाधयन् ॥ ८ ॥

उत स्मास्य पनयन्ति जना जूतिं कृष्टिप्रो अभिभूतिमाशोः ।
उतैनमाहुः समिथे वियन्तः परा दधिक्रा असरत् सहस्रैः ॥ ९ ॥

उत । स्म । अस्य । पनयन्ति । जनाः । जूतिम् । कृष्टिऽप्रः । अभिऽभूतिम् । आशोः ।
उत । एनम् । आहुः । समऽइथे । विऽयन्तः । परा । दधिऽक्राः । असरत् । सहस्रैः ॥ ९ ॥

**वेङ्कट०** अपि च अस्य स्तुवन्ति जनाः वेगम् अभिभावुकं मनुष्याणां पूरयितुः अश्नुवानस्य[3]। अपि च एनम् आहुः सङ्ग्रामे गच्छन्तः, परा सरति परावतो देशान् जनसहस्रैः अश्वोऽयमिति ॥ ९ ॥

आ दधिक्राः शवसा पञ्च कृष्टीः सूर्य इव ज्योतिषापस्ततान ।
सहस्रसाः शतसा वाज्यर्वा पृणक्तु मध्वा समिमा वचांसि ॥ १० ॥

आ । दधिऽक्राः । शवसा । पञ्च । कृष्टीः । सूर्यःऽइव । ज्योतिषा । अपः । ततान ।
सहस्रऽसाः । शतऽसाः । वाजी । अर्वा । पृणक्तु । मध्वा । सम् । इमा । वचांसि ॥ १० ॥

**वेङ्कट०** आ तनोति अश्वः बलेन सूर्यः इव तेजसा अपः पञ्च जनान् । शतसहस्रयोर्दाता बलवान् गन्ता अस्माकम् इमानि स्तोत्राणि मधुना सम् पर्चयतु ॥ १० ॥

[4]इति तृतीयाष्टके सप्तमाध्याये द्वादशो वर्गः[4] ॥

## [ ३९ ]

[4]वामदेवो गौतम ऋषिः । दधिक्रा देवता । त्रिष्टुप् छन्दः, षष्ठी अनुष्टुप्[4] ।

आशुं दधिक्रां तमु नु ष्टवाम दिवस्पृथिव्या उत चर्किराम ।
उच्छन्तीर्मामुषसः सूदयन्त्वति विश्वानि दुरितानि पर्षन् ॥ १ ॥

आशुम् । दधिऽक्राम् । तम् । ऊँ इति । नु । स्तवाम । दिवः । पृथिव्याः । उत । चर्किराम ।
उच्छन्तीः । माम । उषसः । सूदयन्तु । अति । विश्वानि । दुःऽइतानि । पर्षन् ॥ १ ॥

**वेङ्कट०** आशुम् अश्वम् तम् एव क्षिप्रम् स्तवाम, द्यावापृथिव्योः सुखेन वर्तितुं यत् कर्तव्यं तत् पुनःपुनः कुर्मः । उच्छन्त्यः माम् उषसः कर्मणि प्रेरयन्तु, विश्वानि च दुरितानि अति नयन्तु ॥ १ ॥

---

१-१. °योक्तुं ⋯ ह्रति वि[2]; नास्ति अ[1]. २. °योधीः वि[2,2] ल; °योधी अ[2]; °योधि लपं; कयुद्ध बा ल प्रस्तावः ३. °नस्य च वि[2]. ४-४. नास्ति मूको.

महश्चर्कर्म्यर्वतः क्रतुप्रा दधिक्राव्णः पुरुवारस्य वृष्णः ।
यं पूरुभ्यो दीदिवांसं नाग्निं ददथुर्मित्रावरुणा ततुरिम् ॥ २ ॥

महः । चर्कर्मि । अर्वतः । क्रतुऽप्राः । दधिऽक्राव्णः । पुरुऽवारस्य । वृष्णः ।
यम् । पूरुऽभ्यः । दीदिऽवांसम् । न । अग्निम् । ददथुः । मित्रावरुणा । ततुरिम् ॥ २ ॥

वेङ्कट० महतः पुनःपुनः[1] करोमि स्तुतिम्, विकिरामि च[2] घासम्, अश्वस्य कर्मणां पूरयिता दधिक्राव्णः [3]बहूनां वारकस्य[3] सेक्तुः । यम्[4] मनुष्येभ्यः दीप्तम् इव अग्निम् शत्रूणामभिभवात् ददथुः हे मित्रावरुणौ ! तारकम् ॥ २ ॥

यो अश्वस्य दधिक्राव्णो अकारीत् समिद्धे अग्ना उषसो व्युष्टौ ।
अनागसं तमदितिः कृणोतु स मित्रेण वरुणेना सजोषाः ॥ ३ ॥

यः । अश्वस्य । दधिऽक्राव्णः । अकारीत् । सम्ऽइद्धे । अग्नौ । उषसः । विऽउष्टौ ।
अनागसम् । तम् । अदितिः । कृणोतु । सः । मित्रेण । वरुणेन । सऽजोषाः ॥ ३ ॥

वेङ्कट० यः अश्वस्य दधिक्राव्णः कर्म करोति अग्नौ समिद्धे अह्नि, तम् अपापं पृथिवी करोतु । सः मित्रावरुणाभ्याम् अहोरात्राधिपतिभ्यां सङ्गतो भवतु ॥ ३ ॥

दधिक्राव्ण इष ऊर्जो महो यदमन्महि मरुतां नाम भद्रम् ।
स्वस्तये वरुणं मित्रमग्निं हवामह इन्द्रं वज्रबाहुम् ॥ ४ ॥

दधिऽक्राव्णः । इषः । ऊर्जः । महः । यत् । अमन्महि । मरुताम् । नाम । भद्रम् ।
स्वस्तये । वरुणम् । मित्रम् । अग्निम् । हवामहे । इन्द्रम् । वज्रऽबाहुम् ॥ ४ ॥

वेङ्कट० अश्वस्य[1] सर्वैः इष्यमाणस्य सर्वान् ऊर्जयतः यदा महतः, स्तुमः मरुताम् च नाम भजनीयम्, तदानीमिन्द्रादींश्च स्वस्तये[5] ह्वयामह इति । देवैः सहाश्वं च स्तौमीति ॥

इन्द्रमिवेदुभये वि ह्वयन्त उदीराणा यज्ञमुपप्रयन्तः ।
दधिक्रामु सूदनं मर्त्याय ददथुर्मित्रावरुणा नो अश्वम् ॥ ५ ॥

इन्द्रम्ऽइव । इत् । उभये । वि । ह्वयन्ते । उत्ऽईराणाः । यज्ञम् । उपऽप्रयन्तः ।
दधिऽक्राम् । ऊँ इति । सूदनम् । मर्त्याय । ददथुः । मित्रावरुणा । नः । अश्वम् ॥ ५ ॥

---

१. नास्ति वि[1] लपं. २. व वि[1,2]; नास्ति अ[1]. ३-३. °नामावा° वि[1] लपं. ४. अश्वैः क लपं.
५ नास्ति मूको.

वेङ्कट० इन्द्रम् इव अश्वम् उभये सैनिकाः देवमनुष्या वा वि ह्वयन्ते उदीर्णाः युद्धार्थम् देवानाम् यज्ञम् च जयार्थम् उपप्रगच्छन्तः। दधिक्रावाणम् शत्रोः सूदनम् ददथुः हे मित्रावरुणौ! अस्मभ्यम् अश्वम् ॥ ५ ॥

दधिक्राव्णो अकारिषं जिष्णोरश्वस्य वाजिनः ।
सुरभि नो मुखा करत् प्र ण आयूंषि तारिषत् ॥ ६ ॥

दधिऽक्राव्णः । अकारिषम् । जिष्णोः । अश्वस्य । वाजिनः ।
सुरभि । नः । मुखा । करत् । प्र । नः । आयूंषि । तारिषत् ॥ ६ ॥

वेङ्कट० दधिक्राव्णः[1] करोमि घासकण्डूयनादि जिष्णोः अश्वस्य बलवतः । सुरभीणि अस्माकम् मुखानि करोतु, प्रतरतु[2] च अस्मान् आयूंषि ॥ ६ ॥

[3]इति तृतीयाष्टके सप्तमाध्याये त्रयोदशो वर्गः[3] ॥

## [ ४० ]

[3]वामदेवो गौतम ऋषिः । दधिक्रा देवता, पञ्चम्याः सूर्यः । जगती छन्दः, आद्या त्रिष्टुप्[3] ।

दधिक्राव्ण इदु नु चर्किराम विश्वा इन्मामुषसः सूदयन्तु ।
अपामग्नेरुषसः सूर्यस्य बृहस्पतेराङ्गिरसस्य जिष्णोः ॥ १ ॥

दधिऽक्राव्णः । इत् । ऊँ इति । नु । चर्किराम । विश्वाः । इत् । माम् । उषसः । सूदयन्तु ।
अपाम् । अग्नेः । उषसः । सूर्यस्य । बृहस्पतेः । आङ्गिरसस्य । जिष्णोः ॥ १ ॥

वेङ्कट० दधिक्राव्णः एव पुनःपुनर्घासं विकिराम । विश्वाः एव उषसः माम् तत्र प्रेरयन्तु । तथाऽप्प्रभृतीनां[4] च पञ्चानां कर्मणि ॥ १ ॥

सत्वा भरिषो गविषो दुवन्यसच्छ्रवस्यादिष उषसस्तुरण्यसत् ।
सत्यो द्रवो द्रवरः पतङ्गरो दधिक्रावेषमूर्जं स्वर्जनत् ॥ २ ॥

सत्वा । भरिषः । गोऽइषः । दुवन्यऽसत् । श्रवस्यात् । इषः । उषसः । तुरण्यऽसत् ।
सत्यः । द्रवः । द्रवरः । पतङ्गरः । दधिऽक्रावा । इषम् । ऊर्जम् । स्वः । जनत् ॥ २ ॥

वेङ्कट० गमनशीलः भरणशीलः गवामेष्टा परिचरणकुशले सीदन् अन्नमिच्छतु अन्नस्येष्टा उषसः त्वरणपरे सीदन् । सत्यबलः द्रवणशीलः द्रवतां[5] वरः पतन् गमनवान् क्षिप्रगामी दधिक्रावा अन्नं[6] रसं च सर्वम् जनयति ॥ २ ॥

---

१. नास्ति वि[1] लपं. २. प्रतरन्तु ल लपं. ३-३. नास्ति मूको. ४. तथा प्रभृ° वि[1,2] अ[1] ल; तथा प्रती° लपं. ५. दव° वि[1] ल लपं; भव° वि[2] अ[1]. ६. नास्ति वि[1] लपं.

उत स्मास्य द्रवतस्तुरण्यतः पूर्णं न वेरनु वाति प्रगर्धिनः ।
श्येनस्येव ध्रजतो अङ्कसं परि दधिक्राव्णः सहोर्जा तरित्रतः ॥ ३ ॥

उत । स्म । अस्य । द्रवतः । तुरण्यतः । पर्णम् । न । वेः । अनु । वाति । प्रऽगर्धिनः ।
श्येनस्यऽइव । ध्रजतः । अङ्कसम् । परि । दधिऽक्राव्णः । सह । ऊर्जा । तरित्रतः ॥ ३ ॥

**वेङ्कट०** अपि च स्म अस्य द्रवतः **त्वरमाणस्य** अङ्कसम् **उभयपार्श्वस्थं कक्ष्यादिकम्** पर्णम् इव **पक्षिणः** परि अनु **गच्छति अत्यन्तमभिकाङ्क्षमाणस्य गमनम्** श्येनस्य इव **गच्छतः पर्णम्** दधिक्राव्णः सह **बलेन तरतः** ॥ ३ ॥

उत स्य वाजी क्षिपणिं तुरण्यति ग्रीवायां बद्धो अपिकक्ष आसनि ।
क्रतुं दधिक्रा अनु संतवीत्वत् पथामङ्कांस्यन्वापनीफणत् ॥ ४ ॥

उत । स्यः । वाजी । क्षिपणिम् । तुरण्यति । ग्रीवायाम् । बद्धः । अपिऽकक्षे । आसनि ।
क्रतुम् । दधिऽक्राः । अनु । सम्ऽतवीत्वत् । पथाम् । अङ्कांसि । अनु । आऽपनीफणत् ॥ ४ ॥

**वेङ्कट०** अपि च[1] सः वाजी **अश्वारोहस्य क्षेपणम्** अनु **तूर्णमश्नुते अध्वानम्** ग्रीवायाम् बद्धः **अंसयोः आस्ये च । गमनकर्म सन्तन्वन्** दधिक्राः **मार्गाणाम्[2] कुटिलानि[3]** अनु आपनीफणत्[4] **गच्छति । गतिकर्मसु पठितः फणिः** ॥ ४ ॥

हंसः शुचिषद् वसुरन्तरिक्षसद्धोता वेदिषदतिथिर्दुरोणसत् ।
नृषद् वरसदृतसद् व्योमसदब्जा गोजा ऋतजा अद्रिजा ऋतम् ॥ ५ ॥

हंसः । शुचिऽसत् । वसुः । अन्तरिक्षऽसत् । होता । वेदिऽसत् । अतिथिः । दुरोणऽसत् ।
नृऽसत् । वरऽसत् । ऋतऽसत् । व्योमऽसत् । अप्ऽजाः । गोऽजाः । ऋतऽजाः । अद्रिऽजाः । ऋतम् ॥५॥

**वेङ्कट०** सौरी । [5]हंसः सूर्यः[5], वसुः वायुः, होता अग्निः अतिथिः च । **महानात्मैकस्त्रिधा[6] स्थितः[7]** । **ब्राह्मणम्** — 'एष वै हंसः शुचिषत्' ( ऐब्रा ४,२०, ) इति ॥ ५ ॥

[5]इति तृतीयाष्टके सप्तमाध्याये चतुर्दशो वर्गः[5] ॥

## [ ४१ ]

[5]वामदेवो गौतम ऋषिः । इन्द्रावरुणौ देवता । त्रिष्टुप् छन्दः[5] ।

इन्द्रा को वां वरुणा सुम्नमाप स्तोमो हविष्माँ अमृतो न होता ।
यो वां हृदि क्रतुमाँ अस्मदुक्तः पस्पर्शदिन्द्रावरुणा नमस्वान् ॥ १ ॥

---

१. नास्ति वि[1] ल. २. मार्गाः लपं; मार्गा वि[1]. ३. °लान् वि[1] लपं. ४-४. आन्वनीफ° वि[1] लपं; अपनीफ° वि[1] अ[1]; आन्वपनी° ल. ५-५. नास्ति मूको. ६. °कस्त्रिधास्त्रिधा वि[1] लपं. ७. नास्ति वि[1].

इन्द्रा । कः । वाम् । वरुणा । सुम्नम् । आप । स्तोमः । हविष्मान् । अमृतः । न । होता ।
यः । वाम् । हृदि । क्रतुऽमान् । अस्मत् । उक्तः । पस्पर्शत् । इन्द्रावरुणा । नमस्वान् ॥ १ ॥

**वेङ्कट०** हे इन्द्रावरुणौ! कीदृशः युवयोः सुखं प्राप्नोति स्तोमः हविषा युक्तः अमृतः दैव्यः इव होता अग्निः, यः वाम् भवतोः[1] स्तोमः कर्मवान् अस्माभिः उक्तः अन्नवान् हृदये स्पृशति इन्द्रावरुणौ! । अग्निर्यथा हविष्मान् स्तुन्वन्[2] हृदयं स्पृशति, तद्वत् स्पृशतीति ॥ १ ॥

इन्द्रा ह यो वरुणा चक्र आपी देवौ मर्तः सख्याय प्रयस्वान् ।
स हन्ति वृत्रा समिथेषु शत्रूनवोभिर्वा महद्भिः स प्र शृण्वे ॥ २ ॥

इन्द्रा । ह । यः । वरुणा । चक्रे । आपी इति । देवौ । मर्तः । सख्याय । प्रयस्वान् ।
सः । हन्ति । वृत्रा । समत्ऽइथेषु । शत्रून् । अवःऽभिः । वा । महत्ऽभिः । सः । प्र । शृण्वे ॥ २ ॥

**वेङ्कट०** यः इन्द्रावरुणौ बन्धू करोति देवौ मनुष्यः सख्याय च करोति[3] अन्नवान्, सः हन्ति उपद्रवाणि सङ्ग्रामेषु च[4] शत्रून्, अन्नैः च महद्भिः सः प्र श्रूयते ॥ २ ॥

इन्द्रा ह रत्नं वरुणा धेष्ठेत्था नृभ्यः शशमानेभ्यस्ता ।
यदी सखाया सख्याय सोमैः सुतेभिः सुप्रयसा मादयैते ॥ ३ ॥

इन्द्रा । ह । रत्नम् । वरुणा । धेष्ठा । इत्था । नृऽभ्यः । शशमानेभ्यः । ता ।
यदि । सखाया । सख्याय । सोमैः । सुतेभिः । सुऽप्रयसा । मादयैते इति ॥ ३ ॥

**वेङ्कट०** इन्द्रावरुणौ युवाम् अतिशयेन रत्नम् दातारौ इत्थम् नृभ्यः भजमानेभ्यः तौ । यदि इति स्पष्टम् ॥ ३ ॥

इन्द्रा युवं वरुणा दिद्युमस्मिन्नोजिष्ठमुग्रा नि वधिष्टं वज्रम् ।
यो नो दुरेवो वृकतिर्दभीतिस्तस्मिन् मिमाथामभिभूत्योजः ॥ ४ ॥

इन्द्रा । युवम् । वरुणा । दिद्युम् । अस्मिन् । ओजिष्ठम् । उग्रा । नि । वधिष्टम् । वज्रम् ।
यः । नः । दुःऽएवः । वृकतिः । दभीतिः । तस्मिन् । मिमाथाम् । अभिऽभूति । ओजः ॥ ४ ॥

**वेङ्कट०** हे इन्द्रावरुणौ! युवाम् आयुधं द्योतमानम् अस्मिन् बलवत्तमम् हे उद्गूर्णौ! नि पातयतम् । यः नः दुष्टागमनः स्तेनः हिंसकः, तस्मिन् कुरुतम् अभिभावुकं[5] बलम् ॥ ४ ॥

---

१. °तौ मूको. २. तु. वैप ३,४ √स्तु इत्यत्र; स्तुसन् वि[1] लं; स्तुवन् ल प्रस्तावः. ३. करोतु वि[12] ल लपं. ४. नास्ति वि[1] ल लपं. ५. °माविकं वि[1] लपं.

इन्द्रा युवं वरुणा भूतमस्या धियः प्रेतारा वृषभेव धेनोः ।
सा नो दुहीयद् यवसेव गत्वी सहस्रधारा पयसा मही गौः ॥ ५ ॥

इन्द्रा । युवम् । वरुणा । भूतम् । अस्याः । धियः । प्रेतारा । वृषभाऽइव । धेनोः ।
सा । नः । दुहीयत् । यवसाऽइव । गत्वी । सहस्रऽधारा । पयसा । मही । गौः ॥ ५ ॥

**वेङ्कट०** इन्द्रावरुणौ! युवाम् अस्य कर्मणः प्रीणयितारौ भवतम् वृषभाविव धेनोः। तत् कर्म अस्माकं दुग्धाम्[1], यथा यवसानि गत्वा महती सहस्रधारा पयसा गौः दुग्धे ॥ ५ ॥

[2]इति तृतीयाष्टके सप्तमाध्याये पञ्चदशो वर्गः[2] ॥

तोके हिते तनय उर्वरासु सूरो दृशीके वृषणश्च पौंस्ये ।
इन्द्रा नो अत्र वरुणा स्यातामवोभिर्दस्मा परितक्म्यायाम् ॥ ६ ॥

तोके । हिते । तनये । उर्वरासु । सूरः । दृशीके । वृषणः । च । पौंस्ये ।
इन्द्रा । नः । अत्र । वरुणा । स्याताम् । अवःऽभिः । दस्मा । परिऽतक्म्यायाम् ॥ ६ ॥

**वेङ्कट०** पुत्रे हिते सुहृदि पौत्रे क्षेत्रेषु सूर्यस्य दर्शने यूनः च प्रजननशक्तौ अत्र सर्वत्र इन्द्रावरुणौ भवताम् नः रक्षणैः दर्शनीयौ रात्रावन्धकारे च ॥ ६ ॥

युवामिद्ध्यवसे पूर्व्याय परि प्रभूती गविषः स्वापी ।
वृणीमहे सख्याय प्रियाय शूरा मंहिष्ठा पितरेव शंभू ॥ ७ ॥

युवाम् । इत् । हि । अवसे । पूर्व्याय । परि । प्रभूती इति प्रऽभूती । गोऽइषः । स्वापी इति सुऽआपी । वृणीमहे । सख्याय । प्रियाय । शूरा । मंहिष्ठा । पितराऽइव । शम्भू इति शम्ऽभू ॥७॥

**वेङ्कट०** युवाम् एव हि रक्षणाय पुरातनाय परि वृणीमहे प्रकृष्टभूतिकौ गाः[3] इच्छन्तः शोभनबन्धू सख्याय च प्रियाय शूरौ दातृतमौ पितराविव सुखस्य भावयितारौ ॥ ७ ॥

ता वां धियोऽवसे वाजयन्तीराजिं न जग्मुर्युवयूः सुदानू ।
श्रिये न गाव उप सोममस्थुरिन्द्रं गिरो वरुणं मे मनीषाः ॥ ८ ॥

ताः । वाम् । धियः । अवसे । वाजऽयन्तीः । आजिम् । न । जग्मुः । युवऽयूः । सुदानू इति सुऽदानू ।
श्रिये । न । गावः । उप । सोमम् । अस्थुः । इन्द्रम् । गिरः । वरुणम् । मे । मनीषाः ॥ ८ ॥

---

1. दुग्धं वि[2] अ[1] ल लपं. 2-2. नास्ति मूको. 3. ताः मूको.

वेङ्कट० तानि[1] वाम् कर्माणि रक्षणाय अन्नमिच्छन्ति युष्मत्कामानि युद्धम् इव गच्छन्ति हे शोभनदानौ!। यथा श्रिये सोमम् राजानम् गावः उपतिष्ठन्ति[2], एवमिन्द्रावरुणौ मदीयाः गिरः मनीषाः च उपतिष्ठन्ति ॥८॥

इमा इन्द्रं वरुणं मे मनीषा अग्मन्नुप द्रविणमिच्छमानाः ।
उपेमस्थुर्जोष्टार इव वस्वो रघ्वीरिव श्रवसो भिक्षमाणाः ॥ ९ ॥

इमाः । इन्द्रम् । वरुणम् । मे । मनीषाः । अग्मन् । उप । द्रविणम् । इच्छमानाः ।
उप । ईम् । अस्थुः । जोष्टारःऽइव । वस्वः । रघ्वीःऽइव । श्रवसः । भिक्षमाणाः ॥ ९ ॥

वेङ्कट० मदीयाः[3] इमाः मनीषाः धनम् इच्छमानाः उप गच्छन्ति इन्द्रावरुणौ । [4]उप अस्थुः[4] एनौ धनस्य जोष्टारः इव याचकाः[5] आढ्यं गन्त्र्यः इव च प्रजाः अन्नम् भिक्षमाणाः ॥ ९ ॥

अश्व्यस्य त्मना रथ्यस्य पुष्टेर्नित्यस्य रायः पतयः स्याम ।
ता चक्राणा ऊतिभिर्नव्यसीभिरस्मत्रा रायो नियुतः सचन्ताम् ॥ १० ॥

अश्व्यस्य । त्मना । रथ्यस्य । पुष्टेः । नित्यस्य । रायः । पतयः । स्याम ।
ता । चक्राणौ । ऊतिऽभिः । नव्यसीभिः । अस्मऽत्रा । रायः । निऽयुतः । सचन्ताम् ॥१०॥

वेङ्कट० अश्वसङ्घस्य आत्मनैव रथसङ्घस्य पुष्टेः च नित्यस्य च धनस्य पतयः स्याम। तौ कुर्वाणौ रक्षणैः नवतरैः असुरेभ्यस्त्रातारौ धनानि नियुतः च अस्मान् सचन्ताम् ॥ १० ॥

आ नो बृहन्ता बृहतीभिरूती इन्द्र यातं वरुण वाजसातौ ।
यद् दिद्यवः पृतनासु प्रक्रीळान् तस्य वां स्याम सनितार आजेः ॥ ११ ॥

आ । नः । बृहन्ता । बृहतीभिः । ऊती । इन्द्र । यातम् । वरुण । वाजऽसातौ ।
यत् । दिद्यवः । पृतनासु । प्रऽक्रीळान् । तस्य । वाम् । स्याम । सनितारः । आजेः ॥ ११ ॥

वेङ्कट० आ यातम् अस्मान् महान्तौ महद्भिः रक्षणैः हे इन्द्रावरुणौ! सङ्ग्रामे । यदि द्योतमाना योद्धारः पृतनासु प्रक्रीडन्ति, युवयोः स्वभूता वयम् तस्य सङ्ग्रामस्य सम्भक्तारः स्याम ॥ ११ ॥

[6]इति तृतीयाष्टके सप्तमाध्याये षोडशो वर्गः[6] ॥

## [ ४२ ]

[6]त्रसदस्युः पौरुकुत्स्य ऋषिः । त्रसदस्युर्देवता, अन्त्यानां चतसृणाम् इन्द्रावरुणौ । त्रिष्टुप् छन्दः[6] ।

मम द्विता राष्ट्रं क्षत्रियस्य विश्वायोर्विश्वे अमृता यथा नः ।
क्रतुं सचन्ते वरुणस्य देवा राजामि कृष्टेरुपमस्य वव्रेः ॥ १ ॥

---

१. तौ मूको. २. °ष्ठति मूको. ३. नास्ति वि[२]. ४-४. उपेमस्थुः वि[१] ल. ५. याचक मूको.
६-६. नास्ति मूको.

मम॑ । द्वि॒ता । रा॒ष्ट्रम् । क्ष॒त्रिय॑स्य । वि॒श्वऽआ॑योः । विश्वे॑ । अ॒मृताः॑ । यथा॑ । नः॒ ।
क्रतु॑म् । स॒च॒न्ते॒ । वरु॑णस्य । दे॒वाः । राजा॑मि । कृ॒ष्टेः । उ॒प॒मस्य॑ । व॒व्रेः ॥ १ ॥

वेङ्कट० त्रसदस्युः पौरुकुत्स्यः । षडाद्याः तस्य[1] आत्मस्तवः । मम द्विधा भवति राष्ट्रम् क्षत्रियस्य पृथिव्यां दिवि चैश्वर्यात् सर्वस्य देशस्य गन्तुः, सर्वे देवाः यथा अस्माकं वशवर्तिनो भवन्ति । एतदेवाह[2]– क्रतुम् इति । वरुणभूतस्य मम [3]कर्म सेवन्ते[3] [4]देवाः उक्तमनुतिष्ठन्ति[4], तथेश्वरश्च[5] भवामि कृष्टेः अन्तिभूतस्य [6]पृथिव्यां वर्तमानस्य[6] मद्भयादमृत्युग्रस्तस्य[7] तत एव जीर्णस्येति ॥ १ ॥

अ॒हं राजा॒ वरु॑णो॒ मह्यं॒ तान्य॑सु॒र्या॑णि प्रथ॒मा धा॑रयन्त ।
क्रतुं॑ सचन्ते॒ वरु॑णस्य दे॒वा राजा॑मि कृ॒ष्टेरु॑प॒मस्य॑ व॒व्रेः ॥ २ ॥

अ॒हम् । राजा॑ । वरु॑णः । मह्य॑म् । तानि॑ । अ॒सु॒र्या॑णि । प्र॒थ॒मा । धा॒र॒य॒न्त॒ ।
क्रतु॑म् । स॒च॒न्ते॒ । वरु॑णस्य । दे॒वाः । राजा॑मि । कृ॒ष्टेः । उ॒प॒मस्य॑ । व॒व्रेः ॥ २ ॥

वेङ्कट० अहम् राजा वरुणः भवामि, मह्यम् तानि पुरातनानि असुरवधनिमित्तानि कर्माणि सर्वे देवा अधारयन्त । दहनोत्क्षेपणादिकं ममाज्ञया अनुतिष्ठन्ति । तदेवोक्तम्– क्रतुम् इति ॥ २ ॥

अ॒हमिन्द्रो॒ वरु॑ण॒स्ते म॑हि॒त्वोर्वी ग॑भी॒रे रज॑सी सु॒मेके॑ ।
त्वष्टे॑व॒ विश्वा॒ भुव॑नानि वि॒द्वान्त्समै॑रयं॒ रोद॑सी धा॒रयं॑ च ॥ ३ ॥

अ॒हम् । इन्द्रः॑ । वरु॑णः । ते इति॑ । म॒हि॒ऽत्वा । उ॒र्वी इति॑ । ग॒भी॒रे इति॑ । रज॑सी॒ इति॑ । सु॒मेके॒ इति॑ सु॒ऽमेके॑ ।
त्वष्टा॑ऽइव । विश्वा॑ । भुव॑नानि । वि॒द्वान् । सम् । ऐ॒र॒य॒म् । रोद॑सी॒ इति॑ । धा॒रय॑म् । च॒ ॥ ३ ॥

वेङ्कट० अहम् इन्द्रः च वरुणः च भवामि, ते च[8] द्यावापृथिव्यौ माहात्म्येन उर्वी गम्भीरे शोभमाने । यथा त्वष्टा विद्वान् सर्वाणि भूतानि सङ्गमयति धारयति च, तद्वदहमपीति ॥ ३ ॥

अ॒हम॒पो अ॑पिन्वमु॒क्षमा॑णा धा॒रयं॒ दिवं॒ सद॑न ऋ॒तस्य॑ ।
ऋ॒तेन॑ पु॒त्रो अदि॑तेर्ऋ॒तावो॒त त्रि॒धातु॑ प्रथय॒द् वि भूम॑ ॥ ४ ॥

अ॒हम् । अ॒पः । अ॒पि॒न्व॒म् । उ॒क्षमा॑णाः । धा॒रय॑म् । दिव॑म् । सद॑ने । ऋ॒तस्य॑ ।
ऋ॒तेन॑ । पु॒त्रः । अदि॑तेः । ऋ॒तऽवा॑ । उ॒त । त्रि॒ऽधातु॑ । प्र॒थ॒य॒त् । वि । भूम॑ ॥ ४ ॥

---

१. नास्ति ल लपं. २. एतदाह वि[२] अ[१]. ३-३. °मांसे° वि[१] अ[१]. ४-४. देवानुक्तमनु° (°भि° लपं.) मूको; देवा अनुक्तम°, देवा नानुक्तम° वा ल प्रस्तावः. ५. °रः ल लपं. ६-६. नास्ति वि[१] लपं. ७. °याद् मृ° ल प्रस्तावः. ८. नास्ति वि[१] ल लपं.

**वेङ्कट०** अहम् अपः सिञ्चन्तीः अपिन्वम्, **अन्तरिक्षलोकम्** [1]**धारयम् उदकस्य**[1] **आवासे । अथ परोक्षमाह ।** अदितेः पुत्रः ऋतवान् **यज्ञेन उदकेन वा** त्रिधातु भूम वि **अप्रथयत । त्रिधातुः**[2] **पृथिवी भवति ।** 'तिस्रो भूमीः' ( ऋ २,२७,८ ) इति मन्त्रः ॥ ४ ॥

मां नर॒ः स्वश्वा॑ वा॒जय॑न्तो॒ मां वृ॒ताः स॒मर॑णे हवन्ते ।
कृ॒णोम्या॒जिं म॒घवा॒हमिन्द्र॒ इय॑र्मि रे॒णुम॒भिभू॑त्योजाः ॥ ५ ॥

माम् । नर॑ः । सु॒ऽअश्वा॑ः । वा॒जय॑न्तः । माम् । वृ॒ताः । स॒म्ऽअर॑णे । ह॒व॒न्ते॒ ।
कृ॒णोमि॑ । आ॒जिम् । म॒घऽवा॑ । अ॒हम् । इन्द्र॑ः । इय॑र्मि । रे॒णुम् । अ॒भिभू॑तिऽओजाः ॥ ५ ॥

**वेङ्कट०** [3]माम् नरः[3] **शोभनाश्वाः बलिनं कुर्वन्तः** हवन्ते, माम् **एव सङ्ग्रामे शत्रुभिः** वृताः । **करोमि युद्धम्** अहम् मघवा इन्द्रः **सन्, प्रेरयामि च युद्धे** रेणुम् **अभिभावुकबलः ॥ ५ ॥**

[4]**इति तृतीयाष्टके सप्तमाध्याये सप्तदशो वर्गः**[4] ॥

अ॒हं ता विश्वा॑ च॒क॒रं॒ नकि॑र्मा॒ दैव्यं॑ सहो॑ वरते॒ अप्र॑तीतम् ।
यन्मा॒ सोमा॑सो ममद॒न्यदु॒क्थोभे भ॑येते॒ रज॑सी अ॒पारे ॥ ६ ॥

अ॒हम् । ता । विश्वा॑ । च॒क॒रम् । नकि॑ः । मा॒ । दैव्य॑म् । सह॑ः । व॒र॒ते॒ । अप्र॑तिऽइतम् ।
यत् । मा॒ । सोमा॑सः । म॒म॒द॑न् । यत् । उ॒क्था । उ॒भे इति॑ । भ॒ये॒ते॒ इति॑ । रज॑सी इति॑ । अ॒पा॒रे इति॑ ॥ ६ ॥

**वेङ्कट०** अहम्[5] **तानि वृत्रवधादीनि सर्वाणि कर्माणि कृतवानस्मि । न**[6] [3]**कश्चित् मां देवसम्बन्धि बलम् शत्रुभिरप्रतिगतम्**[3] **वारयति**[7] **। यदा**[8] **मां सोमाः अमदन्, यदा**[8] **च उक्थानि, तदानीमुभौ लोकौ मत्तो बिभ्यतः अपर्यन्तपारौ । इन्द्रावरुणाभ्यामधिष्ठितो नूनं कदाचिदासीत् त्रसदस्युरिति ॥६॥**

वि॒दुष्टे॒ विश्वा॒ भुव॑नानि॒ तस्य॒ ता प्र ब्र॑वीषि॒ वरु॑णाय वेधः ।
त्वं वृ॒त्राणि॑ शृण्वि॒षे ज॑घ॒न्वान्त्वं वृ॒ताँ अरि॑णा इन्द्र॒ सिन्धू॑न् ॥ ७ ॥

वि॒दुः । ते॒ । विश्वा॑ । भुव॑नानि । तस्य॑ । ता । प्र । ब्र॒वी॒षि॒ । वरु॑णाय । वे॒धः॒ ।
त्वम् । वृ॒त्राणि॑ । शृ॒ण्वि॒षे॒ । ज॒घ॒न्वान् । त्वम् । वृ॒तान् । अरि॑णाः । इ॒न्द्र॒ । सिन्धू॑न् ॥ ७ ॥

**वेङ्कट०** तस्य **तव हे इन्द्र ! विश्वानि कर्माणि जानन्ति**[9] [3]**भूतानि । त्वं च तानि हे विधातः !** वरुणाय **सख्ये** प्र ब्रवीषि । त्वम् वृत्राणि **घ्नन् श्रूयसे ।** त्वम् **वृत्रेण** वृतान् इन्द्र ! **निरगमयः** सिन्धून्[3] ॥ ७ ॥

---

**१-१.** धारयन्नुद॰ **मूको.** २. त्रिधातु वि[२]. **३-३. नास्ति लपं. ४-४. नास्ति मूको.**
**५. नास्ति वि[१]. ६. नास्ति मूको.** ७. पार॰ **लपं.** ८. यथा **मूको.** ९. जानते **वि[१] लपं.**

अस्माकमत्र पितरस्त आसन्त्सप्त ऋषयो दौर्गहे बध्यमाने ।
त आयजन्त त्रसदस्युमस्या इन्द्रं न वृत्रतुरमर्धदेवम् ॥ ८ ॥

अस्माकम् । अत्र । पितरः । ते । आसन् । सप्त । ऋषयः । दौःऽगहे । बध्यमाने ।
ते । आ । अयजन्त । त्रसदस्युम् । अस्याः । इन्द्रम् । न । वृत्रऽतुरम् । अर्धऽदेवम् ॥ ८ ॥

वेङ्कट० [1]अस्माकम् अस्मिन् लोके ते[1] पितरः आसन् सप्त ऋषयः दुर्गहकुलजाते मयि शत्रुभिः बध्यमाने । तथेन्द्रश्च मामध्यतिष्ठत् । अथेन्द्राधिष्ठितं माम् ते[2] आ अयजन्त[3] तत्र त्रसदस्युम् अस्याः पृथिव्याः इन्द्रम् इव वृत्राणां हन्तारम् अर्धदेवम् । इन्द्रश्च स्वामी त्रसदस्युश्च । तमिन्द्रधिष्ठितमयजन्तेति ॥ ८ ॥

पुरुकुत्सानी हि वामदाशद्धव्येभिरिन्द्रावरुणा नमोभिः ।
अथा राजानं त्रसदस्युमस्या वृत्रहणं ददथुरर्धदेवम् ॥ ९ ॥

पुरुऽकुत्सानी । हि । वाम् । अदाशत् । हव्येभिः । इन्द्रावरुणा । नमःऽभिः ।
अथ । राजानम् । त्रसदस्युम् । अस्याः । वृत्रऽहनम् । ददथुः । अर्धऽदेवम् ॥ ९ ॥

वेङ्कट० त्रसदस्योर्माता पुरुकुत्सस्य स्त्री वाम्[4] हि दानं कृतवती हे इन्द्रावरुणौ ! हविर्भिः नमस्कारैश्च युक्ता । तौ[5] युवां प्रीतौ त्रसदस्युम् राजानम् वृत्राणां हन्तारम् अर्धदेवम् अस्याः पृथिव्याः ददथुः ॥९॥

राया वयं ससवांसो मदेम हव्येन देवा यवसेन गावः ।
तां धेनुमिन्द्रावरुणा युवं नो विश्वाहा धत्तमनपस्फुरन्तीम् ॥ १० ॥

राया । वयम् । ससऽवांसः । मदेम । हव्येन । देवाः । यवसेन । गावः ।
ताम् । धेनुम् । इन्द्रावरुणा । युवम् । नः । विश्वाहा । धत्तम् । अनपऽस्फुरन्तीम् ॥ १० ॥

वेङ्कट० हे इन्द्रावरुणौ ! वां भजमानाः [6]वयम् धनेन[6] मदेम[7], यथा हव्येन देवाः मदन्ति यवसेन च गावः । तदर्थं ताम् धेनुम् हे इन्द्रावरुणौ ! युवाम् अस्मभ्यं दत्तम् सर्वदा अनपस्फुरन्तीम्[8] गुणवतीमिति ॥१०॥

[9]इति तृतीयाष्टके सप्तमाध्याये अष्टादशो वर्गः[9] ॥

## [ ४३ ]

[1]पुरुमीळ्हाऽजमीळ्हौ सौहोत्रावृषी । अश्विनौ देवता । त्रिष्टुप् छन्दः[1] ।

क उ श्रवत् कतमो यज्ञियानां वन्दारु देवः कतमो जुषाते ।
कस्येमां देवीममृतेषु प्रेष्ठां हृदि श्रेषाम सुष्टुतिं सुहव्याम् ॥ १ ॥

---

१-१. नास्ति वि[१] लपं. २. नास्ति लपं. ३. आयजम् वि[२]; या वि[२] अ[१]. ४. वा वि[१] ल. ५. मतः वि[१] अ[१]. ६-६. यद्ध[०] वि[१] लपं. ७. भजेम लपं. ८. अनवस्फु[०] लपं. ९-९. नास्ति मूको.

कः । ऊँ इति॑ । श्र॒व॒त् । क॒त॒मः । य॒ज्ञिया॑नाम् । व॒न्दारु॑ । दे॒वः । क॒त॒मः । जु॒षा॒ते॒ ।
कस्य॑ । इ॒माम् । दे॒वीम् । अ॒मृते॑षु । प्रेष्ठा॑म् । हृ॒दि । श्रे॒षा॒म॒ । सु॒ऽस्तु॒तिम् । सु॒ऽह॒व्याम् ॥ १ ॥

वेङ्कट० पुरुमीळहाजमीळहौ[1] सौहोत्रौ । कः कतमः वा[2] शृणोति देवमध्ये स्तोत्रम् । कतमः देवः सेवते । कस्य इमाम् देवीम् देवमध्ये प्रियतमाम् हृदये श्लेषयेम शोभनां स्तुतिम् हविर्युक्ताम् ॥ १ ॥

को मृ॑ळाति कत॒म आग॑मिष्ठो दे॒वाना॑मु कत॒मः शंभ॑विष्ठः ।
रथं॒ कमा॑हुर्द्र॒वद॑श्वमा॒शुं यं सूर्य॑स्य दुहि॒ताऽवृ॑णीत ॥ २ ॥

कः । मृ॒ळा॒ति॒ । क॒त॒मः । आऽग॑मिष्ठः । दे॒वाना॑म् । ऊ॒ इति॑ । क॒त॒मः । शम्ऽभ॑विष्ठः ।
रथ॑म् । कम् । आ॒हुः॒ । द्र॒वत्ऽअ॑श्वम् । आ॒शुम् । यम् । सूर्य॑स्य । दु॒हि॒ता । अवृ॑णीत ॥ २ ॥

वेङ्कट० कः सुखयति । को वा अत्यन्तमागच्छति देवानाम् मध्ये । कतमः वा अत्यन्तं सुखमुत्पादयति । कम् वा रथम् आहुः क्षिप्राश्वम् क्षिप्रगन्तारम्[3], यम्[4] रथम् अश्विनोः स्वभूतम् सूर्यस्य दुहिता स्वयंवरे अवृणीत । तथाऽश्विनावेव मृळयितारावित्यादि द्रष्टव्यम् ॥ २ ॥

म॒क्षू हि ष्मा॒ गच्छ॑थ॒ ईव॑तो॒ द्यून्इन्द्रो॒ न श॒क्तिं परि॑तक्म्यायाम् ।
दि॒व आजा॑ता दि॒व्या सु॑प॒र्णा कया॒ शची॑नां भवथः॒ शचि॑ष्ठा ॥ ३ ॥

म॒क्षु । हि । स्म॒ । गच्छ॑थः । ईव॑तः । द्यून् । इन्द्रः॑ । न । श॒क्तिम् । परि॑ऽतक्म्यायाम् ।
दि॒वः । आऽजा॑ता । दि॒व्या । सु॒ऽप॒र्णा । कया॑ । शची॑नाम् । भ॒व॒थः॒ । शचि॑ष्ठा ॥ ३ ॥

वेङ्कट० शीघ्रम् हि स्म युवाम् गच्छथः [5]गमनवतः प्रादुर्भूतान् दिवसान्, यथा इन्द्रः रात्र्यां गतायाम् शक्तिम् अधितिष्ठति । दिवः आजातौ दिवि भवौ सुपतनौ कया स्तुत्या कर्मणाम् अर्थाय भवथः† कर्मवत्तमौ[5] ॥ ३ ॥

का वां॑ भूदुप॑मातिः॒ कया॑ न॒ आश्वि॑ना गमथो हू॒यमा॑ना ।
को वां॑ म॒हश्चि॒त् त्यज॑सो अ॒भीक॑ उरु॒ष्यतं॑ माध्वी दस्रा न ऊ॒ती ॥ ४ ॥

का । वा॒म् । भू॒त॒ । उप॑ऽमातिः । कया॑ । नः॒ । आ । अ॒श्वि॒ना॒ । ग॒म॒थः॒ । हू॒यमा॑ना ।
कः॒ । वा॒म् । म॒हः॒ । चि॒त् । त्यज॑सः । अ॒भीके॑ । उ॒रु॒ष्यत॑म् । मा॒ध्वी॒ इति॑ । द॒स्रा॒ । नः॒ । ऊ॒ती ॥ ४ ॥

वेङ्कट० [6]किम् अभवत् युवयोः उपमानं स्तोत्रम् । कया उपमित्या अस्मान् आहूयमानौ[6] [7]आ गच्छथः[7] हे अश्विनौ ! । कः वाम् महतः धनत्यागस्य समीपे भवति अस्मान् रक्षतम् मधुमता गमनेन हे दर्शनीयौ ! ॥ ४ ॥

---

१. °मीढाजमीढौ वि[1,2] अ[1]; °मीढा लपं. २. नास्ति वि[1] लपं. ३. °रम् आह मूको. ४. तं मूको. ५-५. नास्ति वि[1] लपं. † भवतः वि[2] अ[1]. ६-६. नास्ति वि[1] लपं. ७-७. वाग° वि[1] ल लपं; अग° वि[2] अ[1].

उरु वां रथः परि नक्षति द्यामा यत् समुद्रादभि वर्तते वाम्।
मध्वा माध्वी मधु वां प्रुषायन् यत् सीं वां पृक्षो भुरजन्त पक्काः॥ ५ ॥

उरु। वाम्। रथः। परि। नक्षति। द्याम्। आ। यत्। समुद्रात्। अभि। वर्तते। वाम्।
मध्वा। माध्वी इति। मधु। वाम्। प्रुषायन्। यत्। सीम्। वाम्। पृक्षः। भुरजन्त। पक्काः॥५॥

**वेङ्कट०** भृशम् युवयोः रथः याम् परि गच्छति यदा अन्तरिक्षात् अभि आ वर्तते मनुष्यान् प्रति। वाम् इति पूरणम्। यदा[1] युवयोः हे माध्वी! पक्वाः रश्मयः अन्नं भरन्ति, तदानीं मधुमन्तो मधुना सहाविरतं मधु सिञ्चन्ति ॥ ५ ॥

सिन्धुर्ह वां रसया सिञ्चदश्वान् घृणा वयोऽरुषासः परि ग्मन्।
तदू षु वामजिरं चेति यानं येन पती भवथः सूर्यायाः॥ ६ ॥

सिन्धुः। ह। वाम्। रसया। सिञ्चत्। अश्वान्। घृणा। वयः। अरुषासः। परि। ग्मन्।
तत्। ऊँ इति। सु। वाम्। अजिरम्। चेति। यानम्। येन। पती इति। भवथः। सूर्यायाः॥६॥

**वेङ्कट०** समुद्रः स्वभूतया नद्या युवयोः अश्वान् असिञ्चत्। दीप्त्या युक्ताः युवयोः रश्मयः आरोचमानाः परि गच्छन्ति। तत् युवयोः सुष्ठु ज्ञायते क्षिप्रम् यानम्। येन इति स्पष्टम् ॥ ६ ॥

इहेह यद् वां समना पपृक्षे सेयमस्मे सुमतिर्वाजरत्ना।
उरुष्यतं जरितारं युवं ह श्रितः कामो नासत्या युवद्रिक्॥ ७ ॥

इहऽइह। यत्। वाम्। समना। पपृक्षे। सा। इयम्। अस्मे इति। सुऽमतिः। वाजऽरत्ना।
उरुष्यतम्। जरितारम्। युवम्। ह। श्रितः। कामः। नासत्या। युवद्रिक्॥ ७ ॥

**वेङ्कट०** इह च इह च यत् वाम् समना योग्या समानी सम्पृक्ता भवति, ततः सा इयम् अस्माकम् सुमतिः स्तुतिः हे रमणीयधनौ![2] भवति। रक्षतं स्तोतारं युवां खलु। हे नासत्यौ! कामः [3]आप्तः युवामेव[3] प्रतिगच्छन् भवति ॥ ७ ॥

[4]इति तृतीयाष्टके सप्तमाध्याये एकोनविंशो वर्गः[4] ॥

## [ ४४ ]

[1]पुरुमीळ्हाजमीळ्हौ सौहोत्रौ ऋषी। अश्विनौ देवता। त्रिष्टुप् छन्दः[1]।

तं वां रथं वयमद्या हुवेम पृथुज्रयमश्विना संगतिं गोः।
यः सूर्यां वहति वन्धुरायुर्गिर्वाहसं पुरुतमं वसूयुम्॥ १ ॥

---

१. यथा ल लपं. २. °धना मूको. ३-३. आवयेंता° वि[२] अ[१] लपं; आवये वा° वि[१]; आपः यु° ल.
४-४. नास्ति मूको.

तम् । वाम् । रथम् । वयम् । अद्य । हुवेम । पृथुऽज्रयम् । अश्विना । सम्ऽगतिम् । गोः ।
यः । सूर्याम् । वहति । वन्धुरऽयुः । गिर्वाहसम् । पुरुऽतमम् । वसुऽयुम ॥ १ ॥

वेङ्कट० तम् युवयोः रथम् वयम् अद्य ह्वयामः पृथुवेगम् हे अश्विनौ! सङ्गमनम् उदकस्य। यः सूर्यदुहितरम् वहति बन्धुरवान् तं गिरां वोढारं महत्तमम् धनानीच्छन्तं ह्वयामः[1] ॥ १ ॥

युवं श्रियमश्विना देवता तां दिवो नपाता वनथः शचीभिः ।
युवोर्वपुरभि पृक्षः सचन्ते वहन्ति यत् ककुहासो रथे वाम् ॥ २ ॥

युवम् । श्रियम् । अश्विना । देवता । ताम् । दिवः । नपाता । वनथः । शचीभिः ।
युवोः । वपुः । अभि । पृक्षः । सचन्ते । वहन्ति । यत् । ककुहासः । रथे । वाम् ॥ २ ॥

वेङ्कट० युवाम् श्रियम् हे अश्विनौ! देवपुत्रौ! [2]देवतानां मध्ये[2] ताम् प्रयच्छथः कर्मभिः। युवयोः शरीरम् अन्नाद्यानि अभि[3] सेवन्ते, वहन्ति यदि अश्वाः रथे वाम् ॥ २ ॥

को वामद्या करते रातहव्य ऊतये वा सुतपेयाय वार्कैः ।
ऋतस्य वा वनुषे पूर्व्याय नमो येमानो अश्विना ववर्तत् ॥ ३ ॥

कः । वाम् । अद्य । करते । रातऽहव्यः । ऊतये । वा । सुतऽपेयाय । वा । अर्कैः ।
ऋतस्य । वा । वनुषे । पूर्व्याय । नमः । येमानः । अश्विना । आ । ववर्तत् ॥ ३ ॥

वेङ्कट० कः वाम् अद्य करोति दत्तहविष्कः रक्षणाय सोमपानाय च स्तोत्रैः, यज्ञस्य वा भजनाय युवयोः पुरातनाय अन्नं नियच्छन् अश्विनौ! आ वर्तयति भवन्तौ ॥ ३ ॥

हिरण्ययेन पुरुभू रथेनेमं यज्ञं नासत्योप यातम् ।
पिबाथ इन्मधुनः सोम्यस्य दधथो रत्नं विधते जनाय ॥ ४ ॥

हिरण्ययेन । पुरुभू इति पुरुऽभू । रथेन । इमम् । यज्ञम् । नासत्या । उप । यातम् ।
पिबाथः । इत् । मधुनः । सोम्यस्य । दधथः । रत्नम् । विधते । जनाय ॥ ४ ॥

वेङ्कट० हिरण्मयेन[4] रथेन बहुषु भवन्तौ। शिष्टं स्पष्टम् ॥ ४ ॥

आ नो यातं दिवो अच्छा पृथिव्या हिरण्ययेन सुवृता रथेन ।
मा वामन्ये नि यमन् देवयन्तः सं यद् ददे नाभिः पूर्व्या वाम् ॥ ५ ॥

---

१. आह्व° वि[२]. २-२. °तामध्ये वि[२] लपं. ३. नास्ति मूको. ४. नास्ति वि[२] लपं.

आ । नः । यातम् । दिवः । अच्छ । पृथिव्याः । हिरण्ययेन । सुऽवृता । रथेन ।
मा । वाम् । अन्ये । नि । यमन् । देवऽयन्तः । सम् । यत् । ददे । नाभिः । पूर्व्या । वाम् ॥५॥

**वेङ्कट०** विस्तृतायाः दिवः आ यातम् अस्मान् प्रति हिरण्मयेन सुवर्तनेन रथेन । मा वाम् अन्ये नि यच्छन्तु यजमानाः । यस्मात्[1] अस्माभिः प्रथममेव युवयोः बन्धनसाधनं स्तोत्रम् सम् आ ददे ॥ ५ ॥

**नू नो रयिं पुरुवीरं बृहन्तं दस्रा मिमाथामुभयेष्वस्मे ।**
**नरो यद् वामश्विना स्तोममावन्त्सधस्तुतिमाजमीळ्हासो अग्मन् ॥ ६ ॥**

नु । नः । रयिम् । पुरुऽवीरम् । बृहन्तम् । दस्रा । मिमाथाम् । उभयेषु । अस्मे इति ।
नरः । यत् । वाम् । अश्विना । स्तोमम् । आवन् । सधऽस्तुतिम् । आजऽमीळ्हासः । अग्मन् ॥

**वेङ्कट०** [2]हे दस्रौ![2] क्षिप्रम् अस्माकम् पुरुवीरम् महान्तम् रयिम् कुरुतम् । तत्रापि [2]हे अश्विनौ![2] उभयेषु अस्मासु पुरुमीढाजमीढेषु मनुष्याः युवयोः क्रियमाणमिदं स्तोत्रं शुश्रूषया यदा गच्छन्ति, तदानीमजमीढाः पुरुमीढाश्च सह स्थित्वा स्तुतिम् गच्छन्ति वक्तुमिच्छन्ति ॥ ६ ॥

**इहेह यद् वां समना पपृक्षे सेयमस्मे सुमतिर्वाजरत्ना ।**
**उरुष्यतं जरितारं युवं ह श्रितः कामो नासत्या युवद्रिक् ॥ ७ ॥**

इहऽइह । यत् । वाम् । समना । पपृक्षे । सा । इयम् । अस्मे इति । सुऽमतिः । वाजऽरत्ना ।
उरुष्यतम् । जरितारम् । युवम् । ह । श्रितः । कामः । नासत्या । युवद्रिक् ॥ ७ ॥

**वेङ्कट०** ऋ ४,४३,७ द्र. ॥ ७ ॥

[2]इति तृतीयाष्टके सप्तमाध्याये विंशो वर्गः[2] ॥

## [४५]

[2]वामदेवो गौतम ऋषिः । अश्विनौ देवता । जगती छन्दः, सप्तमी त्रिष्टुप्[2] ।

**एष स्य भानुरुदियर्ति युज्यते रथः परिज्मा दिवो अस्य सानवि ।**
**पृक्षासो अस्मिन्मिथुना अधि त्रयो दृतिस्तुरीयो मधुनो वि रप्शते ॥ १ ॥**

एषः । स्यः । भानुः । उत् । इयर्ति । युज्यते । रथः । परिऽज्मा । दिवः । अस्य । सानवि ।
पृक्षासः । अस्मिन् । मिथुनाः । अधि । त्रयः । दृतिः । तुरीयः । मधुनः । वि । रप्शते ॥ १ ॥

---

१. यदस्मात् वि[2] अ[2]. २-२. नास्ति मूको.

वेङ्कट० वामदेवः । सः एषः सूर्यः उत् एति । युज्यते च रथः परितो गन्ता दिवः[1] अस्य समुच्छ्रिते देशे । अश्विनोस्तस्मिन् रथे खाद्यपेयाद्यभेदात् त्रिविधानि अन्नानि संश्लिष्टानि च[2] [3]सन्ति, तथा[3] मधुनः पूर्णा भस्त्रा च वि राजते ॥ १ ॥

उद्वां पृक्षासो मधुमन्त ईरते रथा अश्वास उषसो व्युष्टिषु ।
अपोर्णुवन्तस्तम आ परीवृतं स्व१र्ण शुक्रं तन्वन्त आ रजः ॥ २ ॥

उत् । वाम् । पृक्षासः । मधुऽमन्तः । ईरते । रथाः । अश्वासः । उषसः । विऽउष्टिषु ।
अपऽऊर्णुवन्तः । तमः । आ । परिऽवृतम् । स्वः । न । शुक्रम् । तन्वन्तः । आ । रजः ॥ २ ॥

वेङ्कट० उत् गच्छन्ति युवयोः अन्नादीनि, प्रातः मधुसंयुक्ताः[4] [5]रथाः अश्वाः च[5] तमः अपगमयन्तः परिवृत्य स्थितम्, उदकम् इव निर्मलं ज्योतिः सर्वतो विस्तारयन्तः[6] इति ॥ २ ॥

मध्वः पिबतं मधुपेभिरासभिरुत प्रियं मधुने युञ्जाथां रथम् ।
आ वर्तनिं मधुना जिन्वथस्पथो दृतिं वहेथे मधुमन्तमश्विना ॥ ३ ॥

मध्वः । पिबतम् । मधुऽपेभिः । आसऽभिः । उत । प्रियम् । मधुने । युञ्जाथाम् । रथम् ।
आ । वर्तनिम् । मधुना । जिन्वथः । पथः । दृतिम् । वहेथे इति । मधुऽमन्तम् । अश्विना ॥३॥

वेङ्कट० [2]हे अश्विनौ ![2] सोमम् पिबतम्[7] सोमपैः[8] आस्यैः । अपि च प्रियम् रथम् सोमपानार्थम् युञ्जाथाम् । आ सिञ्चतं मार्गस्य पद्धतिम्[9] गमनमार्गम् पीतशिष्टेन मधुना, मधुपूर्णं च दृतिम् कृत्वा वहतम् इति ॥ ३ ॥

हंसासो ये वां मधुमन्तो अस्रिधो हिरण्यपर्णा उहुव उषर्बुधः ।
उदप्रुतो मन्दिनो मन्दिनिस्पृशो मध्वो न मक्षः सवनानि गच्छथः ॥ ४ ॥

हंसासः । ये । वाम् । मधुऽमन्तः । अस्रिधः । हिरण्यऽपर्णाः । उहुवः । उषःऽबुधः ।
उदऽप्रुतः । मन्दिनः । मन्दिऽनिस्पृशः । मध्वः । न । मक्षः । सवनानि । गच्छथः ॥ ४ ॥

वेङ्कट० अश्वाः ये युवयोः मधुमन्तः अक्षीणाः हिरण्यकक्ष्याः वोढारः उषर्बुधः उदकस्य गमयितारः मादयितारः मदकरस्य सोमस्य निष्प्रष्टारस्तैः [10]मधूनि इव[10] मक्षिकाः सवनानि[11] गच्छथः ॥ ४ ॥

---

१. नास्ति वि[1]. २. नास्ति वि[2] अ[1]. ३-३. तथा सन्ति मूको. ४. °धुना यु° वि[1] लपं. ५-५. नास्ति मूको. ६. °यतः मूको. ७. °त ल लपं. ८. °मपेभिः वि[2] ल; °मपे वि[1] अ[1]. ९. वन्धत वि[1]; वर्धनं लपं. १०-१०. मधुनीव वि[2] अ[1]; मधुनि वि[1] लपं. ११. °नानीव मूको.

स्वध्वरासो मधुमन्तो अग्नय उस्रा जरन्ते प्रति वस्तोरश्विना ।
यन्निक्तहस्तस्तरणिर्विचक्षणः सोमं सुषाव मधुमन्तमद्रिभिः ॥ ५ ॥

सुऽअध्वरासः । मधुऽमन्तः । अग्नयः । उस्रा । जरन्ते । प्रति । वस्तोः । अश्विना ।
यत् । निक्तऽहस्तः । तरणिः । विऽचक्षणः । सोमम् । सुसाव । मधुऽमन्तम् । अद्रिऽभिः ॥५॥

**वेङ्कट०** शोभनयज्ञाः सोमवन्तः यजमानानां होतृत्वमास्थिताः अग्नयः अश्विनौ गत्वा अह्नि प्रति स्तुवन्ति, यदि निर्णिक्तहस्तः क्षिप्रकारी यजमानः सोमम् रसवन्तम् ग्रावभिः सुनोति ॥ ५ ॥

आकेनिपासो अहभिर्दविध्वतः स्वर्ण शुक्रं तन्वन्त आ रजः ।
सूरश्चिदश्वान्युयुजान ईयते विश्वाँ अनु स्वधया चेतथस्पथः ॥ ६ ॥

आकेऽनिपासः । अहऽभिः । दविध्वतः । स्वः । न । शुक्रम् । तन्वन्तः । आ । रजः ।
सूरः । चित् । अश्वान् । युयुजानः । ईयते । विश्वान् । अनु । स्वधया । चेतथः । पथः ॥६॥

**वेङ्कट०** आसन्ने प्रातःसवने नितरां पातारः दिवसेभ्यः भृशं शरीरं धूनयन्तः उदकम् इव निर्मलं तेजः कुर्वाणाः गच्छन्ति । भवतोरश्वान् सूर्यः अपि भवद्भ्यां सह स्वरथे नियुञ्जानः गच्छति । तौ युवां सर्वान् मार्गान् अन्नेनोदकेन वा प्रदिदिस्सितेन[1] सह गच्छन्तौ अनुक्रमेण जानीथो दैव्यान् पार्थिवांश्च ॥ ६ ॥

प्र वामवोचमश्विना धियंधा रथः स्वश्वो अजरो यो अस्ति ।
येन सद्यः परि रजांसि याथो हविष्मन्तं तरणिं भोजमच्छ ॥ ७ ॥

प्र । वाम् । अवोचम् । अश्विना । धियम्ऽधाः । रथः । सुऽअश्वः । अजरः । यः । अस्ति ।
येन । सद्यः । परि । रजांसि । याथः । हविष्मन्तम् । तरणिम् । भोजम् । अच्छ ॥ ७ ॥

**वेङ्कट०** प्र अवोचम् हे अश्विनौ!, कर्मणो विधाता युवयोः यः[2] रथः स्वश्वः जरारहितः विद्यते, येन समानेऽहनि सर्वान् लोकान् परि गच्छथः हविष्मन्तम् क्षिप्रकारिणं यजमानं प्रति, तमिति ॥ ७ ॥

[3]इति तृतीयाष्टके सप्तमाध्याये एकविंशो वर्गः[3] ॥

## [ ४६ ]

[3]वामदेवो गौतम ऋषिः । इन्द्रवायू देवता, आद्याया वायुः । गायत्री छन्दः[3] ।

अग्रं पिबा मधूनां सुतं वायो दिविष्टिषु । त्वं हि पूर्वपा असि ॥ १ ॥

---

१. प्रतिदि° वि[1].　२. नास्ति वि[2] अ[1] लपं.　३-३. नास्ति मूको.

अग्रम् । पिब । मधूनाम् । सुतम् । वायो इति । दिविष्टिषु । त्वम् । हि । पूर्वऽपाः । असि ॥ १ ॥

**वेङ्कट०** अग्रम् पिब सोमानाम् सुतम् हे वायो! दिवसस्यागमनेषु प्रातः । त्वम्[1] हि पूर्वं पिबसि ॥ १ ॥

शतेना नो अभिष्टिभिर्नियुत्वाँ इन्द्रसारथिः । वायो सुतस्य तृम्पतम् ॥ २ ॥

शतेन । नः । अभिष्टिऽभिः । नियुत्वान् । इन्द्रऽसारथिः । वायो इति । सुतस्य । तृम्पतम् ॥२॥

**वेङ्कट०** बहुभिः आगमनैः अस्माकम् नियुत्वान् इन्द्रसारथिः वायुः सोमेन तृप्यतु । प्रत्यक्षमाह— हे वायो! त्वं चेन्द्रश्च सोमेन तृप्यतम् इति ॥ २ ॥

आ वां सहस्रं हरय इन्द्रवायू अभि प्रयः । वहन्तु सोमपीतये ॥ ३ ॥

आ । वाम् । सहस्रम् । हरयः । इन्द्रवायू इति । अभि । प्रयः । वहन्तु । सोमऽपीतये ॥ ३ ॥

**वेङ्कट०** हे इन्द्रवायू! अस्माकमन्नार्थं बहवः अश्वाः वाम् सोमपीतये आ वहन्तु इति ॥ ३ ॥

रथं हिरण्यवन्धुरमिन्द्रवायू स्वध्वरम् । आ हि स्थाथो दिविस्पृशम् ॥ ४ ॥

रथम् । हिरण्यऽवन्धुरम् । इन्द्रवायू इति । सुऽअध्वरम् । आ । हि । स्थाथः । दिविऽस्पृशम् ॥४॥

**वेङ्कट०** हे इन्द्रवायू! रथम् हिरण्यवन्धुरम्[2] शोभनयज्ञहेतुम् आ तिष्ठथः हि दीप्तेः स्प्रष्टारम् ॥ ४ ॥

रथेन पृथुपाजसा दाश्वांसमुप गच्छतम् । इन्द्रवायू इहा गतम् ॥ ५ ॥

रथेन । पृथुऽपाजसा । दाश्वांसम् । उप । गच्छतम् । इन्द्रवायू इति । इह । आ । गतम् ॥५॥

**वेङ्कट०** निगदव्याख्याता ॥ ५ ॥

इन्द्रवायू अयं सुतस्तं देवेभिः सजोषसा । पिबतं दाशुषो गृहे ॥ ६ ॥

इन्द्रवायू इति । अयम् । सुतः । तम् । देवेभिः । सऽजोषसा । पिबतम् । दाशुषः । गृहे ॥ ६ ॥

**वेङ्कट०** निगदव्याख्याता ॥ ६ ॥

इह प्रयाणमस्तु वामिन्द्रवायू विमोचनम् । इह वां सोमपीतये ॥ ७ ॥

इह । प्रऽयानम् । अस्तु । वाम् । इन्द्रवायू इति । विऽमोचनम् । इह । वाम् । सोमऽपीतये ॥७॥

**वेङ्कट०** निगदव्याख्याता ॥ ७ ॥

[3]इति तृतीयाष्टके सप्तमाध्याये द्वाविंशो वर्गः[3] ॥

---

१. स्वं वि[2] अ[1]. २. °ण्मयं बन्धु° वि[1] लपं; हिरण्यव° वि[2] ल; °ण्मयबन्धु° अ[1]. ३-३. नास्ति मूको.

[ ४७ ]

[1]वामदेवो गौतम ऋषिः । इन्द्रवायू देवता, प्रथमाया वायुः । अनुष्टुप् छन्दः[1] ।

वायो॑ शु॒क्रो अ॑यामि ते॒ मध्वो॒ अग्रं॒ दिवि॑ष्टिषु ।
आ या॑हि॒ सोम॑पीतये स्पा॒र्हो दे॑व नि॒युत्व॑ता ॥ १ ॥

वा॒यो इति॑ । शु॒क्रः । अ॒या॒मि॒ । ते॒ । मध्वः॑ । अग्र॑म् । दिवि॑ष्टिषु ।
आ । या॒हि॒ । सोम॑ऽपीतये । स्पा॒र्हः । दे॒व॒ । नि॒युत्व॑ता ॥ १ ॥

**वेङ्कट०** हे वायो! शुक्रवर्णस्त्वमसि । प्रेरयामि तुभ्यमैन्द्रवायवे सोमस्य अग्रम् दिवसस्यागमनेषु । त्वम् आ गच्छ[2] सोमपानाय स्पृहणीयः[3] हे देव! नियुत्वता रथेन ॥ १ ॥

इन्द्र॑श्च वायवेषां॒ सोमा॑नां पी॒तिम॑र्हथः ।
यु॒वां हि यन्तीन्द॑वो नि॒म्नमापो॒ न स॒ध्र्य॑क् ॥ २ ॥

इन्द्रः॑ । च॒ । वा॒यो॒ इति॑ । ए॒षा॒म् । सोमा॑नाम् । पी॒तिम् । अ॒र्ह॒थः॒ ।
यु॒वाम् । हि । यन्ति॑ । इन्द॑वः । नि॒म्नम् । आपः॑ । न । स॒ध्र्य॑क् ॥ २ ॥

**वेङ्कट०** निगदसिद्धा ॥ २ ॥

वाय॒विन्द्र॑श्च शु॒ष्मिणा॑ स॒रथं॑ शवसस्पती ।
नि॒युत्व॑न्ता न ऊ॒तय॒ आ या॑तं॒ सोम॑पीतये ॥ ३ ॥

वा॒यो॒ इति॑ । इन्द्रः॑ । च॒ । शु॒ष्मिणा॑ । स॒ऽरथ॑म् । श॒व॒सः॒ । प॒ती॒ इति॑ ।
नि॒युत्व॑न्ता । नः॒ । ऊ॒तये॑ । आ । या॒त॒म् । सोम॑ऽपीतये ॥ ३ ॥

**वेङ्कट०** निगदसिद्धा ॥ ३ ॥

या वां॒ सन्ति॑ पुरु॒स्पृहो॑ नि॒युतो॑ दा॒शुषे॑ नरा ।
अ॒स्मे ता य॑ज्ञवाह॒सेन्द्र॑वायू॒ नि य॑च्छतम् ॥ ४ ॥

याः॒ । वा॒म् । सन्ति॑ । पु॒रु॒ऽस्पृहः॑ । नि॒ऽयुतः॑ । दा॒शुषे॑ । न॒रा॒ ।
अ॒स्मे इति॑ । ताः । य॒ज्ञ॒ऽवा॒ह॒सा॒ । इन्द्र॑वायू॒ इति॑ । नि । य॒च्छ॒त॒म् ॥ ४ ॥

**वेङ्कट०** निगदसिद्धा ॥ ४ ॥

[1]इति तृतीयाष्टके सप्तमाध्याये त्रयोविंशो वर्गः[1] ॥

---

१-१. नास्ति मूको. २. गच्छ वि॰ अ॰. ३. °णीय लप॰.

[ ४८ ]

[1]वामदेवो गौतम ऋषिः । वायुः देवता । अनुष्टुप् छन्दः[1] ।

विहि होत्रा अवीता विपो न रायो अर्यः ।
वायवा चन्द्रेण रथेन याहि सुतस्य पीतये ॥ १ ॥

विहि । होत्राः । अवीताः । विपः । न । रायः । अर्यः ।
वायो इति । आ । चन्द्रेण । रथेन । याहि । सुतस्य । पीतये ॥ १ ॥

वेङ्कट० कामयस्व स्तुतिवाचः असेविता नवतराः विप्रस्य इव यजमानस्य धनानि स्वामी त्वम् । वायो ! इति स्पष्टम् ॥ १ ॥

निर्युवाणो अशस्तीर्नियुत्वाँ इन्द्रसारथिः ।
वायवा चन्द्रेण रथेन याहि सुतस्य पीतये ॥ २ ॥

निःऽयुवानः । अशस्तीः । नियुत्वान् । इन्द्रऽसारथिः ।
वायो इति । आ । चन्द्रेण । रथेन । याहि । सुतस्य । पीतये ॥ २ ॥

वेङ्कट० पृथक् कुर्वन् बाधाः । शिष्टं स्पष्टम् ॥ २ ॥

अनु कृष्णे वसुधिती येमाते विश्वपेशसा ।
वायवा चन्द्रेण रथेन याहि सुतस्य पीतये ॥ ३ ॥

अनु । कृष्णे इति । वसुधिती इति वसुऽधिती । येमाते इति । विश्वऽपेशसा ।
वायो इति । आ । चन्द्रेण । रथेन । याहि । सुतस्य । पीतये ॥ ३ ॥

वेङ्कट० अनु नियच्छतः कृष्णवर्णा रात्रिः विश्वरूपमहश्च निहितहविर्धाने वायुम् । अवशिष्टं स्पष्टम् ॥ ३ ॥

वहन्तु त्वा मनोयुजो युक्तासो नवतिर्नव ।
वायवा चन्द्रेण रथेन याहि सुतस्य पीतये ॥ ४ ॥

वहन्तु । त्वा । मनःऽयुजः । युक्तासः । नवतिः । नव ।
वायो इति । आ । चन्द्रेण । रथेन । याहि । सुतस्य । पीतये ॥ ४ ॥

वेङ्कट० मनोवेगाः रथे युक्ताः नव नवतिः चाश्वाः त्वाम् वहन्तु ॥ ४ ॥

वायो शतं हरीणां युवस्व पोष्याणाम् ।
उत वा ते सहस्रिणो रथ आ यातु पाजसा ॥ ५ ॥

---

१-१. नास्ति मूको.

वायो इति । शतम् । हरीणाम् । युवस्व । पोष्याणाम् ।
उत । वा । ते । सहस्रिणः । रथः । आ । यातु । पाजसा ॥ ५ ॥

**वेङ्कट०** वायो! शतम् अश्वानां पोषनिमित्तानां रथे निमिश्रय। अपि[1] वा तव सहस्राश्वयुक्तस्य तैः सर्वैर्युक्तः रथः आ गच्छतु बलेन ॥ ५ ॥

[1]इति तृतीयाष्टके सप्तमाध्याये चतुर्विंशो वर्गः[2] ।

[ ४९ ]

[2]वामदेवो गौतम ऋषिः । इन्द्राबृहस्पती देवता । गायत्री छन्दः[2] ।

इदं वामास्ये हविः प्रियमिन्द्राबृहस्पती । उक्थं मदश्च शस्यते ॥ १ ॥

इदम् । वाम् । आस्ये । हविः । प्रियम् । इन्द्राबृहस्पती इति । उक्थम् । मदः । च । शस्यते ॥१॥

**वेङ्कट०** इदम् हविः हूयते युवयोः आस्ये, तथा मदकरः सोमः[3] उक्थम् च शस्यते । अवशिष्टो वर्गः स्पष्टः ॥ १ ॥

अयं वां परि षिच्यते सोम इन्द्राबृहस्पती । चारुर्मदाय पीतये ॥ २ ॥

अयम् । वाम् । परि । सिच्यते । सोमः । इन्द्राबृहस्पती इति । चारुः । मदाय । पीतये ॥ २ ॥

**वेङ्कट०** स्पष्टम् ॥ २ ॥

आ न इन्द्राबृहस्पती गृहमिन्द्रश्च गच्छतम् । सोमपा सोमपीतये ॥ ३ ॥

आ । नः । इन्द्राबृहस्पती इति । गृहम् । इन्द्रः । च । गच्छतम् । सोमऽपा । सोमऽपीतये ॥ ३ ॥

**वेङ्कट०** स्पष्टम् ॥ ३ ॥

अस्मे इन्द्राबृहस्पती रयिं धत्तं शतग्विनम् । अश्वावन्तं सहस्रिणम् ॥ ४ ॥

अस्मे इति । इन्द्राबृहस्पती इति । रयिम् । धत्तम् । शतऽग्विनम् । अश्वऽवन्तम् । सहस्रिणम् ॥४॥

**वेङ्कट०** स्पष्टम् ॥ ४ ॥

इन्द्राबृहस्पती वयं सुते गीर्भिर्हवामहे । अस्य सोमस्य पीतये ॥ ५ ॥

इन्द्राबृहस्पती इति । वयम् । सुते । गीःऽभिः । हवामहे । अस्य । सोमस्य । पीतये ॥ ५ ॥

**वेङ्कट०** स्पष्टम् ॥ ५ ॥

---

१-१. नास्ति वि[1]. २-२. नास्ति मूको. ३. नास्ति मूको.

सोम॑मिन्द्राबृहस्पती पिब॑तं दा॒शुषो॑ गृ॒हे । मा॒दये॑थां॒ तदो॑कसा ॥ ६ ॥

सोम॑म् । इ॒न्द्रा॒बृ॒ह॒स्प॒ती इति॑ । पिब॑तम् । दा॒शुषः॑ । गृ॒हे । मा॒दये॑थाम् । तत्ऽओ॑कसा ॥ ६ ॥

**वेङ्कट०** यजमानगृहे समवेतौ तदोकसाविति ॥ ६ ॥

[1]इति तृतीयाष्टके सप्तमाध्याये पञ्चविंशो वर्गः[1] ॥

## [ ५० ]

[1]वामदेवो गौतम ऋषिः । बृहस्पतिर्देवता, अन्त्ययोरिन्द्राबृहस्पती ।
त्रिष्टुप् छन्दः, दशमी जगती[1] ।

यस्त॒स्तम्भ॒ सह॑सा॒ वि ज्मो अन्ता॒न् बृह॒स्पति॑स्त्रिषध॒स्थो रवे॑ण ।
तं प्र॒त्नास॒ ऋष॑यो॒ दीध्या॑नाः पु॒रो विप्रा॑ दधिरे म॒न्द्रजि॑ह्वम् ॥ १ ॥

यः । त॒स्तम्भ॑ । सह॑सा । वि । ज्मः । अन्ता॑न् । बृ॒ह॒स्पति॑ः । त्रि॒ऽस॒ध॒स्थः । रवे॑ण ।
तम् । प्र॒त्नासः॑ । ऋष॑यः । दीध्या॑नाः । पु॒रः । विप्राः॑ । द॒धि॒रे । म॒न्द्रऽजि॑ह्वम् ॥ १ ॥

**वेङ्कट०** यः[2] पृथिव्याः पर्यन्तान्[3] बलेन विविधं स्तम्नाति बृहस्पतिः त्रिस्थानः गर्जितरवेण सहितः, तम् पुराणाः दीप्यमानाः ऋषयः मेधाविनः पुरः दधिरे मोदनवाचम् ॥ १ ॥

धु॒नेत॑यः सुप्रके॒तं मद॑न्तो॒ बृह॑स्पते अ॒भि ये न॑स्तत॒स्रे ।
पृष॑न्तं सृ॒प्रमद॑ब्धमू॒र्वं बृह॑स्पते॒ रक्ष॑तादस्य॒ योनि॑म् ॥ २ ॥

धु॒नऽइ॑तयः । सु॒ऽप्र॒के॒तम् । मद॑न्तः । बृह॑स्पते । अ॒भि । ये । नः॒ । त॒त॒स्रे ।
पृष॑न्तम् । सृ॒प्रम् । अद॑ब्धम् । ऊ॒र्वम् । बृह॑स्पते । रक्ष॑तात् । अ॒स्य॒ । योनि॑म् ॥ २ ॥

**वेङ्कट०** धूननपरगमनाः[4] शोभनप्रज्ञानं माम् मदन्तः हे बृहस्पते! ये अभि गच्छन्ति मेघाः। अथैकवदाह । सिञ्चन्तं सर्पणशीलम् अहिंसितम् महान्तम् बृहस्पते! त्वम् रक्षतात् अस्य मेघस्य उदकनिःसरणमार्गम् ॥ २ ॥

बृह॑स्पते॒ या प॑र॒मा प॑रा॒वदत॒ आ त॑ ऋत॒स्पृशो॒ नि षे॑दुः ।
तुभ्यं॑ खा॒ता अ॑व॒ता अद्रि॑दुग्धा॒ मध्वः॑ श्चोतन्त्य॒भितो॑ विर॒प्शम् ॥ ३ ॥

बृह॑स्पते । या । प॒र॒मा । प॒रा॒ऽवत् । अतः॑ । आ । ते॒ । ऋ॒त॒ऽस्पृशः॑ । नि । से॒दुः॒ ।
तुभ्य॑म् । खा॒ताः । अ॒व॒ताः । अद्रि॑ऽदुग्धाः । मध्वः॑ । श्चो॒त॒न्ति॒ । अ॒भितः॑ । वि॒ऽर॒प्शम् ॥ ३ ॥

---

१-१. नास्ति मूको. २. यं मूको. ३. °न्तात् वि° लपं; पर्यन्तापर्यन्तात् अ°. ४. धुनमः° वि° लपं.

**वेङ्कट०** बृहस्पते! यः परमः देशः अतः आ नि षीदन्तु त्वदीयाः यज्ञस्पृशोऽश्वाः। तुभ्यम् खाताः कूपाः अभिषवग्रावभिरुत्पादितास्ते[1] कूपाः सोमान्[2] प्रेरयन्ति स्तुतिमन्तं त्वां प्रति ॥ ३ ॥

बृहस्पतिः प्रथमं जायमानो महो ज्योतिषः परमे व्योमन् ।
सप्तास्यस्तुविजातो रवेण वि सप्तरश्मिरधमत् तमांसि ॥ ४ ॥

बृहस्पतिः । प्रथमम् । जायमानः । महः । ज्योतिषः । परमे । विऽओमन् ।
सप्तऽआस्यः । तुविऽजातः । रवेण । वि । सप्तऽरश्मिः । अधमत् । तमांसि ॥ ४ ॥

**वेङ्कट०** बृहस्पतिः अह्नः प्रारम्भे प्रादुर्भवन् महतः ज्योतिषः स्थाने परमे व्योम्नि दिवि सप्तमुखः बहुजननः शब्देन महता वि धमति तमांसि सप्तरश्मिः। तादृशी चास्य तनुरस्तीत्यवगन्तव्यम् ॥ ४ ॥

स सुष्टुभा स ऋक्वता गणेन वलं रुरोज फलिगं रवेण ।
बृहस्पतिरुस्रिया हव्यसूदः कनिक्रदद् वावशतीरुदाजत् ॥ ५ ॥

सः । सुऽस्तुभा । सः । ऋक्वता । गणेन । वलम् । रुरोज । फलिऽगम् । रवेण ।
बृहस्पतिः । उस्रियाः । हव्यऽसूदः । कनिक्रदत् । वावशतीः । उत् । आजत् ॥ ५ ॥

**वेङ्कट०** सः शोभनस्तुतिकेन ऋग्भिर्युक्तेन गणेन[3] बलम् असुरम् हिंसितवान् मेघाकारम् शब्देन। बृहस्पतिः उस्रियाः हविषः प्रेरयित्रीः[4] शब्दं कुर्वन् कामयमानाः पणिभ्यः उत् आजत् ॥ ५ ॥

[5]इति तृतीयाष्टके सप्तमाध्याये षड्विंशो वर्गः[5] ॥

एवा पित्रे विश्वदेवाय वृष्णे यज्ञैर्विधेम नमसा हविर्भिः ।
बृहस्पते सुप्रजा वीरवन्तो वयं स्याम पतयो रयीणाम् ॥ ६ ॥

एव । पित्रे । विश्वऽदेवाय । वृष्णे । यज्ञैः । विधेम । नमसा । हविःऽभिः ।
बृहस्पते । सुऽप्रजाः । वीरऽवन्तः । वयम् । स्याम । पतयः । रयीणाम् ॥ ६ ॥

**वेङ्कट०** एवं पालयित्रे सर्वेषां देवाय वृष्णे यज्ञैः नमस्कारेण हविर्भिश्च च परिचरणं कुर्मः। शिष्टं स्पष्टम् ॥ ६ ॥

---

१. °रुत्पादकास्ते मूको. २. सोऽस्मान् मूको. ३. नास्ति वि[२] अ[१]. ४. °यित्रीम् वि[१] लळपं. ५-५. नास्ति मूको.

स इद् राजा प्रतिजन्यानि विश्वा शुष्मेण तस्थावभि वीर्येण ।
बृहस्पतिं यः सुभृतं बिभर्ति वल्गूयति वन्दते पूर्वभाजम् ॥ ७ ॥

सः । इत् । राजा । प्रतिऽजन्यानि । विश्वा । शुष्मेण । तस्थौ । अभि । वीर्येण ।
बृहस्पतिम् । यः । सुऽभृतम् । बिभर्ति । वल्गुऽयति । वन्दते । पूर्वऽभाजम् ॥ ७ ॥

**वेङ्कट०** सः एव राजा प्रतिजनपदप्रादुर्भूतानि सर्वाणि[1] बलानि शोषकेण वीर्येण अभि तिष्ठति, यः राजा बृहस्पतिम् ब्राह्मणस्य पुरोधानद्वारेण सुभृतम् बिभर्ति स्तौति नमस्करोति च पूर्वमेव भजमानम् मुख्यम् ॥ ७ ॥

स इत् क्षेति सुधित ओकसि स्वे तस्मा इळा पिन्वते विश्वदानीम् ।
तस्मै विशः स्वयमेवा नमन्ते यस्मिन् ब्रह्मा राजनि पूर्व एति ॥ ८ ॥

सः । इत् । क्षेति । सुऽधितः । ओकसि । स्वे । तस्मै । इळा । पिन्वते । विश्वऽदानीम् ।
तस्मै । विशः । स्वयम् । एव । नमन्ते । यस्मिन् । ब्रह्मा । राजनि । पूर्वः । एति ॥ ८ ॥

**वेङ्कट०** सः एव निवसति सुप्रीतः स्वस्मिन् स्थाने, तस्मै एव पृथिवी सर्वदा कामान् पिन्वते[2], तस्मै एव मनुष्या जानपदाः स्वयम् एव नमनं कुर्वन्ति, यस्मिन् राजनि बृहस्पतिभूतः पुरोधा ब्राह्मणः कर्मणामग्रे गच्छति ॥ ८ ॥

अप्रतीतो जयति सं धनानि प्रतिजन्यान्युत या सजन्या ।
अवस्यवे यो वरिवः कृणोति ब्रह्मणे राजा तमवन्ति देवाः ॥ ९ ॥

अप्रतिऽइतः । जयति । सम् । धनानि । प्रतिऽजन्यानि । उत । या । सऽजन्या ।
अवस्यवे । यः । वरिवः । कृणोति । ब्रह्मणे । राजा । तम् । अवन्ति । देवाः ॥ ९ ॥

**वेङ्कट०** शत्रुभिरप्रतिगतः सम्[1] जयति[3] उभयानि धनानि प्रतिजनभवानि[4] यानि च सजन्यानि[5] । रक्षणमिच्छते यः राजा पूजाम् करोति पुरोधसे, तम् रक्षन्ति देवाः ॥ ९ ॥

इन्द्रश्च सोमं पिबतं बृहस्पतेऽस्मिन् यज्ञे मन्दसाना वृषण्वसू ।
आ वां विशन्त्विन्दवः स्वाभुवोऽस्मे रयिं सर्ववीरं नि यच्छतम् ॥ १० ॥

इन्द्रः । च । सोमम् । पिबतम् । बृहस्पते । अस्मिन् । यज्ञे । मन्दसाना । वृषण्वसू इति वृषण्ऽवसू ।
आ । वाम् । विशन्तु । इन्दवः । सुऽआभुवः । अस्मे इति । रयिम् । सर्वऽवीरम् । नि । यच्छतम् ॥ १० ॥

---

१. नास्ति मूको. २. पिबते मूको. ३. भजति मूको. ४. प्रजन° वि° लपं. ५. सजनानि वि° लपं.

**वेङ्कट०** बृहस्पते! त्वम् इन्द्रः च सोमं पिबतम् अस्मिन् यज्ञे हे वृष्यमाणधनौ! मोदमानौ। शोभन-भवनाः सोमाः आ विशन्तु त्वाम्। अस्मासु धनं सर्वैर्वीरैर्युक्तम् नि यच्छतम् ॥ १० ॥

बृह॑स्पत इन्द्र॒ वर्ध॑तं नः॒ सचा॒ सा वां॑ सुम॒तिर्भू॑त्व॒स्मे ।
अ॒वि॒ष्टं धियो॑ जिगृ॒तं पुरं॑धीर्जज॒स्तम॒र्यो व॒नुषा॒मरा॑तीः ॥ ११ ॥

बृह॑स्पते । इन्द्र॒ । वर्ध॑तम् । नः॒ । सचा॑ । सा । वा॒म् । सु॒ऽम॒तिः । भू॒तु॒ । अ॒स्मे इति॑ ।
अ॒वि॒ष्टम् । धियः॑ । जि॒गृ॒तम् । पुर॑म्ऽधीः । ज॒ज॒स्तम् । अ॒र्यः । व॒नुषा॑म् । अरा॑तीः ॥ ११ ॥

**वेङ्कट०** हे इन्द्राबृहस्पती! वर्धयतम् अस्मान्, सा युवयोः सुमतिः अस्मासु सम्पृक्ता[1] भवतु, रक्षतम् कर्माणि, प्रकाशयतं प्रज्ञाः, उपक्षपयतम् याचितॄणां धनानि अप्रयच्छन्तीः शत्रुभूताः प्रजाः ॥ ११ ॥

[2]इति तृतीयाष्टके सप्तमाध्याये सप्तविंशो वर्गः[2] ॥

अष्टकस्य तृतीयस्य माधवः सुन्दरीसुतः ।
व्याख्यत् सप्तममध्यायमित्थं श्रीवेङ्कटात्मजः ॥

इति [3]वेङ्कटमाधवाचार्यविरचिते ऋक्संहिताव्याख्याने तृतीयाष्टके सप्तमोऽध्यायः[3] ॥

—*—

इति ऋग्वेदे सभाष्ये तृतीयाष्टके सप्तमोऽध्यायः ॥



१. संवृक्ता मूको. २-२. नास्ति मूको. ३-३. श्रीवेङ्कटमाधवाचार्यस्य कृतावृग्वेदभाष्ये अ[1].

## अथ तृतीयाष्टकेऽष्टमोऽध्यायः

वेङ्कट०

[1]"इदमु त्यत् पुरुतमम्' व्याचिख्यासति माधवः।
उपसर्गेषु वक्तव्यमनुक्तं सम्प्रदर्शयन् ॥ १ ॥

आकारोऽधिपरी चोभौ स्पष्टीकुर्वन्ति कारके।
अपादानाधिकरणे 'धन्वोरधि'[2], 'दिवस्परि'[3] ॥ २ ॥

आकारो 'दिव आजाता'[4] दृश्यन्ते चापि पूरणाः।
सुं च 'मो षु णः'[5] इत्यादौ केचिदिच्छन्ति पूरणम् ॥ ३ ॥

अमी किमुपसर्गाणां निपाताः प्रतिरूपकाः।
भवेयुरुपसर्गा वा किं नु ते संज्ञयाऽनया ॥ ४ ॥

'अयं ते अस्तु हर्यतः'[6], 'आ याहि पूर्वीरति'[7][8] च।
आकारौ पूरणावाहुर्बहवः सन्ति तादृशाः ॥ ५ ॥

'यस्ते सखिभ्य आ वरम्'[9], 'इमे सोमास इन्दवः'[10]।
'नि नो होता वरेण्यः'[11], 'प्र यद्दिवो हरिवः स्थातः'[12] ॥ ६ ॥
'यास्ते प्रजा अमृतस्य'[13], 'विश्वा यश्चर्षणीरभि'[14]।
'प्रप्रा वो अस्मे स्वयशोभिः'[15], 'अर्चन्ननु स्वराज्यम्'[16] ॥ ७ ॥

'प्र देवयन् यशसः सम्'[17], 'शुचिजन्मनो रज आ'[18]।
आक्षिप्यन्ते क्रियाशब्दाः सर्वेष्वेषूपसर्गतः[19] ॥ ८ ॥

अन्तर्णयर्थांश्च कुर्वन्ति तेऽमी धातूनपि क्वचित्।
'विश्वमाभासि रोचनम्'[20], 'आ नो भज परमेषु'[21] ॥ ९ ॥

'आक्रां सूर्यस्य[22] रोचनात्'[23], आवहन्निति गम्यते।
तस्मादाकारसदृशं निपातं तं विदुर्बुधाः ॥ १० ॥

---

१. श्री ऋग्वेदभाष्ये वेङ्कटमाधवाचार्यकृतौ आदौ अध्यायार्थकारिका अ[1]. २. ऋ १,३३,४. ३. ऋ १,१२१,१०. ४. ऋ ४,४३,३. ५. ऋ १,३८,६. ६. ऋ ३,४४,१. ७. °वींरिति वेंऋअ. ८ ऋ ३,४३,२. ९. ऋ १,४,४. १०. ऋ १,१६,६. ११. ऋ १,२६,२. १२. ऋ १,३३,५. १३. ऋ १,४३,९. १४. ऋ १,८६,५. १५ ऋ १,१२९,८. १६. ऋ १,८०,१. १७. ऋ १०,४६,१०. १८. ऋ १,१४१,७. १९. °भेवा निस° वेंऋअ. २०. ऋ १,४९,४. २१. ऋ १,२७,५. २२. सूर्यः स वेंऋअ. २३. ऋ १,१४,९.

विनश्यन्ति च धात्वर्था उपसर्गसमन्वयात् ।
'अव[1] ते हेळो वरुण'[2], 'सुन्वानो हि ष्मा[3] यजति'[4] ॥ ११ ॥

अवपूर्वौ विनाशार्थावीयजी[5] अनयोर्ऋचोः ।
'रात्र्याश्चिदन्धो अती(ति'[6] इ)ति विनाशार्थस्तथा दशिः ॥ १२ ॥

व्यज्यन्ते[7] तिरतेरर्था उपसर्गैः पृथग्विधाः ।
'मायाभिरिन्द्र मायिनम्'[8], 'सोम प्र तिरन्तु आयुः'[9] ॥ १३ ॥

आख्यातशब्दैरस्माभिर्दृश्यते न दुरोऽन्वयः ।
'दूढ्यः'[10] 'दुर्धां दधाती(ति'[11] इ)ति कृदन्तैर्दृश्यतेऽन्वयः ॥ १४ ॥

तृतीयस्याष्टकस्येत्थमध्यायादिषु दर्शिताः ।
उपसर्गनिपातार्थाः सर्वे वेदोपकारिणः ॥ १५ ॥

## [ ५१ ]

[12]वामदेवो गौतम ऋषिः । उषाः देवता । त्रिष्टुप् छन्दः[12] ।

इदमु त्यत् पुरुतमं पुरस्ताज्ज्योतिस्तमसो वयुनावदस्थात् ।
नूनं दिवो दुहितरो विभातीर्गातुं कृणवन्नुषसो जनाय ॥ १ ॥

इदम् । ऊँ इति । त्यत् । पुरुऽतमम् । पुरस्तात् । ज्योतिः । तमसः । वयुनऽवत् । अस्थात् ।
नूनम् । दिवः । दुहितरः । विऽभातीः । गातुम् । कृणवन् । उषसः । जनाय ॥ १ ॥

वेङ्कट० वामदेवः । तत् एतत् बहुतमं प्राच्याम् ज्योतिः तमसः सकाशात्[13] प्रज्ञानवत् आविर्भवति । नूनम् दिवः दुहितरः व्युच्छन्त्यः आगमनं कुर्वन्ति उषसः जनार्थम् ॥ १ ॥

अस्थुरु चित्रा उषसः पुरस्तान्मिता इव स्वरवोऽध्वरेषु ।
व्यू व्रजस्य तमसो द्वारोच्छन्तीरव्रञ्छुचयः पावकाः ॥ २ ॥

अस्थुः । ऊँ इति । चित्राः । उषसः । पुरस्तात् । मिताःऽइव । स्वरवः । अध्वरेषु ।
वि । ऊँ इति । व्रजस्य । तमसः । द्वारा । उच्छन्तीः । अव्रन् । शुचयः । पावकाः ॥ २ ॥

---

१. अव वेंऋअ. २. ऋ १,२४,१४. ३. नास्ति वि[2] अ[1] लपं. ४. ऋ १,१३३,७. ५. °र्थाविय° वि[1] ऊपं. ६. ऋ १,९४,७. ७. व्यजते वि[1,2] अ[1] ल; व्यजती लपं. ८. ऋ १,११,७. ९. ऋ १०, १०७, २. १०. ऋ १, ९४, ८; दूढ्यः वि[1,2] अ[1] ल. ११. ऋ १०, १०९, ४. १२-१२. नास्ति मूको. १३. °त् प्रकाशात् वि[1] लपं.

वेङ्कट० तिष्ठन्ति चित्रवर्णाः उषसः प्राच्याम् मिताः इव स्वरवः यूपाः यज्ञेषु[1], वि वृण्वन्ति वारकस्य तमसः द्वाराणि व्युच्छन्त्यः दीप्ताः शोधयित्र्यः ॥ २ ॥

उच्छन्तीरद्य चितयन्त भोजान् राधोदेयायोषसो मघोनीः ।
अचित्रे अन्तः पणयः ससन्त्वबुध्यमानास्तमसो विमध्ये ॥ ३ ॥

उच्छन्तीः । अद्य । चितयन्त । भोजान् । राधःऽदेयाय । उषसः । मघोनीः ।
अचित्रे । अन्तरिति । पणयः । ससन्तु । अबुध्यमानाः । तमसः । विऽमध्ये ॥ ३ ॥

वेङ्कट० व्युच्छन्त्यः[2] अद्य बोधयन्तु भोजयितॄन् उदारान् धनदानाय उषसः धनवत्यः । चित्ररहिते अप्रज्ञायमानसर्वपदार्थे अन्तः लुब्धाः [3]स्वपन्तु अबुध्यमानाः[3] तमसः विमध्ये अत्यन्तमन्तः ॥ ३ ॥

कुवित् स देवीः सनयो नवो वा यामो बभूयादुषसो वो अद्य ।
येना नवग्वे अङ्गिरे दशग्वे सप्तास्ये रेवती रेवदूष ॥ ४ ॥

कुवित् । सः । देवीः । सनयः । नवः । वा । यामः । बभूयात् । उषसः । वः । अद्य ।
येन । नवऽग्वे । अङ्गिरे । दशऽग्वे । सप्तऽआस्ये । रेवतीः । रेवत् । ऊष ॥ ४ ॥

वेङ्कट० बहु सः हे देव्यः! पुरातनः नूतनः वा यामः भवतु हे उषसः! युष्माकम् अद्य । येन गमनेन नवग्वैः[4] दशग्वैश्च[5] अङ्गिरोभिर्युक्ते सप्तास्ये बृहस्पतिना च युक्ते युद्धे हे रेवत्यः! धनयुक्तम् ऊष निवसितवत्यः ॥ ४ ॥

यूयं हि देवीर्ऋतयुग्भिरश्वैः परिप्रयाथ भुवनानि सद्यः ।
प्रबोधयन्तीरुषसः ससन्तं द्विपाच्चतुष्पाच्चरथाय जीवम् ॥ ५ ॥

यूयम् । हि । देवीः । ऋतयुक्ऽभिः । अश्वैः । परिऽप्रयाथ । भुवनानि । सद्यः ।
प्रऽबोधयन्तीः । उषसः । ससन्तम् । द्विऽपात् । चतुःऽपात् । चरथाय । जीवम् ॥ ५ ॥

वेङ्कट० यूयम् हि हे देव्यः! यज्ञार्थं युक्तैः अश्वैः परिगच्छथ सद्यः एव सर्वाणि भुवनानि प्रबोधयन्त्यः उषसः! स्वपन्तम् द्विपात् चतुष्पात् च सर्वं च जीवम् चरणाय ॥ ५ ॥

[6]इति तृतीयाष्टके अष्टमाध्याये प्रथमो वर्गः[6] ॥

---

१. नास्ति लपं. २. °न्त्य उषसः मूको. ३-३. स्वबध्य° वि[२] लपं; स्वबुध्य° वि[१] अ[१] ल. ४. नास्ति वि[१] अ[१] लपं. ५. नास्ति वि[१]. ६-६. नास्ति मूको.

क्वं स्विदासां कतमा पुराणी यया विधाना विदधुर्ऋभूणाम् ।
शुभं यच्छुभ्रा उषसश्चरन्ति न वि ज्ञायन्ते सदृशीरजुर्याः ॥ ६ ॥

क्वं । स्वित् । आसाम । कतमा । पुराणी । यया । विऽधाना । विऽदधुः । ऋभूणाम् ।
शुभम् । यत् । शुभ्राः । उषसः । चरन्ति । न । वि । ज्ञायन्ते । सऽदृशीः । अजुर्याः ॥ ६ ॥

**वेङ्कट०** क्व स्वित् इदानीम् आसाम् सा भवति कतमा च सा पुरातनी, यया उषसा देवाः दीप्तीनां विधातव्यानि तेजांसि विदधुः । शुभम् यदा[1] शोभमानाः उषसः चरन्ति, तदानीं समानाकाराः पृथक् न वि ज्ञायन्ते जरारहिताः । 'सदृशीरद्य सदृशीरिदु श्वः' ( ऋ १,१२३,८ ) इत्युक्तम् ॥ ६ ॥

ता घा ता भद्रा उषसः पुरासुरभिष्टिद्युम्ना ऋतजातसत्याः ।
यास्वीजानः शशमान उक्थैः स्तुवञ्छंसन् द्रविणं सद्य आप ॥ ७ ॥

ताः । घ । ताः । भद्राः । उषसः । पुरा । आसुः । अभिष्टिऽद्युम्नाः । ऋतजातऽसत्याः ।
यासु । ईजानः । शशमानः । उक्थैः । स्तुवन् । शंसन् । द्रविणम् । सद्यः । आप ॥ ७ ॥

**वेङ्कट०** ताः खलु भजनीयाः उषसः पुरा बभूवुः अभ्येषणीयान्नाः यज्ञार्थं जातसत्यभूतसर्वपदार्थाः । यासु इति स्पष्टम् । पुनः ताः इति पूरणम्[2] ॥ ७ ॥

ता आ चरन्ति समना पुरस्तात् समानतः समना पप्रथानाः ।
ऋतस्य देवीः सदसो बुधाना गवां न सर्गा उषसो जरन्ते ॥ ८ ॥

ताः । आ । चरन्ति । समना । पुरस्तात् । समानतः । समना । पप्रथानाः ।
ऋतस्य । देवीः । सदसः । बुधानाः । गवाम् । न । सर्गाः । उषसः । जरन्ते ॥ ८ ॥

**वेङ्कट०** ताः आ गच्छन्ति समानमेव प्राच्याम्[3] समाने काले समानम् प्रथमानाः । सत्यम् स्थानम् जानत्यः गवाम् इव सर्गाः देव्यः उषसः स्तूयन्ते । यथा विसृष्टा गाव आगच्छन्ति, एवमागच्छन्ति ॥ ८ ॥

ता इन्न्वे३व समना समानीरमीतवर्णा उषसश्चरन्ति ।
गूहन्तीरभ्वमसितं रुशद्भिः शुक्रास्तनूभिः शुचयो रुचानाः ॥ ९ ॥

ताः । इत् । नु । एव । समना । समानीः । अमीतऽवर्णाः । उषसः । चरन्ति ।
गूहन्तीः । अभ्वम । असितम् । रुशत्ऽभिः । शुक्राः । तनूभिः । शुचयः । रुचानाः ॥ ९ ॥

---

१. नास्ति वि' लपं. २. पूरणः वि'. ३. प्राच्या वि' लपं.

वेङ्कट० ताः क्षिप्रम् एव समाने काले 'समान्यः अम्लानवर्णाः[1] उषसः चरन्ति विनाशयन्त्यः महत् तमः शुक्रैस्तेजोभिः शुक्लवर्णाः तनूभिः दीप्यमानाः रोचमानाः ॥ ९ ॥

रयिं दिवो दुहितरो विभातीः प्रजावन्तं यच्छतास्मासु देवीः ।
स्योनादा वः प्रतिबुध्यमानाः सुवीर्यस्य पतयः स्याम ॥ १० ॥

रयिम् । दिवः । दुहितरः । विऽभातीः । प्रजाऽवन्तम् । यच्छत । अस्मासु । देवीः ।
स्योनात् । आ । वः । प्रतिऽबुध्यमानाः । सुऽवीर्यस्य । पतयः । स्याम ॥ १० ॥

वेङ्कट० रयिम् हे दिवः दुहितरः! व्युच्छन्त्यः प्रजावन्तम् यच्छत अस्मासु हे देव्यः! । सुखात् स्थानात्[2] यूयम् प्रतिबुध्यमानाः भवथ । सुखहेतोर्वा युष्मान् सर्वतः[3] प्रतिबोधयन्तः शोभनस्य वीर्यस्य धनस्य पतयः स्याम ॥ १० ॥

तद् वो दिवो दुहितरो विभातीरुप ब्रुव उषसो यज्ञकेतुः ।
वयं स्याम यशसो जनेषु तद् द्यौश्च धत्तां पृथिवी च देवी ॥ ११ ॥

तत् । वः । दिवः । दुहितरः । विऽभातीः । उप । ब्रुवे । उषसः । यज्ञऽकेतुः ।
वयम् । स्याम । यशसः । जनेषु । तत् । द्यौः । च । धत्ताम् । पृथिवी । च । देवी ॥ ११ ॥

वेङ्कट० तत् वः हे दिवः दुहितरः! व्युच्छन्तीः उप ब्रुवे हे उषसः! यज्ञो यस्य प्रज्ञापकः । मम किमित्याह—वयम् स्याम यशस्विनः जनेषु तत् अस्मभ्यं द्यावापृथिवी च प्रयच्छताम् ॥ ११ ॥

[4]इति तृतीयाष्टके अष्टमाध्याये द्वितीयो वर्गः[4] ॥

## [ ५२ ]

[5]वामदेवो गौतम ऋषिः । उषाः देवता । गायत्री छन्दः[5] ।

प्रति ष्या सूनरी जनी व्युच्छन्ती परि स्वसुः । दिवो अदर्शि दुहिता ॥ १ ॥

प्रति । स्या । सूनरी । जनी । विऽउच्छन्ती । परि । स्वसुः । दिवः । अदर्शि । दुहिता ॥ १ ॥

वेङ्कट० एषा[5] उषाः जनयित्री व्युच्छन्ती रात्रेः परि दिवः दुहिता प्रति अदर्शि ॥ १ ॥

अश्वेव चित्रारुषी माता गवामृतावरी । सखाभूदश्विनोरुषाः ॥ २ ॥

अश्वाऽइव । चित्रा । अरुषी । माता । गवाम् । ऋतऽवरी । सखा । अभूत् । अश्विनोः । उषाः ॥ २ ॥

---

१-१. 'मानस्यो मनव वि[1] लपं; 'मान्यो म्लानेव' वि[2] अ[1]; समान्यः अम्लानेवर्णाः ल. २. स्थाव मूको. ३. नास्ति ल लपं. ४-४. नास्ति मूको. ५. नास्ति वि[1] लपं.

**वेङ्कट०** अश्वेव चित्रा रोचमाना रश्मीनाम् माता यज्ञवती सखा अभूत् अश्विनोः उषाः ॥ २ ॥

उत सखास्यश्विनोरुत माता गवामसि । उतोषो वस्व ईशिषे ॥ ३ ॥

उत । सखा । असि । अश्विनोः । उत । माता । गवाम् । असि । उत । उषः । वस्वः । ईशिषे ॥ ३ ॥

**वेङ्कट०** निगदसिद्धा ॥ ३ ॥

यावयद्द्वेषसं त्वा चिकित्वित् सूनृतावरि । प्रति स्तोमैरभुत्स्महि ॥ ४ ॥

यवयत्ऽद्वेषसम् । त्वा । चिकित्वित् । सूनृताऽवरि । प्रति । स्तोमैः । अभुत्स्महि ॥ ४ ॥

**वेङ्कट०** पृथक्क्रियमाणशत्रुकां त्वां चिकितुषीम् हे सूनृतावरि उषः! स्तोमैः प्रति बोधयामः ॥ ४ ॥

प्रति भद्रा अदृक्षत गवां सर्गा न रश्मयः । ओषा अप्रा उरु ज्रयः ॥ ५ ॥

प्रति । भद्राः । अदृक्षत । गवाम् । सर्गाः । न । रश्मयः । आ । उषाः । अप्राः । उरु । ज्रयः ॥५॥

**वेङ्कट०** प्रति दृश्यन्ते रश्मयः विसृष्टाः इव गावः । सेयम् उरु बलम् आ पूरयतु ॥ ५ ॥

आपप्रुषी विभावरि व्यावर्ज्योतिषा तमः । उषो अनु स्वधामव ॥ ६ ॥

आऽपप्रुषी । विभाऽवरि । वि । आवः । ज्योतिषा । तमः । उषः । अनु । स्वधाम् । अव ॥६॥

**वेङ्कट०** आपूरयन्ती हे विभावरि उषः! वि वारयसि ज्योतिषा तमः । सा त्वम् अन्नम् प्रति आगच्छ ॥ ६ ॥

आ द्यां तनोषि रश्मिभिरान्तरिक्षमुरु प्रियम् । उषः शुक्रेण शोचिषा ॥ ७ ॥

आ । द्याम् । तनोषि । रश्मिऽभिः । आ । अन्तरिक्षम् । उरु । प्रियम् । उषः । शुक्रेण । शोचिषा ॥७॥

**वेङ्कट०** [1]आ† तनोषि रश्मिभिः[1] दिवम्, आ तनोषि च अन्तरिक्षम् विस्तीर्णम् प्रियम् । अथैकवदाह । हे उषः! इति ॥ ७ ॥

[2]इति तृतीयाष्टके अष्टमाध्याये तृतीयो वर्गः[2] ॥

[ ५३ ]

[2]वामदेवो गौतम ऋषिः । सविता देवता । जगती छन्दः[2] ॥

तद् देवस्य सवितुर्वार्यं महद् वृणीमहे असुरस्य प्रचेतसः ।
छर्दिर्येन दाशुषे यच्छति त्मना तन्नो महाँ उदयान् देवो अक्तुभिः ॥ १ ॥

---

१-१. नास्ति वि[१] अ[१]. † नास्ति वि[१] लपं. २-२. नास्ति मूको.

तत् । देवस्य । सवितुः । वार्यम् । महत् । वृणीमहे । असुरस्य । प्रऽचेतसः ।
छर्दिः । येन । दाशुषे । यच्छति । त्मना । तत् । नः । महान् । उत् । अयान् । देवः । अक्तुऽभिः ॥

**वेङ्कट०** तत् देवस्य सवितुः[1] **वरणीयम्** महत् वृणीमहे **प्राज्ञस्य सुमतेः तेजः । येन तेजसा आत्मनैव यजमानाय धनं प्र-यच्छति,** [2]तत् तेजः महान् **सविता अस्माकम्** उत् **यच्छतु रात्रिभ्यः**[2] ॥ १ ॥

**दिवो धर्ता भुवनस्य प्रजापतिः पिशङ्गं द्रापिं प्रति मुञ्चते कविः ।**
**विचक्षणः प्रथयन्नापृणन्नुर्वजीजनत् सविता सुम्नमुक्थ्यम् ॥ २ ॥**

दिवः । धर्ता । भुवनस्य । प्रजाऽपतिः । पिशङ्गम् । द्रापिम् । प्रति । मुञ्चते । कविः ।
विऽचक्षणः । प्रथयन् । आऽपृणन् । उरु । अजीजनत् । सविता । सुम्नम् । उक्थ्यम् ॥ २ ॥

**वेङ्कट०** [1]दिवः धर्ता[2] प्रजापतिः **भूतजातस्य पिशङ्गवर्णं तेजोरूपं कवचम्** प्रति मुञ्चते **क्रान्तप्रज्ञः । विद्रष्टा** सविता **तेजः** प्रथयन् उरु **अन्तरिक्षम्** आ **पूरयन् अस्माकम् प्रशस्यम् धनम् जनयतु** ॥ २ ॥

**आप्रा रजांसि दिव्यानि पार्थिवा श्लोकं देवः कृणुते स्वाय धर्मणे ।**
**प्र बाहू अस्राक् सविता सवीमनि निवेशयन् प्रसुवन्नक्तुभिर्जगत् ॥ ३ ॥**

आ । अप्राः । रजांसि । दिव्यानि । पार्थिवा । श्लोकम् । देवः । कृणुते । स्वाय । धर्मणे ।
प्र । बाहू इति । अस्राक् । सविता । सवीमनि । निऽवेशयन् । प्रऽसुवन् । अक्तुऽभिः । जगत् ॥३॥

**वेङ्कट०** **दैव्यान् पार्थिवांश्च लोकान् तेजसा** आ **पूरयति । सोऽयम्** देवः **आत्मस्वामिकाय मनुष्याणां कर्मणे अनुज्ञाशब्दं करोति, प्रसौतीत्यर्थः ।** सविता **प्रसृजति** बाहू **प्रसवार्थम्** निवेशयन् प्रसुवन् **च अञ्जनसाधनैः रश्मिभिः** जगत् ॥ ३ ॥

**अदाभ्यो भुवनानि प्रचाकशद् व्रतानि देवः सविताऽभि रक्षते ।**
**प्रास्राग् बाहू भुवनस्य प्रजाभ्यो धृतव्रतो महो अज्मस्य राजति ॥ ४ ॥**

अदाभ्यः । भुवनानि । प्रऽचाकशत् । व्रतानि । देवः । सविता । अभि । रक्षते ।
प्र । अस्राक् । बाहू इति । भुवनस्य । प्रऽजाभ्यः । धृतऽव्रतः । महः । अज्मस्य । राजति ॥४॥

**वेङ्कट०** **अहिंस्यः** भुवनानि **प्रकाशयन् कर्माणि** देवः सविता [3]अभि रक्षते । प्र **सृजति** बाहू **लोकस्य सर्वाभ्यः** प्रजाभ्यः । **तदर्थं धृतकर्मा महतः गृहस्य दिवः ईश्वरो भवति**[3] ॥ ४ ॥

---

१. नास्ति वि[1] लपं. २-२. नास्ति वि[1] लपं. ३-३. नास्ति वि[2] अ[1].

त्रिर॒न्तरि॑क्षं सवि॒ता म॑हित्व॒ना त्री रजां॑सि परि॒भूस्त्रीणि॑ रोच॒ना ।
ति॒स्रो दिवः॑ पृथि॒वीस्ति॒स्र इ॑न्वति त्रि॒भिर्व्र॒तैर॒भि नो॑ रक्षति॒ त्मना॑ ॥ ५ ॥

त्रिः । अ॒न्तरि॑क्षम् । स॒वि॒ता । म॒हि॒ऽत्व॒ना । त्री । रजां॑सि । प॒रि॒ऽभूः । त्रीणि॑ । रो॒च॒ना ।
ति॒स्रः । दिवः॑ । पृ॒थि॒वीः । ति॒स्रः । इ॒न्व॒ति॒ । त्रि॒ऽभिः । व्र॒तैः । अ॒भि । नः॒ । र॒क्ष॒ति॒ । त्मना॑ ॥५॥

**वेङ्कट०** [1]त्रीणि आन्तरिक्षाणि सविता महत्त्वेन[1] त्रींश्च पार्थिवान्[2] लोकान्[3] परिभवति[4] [5]त्रीणि च[6] दिव्यानि रजांसि[5] । प्रकारान्तरेणाह । तिस्रः दिवः तिस्रः च पृथिवीः व्याप्नोति, त्रिभिः च कर्मभिः अस्मान् अभि रक्षति स्वयमेव ॥ ५ ॥

बृ॒हत्सु॑म्नः प्रस॒वी॒ता नि॒वेश॑नो॒ जग॑तः स्था॒तुरु॒भय॑स्य॒ यो व॒शी ।
स नो॑ दे॒वः स॑वि॒ता शर्म॑ यच्छत्व॒स्मे क्षया॑य त्रि॒वरू॑थ॒मंह॑सः ॥ ६ ॥

बृ॒हत्ऽसु॑म्नः । प्र॒ऽस॒वि॒ता । नि॒ऽवेश॑नः । जग॑तः । स्था॒तुः । उ॒भय॑स्य । यः । व॒शी ।
सः । नः॒ । दे॒वः । स॒वि॒ता । शर्म॑ । य॒च्छ॒तु॒ । अ॒स्मे इति॑ । क्षया॑य । त्रि॒ऽवरू॑थम् । अंह॑सः ॥६॥

**वेङ्कट०** महासुखः प्रेरयिता निवेशयिता[7] जङ्गमस्य स्थावरस्य च उभयस्य यः स्वामी सः नः देवः सविता सुखम् प्रयच्छतु अस्माकम् अंहसः [8]विनाशाय त्रिगुणम्[8], अपि वाऽस्माकं वासाय, दारिद्र्यमतीत्येति ॥ ६ ॥

आग॑न् दे॒व ऋ॒तुभि॒र्वर्ध॑तु॒ क्षयं॒ दधा॑तु नः सवि॒ता सु॑प्र॒जामिष॑म् ।
स नः॑ क्ष॒पाभि॒रह॑भिश्च जिन्वतु प्र॒जाव॑न्तं र॒यिम॒स्मे समि॑न्वतु ॥ ७ ॥

आ । अ॒ग॒न् । दे॒वः । ऋ॒तुऽभिः॑ । वर्ध॑तु । क्षय॑म् । दधा॑तु । नः॒ । स॒वि॒ता । सु॒ऽप्र॒जाम् । इष॑म् ।
सः । नः॒ । क्ष॒पाभिः॑ । अह॑ऽभिः । च॒ । जि॒न्व॒तु॒ । प्र॒जाऽव॑न्तम् । र॒यिम् । अ॒स्मे इति॑ । सम् । इ॒न्व॒तु॒ ॥७॥

**वेङ्कट०** आ गच्छतु देवः ऋतुभिः वर्धयतु च क्षयम्, दधातु च अस्माकम् सविता शोभनप्रजम् अन्नम् । सः अस्मान् अहोभिः [9]रात्रिभिः च[9] प्रीणयतु[10], प्रजावन्तम् रयिम् अस्मासु सम् आगमयतु ॥ ७ ॥

[11]इति तृतीयाष्टके अष्टमाध्याये चतुर्थो वर्गः[11] ॥

[ ५४ ]

[11]वामदेवो गौतम ऋषिः । सविता देवता । जगती छन्दः, षष्ठ्याः त्रिष्टुप्[11] ।

अभू॑द् दे॒वः स॑वि॒ता वन्द्यो॒ नु न॑ इ॒दानी॒मह्न॑ उप॒वाच्यो॒ नृभिः॑ ।
वि यो रत्ना॒ भज॑ति मान॒वेभ्यः॒ श्रेष्ठं॑ नो॒ अत्र॒ द्रवि॑णं॒ यथा॒ दध॑त् ॥ १ ॥

---

१-१. नास्ति वि[२] अ[१]. २. °वांश्च मूको. ३. नास्ति वि[१] ल लपं. ४. °ति च वि[१] लपं. ५-५. नास्ति वि[१] लपं. ६. नास्ति मूको. ७. निवेशिता वि[१?२] अ[१] लपं. ८-८. बिनाशाय तिगु° मूको. ९-९. नास्ति वि[१]. १०. प्रीयतु मूको. ११-११. नास्ति मूको.

अभूत् । देवः । सविता । वन्द्यः । नु । नः । इदानीम् । अह्नः । उपऽवाच्यः । नृऽभिः ।
वि । यः । रत्ना । भजति । मानवेभ्यः । श्रेष्ठम् । नः । अत्र । द्रविणम् । यथा । दधत् ॥ १ ॥

**वेङ्कट०** भवतु देवः सविता स्तोतव्यः क्षिप्रम् अस्माकम् अस्मिन् काले अह्नः उपस्तोतव्यः मनुष्यैः । यः रत्नानि वि भजति मनुष्येभ्यः सविताऽस्मभ्यमपि सः[1] यथा श्रेष्ठम् धनम् अस्मिन् तृतीये सवने प्रयच्छति तथोपवाच्यः ॥ १ ॥

देवेभ्यो हि प्रथमं यज्ञियेभ्योऽमृतत्वं सुवसि भागमुत्तमम् ।
आदिद् दामानं सवितर्व्यूर्णुषेऽनूचीना जीविता मानुषेभ्यः ॥ २ ॥

देवेभ्यः । हि । प्रथमम् । यज्ञियेभ्यः । अमृतऽत्वम् । सुवसि । भागम् । उत्ऽतमम् ।
आत् । इत् । दामानम् । सवितः । वि । ऊर्णुषे । अनूचीना । जीविता । मानुषेभ्यः ॥ २ ॥

**वेङ्कट०** देवेभ्यः हि प्रथमम् यज्ञियेभ्यः अमृतत्वम् प्रयच्छसि भजनीयम् उत्तमम् । अनन्तरम् एव खण्डयितारम् अन्धकारम्[2] हे सवितः![2] अपावृणोषि, तथा[3] अनूचीनानि जीवितानि मनुष्येभ्यः प्रयच्छसि ॥२॥

अचित्ती यच्चकृमा दैव्ये जने दीनैर्दक्षैः प्रभूती पूरुषत्वता ।
देवेषु च सवितर्मानुषेषु च त्वं नो अत्र सुवतादनागसः ॥ ३ ॥

अचित्ती । यत् । चकृम । दैव्ये । जने । दीनैः । दक्षैः । प्रऽभूती । पुरुषत्वता ।
देवेषु । च । सवितः । मानुषेषु । च । त्वम् । नः । अत्र । सुवतात् । अनागसः ॥ ३ ॥

**वेङ्कट०** अज्ञानेन यत् चकृम दैव्ये जने दीनत्वेन वृद्ध्या प्रभावेन पौरुषेण वा कर्तव्यम् देवेषु मनुष्येषु च अस्मिन्नकर्तव्ये कृतेऽपि त्वम्[1] अनागस्कान् अस्मान् प्रसुवेति। यथोभयेऽस्मान् न निन्दन्ति तथा कुर्विति ॥ ३ ॥

न प्रमिये सवितुर्दैव्यस्य तद् यथा विश्वं भुवनं धारयिष्यति ।
यत् पृथिव्या वरिमन्ना स्वङ्गुरिर्वर्ष्मन् दिवः सुवति सत्यमस्य तत् ॥ ४ ॥

न । प्रऽमिये । सवितुः । दैव्यस्य । तत् । यथा । विश्वम् । भुवनम् । धारयिष्यति ।
यत् । पृथिव्याः । वरिमन् । आ । सुऽअङ्गुरिः । वर्ष्मन् । दिवः । सुवति । सत्यम् । अस्य । तत् ॥४॥

**वेङ्कट०** न प्रमातुं शक्यम् सवितुः दैव्यस्य[4] तत् कर्म, येन कर्मणा सर्वमिदम् भुवनम् धारयिष्यति धारयति च। यत् पृथिव्याः विस्तृते देशे शोभनाङ्गुलिकः[6] सविता प्रसौति, यच्च दिवः उच्छ्रिते, सत्यम् तत् अस्य कर्म ॥ ४ ॥

---

नास्ति मूको. २. नास्ति वि[2] अ[1]. ३. नास्ति वि[1] लपं. ४. °त्वे मूको. ५. देवस्य लपं.
६. शोभमानाङ्गुलीकः वि[1]; शोभमानाङ्गुलीयकः लपं॰

इन्द्रज्येष्ठान् बृहद्भ्यः पर्वतेभ्यः क्षयाँ एभ्यः सुवसि पस्त्यावतः ।
यथायथा पतयन्तो वियेमिर एवैव तस्थुः सवितः सवाय ते ॥ ५ ॥

इन्द्रऽज्येष्ठान् । बृहत्ऽभ्यः । पर्वतेभ्यः । क्षयान् । एभ्यः । सुवसि । पस्त्यऽवतः ।
यथाऽयथा । पतयन्तः । विऽयेमिरे । एव । एव । तस्थुः । सवितरिति । सवाय । ते ॥ ५ ॥

**वेङ्कट०** इज्यमानेनेन्द्रेण युक्तान् एभ्यः महद्भ्यः शिलोच्चयेभ्यः गृहयुक्तान् ऋषिनिवासान् प्र-सुवसि । किं च यथायथा पतयन्तः मनुष्याः कर्माणि विविधं यच्छन्ति, तथातथा हे सवितः! तव अनुज्ञामपेक्ष्य[1] तिष्ठन्ति ॥ ५ ॥

ये ते त्रिरहन्त्सवितः सवासो दिवेदिवे सौभगमासुवन्ति ।
इन्द्रो द्यावापृथिवी सिन्धुरद्भिरादित्यैर्नो अदितिः शर्म यंसत् ॥ ६ ॥

ये । ते । त्रिः । अहन् । सवितरिति । सवासः । दिवेऽदिवे । सौभगम् । आऽसुवन्ति ।
इन्द्रः । द्यावापृथिवी इति । सिन्धुः । अत्ऽभिः । आदित्यैः । नः । अदितिः । शर्म । यंसत् ॥६॥

**वेङ्कट०** प्रातः मध्यन्दिने सायम् इति ये ते त्रयः सवाः[2] अन्वहं सौभाग्यम् आसुवन्ति, तैः सहेन्द्रादयः सरस्वती च अद्भिः आदित्यैः सह अदितिः च अस्मभ्यं सुखं यच्छतु ॥ ६ ॥

[3]इति तृतीयाष्टके अष्टमाध्याये पञ्चमो वर्गः[3] ॥

[ ५५ ]

[3]वामदेवो गौतम ऋषिः । विश्वे देवाः देवता । त्रिष्टुप् छन्दः, अष्टमाद्यास्तिस्रो गायत्र्यः[3] ।

को वस्त्राता वसवः को वरूता द्यावाभूमी अदिते त्रासीथां नः ।
सहीयसो वरुण मित्र मर्तात् को वोऽध्वरे वरिवो धाति देवाः ॥ १ ॥

कः । वः । त्राता । वसवः । कः । वरूता । द्यावाभूमी इति । अदिते । त्रासीथाम् । नः ।
सहीयसः । वरुण । मित्र । मर्तात् । कः । वः । अध्वरे । वरिवः । धाति । देवाः ॥ १ ॥

**वेङ्कट०** कः वः रक्षिता हे वसवः!, कः वा सम्भक्ता । हे द्यावाभूमी[4] अदिते! रक्षतम् अस्मान् । तथा हे वरुण मित्र! अभिभवितुः मनुष्याद् अस्मात् रक्षतम् । हे विश्वे देवाः! कः वः यज्ञे पूजां धारयति ॥ १ ॥

प्र ये धामानि पूर्व्याण्यर्चान् वि यदुच्छान् वियोतारो अमूराः ।
विधातारो वि ते दधुरजस्रा ऋतधीतयो रुरुचन्त दस्माः ॥ २ ॥

---

१. °ज्ञामनपेक्ष्य वि॰ लपं.　२. सर्वाः मूको.　३-३. नास्ति मूको.　४. द्यावापृथिवी वि॰ अ॰.

प्र । ये । धामा॑नि । पू॒र्व्याणि॑ । अर्चा॑न् । वि । यत् । उ॒च्छान् । वि॒ऽयो॒तारः॑ । अमू॑राः ।
वि॒ऽधा॒तारः॑ । वि । ते । द॒धुः । अज॑स्राः । ऋ॒तऽधी॑तयः । रु॒रु॒च॒न्त॒ । द॒स्माः ॥ २ ॥

**वेङ्कट०** प्र अर्चन्ति ये पूर्व्याणि धामानि, वि उच्छन्ति यदा[1] पृथक्कर्तारः पापस्य अमूढाः, विधातारः ते वि दधुः अजस्राः रश्मयः, सत्यदीप्तयः[2], ते दीप्यन्ते दर्शनीयाः ॥ २ ॥

प्र प॒स्त्या॑३॒॑मदि॑तिं॒ सिन्धु॑म॒र्कैः स्व॒स्तिमी॑ळे स॒ख्याय॑ दे॒वीम् ।
उ॒भे यथा॑ नो॒ अह॑नी नि॒पात॑ उ॒षासा॒नक्ता॑ कर॒ताम॑दब्धे ॥ ३ ॥

प्र । प॒स्त्या॑म् । अदि॑तिम् । सिन्धु॑म् । अ॒र्कैः । स्व॒स्तिम् । ई॒ळे॒ । स॒ख्याय॑ । दे॒वीम् ।
उ॒भे इति॑ । यथा॑ । नः॒ । अह॑नी॒ इति॑ । नि॒ऽपातः॑ । उ॒षसा॒नक्ता॑ । क॒र॒ताम् । अद॑ब्धे॒ इति॑ ॥३॥

**वेङ्कट०** प्र स्तौमि गृहहिताम् अदितिम् सरस्वतीम् स्वस्तिम् च देवीम् स्तोत्रैः सख्यसिद्ध्यर्थम् । उभये यथा अस्मान् अहोरात्रे नियमेन रक्षतः अहोरात्रे एवम् अहिंसिते कर्म कुरुताम् ॥ ३ ॥

व्य॑र्य॒मा वरु॑णश्चेति॒ पन्था॑मि॒षस्पतिः॑ सुवि॒तं गा॒तुम॒ग्निः ।
इन्द्रा॑विष्णू नृ॒वदु॒ षु स्तवा॑ना॒ शर्म॑ नो यन्त॒ममव॑द्वरू॑थम् ॥ ४ ॥

वि । अ॒र्य॒मा । वरु॑णः । चे॒ति॒ । पन्था॑म् । इ॒षः । पतिः॑ । सु॒वि॒तम् । गा॒तुम् । अ॒ग्निः ।
इन्द्रा॑विष्णू॒ इति॑ । नृ॒ऽवत् । ऊँ॒ इति॑ । सु । स्तवा॑ना । शर्म॑ । नः॒ । य॒न्त॒म् । अम॑ऽवत् । वरू॑थम् ॥

**वेङ्कट०** वि चिनोति पन्थानम् अर्यमा वरुणः च अस्माकम्, तथा अन्नपतिः शोभनमार्गम्[3] अग्निः । हे इन्द्राविष्णू! स्तूयमानौ बलवत् वरणीयं गृहम् असभ्यम् मनुष्ययुक्तं सुष्ठु दत्तम् ॥ ४ ॥

आ पर्व॑तस्य म॒रुता॒मवां॑सि दे॒वस्य॑ त्रा॒तुर॑व्रि भग॑स्य ।
पात्पति॒र्जन्या॒दंह॑सो नो मि॒त्रो मि॒त्रिया॑दु॒त न॑ उरुष्येत् ॥ ५ ॥

आ । पर्व॑तस्य । म॒रुता॑म् । अवां॑सि । दे॒वस्य॑ । त्रा॒तुः । अ॒व्रि॒ । भग॑स्य ।
पात् । पतिः॑ । जन्या॑त् । अंह॑सः । नः॒ । मि॒त्रः । मि॒त्रिया॑त् । उ॒त । नः॒ । उ॒रु॒ष्ये॒त् ॥ ५ ॥

**वेङ्कट०** आ वृणे मेघस्य मरुताम् च रक्षणानि तथा मेघस्य त्रातुः भगस्य । रक्षतु पालयिता इन्द्रः जनभवात् उपद्रवात् अस्मान्, मित्रः च मित्रभवादुपद्रवात् अस्मान् रक्षेत् ॥ ५ ॥

[4]इति तृतीयाष्टके अष्टमाध्याये षष्ठो वर्गः[4] ॥

---

१ यथा वि[2] अ[1]. २. सप्तदी॰ मूको. ३. शोभमानमा॰ वि[2]. ४-४. नास्ति मूको.

नू रोदसी अहिना बुध्न्येन स्तुवीत देवी अप्येभिरिष्टैः ।
समुद्रं न संचरणे सनिष्यवो घर्मस्वरसो नद्यो३ अप व्रन् ॥ ६ ॥

नु । रोदसी इति । अहिना । बुध्न्येन । स्तुवीत । देवी इति । अप्येभिः । इष्टैः ।
समुद्रम् । न । सम्ऽचरणे । सनिष्यवः । घर्मऽस्वरसः । नद्यः । अप । व्रन् ॥ ६ ॥

**वेङ्कट०** क्षिप्रम् हे द्यावापृथिवी देवी ! अहिना बुध्न्येन देवेन सह स्तुवीत, तथा अन्तरिक्ष्यैश्च प्रियैर्देवैः सह। यथा समुद्रम् संचरणे सम्भक्तुमिच्छवो गच्छन्त्येवं क्षरदुदकाः नद्यः अप गच्छन्तु यथाकामं चरन्तु ॥ ६ ॥

देवैर्नो देव्यदितिर्नि पातु देवस्त्राता त्रायतामप्रयुच्छन् ।
नहि मित्रस्य वरुणस्य धासिमर्हामसि प्रमियं सान्वग्नेः ॥ ७ ॥

देवैः । नः । देवी । अदितिः । नि । पातु । देवः । त्राता । त्रायताम् । अप्रऽयुच्छन् ।
नहि । मित्रस्य । वरुणस्य । धासिम् । अर्हामसि । प्रऽमियम् । सानु । अग्नेः ॥ ७ ॥

**वेङ्कट०** गतः पूर्वार्धः ( ऋ १,१०६,७ द्र. ) । नहि वयं मित्रावरुणयोः अन्नं प्रहिंसितुम् अर्हामः, तथा अग्नेश्च समुच्छ्रितम् हविः ॥ ७ ॥

अग्निरीशे वसव्यस्याऽग्निर्महः सौभगस्य । तान्यस्मभ्यं रासते ॥ ८ ॥

अग्निः । ईशे । वसव्यस्य । अग्निः । महः । सौभगस्य । तानि । अस्मभ्यम् । रासते ॥ ८ ॥

**वेङ्कट०** वसूनां सभूहस्य महतः सौभाग्यस्य च ईश्वरः अग्निः तानि उभयानि अस्मभ्यम् प्रयच्छतु ॥ ८ ॥

उषो मघोन्या वह सूनृते वार्या पुरु । अस्मभ्यं वाजिनीवति ॥ ९ ॥

उषः । मघोनि । आ । वह । सूनृते । वार्या । पुरु । अस्मभ्यम् । वाजिनीऽवति ॥ ९ ॥

**वेङ्कट०** पुरूणि धनानि हे उषः मघोनि ! अस्मभ्यम् आ भर । स्पष्टं शिष्टम्[1] ॥ ९ ॥

तत् सु नः सविता भगो वरुणो मित्रो अर्यमा । इन्द्रो नो राधसा गमत् ॥१०॥

तत् । सु । नः । सविता । भगः । वरुणः । मित्रः । अर्यमा । इन्द्रः । नः । राधसा । आ । गमत् ।१०।

**वेङ्कट०** सवित्रादिः तत् धनम् अस्मभ्यम् सुष्ठु प्रयच्छतु, इन्द्रः अस्मान् धनेन आ गच्छतु ॥ १० ॥

[2]इति तृतीयाष्टके अष्टमाध्याये सप्तमो वर्गः[2] ॥

---

१. शिष्टं च वि' ल लपं. २-२. नास्ति मूको.

[ ५६ ]

[1]वामदेवो गौतम ऋषिः । द्यावापृथिवी देवता । त्रिष्टुप् छन्दः, पञ्चम्यादिसप्तम्यन्ता गायत्र्यः[1] ।

मही द्यावापृथिवी इह ज्येष्ठे रुचा भवतां शुचयद्भिरर्कैः ।
यत् सीं वरिष्ठे बृहती विमिन्वन् रुवद्धोक्षा पप्रथानेभिरेवैः ॥ १ ॥

मही इति । द्यावापृथिवी इति । इह । ज्येष्ठे इति । रुचा । भवताम् । शुचयत्ऽभिः । अर्कैः ।
यत् । सीम् । वरिष्ठे इति । बृहती इति । विऽमिन्वन् । रुवत् । ह । उक्षा । पप्रथानेभिः । एवैः ॥१॥

वेङ्कट० महती द्यावापृथिवी इह प्रशस्यतमे दीप्त्या शुचयद्भिः अन्नैश्च सह भवताम् । यदा सर्वतः वरिष्ठे महती परिच्छिन्दन् शब्दं करोति पर्जन्यः प्रथमानैः मरुद्भिः सह ॥ १ ॥

देवी देवेभिर्यजते यजत्रैरमिनती तस्थतुरुक्षमाणे ।
ऋतावरी अद्रुहा देवपुत्रे यज्ञस्य नेत्री शुचयद्भिरर्कैः ॥ २ ॥

देवी इति । देवेभिः । यजते इति । यजत्रैः । अमिनती इति । तस्थतुः । उक्षमाणे इति ।
ऋतवरी इत्यृतऽवरी । अद्रुहा । देवपुत्रे इति देवऽपुत्रे । यज्ञस्य । नेत्री इति । शुचयत्ऽभिः । अर्कैः ॥२॥

वेङ्कट० देवनशीले देवैः यष्टव्ये यजनीयैः अहिंसत्यौ[2] तस्थतुः सिञ्चन्त्यौ[3] कामान् यज्ञवत्यौ[4] अद्रोग्ध्र्यौ देवाः पुत्रा ययोः ते[5] यज्ञस्य नेत्र्यौ दीप्यमानैः अन्नैः ॥ २ ॥

स इत् स्वपा भुवनेष्वास य इमे द्यावापृथिवी जजान ।
उर्वी गभीरे रजसी सुमेके अवंशे धीरः शच्या समैरत् ॥ ३ ॥

सः । इत् । सुऽअपाः । भुवनेषु । आस । यः । इमे इति । द्यावापृथिवी इति । जजान ।
उर्वी इति । गभीरे इति । रजसी इति । सुमेके इति सुऽमेके । अवंशे । धीरः । शच्या । सम् । ऐरत् ॥ ३ ॥

वेङ्कट० सः एव सुकर्मा जातेषु अभवत्, यः इमे द्यावापृथिवी जजान । विस्तीर्णे गम्भीरे द्यावापृथिवी शोभनमाने[6] सः धीरः अवंशे अस्तभ्नात् कर्मणा ॥ ३ ॥

नू रोदसी बृहद्भिर्नो वरूथैः पत्नीवद्भिरिषयन्ती सजोषाः ।
उरूची विश्वे यजते नि पातं धिया स्याम रथ्यः सदासाः ॥ ४ ॥

नु । रोदसी इति । बृहत्ऽभिः । नः । वरूथैः । पत्नीवत्ऽभिः । इषयन्ती इति । सऽजोषाः ।
उरूची इति । विश्वे इति । यजते इति । नि । पातम् । धिया । स्याम । रथ्यः । सदाऽसाः ॥

१-१. नास्ति मूको. २. °मन्ती मूको. ३. °ञ्चत्यौ वि°. ४. °वती मूको. ५. नास्ति मूको.
६. शोममाने ल.

वेङ्कट० क्षिप्रं हे द्यावापृथिवी! महद्भिः अस्मद्गृहैः पत्नीयुक्तैः अन्नं कुर्वाणे सङ्गते उरुत्वमञ्चन्त्यौ व्याप्ते यष्टव्ये नितरां रक्षतम्। रथिनो वयं कर्मणा सदा सम्भक्तारः स्याम ॥ ४ ॥

प्र वां महि द्यवी अभ्युपस्तुतिं भरामहे। शुची उप प्रशस्तये ॥ ५ ॥

प्र। वाम्। महि। द्यवी इति। अभि। उपऽस्तुतिम्। भरामहे। शुची इति। उप। प्रऽशस्तये ॥५॥

वेङ्कट० प्र भरामहे वाम् अभि द्यावापृथिव्यौ महतीम् उपस्तुतिम् दीप्यमाने उप प्रशंसितुम् ॥ ५ ॥

पुनाने तन्वा मिथः स्वेन दक्षेण राजथः। ऊह्याथे सनादृतम् ॥ ६ ॥

पुनाने इति। तन्वा। मिथः। स्वेन। दक्षेण। राजथः। ऊह्याथे इति। सनात्। ऋतम् ॥६॥

वेङ्कट० क्षरन्त्यौ ततेन हविषा उदकेन च परस्परम् स्वेन बलेन राजथः, वहथः च[1] चिरादारभ्य यज्ञम् ॥ ६ ॥

मही मित्रस्य साधथस्तरन्ती पिप्रती ऋतम्। परि यज्ञं नि षेदथुः ॥ ७ ॥

मही इति। मित्रस्य। साधथः। तरन्ती इति। पिप्रती इति। ऋतम्। परि। यज्ञम्। नि। सेदथुः।

वेङ्कट० महती[2] सख्युः यज्ञं साधयथः, तरन्त्यौ मित्रं पूरयन्त्यौ परि नि षेदथुः च तस्य यज्ञम् ॥ ७ ॥

[3]इति तृतीयाष्टके अष्टमाध्याये अष्टमो वर्गः[3] ॥

## [ ५७ ]

[3]वामदेवो गौतम ऋषिः। प्रथमादितृतीयान्तानां क्षेत्रपतिर्देवता, चतुर्थ्याः शुनः, पञ्चम्यष्टम्योः शुनासीरौ, षष्ठीसप्तम्योः सीता। अनुष्टुप् छन्दः, पञ्चमी पुरउष्णिक्, द्वितीयातृतीयाष्टम्यस्त्रिष्टुभः[3]।

क्षेत्रस्य पतिना वयं हितेनेव जयामसि। गामश्वं पोषयित्न्वा स नो मृळातीदृशे ॥१॥

क्षेत्रस्य। पतिना। वयम्। हितेनऽइव। जयामसि।
गाम्। अश्वम्। पोषयित्नु। आ। सः। नः। मृळाति। ईदृशे ॥ १ ॥

वेङ्कट० 'क्षेत्रस्य पतिना वयम् सुहितेनेव जयामः गाम् अश्वम् पोषयितृ[4] चाऽऽहर इति यास्कः (१०,१५)। समुच्चयार्थो वा आकारः। " 'स नो मृळातीदृशे' बलेन वा धनेन वा[5]" इति यास्कः (१०,१५) ॥ १ ॥

क्षेत्रस्य पते मधुमन्तमूर्मिं धेनुरिव पयो अस्मासु धुक्ष्व।
मधुश्चुतं घृतमिव सुपूतमृतस्य नः पतयो मृळयन्तु ॥ २ ॥

---

१. नास्ति वि[1] लपं. २. महत्यौ ल प्रस्तावः. ३-३ नास्ति मूको. ४. पुष्टं पोषयितृ वि[2]. ५. वा ईदृशेन क्षेत्रस्य बलेन वि[2] अ[1]; वा ईदृशेन ल लपं.

क्षेत्रस्य । पते । मधुंऽमन्तम् । ऊर्मिम् । धेनुःऽइंव । पयः । अस्मासु । धुक्ष्व ।
मधुऽश्चुतम् । घृतम्ऽइंव । सुऽपूतम् । ऋतस्यं । नः । पतयः । मृळयन्तु ॥ २ ॥

वेङ्कट० हे क्षेत्रस्य पते! मधुमन्तम् ऊर्मिम् गोसङ्घं यथा धेनुः पयः दुग्धे एवम् अस्मासु धुक्ष्व प्रयच्छ पशून्। मधुश्चुतम् ऊर्मिम् घृतमिव सुपूतम् अस्मासु धुक्ष्व। यज्ञस्य पतयः अस्मान्[1] मृळयन्तु देवाः[2]। निरुक्तं द्रष्टव्यम् (या १०, २६) ॥ २ ॥

मधुमतीरोषधीर्द्याव आपो मधुमन्नो भवत्वन्तरिक्षम् ।
क्षेत्रस्य पतिर्मधुमान्नो अस्त्वरिष्यन्तो अन्वेनं चरेम ॥ ३ ॥

मधुंऽमतीः । ओषधीः । द्यावः । आपः । मधुंऽमत् । नः । भवतु । अन्तरिक्षम् ।
क्षेत्रस्य । पतिः । मधुंऽमान् । नः । अस्तु । अरिष्यन्तः । अनु । एनम् । चरेम ॥ ३ ॥

वेङ्कट० एते सर्वे अस्माकं मधुमन्तः भवन्तु। वयम् अनु चराम क्षेत्रस्य पतिम् अहिंस्यमानाः ॥ ३ ॥

शुनं वाहाः शुनं नरः शुनं कृषतु लाङ्गलम् ।
शुनं वरत्रा बध्यन्ताम् शुनमष्ट्रामुदिङ्गय ॥ ४ ॥

शुनम् । वाहाः । शुनम् । नरः । शुनम् । कृषतु । लाङ्गलम् ।
शुनम् । वरत्राः । बध्यन्ताम् । शुनम् । अष्ट्राम् । उत् । इङ्गय ॥ ४ ॥

वेङ्कट० सुखम् अस्यां पृथिव्यां बलीवर्दाः कृषन्तु। तथा कीनाशाः नरः शुनम् एव कृषन्तु [3]शुनम् कृषतु[3] लाङ्गलम्। तथा वरत्राः च शुनम् बध्यन्ताम् तासु च सुखं भवतु। हे कीनाश! त्वम् अष्ट्राम् च सुखमेव उत् इङ्गय इति द्विकर्मकः। शुनो देवता मन्त्रस्य। तच्च सुखम्। भवति हि क्षेत्रकर्षणे सुखमिति ॥४॥

शुनासीराविमां वाचं जुषेथां यद् दिवि चक्रथुः पयः । तेनेमामुप सिञ्चतम् ॥५॥

शुनासीरौ। इमाम्। वाचम्। जुषेथाम्। यत्। दिवि। चक्रथुः। पयः। तेन। इमाम्। उप। सिञ्चतम् ॥५॥

वेङ्कट० इन्द्रः सुखरूपेण परिणमति, वायुः सीररूपो भवति। हे शुनासीरौ! स्तुतिम् इमाम् सेवेथाम्। यत् युवाम् अन्तरिक्षे देवताभूतौ उदकम् चक्रथुः, तेन भूमिम् उप सिञ्चतम् ॥ ५ ॥

अर्वाची सुभगे भव सीते वन्दामहे त्वा ।
यथा नः सुभगाऽससि यथा नः सुफलाऽससि ॥ ६ ॥

---

१. नास्ति वि॰ लपं. २. देवान् ल. ३-३. नास्ति मूको.

अर्वाची । सुऽभगे । भव । सीते । वन्दामहे । त्वा ।
यथा । नः । सुऽभगा । असंसि । यथा । नः । सुऽफला । असंसि ॥ ६ ॥

**वेङ्कट०** हे सुभगे सीते! **अभिमुखी**[1] भव, वन्दामहे त्वा **वयम्**, यथा नः **सुधना भवसि**, यथा **च** सुफला **धान्यहेतुः** ॥ ६ ॥

**इन्द्रः सीतां नि गृह्णातु तां पूषानु यच्छतु ।**
**सा नः पर्यस्वती दुहामुत्तरामुत्तरां समाम् ॥ ७ ॥**

इन्द्रः । सीताम् । नि । गृह्णातु । ताम् । पूषा । अनु । यच्छतु ।
सा । नः । पर्यस्वती । दुहाम् । उत्तराम्ऽउत्तराम् । समाम् ॥ ७ ॥

**वेङ्कट०** इन्द्रः सीताम् **पृथिव्याम्** नि गृह्णातु । ताम् **सीताम्** पूषा अनु **नियच्छतु** । सा **सीता रसवती दुग्धाम् अन्नम् उत्तरस्मिन् संवत्सरे तत उत्तरस्मिंश्चेति** ॥ ७ ॥

**शुनं नः फाला वि कृषन्तु भूमिं शुनं कीनाशा अभि यन्तु वाहैः ।**
**शुनं पर्जन्यो मधुना पयोभिः शुनासीरा शुनमस्मासु धत्तम् ॥ ८ ॥**

शुनम् । नः । फालाः । वि । कृषन्तु । भूमिम् । शुनम् । कीनाशाः । अभि । यन्तु । वाहैः ।
शुनम् । पर्जन्यः । मधुना । पयःऽभिः । शुनासीरा । शुनम् । अस्मासु । धत्तम् ॥ ८ ॥

**वेङ्कट०** फालाः **सीराग्राणि**[2] **सुखम् अस्माकम्**[3] भूमिम् वि कृषन्तु । शुनम् **एव कृषमाणाः** कीनाशाः **अभिगच्छन्तु** वाहैः **सह** । शुनम् पर्जन्यः **उदकेन सारैश्चौषधिभूतैः** । हे[4] **शुनासीरौ! युवां च** शुनम् अस्मासु धत्तम् इति । **अत्र बृहद्देवता—**

> "'शुनं वाहाः' [5]'शुनं नरः'[5] इत्यृगुत्तरा ॥
>
> वायुः शुनः [6]सूर्य एवात्र[6] सीरः शुनासीरौ वायुसूर्यौ वदन्ति ।
> [7]शुनासीरं यास्क इन्द्रं तु[7] मेने सूर्येन्द्रौ तौ[8] मन्यते शाकपूणिः ॥
>
> शुनासीरौ पञ्चम्यां तु स्तुतौ [9]तौ द्वे तु[9] सीतायै षष्ठी सप्तमी च ।
> 'शुनं नः फालाः' कृषिं स्तौति पादः[10] 'शुनं कीनाशा.' कृषिजीवान्[11] मनुष्यान् ॥
>
> स्तुतः पादेऽत्र[12] पर्जन्यस्तृतीये अन्त्यं त्वृषिर्धनकामो जगाद ।
> [13]कृषिं वा[13] स्तौति सर्वं हि सूक्तम्" ॥ (बृदे ५, ७-१०) इति ॥

[14]**इति तृतीयाष्टके अष्टमाध्याये नवमो वर्गः**[14] ॥

---

१. °खा **वि**[1] **अ**[1] ल.पं. २. **नास्ति मूको.** ३. °कं सीराग्राणि **मूको.** ४. ये ल लपं. ५-५. शुनदेवौ त्वृगु[2] **बृदे.** ६-६. सूर्यस्त्वेव **मूको.** ७-७. °सीरमिन्द्रं यास्कस्तु **मूको.** ८. तु **मूको.** ९-९. द्वौ द्वे **मूको.** १०. पादं **मूको.** ११. °जीवा **मूको.** १२. पादे **मूको.** १३-१३. कृषिमत् **मूको.** १४-१४. **नास्ति मूको.**

[ ५८ ]

[1]वामदेवो गौतम ऋषिः । अग्निर्देवता, सूर्यो वा आपो वा गावो वा घृतस्तुतिर्वा । त्रिष्टुप् छन्दः, एकादशी जगती[1] ।

समुद्रादूर्मिर्मधुमाँ उदारदुपांशुना सममृतत्वमानट् ।
घृतस्य नाम गुह्यं यदस्ति जिह्वा देवानाममृतस्य नाभिः ॥ १ ॥

समुद्रात् । ऊर्मिः । मधुऽमान् । उत् । आरत् । उप । अंशुना । सम् । अमृतऽत्वम् । आनट् ।
घृतस्य । नाम । गुह्यम् । यत् । अस्ति । जिह्वा । देवानाम् । अमृतस्य । नाभिः ॥ १ ॥

वेङ्कट० [2]कात्यायनः— 'समुद्रादेकादशाग्नेयं जगत्यन्तं सौर्यं वाऽऽपं वा† गव्यं वा घृतस्तुतिर्वा' ( ऋअ २,४,५८ ) इति[2] । समुद्रात् कश्चन उदकवान् ऊर्मिः अग्निरादित्यो वा उत् आरत् उदगात् । सोऽयम् ऊर्मिरात्मीयेन अंशुना मनुष्यान् अमृतत्वम् प्रापयति[3] । [4]तथाऽस्य क्षरणशीलस्य यत् गुह्यम् नाम† भवति तदहं कीर्तयामि । तदाह— देवानाम् जिह्वा भवति । अग्नौ हि देवानां होमः आदित्ये वा अमृतत्वस्य च स्थानं भवतीति[4] ॥ १ ॥

वयं नाम प्र ब्रवामा घृतस्यास्मिन् यज्ञे धारयामा नमोभिः ।
उप ब्रह्मा शृणवच्छस्यमानं चतुःशृङ्गोऽवमीद् गौर एतत् ॥ २ ॥

वयम् । नाम । प्र । ब्रवाम । घृतस्य । अस्मिन् । यज्ञे । धारयाम । । नमःऽभिः ।
उप । ब्रह्मा । शृणवत् । शस्यमानम् । चतुःऽशृङ्गः । अवमीत् । गौरः । एतत् ॥ २ ॥

वेङ्कट० [4]जिह्वा देवानामितीदम् नाम वयम् अग्नेः प्र ब्रवाम, अस्मिन् यज्ञे धारयाम च तमग्निं नमोभिः । उप शृणोति महानग्निः उच्यमानं नाम । तदिदं नाम चतुःशृङ्गः कश्चन गौरः[5] वमति प्रकाशयति ॥ २ ॥

चत्वारि शृङ्गा त्रयो अस्य पादा द्वे शीर्षे सप्त हस्तासो अस्य ।
त्रिधा बद्धो वृषभो रोरवीति महो देवो मर्त्याँ आ विवेश ॥ ३ ॥

चत्वारि । शृङ्गा । त्रयः । अस्य । पादाः । द्वे इति । शीर्षे इति । सप्त । हस्तासः । अस्य ।
त्रिधा । बद्धः । वृषभः । रोरवीति । महः । देवः । मर्त्यान् । आ । विवेश ॥ ३ ॥

वेङ्कट० तस्य[6] गौरस्य चत्वारि शृङ्गाणि भवन्ति, त्रयः च पादाः, द्वे च शीर्षे, सप्त हस्तासः अस्य । स चायम् त्रिधा बद्धः वृषभः शब्दं करोति । सोऽयं [7]महान् देवः[7] मनुष्यान् आ विवेश

---

१-१. नास्ति मूको. २-२. नास्ति वि[1] अ[1]. † नास्ति वि[1] लपं. ३. प्रकाशयति वि[1] लपं. ४-४. नास्ति वि[1] लपं † नास्ति ल. ५-५. नास्ति वि[1] लपं. ६. नास्ति वि[1] अ[1]. ७-७. महादे° वि[1] लपं.

इति। अत्राथर्वणिकम्—'चत्वारि शृङ्गा इति वेदा एवैत उक्ताः। त्रयो अस्य पादा इति सवनान्येव। द्वे शीर्षे इति ब्रह्मौदनप्रवर्ग्या एव। सप्त हस्तासो अस्येति छन्दांस्येव। त्रिधा बद्ध इति मन्त्रः कल्पो ब्राह्मणम्। वृषभो रोरवीत्येष ह वै वृषभ एव तद्रोरवीति यद्यज्ञे शस्त्राणि शंसन्ति ऋग्भिर्यजुर्भिः सामभिर्ब्रह्मभिरिति। 'महो देवो' मर्त्याँ आ विवेशेत्येष एव वै महान् देवो यद्यज्ञो मर्त्यानाविवेश इति' ( तु. या १३,७ ) ॥ ३ ॥

त्रिधा हितं पणिभिर्गुह्यमानं गवि देवासो घृतमन्वविन्दन् ।
इन्द्र एकं सूर्य एकं जजान वेनादेकं स्वधया निष्टतक्षुः ॥ ४ ॥

त्रिधा । हितम् । पणिऽभिः । गुह्यमानम् । गवि । देवासः । घृतम् । अनु । अविन्दन् ।
इन्द्रः । एकम् । सूर्यः । एकम् । जजान । वेनात् । एकम् । स्वधया । निः । ततक्षुः ॥ ४ ॥

वेङ्कट० त्रिधा हितम् पणिभिः ऽवगुह्यमानं कस्मिंश्चिद् गवि स्थितम् घृतम् उदकम् देवाः अनु अविन्दन्। तस्य घृतस्य एकम् अंशम् इन्द्रः जनयति, द्वितीयम् सूर्यः। अथ[2] अग्नेः[3] हविषा यजमानाः निः कृण्वन्ति। त्रयो देवा आकाशाद् वृष्टिमुत्पादयन्तीति समुदायार्थः ॥ ४ ॥

एता अर्षन्ति हृद्यात् समुद्राच्छतव्रजा रिपुणा नावचक्षे ।
घृतस्य धारा अभि चाकशीमि हिरण्ययो वेतसो मध्य आसाम् ॥ ५ ॥

एताः । अर्षन्ति । हृद्यात् । समुद्रात् । शतऽव्रजाः । रिपुणा । न । अवऽचक्षे ।
घृतस्य । धाराः । अभि । चाकशीमि । हिरण्ययः । वेतसः । मध्ये । आसाम् ॥ ५ ॥

वेङ्कट० एताः गच्छन्ति हृद्यात् अन्तरिक्षात् शतसङ्घाः केनचित् शत्रुणा न अवख्यातव्याः[4]। ता एताः घृतस्य धाराः अभि पश्यामि। तासाम् मध्ये हिरण्मयः कश्चित् वेतसः तिष्ठति इति वैद्युतमग्निमादित्यं वा आहेति ॥ ५ ॥

[5]इति तृतीयाष्टके अष्टमाध्याये दशमो वर्गः[5] ॥

सम्यक् स्रवन्ति सरितो न धेना अन्तर्हृदा मनसा पूयमानाः ।
एते अर्षन्त्यूर्मयो घृतस्य मृगा इव क्षिपणोरीषमाणाः ॥ ६ ॥

सम्यक् । स्रवन्ति । सरितः । न । धेनाः । अन्तः । हृदा । मनसा । पूयमानाः ।
एते । अर्षन्ति । ऊर्मयः । घृतस्य । मृगाःऽइव । क्षिपणोः । ईषमाणाः ॥ ६ ॥

वेङ्कट० समीचीनं समुद्रात् स्रवन्ति[6] नद्यः इव वाचः द्यावापृथिव्योः अन्तः अग्निना मनसा हृदयेन च

---

१-१. महादे° लपं. २. अथवा वि[1] लपं. ३. अग्ने मूको. ४. °ख्याताः वि[1] ल लपं.
५-५. नास्ति मूको. ६. द्रवन्ति वि[2] अ[1].

पूयमानाः क्षार्यमाणाः[1]। प्रकारान्तरेणाह — एते गच्छन्ति ऊर्मयः घृतस्य[2] [3]शीघ्रम् मृगाः इव क्षेप्तुर्व्याधाद् भयात् पलायमानाः[3] ॥ ६ ॥

सिन्धोरिव प्राध्वने शूघनासो वातप्रमियः पतयन्ति यह्वाः ।
घृतस्य धारा अरुषो न वाजी काष्ठा भिन्दन्नूर्मिभिः पिन्वमानः ॥ ७ ॥

सिन्धोःऽइव । प्रऽअध्वने । शूघनासः । वातऽप्रमियः । पतयन्ति । यह्वाः ।
घृतस्य । धाराः । अरुषः । न । वाजी । काष्ठाः । भिन्दन् । ऊर्मिऽभिः । पिन्वमानः ॥ ७ ॥

**वेङ्कट०** नद्याः इव अध्वनः प्रारम्भे पतनदेशे शूघनासः शीघ्रं गन्त्र्यः[4] पृथिव्यां वातवेगेनेतस्ततः[5] प्रक्षिप्यमाणाः पतन्ति महत्यः घृतस्य धाराः । प्रेरयति[6] आरोचमानः इव अश्वः दिशो मेघैरधिष्ठिताः भिन्दन् अपाम् ऊर्मिभिः पिन्वमानः ॥ ७ ॥

अभि प्रवन्त समनेव योषाः कल्याण्यः स्मयमानासो अग्निम् ।
घृतस्य धाराः समिधो नसन्त ता जुषाणो हर्यति जातवेदाः ॥ ८ ॥

अभि । प्रवन्त । समनाऽइव । योषाः । कल्याण्यः । स्मयमानासः । अग्निम् ।
घृतस्य । धाराः । सम्ऽइधः । नसन्त । ताः । जुषाणः । हर्यति । जातऽवेदाः ॥ ८ ॥

**वेङ्कट०** यास्कः — 'अभिनमन्त[7] समनस इव योषाः । समनं[8] समननाद्वा संमाननाद्वा[9] कल्याण्यः स्मयमानासः । अग्निमित्यौपमिकम् । घृतस्य धारा उदकस्य धाराः समिधो नसन्त । [10]नसतिराप्नोतिकर्मा वा नमतिकर्मा वा । ता जुषाणो[10] हर्यति जातवेदाः । हर्यतिः [11]प्रेप्साकर्मा विहर्यतीति'[11] ( ७,१७ ) । अयमर्थः — अभि गच्छन्ति समनस्का इव स्त्रियः कल्याण्यः स्मयमानाः अग्निम् माध्यमिकम् घृतस्य[12] धाराः समिधः इव भजन्ते । ताः प्रीयमाणः कामयते अग्निरिति ॥ ८ ॥

कन्या इव वहतुमेतवा उ अञ्ज्यञ्जाना अभि चाकशीमि ।
यत्र सोमः सूयते यत्र यज्ञो घृतस्य धारा अभि तत् पवन्ते ॥ ९ ॥

कन्याःऽइव । वहतुम् । एतवै । ऊँ इति । अञ्जि । अञ्जानाः । अभि । चाकशीमि ।
यत्र । सोमः । सूयते । यत्र । यज्ञः । घृतस्य । धाराः । अभि । तत् । पवन्ते ॥ ९ ॥

---

१. ईषमा° वि[1] अ[1] ल. २. °तस्य धारा अभिपश्यामि° वि[1] लपं. ३-३. नास्ति वि[1] लपं. ४. हन्त्र्याः वि[1] लपं; हन्त्र्यः वि[1] अ[1]. ५. पोतेन° वि[1] लपं. ६. प्रेरयन्ति वि[1] ल लपं. ७. °नमन्ति मूको. ८. समन वि[1] लपं; समना वि[2]. ९. संमन° वि[2] अ[1]. १०-१०. °सतिरा…तिकर्मा वा ता जु° वि[2]; °पोतिकर्मा दा ता जु° अ[1]. ११-११. °कमाभिहर्य° वि[2] अ[1]. १२. नास्ति वि[2] अ[1].

वेङ्कट० युवती:[1] इव भर्तारम् एतुं शरीरम् अलङ्कुर्वाणाः पतिर्घृतस्य धाराः अभि पश्यामि। यत्र सोमः सिच्यते, यत्र चान्यद् हविरग्नौ, तत्र घृतस्य धाराः अभि गच्छन्ति ॥ ९ ॥

अभ्यर्षत सुष्टुतिं गव्यमाजिमस्मासु भद्रा द्रविणानि धत्त ।
इमं यज्ञं नयत देवता नो घृतस्य धारा मधुमत् पवन्ते ॥ १० ॥

अभि । अर्षत । सुऽस्तुतिम् । गव्यम् । आजिम् । अस्मासु । भद्रा । द्रविणानि । धत्त ।
इमम् । यज्ञम् । नयत । देवता । नः । घृतस्य । धाराः । मधुऽमत् । पवन्ते ॥ १० ॥

वेङ्कट० अभि गच्छत सुस्तोत्रं गोहितं[2] गमनशीलमग्निम् । अस्मासु च भजनीयानि धनानि धत्त। तथा इमम् यज्ञम् नयत देवतासु अस्माकम्। घृतस्य धाराः इमाः मधुयुक्तं क्षरन्ति। पादश्चतुर्थः परोक्ष इति ॥ १० ॥

धामन् ते विश्वं भुवनमधि श्रितमन्तः समुद्रे हृद्य१न्तरायुषि ।
अपामनीके समिथे य आभृतस्तमश्याम मधुमन्तं त ऊर्मिम् ॥ ११ ॥

धामन् । ते । विश्वम् । भुवनम् । अधि । श्रितम् । अन्तरिति । समुद्रे । हृदि । अन्तः । आयुषि ।
अपाम् । अनीके । सम्ऽइथे । यः । आऽभृतः । तम् । अश्याम । मधुऽमन्तम् । ते । ऊर्मिम् ॥ ११ ॥

वेङ्कट० हे अग्ने सूर्य! वा तव तेजसि विश्वम् भूतजातम् अधि श्रितम्। स त्वम् अन्तरिक्षस्य अन्तः वर्तसे। तथा मनुष्ये च हृदि अन्तः वर्तसे। अपाम् सङ्घे सङ्गते[3] यः आहृतः, तम् मधुमन्तम् उदकसङ्घातं त्वत्तः वयं लभेमहि ॥ ११ ॥

[4]इति तृतीयाष्टके अष्टमाध्याये एकादशो वर्गः[4] ॥

प्रायच्छदभिप्रायमस्मभ्यं सूक्तमञ्जसा ।
शौनकोऽप्याह बहुधा वामदेवः प्रसीदतु ॥ इति ॥

—*—

इति ऋग्वेदे सभाष्ये चतुर्थं मण्डलं समाप्तम् ॥





१. युवतयः मूको. २. °हित वि[२] लपं. ३. सङ्गते वि[२] अ[१]. ४-४. नास्ति मूको.

# शोधपत्रम्[१]

| पृष्ठे | पङ्क्तौ | अशुद्धम् | शुद्धम् |
|---|---|---|---|
| ११५३ | १७ | अथोऽपर...१०) | अथोऽपरिमितम् (तु. काश २, ८, २, ६) |
| ११५४ | ६ | हविषाम् | हविषा |
| ११५५ | १६ | देव![६] | × × |
| ,, | १९ | दिद्युतः | दिद्युतः |
| ,, | २६ | ६. नास्ति मूको. | × × |
| ११६१ | १५ | दास्वते | दास्वते |
| ११६७ | ११ | द्युऽमन्तम् | द्युऽमन्तम् |
| ११७२ | १४ | °होमा° | °होमा° |
| ११७५ | ६ | वर्धयन्ति | वर्धयन्ति |
| ११७८ | १३ | बलवत्तमम् । | । बलवत्तमम् |
| ११८२ | २१ | सतसो° | सुतसो° |
| ११९५ | १५ | धुनिश्च[६] | × × |
| ,, | २५ | नास्ति वि[१] ल लपं. | धुनिश्च वि[१] अ[१] |
| ११९७ | ६ | । विद्वत्तरः | विद्वत्तरः । |
| ११९८ | ७ | शत_तो | शतक्रतो |
| १२०१ | २० | उतो | उतो |
| १२०२ | ६ | हरी | हरी |
| ,, | २० | पुंन्वा° | पुन्वा° |
| १२०३ | १८ | प्रहुस्त्वं[३] | प्रहुस्तं[३] |
| १२०४ | २० | अर्णः ऽवृतम् | अर्णःऽवृतम् |
| १२०५ | १२ | सौवश्व्यशत्रोः | सौवश्व्यस्य शत्रोः |
| १२१० | ३ | °रसोढाय | °रनभिषोढाय |
| १२१६ | १८ | अस्य | तस्य |
| १२१७ | १९ | अपहर्त्तु माम् इव । | अपहर्तुम् । आ वि |
| ,, | ,, | तेभ्यः[७] | तेभ्यः[७] । |
| १२१९ | १ | प्रभृतिम् | प्रभृतिम् |
| ,, | ९ | वरम् | वरम् |
| ,, | १४ | यद्दिवो | यद् दिवो |
| १२२१ | १६ | वरन्तः | वरन्त |
| १२३१ | १० | सयवसा | सुयवसा |
| १२३३ | २४ | ते न | ते |
| १२३४ | ११ | अपो | अपो |
| १२३५ | २० | प्रियस्य | प्रियस्य |
| १२४० | १९ | शत्रून् | शत्रून् |
| १२४१ | २० | हृषीऽवन्तः | हृषीवन्तः |
| १२४२ | १६ | पती | पतो |
| १२४५ | २१ | अह्वे | अह्वे |
| १२४८ | १ | सुख | सुखं |
| १२४८ | १ | विवोसयम् | विवासेयम् |
| १२५२ | २ | ‘राधसः | °राधसः |
| १२५६ | १ | गिरः | गिरः |
| १२५९ | १३ | समुच्छ्रितं | समुच्छ्रितं |
| १२६९ | २० | जरयेथेः | जरयेथे |
| १२७० | १० | रथ्याऽव | रथ्याऽइव |
| ,, | १५ | प्रधी | । प्रधी |
| १२७५ | २० | विऽचर्षणिः | विऽचर्षणिः |
| १२८१ | १८ | °मागछेति | °मागच्छेति |
| १२८३ | ३ | नद्यः । उद° | नद्यः उद° |
| ,, | ४ | °णे अ° | °णे । अ° |
| ,, | २२ | सुऽपत्नी इतिं सपत्नीं | सपत्नी इतिं सुऽपत्नीं |
| १२८४ | २३ | (?) | × × |
| १२८७ | १७ | सनु° | सूनु° |

१. × एतच्चिह्न-परामृष्टः पाठो नेष्टः ।

| पृष्ठे | पङ्क्तौ | अशुद्धम् | शुद्धम् |
|---|---|---|---|
| १२९६ | १८ | तनूतपात् | तनूनपात् |
| १२९७ | २० | °पे इति | °पे इति |
| १३०२ | १९ | °यम् अ° | °यम् । अ° |
| १३०५ | १७ | ऋतऽवरी | ऋतवरी |
| | | इत्यृतवरी | इत्यृतऽवरी |
| १३११ | १७ | वेरिति | वेरिति |
| १३२२ | ८ | देवा_ | देवासः |
| १३२३ | १ | हकारी | सहकारी |
| ,, | १५ | साक° | साक° |
| १३३४ | १५ | तपो | तपो |
| ,, | १६ | अचि° | अचि° |
| ,, | २० | इध्मनाम्न | इध्मेनाम्न |
| १३३७ | १५ | अध्वरम् | अध्वरम् |
| १३३८ | ७ | स्वधाऽवः | स्वधाऽवः |
| १३४५ | १३ | इध्यसे | इध्यसे |
| १३४६ | ११ | अग्निः | अग्निः |
| १३५१ | १९ | प्रातः° | प्रातः° |
| १३५२ | ५ | °तुष्टभः | °तुष्टुभः |
| १३५४ | ७ | नाभाभौ | नाभौ |
| ,, | १२ | _मृतम् | अमृतम् |
| १३५५ | २२ | गिरः | गिरः |
| १३५६ | ९ | तनूऽनपात् | तनूऽनपात् |
| १३६० | ९ | ऋषि । इन्द्रोः दे° | ऋषिः । इन्द्रो दे° |
| १३६४ | २३ | दंहणे साधो!" | दंहणे" साधो! |
| १३६५ | १६ | कीवितः | कीवतः |
| १३६७ | १५ | °कमणे | °कर्मणे |
| १३७० | १३ | प्रत्नस्य | प्रत्नस्य |
| ,, | ११ | प्रप्रुध्य | प्रऽप्रुध्य |
| ,, | २२ | रुद्रेभिः | रुद्रेभिः |
| १३७९ | ३ | ऊवम् | ऊर्वम् |
| ,, | १४ | °ते इति | °ते इति |
| १३८० | २० | कि मच्छन् | किमिच्छन् |
| १३८३ | १७ | शत्रन् | शत्रून् |
| १३८७ | २० | ब्र_ऽयुजा | ब्रह्मऽयुजा |
| १३८८ | २० | समिन्द्र | समिन्द्र |
| १३९० | ९ | प्रदिवो | प्रदिवो |
| १३९१ | १८ | अंशुः | अंशुः |
| १३९२ | ३ | समीं | समीं |
| १३९३ | १६ | °ऽक्रतो | °ऽक्रतो |
| १३९६ | ८ | समृते इति | समृते इति |
| १३९७ | १५ | बर्षितुः | वर्षितुः |
| १३९७ | २३ | °पिन्यो | °पिन्यौ |
| १३९९ | २२ | °रपहतासु | °रपहतासु |
| १४१२ | १३ | वज्रसज्ञम् | वज्रसंज्ञम् |
| १४१६ | ७ | शत्रन् | शत्रून् |
| १४१८ | १२ | उद्गूणः | उद्गूर्णः |
| १४१९ | ४ | शत्रणाम् | शत्रूणाम् |
| १४२२ | १५ | अभिमातिऽ° | अभिमातिऽ° |
| १४२६ | १४ | वृत्रहा | वृत्रहा |
| १४२९ | ८ | तन्वम् | तन्वम् |
| १४४१ | ७ | °रुर्वन्तारिक्षम् | °रुर्वन्तरिक्षम् |
| १४४३ | १६ | हविभिर्धा° | हविर्भिर्धा° |
| १४५२ | १६ | अवृञ्जन् | अवृञ्जन् |
| १४५६ | २० | इमम् | इमम् |
| १४६८ | ६ | शत्रन् | शत्रून् |
| १४७६ | २० | घृतऽस्नू | घृतऽस्नू |
| १४८० | १४ | ऋतमा° | ऋतमा° |
| १४८१ | २१ | पुरुऽवार | पुरुऽवार |
| १४८२ | ८ | कृणध्वम् | कृणुध्वम् |
| १४९१ | १ | समताया | ममताया |
| १४९७ | २२ | अनञ्जेना | अनञ्जेन |
| १५०५ | ११ | दर्भे | दर्भे |
| १५०८ | १५ | स्वर्णे | स्वर्णे |
| १५०९ | २४ | न्नर्धन् | °न्नूर्धन् |
| १५१३ | २० | वरुणो | वरुणो |
| १५१९ | २२ | ववुः | ववुः |
| १५२२ | ४ | वर्पः | वर्पः |
| १५२६ | ९ | मदिष्ठाः | मदिष्ठाः |
| १५२८ | १४ | मघवा | मघवा |
| ,, | १५ | मघवा | मघवा |
| ,, | १६ | अक्षियन्तम् | अक्षियन्तम् |

| पृष्ठे | पङ्क्तौ | अशुद्धम् | शुद्धम् |
|---|---|---|---|
| १५३८ | ८ | निन्द्रायाम् | निद्रायाम् |
| १५४२ | १७ | व्रजमपं° | व्रजमपं° |
| १५५२ | १५ | ऋतस्य | ऋतस्य |
| १५५७ | २ | इन्द्र | इन्द्रं |
| १५६० | ४ | मरंत् | भरंत् |
| १५६४ | ४ | अर्दंदतम् | अदर्दंतम् |
| १५७१ | २० | अवंन्तु | अवंन्तु |
| १५७५ | ५ | गिरंश्च | गिरंश्च |
| १५८२ | १५ | ऋभवो | ऋभवो |
| १५८८ | १० | अभृत° | अमृत° |
| १५९२ | ३ | दानानिसन्ति | दानानि सन्ति |
| १५९६ | १८ | °च्छूंत्र° | °च्छूंत्र° |
| १५९८ | १८ | दिद्यमं° | दिद्युमं° |
| १५९९ | १६ | प्रभूंती इति | प्रभूंती इति |
| १६०३ | ४ | अर्वंऽदेवभ् | अर्वंऽदेवम् |
| १६०३ | ७ | तमिान्द्रधि° | तमिन्द्राधि° |
| ,, | १७ | इन्द्रा° | इन्द्रा° |
| १६१२ | १६ | इति | इति |
| ,, | ,, | चन्द्रेण | चन्द्रेण |
| १६२५ | १७ | सुऽप्रजाम् | सुऽप्रजाम् |
| १६३२ | ८ | भवत | भवतु |
| १६३६ | ८ | महत्य | महत्यः |

